# शिशुपालवधम्





महाकवि—श्रीमन्माघप्रणीतम्



महामहोपाध्याय—श्रीमन्मल्लिनाथसूरिविरचित-सर्वङ्कषाख्यया टीकया सुविस्तृतसमालोचना-प्रभृतिभिश्च समलङ्कृतम्



श्रीमद्गुरुनाथ विद्यानिधिभट्टाचार्य्येण सम्पादितम्।



शकाब्दाः १८१७।

**JANAKI NATH KABYATIRTHA.**
*30 Gopimohan Dutta Lane, Bagbazar,*
CALCUTTA.

प्राप्तिस्थान—

श्रीजानकीनाथ काव्यतीर्थ,

छात्रपुस्तकालय,

३० नं० गोपीमोहन दत्तेर लेन, वाग्‌बाजार,

कलिकाता।




# समालोचना।

कविपरिचयः।

शिशुपालवधं हि तत्रभवतोऽनवद्यविद्याद्यखिलगुणवतः श्रीमन्माघस्य महाकवेरमृतनिस्यन्दिलेखनीप्रसूतं सहृदयहृदयाह्लादजनकं परमरमणीयं महाकाव्यम्। अस्य ग्रन्थस्यान्तिमभागे सन्निवेशितानां कविवंशवर्णनात्मकश्लोकनिवहानां समालोचनेन एतदेवानुमीयते यत् कविकुलशिरोमणिरयं माघः श्रीधर्म्मलाभाख्यस्य नृपतेः सर्व्वकार्य्याधिकारिणः सुप्रभदेवस्य पौत्रः, धार्म्मिकप्रवरस्य दत्तकस्य च पुत्रः। जन्मना चायं गुर्ज्जरदेशमलङ्कृतवान् इति केचित् प्रत्नतत्त्वविदः समामनन्ति, किन्तु नास्मिन् विषये प्रकृष्टं किमपि प्रमाणं दृश्यते। खृष्टीयैकादशशताब्द्यां प्रादुर्भूतस्य प्रख्यातकीर्त्तेरालंकारिकप्रवरस्य श्रीमन्मम्मटभट्टस्य कृतौ काव्यप्रकाशे शिशुपालवधस्य श्लोकसन्निवेशदर्शनात् काव्यप्रकाशकारात् प्राचीनोऽयं माघकविरिति केषाञ्चित् कोविदामनुमानम्। अपिच 'श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म' इत्यादि माघकृतस्य स्वपरिचयज्ञापकान्तिमश्लोकस्थस्य 'सुकविकीर्त्तिदुराशयादः' इति शब्दस्य व्याख्यानप्रसङ्गे टीकाकारेण श्रीमता वल्लभदेवेन उट्टङ्कितम्—'सुकवीनां श्रेष्ठविदुषां वररुचि-सुबन्धु-सोमनाथ-भवभूति-क्रीडानन्द-कालिदास-विह्लन-भारवि-वाण-मयूरादीनाम्' इति। एतेन अनुमीयते यत् वररुचिप्रभृतिभ्यः पूर्व्वोक्तकविसमूहेभ्यः अर्व्वाचीनोऽयं शिशुपालवधनिर्म्माता। अतः खृष्टीयनवमशताब्द्यां दशमशताब्द्यां वा कविर्माघः प्रादुर्बभूव इति येषां मतं, तत्तु समीचीनमेव मन्यते। अपिच महाकाव्येऽस्मिन् बहुकठोरतरपदविन्यासमवलोक्य ये पण्डिताः माघकवेरनतिप्राचीनत्वमुद्घोषयन्ति, तेषामनुमानमपि पूर्व्वोक्तमतमेवानुकूलयति। अलं तावत् केवलमनुमानालोचनेन, एतत्तु सर्व्ववाद्यविवादसिद्धं यत् महाकविरयं शिशुपालवधं विरचय्य जगति अमरत्वमलभत। सर्व्वथा सार्थकं जातं तस्य लेखनीधारणम्। शिशुपालवधम् ऋते कविकुलकरीन्द्रेण अन्यत् किमपि पुस्तकं विरचितं नवेति न ज्ञायते। किन्तु एकं शिशुपालवधमेव अस्य कवित्व-शक्तेः सुतरां पराकाष्ठां द्योतयति। काव्येऽस्मिन् कवित्वस्य गभीरता सर्व्वथा सुरक्षिता।

काव्य-समालोचना

एतत्काव्यसमालोचनेन विज्ञायते यत्—महाकविरयं असामान्य प्रतिभाशाली, नानाशास्त्र-विचारचतुरः, दार्शनिकप्रवरः, प्राणिवृत्तान्तपारदर्शी, भक्ताग्रणी, राजनीतिसमालोचननिपुणः, अलङ्कारविन्यासदक्षः। सुगतदर्शनेऽपि अस्य प्रगाढ़ं पाण्डित्यमासीत्। सफलः खलु जातः अस्य कवित्वप्रकटनाभिलाषः। किन्तु अत्रश्रीमता कवयित्वा यादृशः अलौकसामान्यः परिश्रमः कृतः, तदनुरूपा मधुरता नोपलभ्यते तत्काव्यरसिकैः सुपण्डितैः। क्वचित् क्वचित् दोषोऽपि महाकाव्येऽस्मिन् न दृश्यते इति न। तथाच—एकमेव सुललितपदविन्यासस्यानुरोधेन एकैकशः श्लोकं निर्माय पाठकानां धैर्य्यच्युतिसंघटने महायत्नं सम्पादयामास असीमशब्दसम्पत् सम्पन्नोऽयं सुधीः। एवञ्चानेकाप्रस्तुतवर्णनया काव्यस्यास्य प्रायेण अत्राङ्गस्य पुष्कलत्वं नीतं श्रीमता। तथापि नात्र विरक्तिर्विधेया, किन्तु अनुरक्तिरेव प्रदर्शनीया। यतः संसारे किमपि उत्तमं वस्तु किं दोषसम्पर्कशून्यमस्ति? सुधाकरः शशधरः कलङ्कलाञ्छितः, कमलजातं कण्टकावृतम्। कविवरस्यास्य अनन्यसुलभकवित्वस्य गाम्भीर्य्यादिगुणपक्षपातिनः सहृदयाः सन्तः स्मरन्ति—विद्वद्वृन्दानन्दसन्दोहजनकं काव्यमिदं पूर्व्वोक्तदोषदुष्टं नो चेत्, तर्हि निखिलमहाकाव्यानां शीर्षस्थानमलमकरिष्यत् इति।

सुमधुरतात्र बहुशः समुपलभ्यते, तथाच यदि केनचित् काव्यरसिकेन 'विकच कमलगन्धैरन्धयन् भृङ्गमालाः' इत्यादिषु श्लोकजातेषु दृष्टिपातः क्रियते तर्हि तन्मनसि सत्यमेव प्रतिभासते—"धन्याः माघकविवयन्तु कृतिनस्तत्सूक्तिसंसेवनात्" इति। महाकाव्यस्यास्य समग्रस्य समालोचना तु दूरे आस्तां, 'विकच कमलगन्धैः' इत्यादि एकेनैव श्लोकेन कविवरस्यास्य अलौकसामान्यप्रतिभा प्रत्याय्यते। अतएव महामहोपाध्यायेन श्रीमता मल्लिनाथेन अस्य व्याख्यान प्रसङ्गे उक्तं—"श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता। अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधयः॥" इति आचार्य्योक्ता दशगुणाः प्रायेणात्र सम्भवन्तीति। एवं बहुभिरुद्भटश्लोकैः कविवर्य्यस्य प्रशंसाध्वनिः श्रूयते। तथाच—"काव्येषु माघः कविकालिदासः।" "उपमा कालिदासस्य भारवेरर्थगौरवम्। नैषधे पद लालित्यं माघे सन्ति त्रयो गुणाः॥" "भारती भारवेर्भाति यावन्माघस्य नोदयः।" इत्यादि। माघप्रशंसावादपरस्यास्य कवितानिवहस्य असूलत्वम् अतिरञ्जितत्वं वा नास्ति इति न, किन्तु एतत्तु वितर्कवर्ज्जितं वचः यत्—गभीरपदयोजनया

दृशा अथ गौरवेण भावगाम्भीर्य्येण नानालङ्कारनिवेशसौन्दर्य्येण च अतिरमणीयमेतत् सुरसपूर्णं महाकाव्यम्।

प्रख्यातयशसा महाकविभारविणा विरचितं किरातार्ज्जुनीयं नाम प्रसिद्धं महाकाव्यमनुसृत्य माघकविना शिशुपालवधं प्रणीतमिति या जनश्रुतिः प्रचरति नास्ति तत्र सन्देहलेशोऽपि।

तथाहि—किरातार्ज्जुनीये महर्षिर्व्यासः पाण्डवसमीपं समागत्य कर्त्तव्यमुपादिशत्, शिशुपालवधेऽपि देवर्षिर्नारदः द्वारकामागत्य

भारविमाघयोः सादृश्यम्

कृष्णं कर्त्तव्यानुष्ठाने प्रायुङ्क्त। भारविकृतौ युधिष्ठिरवृकोदरद्रौपदीनां यादृशी राजनीतिचर्चा माघकृतावपि श्रीधरहलधरोद्धवानां तादृशः राजनीतिपरामर्शः। किरातार्ज्जुनीये धनञ्जयस्य तपश्चरणाय सिन्द्रकीलपर्वतावस्थितिः, शिशुपालवधेऽपि इन्द्रप्रस्थप्रयाणपरस्य वासुदेवस्य रैवतकपर्वतवासः। भारविग्रन्थे यमकाद्यलङ्कारगर्भैः श्लोकैः हिमवद्गिरिवर्णना वर्त्तते, माघग्रन्थेऽपि तदलङ्कारमहकृतैस्तच्छन्दोबन्धैश्च रैवतकस्य वर्णनम्। एकत्र सुराङ्गनानां वनविहारजलकेलि-नायकसमागमादीनां सुविस्तृतवर्णना अवतिष्ठते, अन्यत्रापि तादृशी एव वर्णनाचातुरी समुपलभ्यते। एकत्र अर्ज्जुनस्य समुत्तेजनाय किरातपतिना दूतप्रेरणम्, अन्यत्रापि श्रीकृष्णोत्तेजनाय चेदिपतिना दूतप्रेरणम्। एकत्र पञ्चदशसर्गे एकाक्षरद्व्यक्षरयमकाद्यलङ्कारगर्भैः कवितानिवहैः समरवर्णना, अन्यत्रापि ऊनविंशसर्गे तादृशैः श्लोकैः युद्धवर्णनम्। अपिच किरातार्ज्जुनीये 'श्रियः कुरूणा'मित्यादिना आदौ श्रीशब्दप्रयोगेण सम्पादितो वर्णगणादिशुद्धे रभ्युच्चयः, शिशुपालवधेऽपि 'श्रियः पतिः श्रीमति' इत्यादिना स एव पन्था अनुसृतः। भारविणा अन्त्यश्लोके लक्ष्मीशब्दसन्निवेशेन मङ्गलाचरणमनुष्ठितम्, माघेन च लक्ष्मीपर्य्यायभूतश्रीशब्दोपादानेनैव स एव विधिः समवलम्बितः। भारविभावानुबन्धानुकारश्च माघकृतौ बहुशो दृश्यते।

अनुरूपश्लोकाः।

इदानीं केचिद् अनुरूपाः श्लोकाः प्रदर्श्यन्ते तद्यथा—

"ततः शरच्चन्द्रकराभिरामैः" इत्यादि (कि—३।३१)

"दधानमम्भोरुहकेशरद्युतीः" इत्यादि (शि—१।५)

"श्रियं विकर्षत्यपहन्त्यघानि" इत्यादि (कि—३।७)

"हरत्यघं सम्प्रति हेतुरेष्यतः" इत्यादि (शि—१।२६)

"निरास्पदं प्रश्नकुतूहलित्वम्" इत्यादि (कि—३।८)
"गतस्पृहाऽप्यागमनप्रयोजनम्" इत्यादि ( शि—१।३० )
"उच्चैरुच्चैःश्रवास्तेन" इत्यादि ( कुमार—२।४७ )
"पुरीमवस्कन्द लुनीहि नन्दनं" इत्यादि ( शि—१।५१ )
"अनुभाववता गुरुस्थिरत्वात् इत्यादि ( कि—१३।१५ )
"न नीतमन्येन नतिं कदाचित्" ( शि—३।२० )
"स्पृशन् सशङ्कः समये शुचावपि" इत्यादि ( शि—१।५८ )
"पुरं तावन्तमेवास्य तनोति रविरातपम्" इत्यादि ( कु—२।३३ )
"कलामसमग्रां गृहानभुञ्जता" इत्यादि ( शि—१।५८ )
"सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते" इत्यादि ( कु—२।३४ )

एवं बहूनि स्थलानि सन्ति, तत्परित्यागस्तु बाहुल्यभयादेव। यद्यपि महाकविर्माघः कविकुलकरीन्द्रस्य भारवेः पदपङ्क्तिमनेकशः अनुसृतवान्, तथापि भारवितो माघस्य दार्शनिकज्ञानं रचनागाम्भीर्यञ्च गरीय इत्यत्र नास्ति केषाञ्चित् वैमत्यम्। भारवेः काव्यं निसर्गशोभासुन्दरम्, माघस्य तु कठोरायाससफलाङ्कितम्।

नायकादि-निरूपणम्

अस्य शिशुपालवधस्य नायकः खलु श्रीकृष्णो धीरोदात्तः, प्रतिनायको धीरोद्धतः शिशुपालस्तालम्बनविभावौ। आत्मवाक्यानि तथा दूतस्याक्षेपानि च शिशुपालवचनादीनि उद्दीपनविभावाः, धृत्यादयो व्यभिचारिणः। उत्साहः स्थायी, वीररसोऽङ्गी, शृङ्गारादयः अङ्गरसाः, गौडी रीतिः, गुणः ओजः, दूतः निसृष्टार्थः इति।

---

संक्षिप्तविवरणम् ।

प्रथम-सर्गे—द्वारकायां नारदागमनम्, श्रीकृष्णं प्रति शक्रसन्देशकथनं च ।

द्वितीय-सर्गे—उद्धवबलदेवश्रीकृष्णानां मन्त्रणावर्णनम् ।

तृतीये—द्वारकातः श्रीकृष्णस्य प्रस्थानवर्णनम्, द्वारकासमुद्रयोर्वर्णना च ।

चतुर्थे—रैवतकपर्वतवर्णनम् ।

पञ्चमे—स्कन्धावारसन्निवेशादिवर्णनम् ।

षष्ठे—षड्‌ऋतुवर्णनम् ।

७मे—पुष्पावचयवर्णनम् ।

८मे—जलक्रीडावर्णनम् ।

९मे—सायंकालचन्द्रोदयप्रसाधनादिवर्णनम् ।

१०मे—पानगोष्ठीवर्णनम्, रतिक्रीडावर्णनं च ।

११शे—प्रभातवर्णनम् ।

१२शे—पुनः प्रयाणवर्णनम्, यमुनावर्णनञ्च ।

१३शे—श्रीकृष्णपाण्डवयोः समागमवर्णनम्, श्रीकृष्णस्येन्द्रप्रस्थनगरप्रवेशे पौरनारीचेष्टावर्णनम्, युधिष्ठिरसभाराढ्वर्णनञ्च ।

१४शे—राजसूययज्ञप्रस्तावस्तद्वर्णनञ्च । श्रीकृष्णं प्रत्यर्घदानवर्णनम्, भीष्मकृता श्रीकृष्णस्तुतिश्च ।

१५शे—शिशुपालक्षोभवर्णनम् । भीष्मवाक्यम् । शिशुपालपक्षाश्रितमहीपतीनां क्षोभवर्णनम्, शिशुपालस्य सेनासन्नाहवर्णनम् । युद्धायोपस्थितानां भटानां तत्पत्नीनां च चेष्टावर्णनम् ।

१६शे—शिशुपालदूतस्य श्रीकृष्णसदसि द्व्यर्थं वाक्यम्, दूतं प्रति सात्यकिवाक्यम्, पुनरपि दूतवाक्यम्, तन्मुखेन शिशुपालपराक्रमवर्णनं च ।

१७शे—श्रीकृष्णसभाक्षोभवर्णनम्, श्रीकृष्णस्य तत्सेनायाश्च सन्नाहवर्णनम्, सेनाप्रस्थानवर्णनञ्च ।

१८शे—सैन्यद्वयस्य समागमवर्णनम्, तुमुलयुद्धवर्णनञ्च ।

१९शे—चित्रयुद्धवर्णनम् ।

२०शे—श्रीकृष्णशिशुपालयोरस्त्रयुद्धवर्णनम्, शिशुपालवधवर्णनं च । कविवंशवर्णनम् ।

---

## मङ्गलाचरणम् ।

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥ १ ॥

दन्ताञ्चलेन धरणीतलमुन्नमय्य
पातालकेलिषु धृतादिवराहलीलम् ।
उल्लाघनोत्फणफणाधरगीयमान
क्रीडावदानमिभराजमुखं नमामः ॥ २ ॥

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदास्माकं सन्निधिं सन्निधिं क्रियात् ॥ ३ ॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासिकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥ ४ ॥

मल्लिनाथः सुधीः सोऽयं महोपाध्यायशब्दभाक् ।
विधत्ते माघकाव्यस्य व्याख्यां सर्वङ्कषाभिधाम् ॥ ५ ॥

ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणालङ्क्रिया-
शिक्षाकौतुकिनो विहर्त्तुमनसो ये च ध्वनेरध्वनि ।
तेऽभ्यस्यन्तु सरस्वतीरसमुधापूरेऽभिमज्जन्ति ये
तेषामेव कृते करोमि विवृतिं माघस्य सर्वङ्कषाम् ॥ ६

नेतास्मिन् यदुनन्दनः स भगवान् वीरप्रधानो रसः
शृङ्गारादिभिरङ्गवान् विजयते पूर्णा पुनर्वर्णना ।
इन्द्रप्रस्थगमाद्युपायविषयश्चैद्यावसादः फलं
धन्यो माघकविर्वयन्तु कृतिनस्तत्सूक्तिसंसेवनात् ॥ ७ ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥ ८ ॥

---

# शिशुपालवधम् ।

## प्रथमः सर्गः ।

श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ १ ॥

अथ तत्रभवान् माघकविः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतर-क्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ।' इत्यालङ्कारिक-वचनप्रामाण्यात् काव्यस्यानेकश्रेयःसाधनतां 'काव्यालापांश्च वर्जयेत्' इति निषेधस्यासत्काव्यविषयतां च पश्यन् शिशुपालवधाख्यं काव्यं चिकीर्षुः चिकीर्षि-तार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्याशीराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च काव्य-फलं शिशुपालवधबीजभूतं भगवतः श्रीकृष्णस्य नारददर्शनरूपं वस्तु आदौ श्रीशब्दप्रयोगपूर्वकं निर्दिशन् कथामुपक्षिपति—श्रिय इति । तत्रादौ श्रीशब्दप्रयोगात् वर्णगणादिशुद्धेरभ्युच्चयः । तदुक्तम्—'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा' इति । श्रियः लक्ष्म्याः पतिः, अनेन रुक्मिणीरूपया श्रिया समेत इति सूचितम् । 'राघवत्वे भवेत् सीता रुक्मिणी कृष्णजन्मनि' इति, विष्णुपुराणात् । जगन्निवासो जगता-माधारभूतः । कुक्षिस्थाखिलभुवन इति यावत् । तथापि जगत् लोकं शासितुं दुष्टनिग्रहशिष्टानुग्रहाभ्यां नियन्तुं श्रीमति लक्ष्मीयुक्ते वसुदेवसद्मनि वसुदेवरू-पिणः कश्यपस्य वेश्मनि वसन् कृष्णरूपेण तिष्ठन् हरिर्विष्णुः अम्बरादवत-रन्तमायान्तम्, इन्द्रसन्देशकथनार्थमिति भावः । हिरण्यस्य गर्भो हिरण्यगर्भो ब्रह्मा । ब्रह्माण्डप्रभवत्वात् तस्याङ्गभुवं तनूजम् । अथवा तस्याङ्गादवयवादुत्सङ्गा-

गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ।
पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥२

स्याद्भवतीति हिरण्यगर्भाङ्गभूः तं मुनिं नारदमित्यर्थः । 'उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात् स्वयम्भुवः' इति भागवतात् । ददर्श कदाचिदिति शेषः । अत्रात्मीयसि तसुदेवसद्मनि सकलजगदाश्रयतया महीयसो हरेराधेयत्वकथनादधिकप्रभेदोऽर्थालङ्कारः । तदुक्तम्—'आधाराधेययोरानुरूप्याभावोऽधिको मतः' इति । जगन्निवासस्य जगदेकदेशनिवासित्वमिति विरोधश्च । तथा तकारसकारादेः केवलस्यासकृदावृत्त्या जगज्जगदिति सकृद्व्यञ्जनद्वयसादृश्याच्च वृत्त्यनुप्रासभेदौ शब्दालङ्कारौ । एषाञ्चान्योन्यनैरपेक्ष्येणैकत्र समावेशात् तिलतण्डुलवत् संसृष्टिः । सर्गेऽस्मिन् वंशस्थवृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥ १ ॥

तदानीं जनैर्विस्मयादीक्षितुं प्रवृत्तमित्याह—गतमिति । अविद्यमानावूरू यस्य स अनूरुः, स सारथिर्यस्य तस्यानूरुसारथेः सूर्य्यस्य गतं गतिः । भावे क्तः । तिरश्चीनं तिर्य्यग्भूतं 'विभाषाञ्चेरदिक् स्त्रियाम्' इति तिर्य्यक्शब्दादञ्चत्यन्तात् प्रातिपदिकात् स्वार्थे खप्रत्ययः । हविर्भुजोऽग्नेरूर्द्ध्वज्वलनम् ऊर्द्ध्वस्फुरणं प्रसिद्धम्, इदन्तु सर्व्वतो विसारि धामाधः पतति । किमेतदिति सूर्य्याग्निविलक्षणमदृष्टपूर्वमिदं धाम किमात्मकं स्यादित्याकुलं विस्मयात् सम्भ्रान्तं यथा तथा जनैरीक्षितम् ईक्षणं कृतम् । सकर्मकादप्यविवक्षिते कर्म्मणि भावे क्तः । 'प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' इति वचनात् । केचित् कर्मणि क्तान्तं कृत्वा ईक्षितं मुनिं ददर्शेति पूर्वेण योजयन्ति । अत्रोपमेयस्य मुनिधाम्नः सूर्य्याग्निभ्यामुपमानाभ्यामधःप्रसरणधर्मेणाधिक्यवर्णनात् व्यतिरेकः । तदुक्तं काव्यप्रकाशे—'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति । "धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः" इति हेमचन्द्रः । दिवाकरस्तु वृत्तरत्नाकरटीकायां प्रथमपठितेन "द्विधाकृतात्मा किमयं दिवाकरो विधूमरोचिः किमयं हुताशनः" । इति चरणद्वयेन सह इममेव श्लोकं षट्पदच्छन्दस उदाहरणमाह । तन्नाद्यचरणद्वयेन सन्देहाकारः, गतमिति तन्निरासश्च बोध्य इत्युपरिष्टात् ॥ २ ॥

चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥३

नवानधोऽधो बृहतः पयोधरान् समूढकर्पूरपरागपाण्डुरम्।
क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना स्फुटोपमं भूतिसितेन शम्भुना ॥४

अथ भगवान्निरनैषीदित्याह—चय इति। विभुर्वस्तुतत्त्वावधारणसमर्थः, स हरिः पुरा प्रथमं त्विषाञ्चय इत्यवधारितं तेजःपुञ्जमात्रत्वेन विनिश्चितम्। ततः प्रत्यासन्ने विभाविता विमृष्टा आकृतिः संस्थानं यस्य तं तथोक्तम्। अतएव शरीरी चेतन इत्यवधारितम्। ततो विभक्ताः विविच्य गृहीताः अवयवा मुखादयो यस्य तं तथोक्तम्। अतएव पुमानित्यवधारितम्। अमुमागच्छन्तं व्यक्तिविशेषं नारदं वास्तवाभिप्रायेणेति पुंलिङ्गतो निर्वाहः। क्रमात् पूर्वोक्तसामान्यविशेषज्ञानक्रमेण। लोकदृष्ट्येदमुक्तं, हरिस्तु सर्वं वेदैवेति तत्त्वम्। नारद इत्यबोधि नारदं बुद्धवानित्यर्थः। नारदस्य कर्मत्वेऽपि निपातशब्देनाभिहितत्वान्न द्वितीया। तिङामुपसङ्ख्यानस्योपलक्षणत्वात्। यथाह वामनः—"निपातनाभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वात्" इति। बुध्यतेः कर्त्तरि लुङ्। "दीपजन" इत्यादिना चिण्। "चिणो लुक्" इति लुक। अत्र विभाविताकृतिं विभक्तावयवमित्यादिना आकृतिविभावनावयवविभावनयोः पदार्थयोर्विशेषणवृत्त्या शरीरित्वपुंस्त्वावधारणहेतुत्वेनोपन्यासात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति लक्षणात् ॥ ३ ॥

अथ सप्तभिर्मुनिं विशिनष्टि—नवानित्यादि। कीदृशममुम्? नवान् सद्यःसम्भृतसलिलानिति यावत्। बृहतो विपुलान् पयोधरान्, मेघान् अधोऽधः मेघानां समीपाधःप्रदेशे स्थितमिति शेषः। 'उपर्य्यध्यधसः सामीप्ये' इति द्विर्भावः, तद्योगे द्वितीया। 'उभसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु' इत्यादिवचनात्। समूढः पुञ्जीकृतः। 'समूढः पुञ्जिते भुग्ने' इति विश्वः। कर्पूरस्य परागश्चूर्णं तद्वत् पाण्डुरम्. अत एव क्षणं मेघसमीपावस्थानक्षणे। अत्यन्तसंयोगे द्वितीया। क्षणेषु ताण्डवोत्सवेषु। 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्युभयत्राप्यमरः। उत्क्षिप्ता उपरिधारिता गजेन्द्रस्य कृत्तिश्चर्म्म येन तथोक्तेन। अजिनं चर्म्म कृत्तिः स्त्री इत्यमरः। भूत्या भस्मना सितेन।

**दधानमम्भोरुहकेशरद्युतीर्जटाः शरच्चन्द्रमरीचिरोचिषम् ।**
**विपाकपिङ्गास्तुहिनस्थलीरुहो धराधरेन्द्रं व्रततीततीरिव ॥५॥**
**पिशङ्गमौञ्जीयुजमर्जुनच्छविं वसानमेणाजिनमञ्जनद्युति ।**
**सुवर्णसूत्राकलिताधराम्बरां विडम्बयन्तं शितिवाससस्तनुम् ॥६**
**विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभिः ।**
**कृतोपवीतं हिममशुभ्रमुच्चकैर्घनं घनान्ते तड़ितां गुणैरिव ॥ ७**

'भूतिर्भस्मनि सम्पदि' इत्यमरः। शम्भुना स्फुटा उपमा सादृश्यं यस्य तं स्फुटोपमं स्फुटशम्भूपममित्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। सदृशपर्य्यायोस्तुल्योपमाशब्दयोः 'अतुल्योपमाभ्याम्' इति निषेधात् सादृश्यवाचित्वे तृतीयेत्याहुः। केचिदिमं श्लोकं चयस्त्विषामित्यतः प्राक् लिखित्वा व्याचक्षते, तेषां पुंस्त्वावधारणात् प्राक् तेजःपिण्डमात्रस्य शम्भूपमौचित्यं चिन्त्यम् ॥ ४ ॥

दधानमिति। पुनश्च, अम्भोरुहकेशरद्युतीः पद्मकिञ्जल्कप्रभापिशङ्गीरित्यर्थः, जटा दधानम्, स्वयन्तु शरच्चन्द्रमरीचिरिव रोचिर्यस्य तं धवलमित्यर्थः। अत एव विपाकेन परिणामेन पिङ्गाः पिङ्गलाः तुहिनस्थल्यां तुषारभूमौ रोहन्तीति तुहिनस्थलीरुहः व्रततीततीर्लताव्यूहान्। "वल्ली तु व्रतती लता" इत्यमरः। दधानं धराधरेन्द्रो हिमवान्। तुहिनस्थलीति लिङ्गात् नारदोपमानत्वाच्च तमिव स्थितम् ॥ ५ ॥

पिशङ्गेति। पुनः कीदृशम्? मुञ्जस्तृणविशेषः तन्मयी मेखला मौञ्जी पिशङ्गया मौञ्ज्या युज्यत इति पिशङ्गमौञ्जीयुक् तम्। 'सत्सूद्विष'—इत्यादिना क्विप्। 'स्त्रियाः पुंवत्' इति पिशङ्गशब्दस्य पुंवद्भावः। अर्जुनच्छविं धवलकान्तिम्। 'वलक्षो धवलोऽर्जुनः।' इत्यमरः। अञ्जनद्युति अञ्जनवर्णम् एणाजिनं कृष्णमृगचर्म वसानम् आच्छादयन्तम्। 'वस आच्छादने' इति धातोः शानच्। सुवर्णसूत्रेण कनकमेखलया आकलितं बद्धम् अधराम्बरम् अन्तरीयकं यस्यास्तां शितिवाससो नीलाम्बरस्य रामस्य तनुं विडम्बयन्तमनुकुर्वाणमित्यर्थः। आर्थीयमुपमा ॥ ६ ॥

विहङ्गेति। पुनः। विहङ्गराजाङ्गरुहैरिव गरुत्मल्लोमतुल्यैः। आय-

निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा लसद्बिसच्छेदसिताङ्गसङ्गिना।
चकाशतं चारुचमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥ ८

अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया।
पुरः प्रवालैरिव पूरितार्द्धया विभान्तमच्छस्फटिकाक्षमालया ॥९

तैर्दीर्घैः, हिरण्यस्य विकारो हिरण्मयी। 'दाण्डिनायन'—इत्यादिना मयटि यलोपनिपातः। तस्यामुर्व्यां रुहा रूढ़ाः। इगुपधालक्षणः कप्रत्ययः। तासां वल्लीनां तन्तुभिस्तत्तुल्यैः सूक्ष्मावयवैः, उपादानगुणात् हिरण्मयैः क्षतोपवीतं शोभार्थं कल्पितयज्ञसूत्रं स्वयं हिमशुभ्रम्। अत एव घनान्ते शरदि तड़ितां गुणैरुपलक्षितम्। 'तड़ित् सौदामनी विद्युत्' इत्यमरः। उच्चैरेव उच्चकैरुन्नतं घनं मेघमिव स्थितम् ॥ ७ ॥

निसर्गेति। पुनः, निसर्गात् स्वभावादेव चित्राणि शवलानि उज्ज्वलानि भास्वराणि सूक्ष्माणि पक्ष्माणि लोमानि यस्य तेन लसन् यो बिसच्छेदो मृणालखण्डः। 'छेदः खण्डोऽस्त्रियाम्' इति त्रिकाण्डशेषः। तद्वत् सिते अङ्गे वपुषि सङ्गिना सक्तेन चारुणा मनोहरेण चमूरुचर्मणा मृगत्वचा कुथेन पृष्ठास्तरणेन। 'प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः' इत्यमरः। इन्द्रवाहनं नागेन्द्रम् ऐरावतमिव चकाशतं शोभमानम्। इन्द्रस्य वाहनमिति स्वस्वामिभावमात्रस्य विवक्षितत्वात्। 'वाहनमाहितात्' इति न णत्वम्। यथाह वामनः—'नेन्द्रवाहनशब्दे णत्वमाहितत्वस्याविवक्षितत्वात्' इति। चकाशतेः शतरि 'नाभ्यस्ताच्छतुः' इति नुमभावः। 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा ॥ ८ ॥

अजस्रमिति। पुनः। अजस्रं प्राचुर्य्येणास्फालितास्ताड़िताः सौष्ठवपरीक्षार्थं न्युब्जाङ्गुष्ठेन तन्त्रीताड़नं प्रसिद्धं, तेषां वल्लकीगुणानां वीणातन्त्रीणां क्षतेन सङ्घर्षणेन उज्ज्वलैरङ्गुष्ठनखांशुभिर्भिन्नया मिश्रया तद्रागरक्तयेत्यर्थः। अतएव पुरः पुरोभागे प्रवालैः विद्रुमैः। 'अथ विद्रुमः पुंसि प्रवालं पुन्नपुंसकम्' इत्यमरः। पूरितार्द्धयेव स्थितया अच्छस्फटिकाक्षमालया स्वच्छस्फटिकानां मालया जपमालयेत्यर्थः। 'अच्छो भल्लूके स्फटिकेऽमलेऽच्छाभिमुखेऽव्ययम्' इति हेमचन्द्रः। तथा प्रसिद्धस्फटिकग्रहणात् ऋषेर्मोक्षार्थित्वं व्यज्यते। 'स्फटिको

रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः ॥१०॥

मोक्षदः परम्' इति मोक्षार्थिना स्फटिकाक्षमालाभिधानात्। विभान्तं भासमानम्। भातेः शतृप्रत्ययः। अत्र नखांशुभिन्नयेति स्वगुणत्यागेनान्यगुणस्वीकारलक्षणस्तद्गुणालङ्कार उक्तः। 'तद्गुणः स्वगुणत्यागात्' इति ॥ ९ ॥

रणद्भिरिति। पुनः। नभस्वतो वायोराघट्टनया आघातेन पृथगसङ्कीर्णं रणद्भिर्ध्वनद्भिः अनुरणनेनोत्पद्यमानैरित्यर्थः। 'श्रुत्यारब्धमनुरणनं स्वरः' इति लक्षणात्। तदुक्तं रत्नाकरे—'श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः। स्वतो रञ्जयति श्रोतुश्चित्तं स स्वर उच्यते' इति। श्रुतिर्नाम स्वरारम्भकावयवः शब्दविशेषः। तदुक्तम्—'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः। सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणा' इति। विभिन्नानि प्रतिनियतसङ्ख्यया व्यवस्थितानि श्रुतीनां मण्डलानि समूहा येषां तैर्विभिन्नश्रुतिमण्डलैः। श्रुतिसङ्ख्यानियमश्च दर्शितः। 'चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः। द्वे द्वे निषादगान्धारौ त्रिस्त्रिरृषभधैवतौ। स्वराः षड्जादयः सप्तोक्तलक्षणाः। तदुक्तं—'श्रुतिभ्यः स्युः स्वराः षड्जर्षभगान्धारमध्यमाः। पञ्चमो धैवतश्चाथ निषाद इति सप्त ते। तेषां संज्ञा सरिगमपधनीत्यपरा मता' इति। तैः स्वरैः स्फुटीभवन्त्यो ग्रामविशेषाणां षड्जाद्यपरनामकानां स्वरसङ्घातभेदानां त्रयाणां मूर्च्छनाः स्वरारोहावरोहक्रमभेदा यस्यां तां महतीं महतीनाम्नीं निजवीणाम्। 'विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती। महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी' इति वैजयन्ती। मुहुर्मुहुरवेक्षमाणम्। तन्त्रीयोजनाभेदलक्षणमहिम्ना पुरुषप्रयत्नमन्तरेणैवाविसंवादं ध्वनतीति कौतुकादनुसन्दधानमित्यर्थः। अथ ग्रामलक्षणम्—'यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि। तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते। षड्जग्रामो भवेदादौ मध्यमग्राम एव च। गान्धारग्राम इत्येतत् ग्रामत्रयमुदाहृतम्' इति। तथा—'नन्द्यावर्त्तोऽथ जीमूतः सुभद्रो ग्रामकास्त्रयः। षड्जमध्यमगान्धारास्त्रयाणां जन्महेतवः' इति। मूर्च्छनालक्षणञ्च—क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम्। सा मूर्च्छेत्युच्यते ग्रामस्था एताः

निवर्त्त्य सोऽनुव्रजतः कृतानतीनतीन्द्रियज्ञाननिधिर्नभःसदः ।
समासदत्सादितदैत्यसम्पदः पदं महेन्द्रालयचारु चक्रिणः ॥११
पतत्पतङ्गप्रतिमस्तपोनिधिः पुरोऽस्य यावन्न भुवि व्यलीयत ।
गिरेस्तडित्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः ॥१२॥

सप्त सप्त च'। ग्रामत्रयेऽपि प्रत्येकं सप्तसप्तमूर्च्छना इत्येकविंशतिर्मूर्च्छना भवन्ति। तत्र इह नामानि तु 'नानपेक्षितमुच्यते' इति। प्रतिज्ञाभङ्गभयान्न लिख्यन्ते इति सर्वमवदातम्। अत्र पुंव्यापारमन्तरेण स्वराद्याविर्भावोक्त्या कोऽपि लोकातिक्रान्तोऽयं शिल्पसौष्ठवातिशयो वीणायाः प्रतीयते। तेन सह स्वतःप्रसिद्धातिशयस्याभेदेनाध्यवसितत्वात् तन्मूलातिशयोक्तिरलङ्कारः। सा च महत्याः पुंव्यापारं विना मूर्च्छाद्यसम्बन्धेऽपि सम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपतया पुंव्यापाराख्यरूपकारणं विनापि मूर्च्छनादिकार्योत्पत्तिरितीत-नाद्विभावना व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिरिति सङ्क्षेपः ॥ १० ॥

निवर्त्त्येति। अतीन्द्रिया इन्द्रियमतिक्रान्ता देशकालस्वरूपादिविप्रकृष्टार्थाः। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः। 'द्विगुप्राप्तापन्नालंपूर्वगति-समासेषु परलिङ्गताप्रतिषेधो वक्तव्यः' इति विशेष्यलिङ्गत्वम्। तेषां ज्ञानं तस्य निधिः सर्वार्थद्रष्टेत्यर्थः। कृतानतीन् कृतप्रणामान् अनुव्रजतोऽनुगच्छतः नभसि आकाशे सीदन्ति गच्छन्तीति नभःसदः सुरान्। 'सत्सूद्विष' इत्या-दिना क्विप्। निवर्त्त्य प्रतिषिध्य स मुनिः सादितदैत्यसम्पदः सादिताः विध्वस्तीकृताः दैत्यानां सम्पदो येन तस्य चक्रिणः कृष्णस्य पदं स्थानं महेन्द्रालयचारु इन्द्रभवनमिव भासमानं समासदत्। समाङ्पूर्वात् षद्लृ-धातोर्लुङ्। 'पुषादि'—इत्यङ्। अत्र नतीनती पदः पदमिति च द्वयो-र्व्यञ्जनयुग्मयोरसकृदावृत्त्या छेकानुप्रासः। अन्यत्र वृत्त्यनुप्रासः इत्यनयोः संसृष्टिः ॥ ११ ॥

पतदिति। पतन् यः पतङ्गः सूर्यः स प्रतिमा उपमानं यस्य सः। 'पतङ्गौ पक्षिसूर्यौ च' इत्यमरः। तपोनिधिर्मुनिः अस्य हरेः पुरो भुवि पुरः-प्रदेशे यावत् न व्यलीयत नातिष्ठत्। 'लिङ् गतौ' इतिधातोर्दैवादिकात् कर्त्तरि लङ्। तावदच्युतो गिरेः शैलात् तडितोऽस्य सन्तीति तडित्वान्

अथ प्रयत्नोन्नमितानमत्फणैर्धृते कथञ्चित् फणिनाङ्गणैरधः ।
न्यधायिषातामभिदेवकीसुतं सुतेन धातुश्चरणौ भुवस्तले ॥ १३

तमर्घ्यमर्घ्यादिकयादिपूरुषः सपर्य्यया साधु स पर्य्यपूपुजत् ।
गृहानुपेतं प्रणयादभीप्सवो भवन्ति नापुण्यकृतां मनीषिणः ॥ १४

मेघ इव । 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति मतुपो मकारस्य वकारः । 'तसौ मत्वर्थे' इति भसंज्ञायामेकसंज्ञाधिकारेणापदत्वान्न जश्त्वम् । उच्चकैरुन्नतात् पीठात् आसनात् जवेनोदतिष्ठत् । मुनिचरणस्य भूस्पर्शात् प्रागेव स्वयमुत्थितवान् । 'ऊर्द्धं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते' इति शास्त्रमनुस्मरन्निति भावः । 'उदोऽनूर्द्धकर्मणि' इति नियमादिहोर्द्धकर्मणि नात्मनेपदम् । पतत्पतङ्ग इत्यत्र पतङ्गस्य पतनासम्भवादियमभूतोपमा इत्याचार्य्यदण्डिप्रभृतयो बभणुः । अतएवाप्रसिद्धस्योपमानत्वायोगादुत्प्रेक्षेत्याधुनिकालङ्कारिकाः सर्व्वे वर्णयन्ति ॥ १२ ॥

अथेति । अथाच्युताभ्युत्थानानन्तरं धातुः सुतेन नारदेन प्रयत्नोन्नमितास्तथापि मुनिपादन्यासभारादानमन्त्यः फणा येषां तैः फणिनां गणैः अधोऽधःप्रदेशे कथञ्चिदुद्धृते स्थापिते भुवस्तले भूपृष्ठे । अभिदेवकीसुतम् देवकीसुतम् अभि लक्ष्यीकृत्येत्यर्थः । 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः । चरणौ पादौ । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । न्यधायिषातां निहितौ । दधातेः कर्मणि लुङ् । 'स्यसिच्सी' — इत्यादिना चिण्वदिटि युक् । अत्र फणानां नमनोन्नमनासम्बन्धेऽपि मुनिगौरवाय तत्सम्बन्धाभिधानादतिशयोक्तिभेदः ॥ १३ ॥

तमिति । आदिपूरुषः पुराणपुरुषः । 'अन्येषामपि दृश्यते' इति वा दीर्घः । स कृष्णः अर्घं पूजामर्हतीति अर्घ्यः । 'दण्डादिभ्यो यः' । तं नारदम् । अर्घार्थं द्रव्यमर्घ्यम् । 'पादार्घाभ्यां च' इति यत्प्रत्ययः । 'मूल्ये पूजाविधावर्घः' 'षट् तु त्रिष्वर्घ्यमर्घार्थे' इति चामरः । अर्घ्यमादिर्यस्यास्तया अर्घ्यादिकया । 'शेषाद्विभाषा' इति विकल्पेन कप्प्रत्ययः । सपर्य्यया पूजया । 'पूजा नमस्यापचितिः सपर्य्यार्च्चार्हणाः समाः' इत्यमरः । साधु यथा तथा पर्य्य-

न यावदेतावुदपश्यदुत्थितौ जनस्तुषाराञ्जनपर्वताविव ।
स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत् ॥१५॥
महामहानीलशिलारुचः पुरो निषेदिवान् कंसकृषः स विष्टरे ।
श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम् ॥१६॥

पूपुजत् परिपूजितवान् । णौ चङन्तं कर्त्तव्यम् । युक्तं चैतदित्यर्थान्तरं न्यस्यति—महानिति । मनस ईषिणो मनीषिणः सन्तः । पृषोदरादित्वात् साधुः । अपुण्यकृतां पुण्यमकृतवताम् । 'सुकर्मपापमन्त्रपुण्येषु कृञः' इति भूते क्विप् । महान् प्रणयादुपैतुमभीप्सवः प्राप्तुमिच्छवः । आप्नोतेः सनन्ता-दुप्रत्ययः । 'आप्ज्ञप्यृधामीत्' इतीकारः । न भवन्ति किन्तु पुण्यकृतामेव । अतः कृच्छ्रलभ्याः सन्तः पूज्या इत्यर्थः ॥ १४ ॥

न यावदिति । उत्थितावेतौ मुनिकृष्णौ जनः तुषाराञ्जनयोः पर्व्वता-विव यावन्नोदपश्यन्नोत्प्रेक्षितवान्, तावच्चिरन्तनः पुराणो मुनिः कृष्णः । 'पुरा किल भगवान् बदरिकारण्ये नारायणावतारेण तपसि स्थितवान्' इति पुराणात् । 'सायंचिरम्' इत्यदिना ट्युप्रत्ययः तुडागमश्च । स्वहस्तेन दत्ते आसने मुनिं नारदम् अभिन्यवीविशत् स्वाभिमुख्येनोपवेशितवान् । अभि-निपूर्वात् विशतेर्ण्यन्ताल्लुङि 'णिश्रि'—इति चङ् ॥ १५ ॥

महामहेति । महत्या महानीलशिलायाः सिंहलद्वीपसम्भवेन्द्रनीलो-पलस्य रुगिव रुग्यस्य तस्येत्युपमालङ्कारः । 'सिंहलस्याकरोद्भूता महानीलास्तु ते स्मृताः' इति भगवानगस्त्यः । कंसकृषो हरेः पुरोऽग्रे उच्चकैरुन्नते विष्टरे आसने । 'वृक्षासनयोर्विष्टरः' इति षत्वम् । निषेदिवानुपविष्टवान् । 'भाषायां सदवसश्रुवः' इति क्वसुः । स मुनिरभिसायं सायङ्कालाभिमुखम् । अव्ययी-भावसमासः । सायङ्कालस्य कार्ष्ण्यात् कृष्णोपमानत्वम् । श्रित आश्रित उदयाद्रिरुदयाचलो येन तस्य चन्द्रमसोऽभिरामतां शोभामचूचुरत् चोरित-वान् प्राप्तवानित्यर्थः । 'चुरस्तेये' 'णिश्रि' इति चङ् । अन्यस्यान्यधर्म-सम्बन्धासम्भवात् चन्द्रमसोऽभिरामतामिवाभिरामतामित्यौपम्यपर्य्यवसानाद-सम्भवद्वस्तुसम्बन्धरूपो निदर्शनाभेदः । स चोक्तोपमया अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ १६ ॥

विधाय तस्यापचितिं प्रसेदुषः प्रकाममप्रीयत यज्वनां प्रियः ।
ग्रहीतुमार्य्यान् परिचर्य्यया मुहुर्महानुभावा हि नितान्तमर्थिनः ॥१७॥
अशेषतीर्थोपहृताः कमण्डलोर्निधाय पाणावृषिणाभ्युदीरिताः ।
अघौघविध्वंसविधौ पटीयसीर्नतेन मूर्ध्ना हरिरग्रहीदपः ॥१८॥
स काञ्चने यत्र मुनेरनुज्ञया नवाम्बुदश्यामवपुर्न्यविक्षत ।
जिगाय जम्बूजनितश्रियः श्रियं सुमेरुशृङ्गस्य तदा तदासनम् ॥१९॥

विधायेति । यज्वानो विधिनेष्टवन्तः । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । 'सुयजोः' इति यजिधातोः ङ्वनिप् । तेषां प्रियो हरिः प्रसेदुषः प्रसन्नस्य । 'सदेः क्वसुः' इत्युक्तम् । तस्य मुनेरपचितिं पूजाम् । 'पूजा नमस्यापचितिः' इत्यमरः । विधाय विशेषेण मनोवाक्कायकर्मभिस्तत्परतया कृत्वा प्रकाममत्यर्थमप्रीयत प्रीतो बभूव । प्रीयतेर्दैवादिकात् कर्त्तरि लङ् । मुनिपूजायाः प्रीतिहेतुत्वेऽर्थान्तरं न्यस्यति । महानुभावा महात्मानः आर्य्यान् पूज्यान् परिचर्य्यया मुहुर्ग्रहीतुं वशीकर्त्तुम् । 'ग्रहोऽलिटि दीर्घः' इतीटो दीर्घः । नितान्तमर्थिनोऽभिलाषवन्तो हि भवन्ति । अर्थनमर्थोऽभिलाषः स एषामस्तीति मत्वर्थे इनिः न तु णिनिः । 'कृद्वृत्ते स्तद्धितवृत्तिर्बलीयसी' इति भाष्यात् ॥ १७ ॥

अशेषेति । अशेषेभ्यस्तीर्थेभ्य उपहृता आहृतास्तथा पाणौ निधाय, कमण्डलोरुदकपात्रादुद्धृत्य पाणौ निधाय इत्यर्थः । क्रियान्तराच्छिन्नक्रियापेक्षया कमण्डलोरपादानत्वम् । 'अस्त्री कमण्डलुः कुण्डी' इत्यमरः । ऋषिणाभ्युदीरिता आक्षिप्ताः अतएवाघौघानां पापसमूहानां विध्वंसविधौ विनाशकरणे पटीयसीः समर्थतराः । पटुशब्दात् ईयसुनि 'उगितश्च' इति ङीप् । अपो जलानि हरिर्नतेन मूर्ध्ना अग्रहीत् स्वीकृतवान् । ग्रहेर्लुङ् ॥१८॥

स काञ्चनेति । नवाम्बुदश्यामतनुः स हरिः मुनेरनुज्ञया काञ्चने काञ्चनविकारे । वैकारिकोऽण्प्रत्ययः । यत्रासने न्यविक्षत उपविष्टवान् । निपूर्वविशो लुङि 'नेर्विशः' इत्यात्मनेपदे 'शल इगुपधादनिटः क्सः' तदासनं तदा हर्य्युपवेशनसमये जम्बुर्नीलफलविशेषः । 'जम्बूः सुरभिपत्रा च राजजम्बूर्महाफला' इत्यभिधानरत्नमालायाम् । तया जनिता श्रीर्यस्य तत्तथोक्तस्य । भाषित-

स तप्तकार्त्तस्वरभास्वराम्बरः कठोरताराधिपलाञ्छनच्छविः ।
विदिद्युते वाडवजातवेदसः शिखाभिराश्लिष्ट इवाम्भसां निधिः॥२०॥
रथाङ्गपाणेः पटलेन रोचिषामृषित्विषः संवलिता विरेजिरे ।
चलत्पलाशान्तरगोचरास्तरोस्तुषारमूर्त्तेरिव नक्तमंशवः ॥ २१॥
प्रफुल्लतापिञ्छनिभैरभीषुभिः शुभैश्च सप्तच्छदपांशुपाण्डुभिः ।
परस्परेण च्छुरितामलच्छवी तदैकवर्णाविव तौ बभूवतुः ॥२२॥

पुंस्कत्वात् पक्षे पुंवद्भावान्नुमभावः । सुमेरुशृङ्गस्य श्रियं जिगाय अभिभावितवान् इत्यर्थः । 'सन्लिटोर्जेः' इति कुत्वम् । उपमानुप्रासयोः संसृष्टिः ॥ १९॥

स तप्तेति । तप्तं पुटपाकशोधितं कार्त्तस्वरं सुवर्णम् । 'रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्' इत्यमरः । तद्वद्भास्वरं दीप्यमानमम्बरं यस्य सः, पीताम्बर इत्यर्थः । कठोरताराधिपस्य पूर्णेन्दोर्लाञ्छनस्य छविरिव छविर्यस्य स इत्युपमानपूर्वपदो बहुव्रीहिः उत्तरपदलोपश्च । स हरिर्वाडवजातवेदसो वाडवाग्नेः शिखाभिर्ज्वालाभिराश्लिष्टो व्याप्तोऽम्भसान्निधिरिव समुद्र इव विदिद्युते बभौ ॥ २० ॥

रथाङ्गपाणेरिति । रथाङ्गं चक्रं पाणौ यस्य तस्य हरेः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति पाणेः परनिपातः । रोचिषां छवीनां पटलेन समूहेन संवलिता मिलिता ऋषित्विषो नक्तं रात्रौ । सप्तम्यर्थेऽव्ययम् । तरोश्चलतां पलाशानां पत्राणामन्तराणि विवराणि गोचर आश्रयो येषां ते, तुषारा मूर्त्तिर्यस्य तस्येन्दोरंशव इव विरेजिरे चकाशिरे ॥ २१ ॥

प्रफुल्लेति । प्रफुल्लतीति प्रफुल्लं विकसितम् । 'फुल्लविकसने' इति धातोः पचाद्यजन्तम् । फलेर्निष्ठायाम् । 'अनुपसर्गात् फुल्लक्षीवकृशोल्लाघाः' इति निपातनात् प्रफुल्लमित्येवेति क्षीरस्वामी । तापिञ्छस्य तमालस्य पुष्पं तापिञ्छम् । 'फले लुग्' इति तद्धितलुक् । 'हिद्दीनं प्रसवे सर्व्वम्' इति नपुंसकत्वम् । 'कालस्कन्धस्तमालः स्यात् तापिञ्छोऽपि' इत्यमरः । तेन सदृशैः प्रफुल्लतापिञ्छनिभैः । नित्यसमासत्वादस्वपदविग्रहः । अत एव 'स्युरुत्तरपदे त्वमी' इति । 'निभसङ्काशनीकाशप्रतीकाशोपमादयः' इत्यमरः । सप्त छदाः पर्णानि पर्वसु

**युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत ।**
**तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ॥२३**
**निदाघधामानमिवाधिदीधितिं मुदा विकासं मुनिमभ्युपेयुषी।**
**विलोचने बिभ्रदधिश्रितश्रिणी स पुण्डरीकाक्ष इति स्फुटोऽभवत्**

यस्येति सप्तच्छदो वृक्षभेदः । 'सप्तपर्णो विशालत्वक् शारदो विषयच्छदः' इत्यमरः । सङ्ख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवदित्युक्तं भाष्ये । शेषं तापिच्छवत् । तस्य पुष्पाणि सप्तच्छदानि तेषां पांशुवत् पाण्डुभिः शुभ्रैरभीषुभिः अन्योन्यरश्मिभिः । 'अभीषुः प्रग्रहे रश्मौ' इति शाश्वतः । परस्परेण छुरिते रूषिते अमले छवी अन्योन्यकान्ती ययोस्तौ । छव्योरभीषूणामवयवावयविभावाद्भेदनिर्देशः । तौ हरिनारदौ तदा एकवर्णाविव बभूवतुः । उभयप्रभामिलनादुभयोरपि सर्वाङ्गीणो गङ्गायमुनासङ्गम इव स्फटिकेन्द्रनीलमणिप्रभामिलनप्रायः कश्चिदेको वर्णः प्रादुर्बभूव । तन्निमित्ता चेयम् अनयोरेकवर्णत्वोत्प्रेक्षा ॥ २२ ॥

युगान्तेति । युगान्तकाले प्रतिसंहृतात्मनः आत्मन्युपसंहृता आत्मानो जीवा येन तस्य कैटभद्विषो हरेर्यस्यां तनौ जगन्ति सविकासं सविस्तरमासत अतिष्ठन् । 'आस उपवेशने' लङ् । तत्र तनौ देहे तपोधनाभ्यागमेन सम्भवन्तीति सम्भवाः सम्भूताः । पचाद्यच् । मुदः सन्तोषाः न ममुः अतिरिच्यन्ते स्मेत्यर्थः । चतुर्दशभुवनभरणपर्य्याप्ते वपुषि अन्तर्न मान्तीति कविप्रौढोक्तिसिद्धातिशयेन स्वतः सिद्धस्याभेदेनाध्यवसितातिशयोक्तिः,सा च मुदामन्तःसम्बन्धेऽप्यसम्बन्धोक्त्या सम्बन्धासम्बन्धरूपा ॥ २३ ॥

निदाघेति । निदाघमुष्णं धाम किरणो यस्य तथोक्तम् । 'निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि' इति विश्वः । अर्कमिवाधिदीधितिम् अधिकतेजसं मुनिमभिलक्ष्य । 'अभिरभागे' इति लक्षणे कर्मप्रवचनीयसंज्ञा कर्मप्रवचनीययुक्ते द्वितीया । मुदा विकासमुपेयुषी उपगते । क्वसुप्रत्ययान्तो निपातः । अत एवाधिश्रिता प्राप्ता श्रीर्याभ्यां ते तथोक्ते । 'इकोऽचि विभक्तौ' इति नुमागमः । विलोचने बिभ्रत् । 'नाभ्यस्ताच्छतुः' इति नुमभावः ।

सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन् ।
द्विजावलिव्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः ॥२५॥

हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥२६॥

स हरिः पुण्डरीकाक्षः इत्येवं स्फुटोऽभवत्, सूर्यसन्निधाने श्रीविकाशभावादक्ष्णां पुण्डरीकसाधर्म्यात् । पुण्डरीक इवाक्षिणी यस्येत्यवयवार्थलाभे पुण्डरीकाक्ष इति व्यक्तमन्वर्थसंज्ञोऽभूदित्यर्थः । बिभ्रत् स्फुटोऽभवदिति पदार्थहेतुकस्य काव्यलिङ्गस्य निदाघधामानमिवेत्युपमासापेक्षत्वादनयोरङ्गाङ्गिभावेन सङ्करः ॥ २४ ॥

सितमिति । अथोभयोरुपवेशनानन्तरम् अच्युतो हेतुकर्त्ता विसारिभिरभीक्ष्णं प्रसरद्भिः । 'बहुलमाभीक्ष्ण्ये इति णिनिः । द्विजावलिर्दन्तपङ्क्तिः । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । सैव व्याजः कपटं यस्य सः तद्रूप इत्यर्थः । स चासौ निशाकरश्च तस्यांशुभिः किरणैः सितं स्वभावशुभ्रं मुनेर्वपुः सौधं प्रासादमिव सुतरामत्यन्तम् । अव्ययादाम्प्रत्ययः । सितिम्ना धावल्येन प्रयोज्यकर्त्रा लम्भयन् व्यापारयन् अतिधवलयन्नित्यर्थः । लभिरत्र गत्युपसर्जनप्राप्त्यर्थत्वेनागत्यर्थत्वात् । 'गतिबुद्धि' इत्यादिना अणि कर्त्तुर्न कर्मत्वम् । तथाह वामनः—'लभेर्गत्यर्थत्वात् णिच्यणौ कर्त्तुः कर्मत्वाकर्मत्वे' इति प्राप्त्युपसर्जनगत्यर्थत्वे तु कर्मत्वमेवेति रहस्यम् । 'लभेश्च' इति नुमागमः । शुचिस्मितां वाचमवोचत् उक्तवान् । ब्रुवो वच्यादेशः लुङ् 'वच उम्' इत्युमागमे गुणः । अत्र सौधमिवेत्युपमायाः सितिम्ना लम्भयन्नित्यसम्बन्धरूपातिशयोक्तेः द्विजावलिव्याजनिशाकरेति छलादिशब्दैरसत्यत्वप्रतिपादनरूपापह्नवस्य च मिथो नैरपेक्ष्यात् संसृष्टिः ॥ २५ ॥

हरतीति । भवदीयदर्शनं शरीरभाजां द्रष्टॄणाम् इत्यर्थः । भजो ण्विः । कालत्रितये भूतादिकालत्रितयेऽपि योग्यतां पवित्रतां व्यनक्ति गमयति । कुतः—सम्प्रति दर्शनकाले अघं पापं हरति । एष्यतो भाविनः शुभस्य

जगत्यपर्य्याप्तसहस्रभानुना न यन्नियन्तुं समभावि भानुना ।
प्रसह्य तेजोभिरसङ्ख्यतां गतैरदस्त्वया नुन्नमनुत्तमं तमः ॥ २७॥
कृतः प्रजाक्षेमकृता प्रजासृजा सुपात्रनिःक्षेपनिराकुलात्मना ।
सदोपयोगेऽपि गुरुस्त्वमक्षयो निधिः श्रुतीनां धनसम्पदामिव२८
विलोकनेनैव तवामुना मुने कृतः कृतार्थोऽस्मि निवर्हितांहसः ।
तथापि शुश्रूषुरहं गरीयसीर्गिरोऽथवा श्रेयसि केन तृप्यते २९

श्रेयसो हेतुः । तथा पूर्वाचरितैः प्रागनुष्ठितैः शुभैः सुकृतैः कृतम् । एवं त्रैकाल्येऽपि कार्य्यत्वेन कारणत्वेन च पुंसि सुकृतसमवायमवगमयते । अत एतादृशं दर्शनं कस्य न प्रार्थ्यमिति भावः । अत्र हरतीत्यादिवाक्यत्रय-स्यार्थस्य गरीरित्यादिवाक्यत्रयोक्त्या वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २६ ॥

जगतीति । जगत्सु अपर्याप्ता अपरिच्छिन्नाः सहस्रं भानवोऽंशवो यस्य तेन भानुनार्केण । 'भानवोऽर्कत्विषांशवः' इति वैजयन्ती । यत् तमो नियन्तुं निवारयितुं समभावि न शक्तं । भावे लुङ् । अविद्यमानमुत्तमं यस्मात् तद-नुत्तमं सर्वाधिकमदस्तमो मोहात्मकमसंख्यतां गतैस्तेजोभिः प्रसह्य बलात् त्वया नुन्नं छिन्नम् । अतः श्लाघ्यदर्शनो भवानिति भावः । 'नुदविद—' इत्यादिना विकल्पान्निष्ठानत्वभावः । अत्रोपमानाद्भानोर्मुनेराधिक्यप्रतिपाद-नाद्व्यतिरेकालङ्कारः ॥ २७ ॥

कृत इति । प्रजानां जनानामपत्यानां च क्षेमकृता कुशलकारिणा । 'प्रजा स्यात् सन्ततौ जने' इत्यमरः । सुपात्रे योग्यपुरुषे कटाहादिदृढभाजने च निक्षेपेण निधानेन च निराकुलात्मना स्वस्थचित्तेन । 'योग्यभाजनयोः पात्रम्' इत्यमरः । प्रजासृजा ब्रह्मणा पित्रा च त्वं धनसम्पदामिव श्रुतीनां वेदानां सदोपयोगे दानभोगाभ्यां व्ययेऽप्यक्षयः । एकत्राम्नानादन्यत्रानन्त्या-च्चेति भावः । गुरुरुपदेष्टा । सम्प्रदायप्रवर्तक इति यावत् । अन्यत्र महान् । निधीयत इति निधिः निक्षेपः कृतः । 'उपसर्गे घोः किः' । श्रुतिसम्प्रदाय-द्वारा धर्माधर्मव्यवस्थापकतया जगत्प्रतिष्ठाहेतूनां भवादृशां दर्शनं कस्य न श्लाघ्यमिति भावः । अत्र धर्म्मसाधर्म्याच्छ्लेषोऽयं प्रकृतविषय इत्याहुः॥२८

विलोकनेनेति । हे मुने, निबर्हितांहसा अपहृतपाप्मना अत एवामुना

गतस्पृहोऽप्यागमनप्रयोजनं वदेति वक्तुं व्यवसीयते यया ।
तनोति नस्तामुदितात्मगौरवो गुरुस्तवैवागम एष धृष्टताम् ॥३०

इति ब्रुवन्तं तमुवाच स व्रती न वाच्यमित्थं पुरुषोत्तम त्वया।
त्वमेव साक्षात्करणीय इत्यतः किमस्ति कार्य्यं गुरु योगिनामपि ॥

उदीर्णरागप्रतिरोधकं जनैरभीक्ष्णमक्षुण्णतयातिदुर्गमम् ।
उपेयुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिर्निरपायसंश्रया ॥ ३२ ॥

तव विलोकनेनैव कृतार्थः कृतोऽस्मि । तथाप्यहं गरीयसीरर्थवत्तराः । 'द्विवचन—' इत्यादिना ईयसुन्प्रत्ययः । 'उगितश्च' इति ङीप् । 'प्रियस्थिर—' इत्यादिना गुरोर्गरादेशः । गिरस्तव वाचोऽपि शुश्रूषुः श्रोतुमिच्छुरस्मि । शृणोतेः सन्नन्तादुप्रत्ययः । न चैतद्दूषयेत्याह—अथवा, तथाह्येत्यर्थः । अथवेति पक्षान्तरप्रसिद्धयोरिति गणव्याख्यानात् । श्रेयसि विषये केन तृप्यते । न केनापीत्यर्थः । कृतार्थताया इयत्ताभावादिति भावः । भावे लिट् ॥ २९ ॥

एवं प्रियमुक्त्वा सम्प्रत्यागमनप्रयोजनं विनयेन पृच्छति—गतस्पृहोऽपीति। गतस्पृहो विरक्तोऽपि त्वमागमनप्रयोजनं वदेति वक्तुं यया धृष्टतया व्यवसीयते उद्यम्यते । स्यतेर्भावे लट् । उदितमुत्पन्नमुक्तं वा आत्मनो मम गौरवं येन स गुरुः श्लाघ्य एष तवागम आगमनमेव नोऽस्माकं धृष्टतां तनोति विस्तारयति । 'तनु विस्तारे' लट् । भवतो निःस्पृहत्वेऽपि प्रेक्षावत्प्रवृत्तेः प्रयोजनव्याख्या सावकाशः प्रश्न इति भावः ॥ ३० ॥

इति ब्रुवन्तमिति । इति ब्रुवन्तं तं हरिं स व्रती मुनिरुवाच । किमिति हे पुरुषोत्तम पुरुषेषु श्रेष्ठ ! 'न निर्धारणे' इति षष्ठीसमासप्रतिषेधः । त्वया इत्थं गतस्पृहोऽपीति न वाच्यम् । निस्पृहस्याप्यत्र प्रयोजनसम्भवादिति भावः । तदेवाह—योगिनामपि त्वमेव साक्षात्करणीयः प्रत्यक्षीकर्तव्य इत्यतोऽस्मादन्यद्गुरु कार्यं किमस्ति, न किञ्चिदित्यर्थः । तस्मान्न प्रयोजनान्तरप्रश्नावकाश इति भावः ॥ ३१ ॥

यदुक्तं योगिनामपि त्वमेव साक्षात्करणीय इति तदेव द्रढयति—उदीर्णरागेति । उदीर्ण उद्रिक्तो रागो विषयाभिलाषः स एव प्रतिरोधकः प्रतिबन्धकः पाटच्चरश्च यस्मिन् । 'प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः'

**उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथञ्चन ।**
**बहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः ॥२३**

इत्यमरः । अभीक्ष्णमनुष्ठतयानभ्यस्तत्वेनाप्रतिहतत्वेन च जनैरतिदुर्गमं मोक्षपथमपवर्गमार्गं कान्तारं चोपेयुषः प्राप्तवतः । 'उपेयिवान् —' इत्यादिना क्वस्वन्तो निपातः । मनस्विनः सुमनसः धीरस्य च । प्रशंसायां विनिः । त्वमेव निरपायः पुनरावृत्तिरहितः संश्रयः प्राप्तिर्यस्याः सा तथोक्ता । 'न स पुनरावर्तते' इति श्रुतेः । अग्रभूमिः प्राप्यस्थानम् । 'अग्रमालम्बने प्राप्ते' इति विश्वः । 'सोऽहम्' इत्यादिश्रुतेस्तत्प्राप्तेरेव मोक्षत्वादिति भावः । तस्मान्मुमुक्षूणामपि त्वमेव साक्षात्करणीय इति सिद्धम् । 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेः । यथा कस्यचित्कुतश्चित्सङ्कटान्निर्गतस्य केनचित्कान्तारेण गतस्य किञ्चिन्निर्बाधस्थानप्राप्तिरभयाय कल्पते तथा त्वमपि मुमुक्षोरिति ध्वनिः ॥ २२ ॥

ननु प्रकृतिविविक्तपुरुषसाक्षात्कारान्मोक्षो नास्मत्साक्षात्कारादित्याशङ्क्य सोऽपि त्वमेवेत्याह—उदासितारमिति । पुराविदः पूर्वज्ञाः कपिलादयस्त्वां निगृहीतमानसैरन्तर्निबद्धचित्तैर्योगिभिः आत्मनि अधि इत्यध्यात्मम् । विभक्त्यर्थेऽव्ययीभावः । 'अनश्च' इति समासान्तष्टच् । अध्यात्मं या दृक् ज्ञानं तयाध्यात्मदृशा प्रत्यगदृष्ट्या कथञ्चन गृहीतं साक्षात्कृतम् । केन रूपेण गृहीतमित्यत आह—उदासितारमुदासीनम् । प्रकृतौ स्वार्थप्रवृत्तायामपि स्वयमप्राकृतत्वादस्पृष्टमित्यर्थः । आसेस्तृच् । विकारेभ्यो बहिः बहिर्विकारम् । महदादिभ्यः पृथगभूतमित्यर्थः । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । किञ्च प्रकृतेस्त्रैगुण्यात्मनो मूलकारणात्पृथग् भिन्नम् । 'प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे' इति यादवः । पुरा भवं पुरातनमनादिम् । 'सायञ्चिरम्—' इत्यादिना ट्युप्रत्ययः । पुरुषं पुरुषपदवाच्यं विज्ञानघनं विदुर्विदन्ति । 'विदो लटो वा' इति झेरुसादेशः । यथाहुः—'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ।' इति । 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादिश्रुतिश्च । सोऽपि त्वमेव 'तत्त्वमसि' इत्यादिवाक्यैरैक्यश्रवणात् । तस्मात्त्वमेव साक्षात्करणीय इति सूक्तमिति भावः ॥ २३ ॥

**निवेशयामासिथ हेलयोद्धृतं फणाभृतां छादनमेकमोकसः ।**
**जगत्त्रयैकस्थपतिस्त्वमुच्चकैरहीश्वरस्तम्भशिरःसु भूतलम् ॥३४॥**
**अनन्यगुर्वास्तव केन केवलः पुराणमूर्त्तेर्महिमावगम्यते ।**
**मनुष्यजन्मापि सुरासुरान् गुणैर्भवान् भवच्छेदकरैः करोत्यधः॥३५॥**

एवं भगवतो निर्गुणस्वरूपमुक्त्वा सम्प्रति प्रस्तुतोपयोगितया सगुणमाश्रित्य षड्भिः स्तौति—निवेशयामासिथेति । जगत्त्रयस्यैकस्थपतिरेकाधिपतिरेकशिल्पी च । 'स्थपतिरधिपतौ तक्ष्णि बृहस्पतिसचिवयोः' इति वैजयन्ती । त्वं हेलयोद्धृतम्, वराहावतारे इति भावः । फणाभृतामोकस आश्रयस्य, सद्मनश्च । 'ओकः सद्मनि चाश्रये' इति विश्वः । एकं छादनमावरणं भूतलमुच्चकैरुन्नतेषु । अहीश्वरः शेष एव स्तम्भस्तस्य शिरःसु मूर्धसु, अग्रेषु च, फणासहस्रेष्विति भावः । निवेशयामासिथ निवेशितवानसि । विशतेर्ण्यन्ताल्लिटि थल् । 'कृञ्चानुप्रयुज्यते लिटि' इत्यस्तेरनुप्रयोगः । अत्र श्लिष्टाश्लिष्टरूपकयोर्हेतुहेतुमद्भावाच्छिलष्ट' परम्परितरूपकम् ॥ ३४ ॥

अनन्येति । न विद्यतेऽन्यो गुरुर्यस्यास्तस्या अनन्यगुर्वाः इत्यनोकारान्तः पाठः । समासात्प्राङ्ङीषि 'नद्यृतश्च' इति कप्प्रसङ्गः स्यात् । पश्चात्त्वनुपसर्जनाधिकारात् 'वोतो गुणवचनात्' इति न प्राप्नोति । 'ङिति ह्रस्वश्च' इति वा नदीसंज्ञात्वात् 'आण्नद्याः' इत्याडागमः । केचित्तु समासान्तविधिरनित्य इति कपं वारयन्ति । तस्याः सर्वोत्तमायास्तव पुराणमूर्तेरमानुषस्वरूपस्य केवलः कृत्स्नः 'केवलः कृत्स्न एकः स्यात् केवलश्चावधारणे' इति विश्वः । महिमा केनावगम्यते । न केनापीत्यर्थः । कुतः मनुष्याज्जन्म यस्य स मनुष्यजन्मा भवान् । 'अवर्ज्यो हि बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनः । भवच्छेदकरैः संसारनिवर्तकैर्गुणैर्ज्ञानादिभिः सुरासुरान् । सुरासुरविरोधस्य कार्य्योपाधिकत्वेन अशाश्वतिकत्वात् 'येषां च विरोधः शाश्वतिकः' इति न द्वन्द्वैकवद्भाव इत्याहुः । अधः करोति । 'शेषे प्रथमः' इति प्रथमपुरुषः भवच्छब्दस्य युष्मदस्मदन्यत्वेन शेषत्वादिति । मानुष एव ते महिमा दुरवगाहः । अमानुषस्तु किमिति तात्पर्य्यार्थः । द्वितीयार्द्धेऽसकृद्दराञ्जनाद्वृत्त्या छेकानुप्रासः ॥ ३५ ॥

लघूकरिष्यन्नतिभारभङ्गुराममूं किल त्वं त्रिदिवादवातरः ।
उद्धूढलोकत्रितयेन साम्प्रतं गुरुर्धरित्री क्रियतेतरां त्वया ॥३६॥
निजौजसोज्जासयितुं जगद्द्रुहामुपाजिहीथा न महीतलं यदि ।
समाहितैरप्यनिरूपितस्ततः पदं दृशः स्याः कथमीश मादृशाम्॥३७॥

लघूकरिष्यन्निति । त्वमतिभारेणोर्जेन स्वरूपेण भङ्गुरां स्वयं भज्यमानाम् । 'भञ्जभासमिदो घुरच्' । 'भङ्गुरः कर्मकर्तरि' इति वामनः । अमूं भुवमित्यर्थः । लघूकरिष्यन्निर्भारां करिष्यन् किल । 'अभूतस्थि—' इत्यादिनाभूततद्भावे च्विः । 'च्वौ च' इति दीर्घः । तृतीया द्यौस्त्रिदिवः स्वर्गस्तस्मात् । 'घञर्थे कविधानम्' । वृत्तिविषये संख्याशब्दस्य पूरणार्थत्वं त्रिभागादिवत् । अवातरः अवतीर्णोऽसि । साम्प्रतं सम्प्रत्युद्धूढलोकत्रितयेन, कुक्षाविति शेषः । त्वया धरित्री गुरुः पूज्या, भारवती च क्रियतेतरामतिशयेन क्रियते । 'तिङश्च' इति तरप् । 'किमेत्तिङव्ययात्—' इत्यादिना आमुप्रत्ययः । लघुकर्ता गुरुकर्तेति विरोधाभासोऽलङ्कारः । 'आभासत्वे विरोधस्य विरोधाभास उच्यते' इति लक्षणात् ॥३६॥

निजेति । निजौजसा स्वतेजसा जगद्भ्यो द्रुह्यन्तीति जगद्द्रुहः कंसादयः । 'सत्सूद्विष'—इत्यादिना क्विप् । तेषां उज्जासयितुम् । तान् हिंसितुमित्यर्थः । 'जासिनि प्रहण'—इत्यादिना कर्मणि शेषे षष्ठी । 'जसु हिंसायाम्' इति चुरादिः । महीतलं नोपाजिहीथाः यदि नावतरेश्चेत् । 'ओहाङ् गतौ' लङि थासि रूपम् । ततस्तर्हि समाहितैः समाधिनिष्ठैरपि । सकर्मकादप्याश्रितादिवदविवक्षिते कर्मणि कर्तरि क्तः । अथवा समाहितैः, समाहितचित्तैरित्यर्थः । विभक्तधनेषु 'विभक्ता भ्रातरः' इतिवदुत्तरपदलोपो द्रष्टव्यः । गम्यमानार्थस्याप्रयोग एव लोप इति कैयटः । अनिरूपितोऽदृष्टस्त्वमीश मादृशाम्, चर्मचक्षुषामिति भावः । विनयोक्तिरियम् । दृशो दृष्टेः पदं गोचरः कथं स्याः । न कथञ्चिदित्यर्थः । तस्मात्साक्षात्कार एवागमप्रयोजनमिति भावः ॥ ३७ ॥

**उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर ! विश्वमीशिषे ।**
**ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ॥३८॥**
**करोति कंसादिमहीभृतां वधाज्जनो मृगाणामिव यत्तव स्तवम् ।**
**हरे हिरण्याक्षपुरःसरासुरद्विपद्विषः प्रत्युत सा तिरस्क्रिया ॥३९॥**

ननु कोऽयं नियमो यन्ममैवायं दुष्टनिग्रहाधिकारः इत्याशङ्क्यानन्यसाध्यत्वमेवाह—उपप्लुतमिति । विश्वं बिभर्तीति विश्वम्भरस्तत्सम्बुद्धौ हे विश्वम्भर विश्वत्रातः ! 'संज्ञायां भृतॄवृजि'—इत्यादिना खच्प्रत्यये मुमागमः । मदोद्धतैः कंसादिभिरुपप्लुतं पीडितं अदो विश्वं पातुं त्वमेव ईशिषे शक्तोऽसि । विश्वम्भरत्वादिति भावः । 'ईश ऐश्वर्ये' लिटि थासि रूपम् । अत्र वैधर्म्येण दृष्टान्तमाह—क्षपायास्तमस्काण्डस्तमोवर्गः । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः । 'कस्कादिषु च' इति विसर्जनीयस्य सत्वम् । मलीमसं मलिनम् 'मलीमसन्तु मलिनं कच्चरं मलदूषितम्' इत्यमरः । 'ज्योत्स्नातमिस्रा'—इत्यादिना मत्वर्थीयो निपातः । नभः क्षालयितुं रवेः ऋते रविं विना । 'अन्यारादितरर्ते'—इति पञ्चमी । कः क्षमेत शक्नुयात् । न कोऽपि इत्यर्थः । अत्र वाक्यद्वये समानधर्मस्यैकस्यैशिक्षमेतेति शब्दद्वयेन वस्तुभावेन निर्देशात्तत्रापि व्यतिरेकमुखत्वाद्वैधर्म्येण प्रतिवस्तूपमालङ्कारः । तदुक्तम्—सर्वस्य वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वये पृथङ्निर्देशे प्रतिवस्तूपमा ॥ ३८ ॥

करोतीति । किञ्च जनो मृगाणामिव कंसादिमहीभृतां वधाद्धेतोः स्तवं स्तोत्रम् । 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यमरः । करोतीति यत् । हे हरे ! हे कृष्ण ! हे सिंहेति च गम्यते । सा स्तुतिक्रिया हिरण्याक्षपुरःसराः हिरण्याक्षप्रभृतयो येऽसुरास्त एव द्विपास्तेषां द्विषः, हन्तुरित्यर्थः तस्य तव प्रत्युत वैपरीत्येन । 'प्रत्युतेत्युक्तवैपरीत्ये' इति गणव्याख्यानात् । तिरस्क्रियावमानः । यदिति सामान्ये नपुंसकम् । सेति विधेयलिङ्गम् । गजघातिनः सिंहस्य मृगवधवर्णनमिव महासुरहन्तुस्तव कंसादिक्षुद्रनृपवधवर्णनं तिरस्कार एवेत्यर्थः । अत्रासुरद्विपानामिति हरिवद्धरिरिति श्लिष्टपरम्परितरूपकं मृगाणामिवेत्युपमयाङ्गाङ्गिभावेन सङ्कीर्यते ॥ ३९ ॥

**प्रवृत्त एव स्वयमुज्झितश्रमः क्रमेण पेष्टुम्भुवनद्विषामसि ।**
**तथापि वाचालतया युनक्ति मां मिथस्त्वदाभाषणलोलुपं मनः॥४०**
**तदिन्द्रसन्दिष्टमुपेन्द्र यद्वचः क्षणं मया विश्वजनीनमुच्यते ।**
**समस्तकार्य्येषु गतेन धुर्य्यतामहिद्विषस्तद्भवता निशम्यताम्॥४१**
**अभूदभूमिः प्रतिपक्षजन्मनां भियां तनूजस्तपनद्युतिर्दितेः ।**
**यमिन्द्रशब्दार्थनिसूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते ॥ ४२ ॥**

एवं स्तुत्वा देवमभिमुखीकृत्यागमनप्रयोजनं वक्तुमुपोद्घातयति—प्रवृत्त इति । त्वमुज्झितश्रमस्त्यक्तश्रमः सन् क्रमेण भुवनानि द्विषन्तीति भुवनद्विषो दुष्टास्तेषां पेष्टुम् । तान् हिंसितुमित्यर्थः 'जासिनिप्रहण'—इत्यादिना कर्मणि शेषे षष्ठी । स्वयमपरप्रेरित एव प्रवृत्तोऽसि । एवं तर्हि पिष्टपेषणं किमिति चेत्तत्राह—तथापि स्वतः प्रवृत्तेऽपि मिथो रहसि त्वदाभाषणे त्वया सह संलापे लोलुपं लुब्धम् । 'लुब्धोऽभिलाषुकस्तृष्णक्समौ लोलुपलोलुभौ' इत्यमरः । मनो मां वाचालतया सह युनक्ति । वाचालं करोतीत्यर्थः । वाचो बह्वयोऽस्य सन्तीति वाचालः । 'आलजाटचौ बहुभाषिणि' इत्यालच् । 'स्याज्जल्पकस्तु वाचालो वाचाटो बहुभाषिणि' इत्यमरः ॥ ४० ॥

अथ स्ववाक्यश्रवणं सहेतुकं प्रार्थयते—तदिति । तत्तस्मादिन्द्रमुपगतः उपेन्द्र इन्द्रावरजः अतएवेन्द्रसन्दिष्टम् श्रोतव्यमिति भावः । किञ्च विश्वस्मै जनाय हितं विश्वजनीनम् । 'आत्मन्विश्वजनभोगोत्तरपदात्खः' । यद्वचः क्षणं न तु चिरं मयोच्यते, तद्वचोऽहिद्विषो वृत्रघ्नः । 'सर्पे वृत्रासुरेऽप्यहिः' इति वैजयन्ती । समस्तकार्य्येषु धुर्य्यतां धुरन्धरत्वं गतेन । अतोऽपि भवता निशम्यताम् । प्रार्थनायां लोट् । धुरं वहतीति धुर्यः । 'धुरो यड्ढकौ' इति यत्प्रत्ययः । स्फुटमत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४१ ॥

अथ शिशुपालो हन्तव्य इति वक्तुं तस्यावश्यवध्यत्वेऽनन्यवध्यत्वज्ञापनौपयिकतया औद्धत्यप्रकटनार्थं जन्मान्तरवृत्तान्तं तावदुद्घाटयति—अभूदिति । प्रतिपक्षाच्छत्रोः जन्म यासां तासां भियामभूमिरविषयः । निर्भीक इत्यर्थः । तपनद्युतिः सूर्यतापो दितेस्तनूजो दैत्योऽभूत् । कोऽसावत

**समत्सरेणासुर इत्युपेयुषा चिराय नाम्नः प्रथमाभिधेयताम् ।
भयस्य पूर्वावतरस्तरस्विना मनःसु येन द्युसदां न्यधीयत ॥४३॥
दिशामधीशांश्चतुरो यतः सुरानपास्य तं रागहृताः सिषेविरे ।
अवापुरारभ्य ततश्चला इति प्रवादमुच्चैरयशस्करं श्रियः ॥ ४४ ॥**

आह—हरेरिन्द्रस्य इन्द्रशब्दार्थनिसूदनं इन्दतीति इन्द्रः । 'इदि परमैश्वर्ये' । 'ऋज्रेन्द्र'—इत्यादिना रन्प्रत्ययान्त औणादिकनिपातः । तस्य इन्द्र इति शब्दस्येन्द्र इति संज्ञापदस्य योऽर्थः परमैश्वर्यलक्षणस्तस्य निसूदनं निवर्तकम् । कर्तरि ल्युट् । हरेरैश्वर्यनिहन्तारमित्यर्थः । यं दैत्यं हिरण्यशब्दपूर्वं कशिपुशब्दं प्रचक्षते । हिरण्यकशिपुमाहुरित्यर्थः । अत्र हिरण्यशब्दपूर्वकत्वं कशिपुशब्दस्यैव न तु संज्ञिनस्तदर्थस्य, इतिशब्दपरस्य कशिपुशब्दस्यार्थगतत्वेनाप्रयोज्यस्य प्रयोगादवाच्यवचनाख्यार्थदोषमाहुः । 'यदेवावाच्यवचनमवाच्यवचनं हि तत्' इति समाधानम् । एवंविधविषये शब्दपरेणार्थलक्षणेति कथञ्चित्सम्पाद्यमित्युक्तमस्माभिर्देवपूर्वं गिरिं ते इति । 'धनुरुपपदमस्मै वेदमभ्यादिदेश' इत्येतद्व्याख्यानावसरे सञ्जीविन्यां घण्टापथे च । विशेषश्चात्र—अयं दैत्यमुद्दिश्य हिरण्यपूर्वं कशिपुं प्रचक्षते संज्ञात्वेन प्रयुङ्क्ते ॥४२॥

समत्सरेणेति । समत्सरेणान्यशुभद्वेषसहितेन । 'मत्सरोऽन्यशुभद्वेषे—' इत्यमरः । अस्यतीत्यसुरः । असेरुरन् । असुर इति नाम्नः चिराय चिरकालेन । 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यमरः । प्रथमाभिधेयतामुपेयुषा अन्वर्थतया मुख्यार्थतां गतेन तरस्विना बलवता । 'तरसी बलरंहसी' इति विश्वः । येन हिरण्यकशिपुना दिवि सीदन्तीति द्युसदां देवानां मनस्सु भयस्य पूर्वावतरः प्रथमप्रवेशः । 'ऋदोरप्' । न्यधीयत निहितः । धाञः कर्मणि लङ् । अस्मादेव देवानां प्रथमं भयस्योत्पत्तिरभूदित्यर्थः ॥ ४३ ॥

दिशामिति । श्रियः सम्पदो यतः । यदित्यर्थः । दिशामधीशान्दिक्पतीनपि चतुरः सुरानिन्द्रवरुणयमकुबेरानपास्य त्यक्त्वा तं हिरण्यकशिपुं रागहृताः रागकृष्टाः सत्यः । न तु बलादिति भावः । सिषेविरे, यतो वीरप्रियाः श्रिय इति भावः । तत आरभ्य तदाप्रभृति अयशः करोतीत्ययशस्क-

पुराणि दुर्गाणि निशातमायुधं बलानि शूराणि घनाश्च कञ्चुकाः ।
स्वरूपशोभैकफलानि नाकिनाङ्गणैर्यमाशङ्क्य तदादि चक्रिरे ॥४५
स सञ्चरिष्णुर्भुवनान्तरेषु यां यदृच्छयाशिश्रियदाश्रयः श्रियः ।
अकारि तस्यै मुकुटोपलस्खलत्करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः॥४६

रम् । दुष्कीर्तिहेतुमित्यर्थः । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टप्रत्ययः । 'अतः कृकमि—'इत्यादिना विसर्जनीयस्य सत्वम् । उच्चैः प्रचुरं चला अस्थिरा इति प्रवादं जनापवादमवापुः । दिगीशानामपि सर्वस्वहारित्वात्तदौद्धत्यस्य प्राकट्यमिति भावः ॥ ४४ ॥

पुराणीति । किञ्च । नाकिनां सुराणां गणैः यं हिरण्यकशिपुमाशङ्क्य बाधकत्वेनोत्प्रेक्ष्य स कालः आदिर्यस्मिंस्तत्तदादि तदाप्रभृति स्वरूपशोभैवैकं फलं मुख्यं प्रयोजनं येषां तेषां सुरादीनां तानि तथोक्तानि प्रागीदृगसाध्यशत्रोरभावादिति भावः । 'नपुंसकमनपुंसकेन—' इत्यादिना नपुंसकैकशेषः । पुराणि दुर्गाणि प्राकारपरिखादिना अगम्यानि चक्रिरे । 'सुदुरोरधिकरणे' इति गप्रत्ययः । आयुधं निशातं निशितं चक्रे इति विभक्तिविपरिणामेनान्वयः । 'शो तनूकरणे' इति धातोः क्तः । 'शाच्छोरन्यतरस्याम्' इतीत्वविकल्पात्पक्षे आत्वम् । बलानि सैन्यानि शूराणि शौर्यवन्ति चक्रिरे सम्पादितानि । कञ्चुका वारबाणाः । लोहवर्माणीत्यर्थः । 'कञ्चुको वारबाणोऽस्त्री' इत्यमरः । घना दुर्भेदाश्चक्रिरे । इत्थं नित्यसन्नद्धा जाग्रति स्मेत्यर्थः ॥ ४५ ॥

स इति अन्येषु भुवनेषु भुवनान्तरेषु । 'सुप्सुपा' इति समासः । सञ्चरिष्णुः सञ्चरणशीलः । 'अलङ्कृञ्—' इत्यादिना चरेरिष्णुच् । श्रियो लक्ष्म्या आश्रयः स हिरण्यकशिपुः । यदृच्छया स्वैरवृत्त्या । 'यदृच्छास्वैरवृत्तिः' इत्यमरः । यां दिशमशिश्रियदगमत् । श्रयतेर्लुङ् 'णिश्रि—' इत्यादिना चङि द्विर्भावः इयङादेशः । मुकुटोपलेषु मौलिरत्नेषु स्खलन्तः करा येषां तैः । शिरसि बद्धाञ्जलिभिरित्यर्थः । 'उपलः प्रस्तरे रत्ने' इति विश्वः । तिस्रो दशा बाल्यकौमारयौवनानि, जन्मसत्तानाशा वा येषां तैस्त्रिदशैर्देवैः । यद्वा त्रिदश परिमाणमेषामिति 'बहुव्रीहौ सङ्ख्येये डजबहुगणात्' इति समासान्तः । तिस्रः सन्ध्याः समाहृतास्त्रिसन्ध्यम् । 'तद्धितार्थोत्तरपद—'

**सटाच्छटाभिन्नघनेन बिभ्रता नृसिंह सैंहीमतनुं तनुं त्वया ।**
**स मुग्धकान्तास्तनसङ्गभङ्गुरैरुरोविदारं प्रतिचस्करे नखैः ॥४७॥**
**विनोदमिच्छन्नथ दर्पजन्मनो रणेन कण्ड्वास्त्रिदशैः समं पुनः ।**
**स रावणो नाम निकामभीषणं बभूव रक्षः क्षतरक्षणं दिवः॥४८**

इत्यादिना समाहारे द्विगुः । द्विगुरेकवचनम् । 'वा टाबन्तः' इति पक्षे नपुंसकत्वम् । अत्यन्तसंयोगे द्वितीया । तस्यै दिशे करैर्हस्तैः । 'नमः स्वस्ति—' इत्यादिना चतुर्थी । नमः नमस्कारोऽकारि कृतम् । कृञः कर्मणि लुङ् । 'चिण् भावकर्मणोः' इति चिण् । सन्ध्यावन्दनेऽपि दिङ्नियमं परित्यज्य तदागमनभयात् तस्यै दिशे नमस्कारः कृत इति भावः ॥ ४६ ॥

सटाच्छटेति । हे नृसिंह ! नरः सिंह इवेत्युपमितसमासः । ना चासौ सिंहश्चेति वा समासः । सिंहस्येयं सैंही तनुं कायं बिभ्रता, नृसिंहावतारमास्थितेनेत्यर्थः । [illegible] अतनुं विस्तीर्णाम्, अत एव सटाच्छटाभिः केसरसमूहैः भिन्नाः घना मेघा येन । अभ्रङ्कषविग्रहत्वादिति भावः । 'सटा जटाकेसरयोः' इति 'छटा कान्तौ संहतौ च' इति विश्वः । त्वया स दैत्यः मुग्धो नवो । 'मुग्धः सौम्ये नवे मूढे' इति वैजयन्ती । यौ कान्तास्तनौ तयोः सङ्गेऽपि भङ्गुरैः कुटिलैर्नखैरुरोविदारमुरो विदार्य 'परिक्लिश्यमाने च' इति णमुल्प्रत्ययः । प्रतिचस्करे हतः । किरतेः कर्मणि लिट्, 'ऋच्छत्यृताम्' इति गुणः । 'हिंसायां प्रतेश्च' इति सुडागमः । वज्रकठिनोऽपि नखैर्विदारित इति वाङ्मनसयोरगोचरमहिम्नस्ते किमसाध्यमिति भावः ॥ ४७ ॥

अथास्य जन्मान्तरचेष्टितान्याचष्टे—विनोदमिति । अथ स हिरण्यकशिपुः पुनर्भूयोऽपि त्रिदशैः समं सह । 'साकं सार्धं समं सह' इत्यमरः । रणेन दर्पादन्तःसाराज्जन्म यस्यास्तस्याः कण्ड्वाः भुजकण्डूतेर्विनोदमपनोदमिच्छन्, प्राग्भवनखक्षतैस्तदपनोदाभावादित्यर्थः । दिवः स्वर्गस्य क्षतं नष्टं रक्षणं रक्षा येन तत्, क्षतदुर्गरक्षणमित्यर्थः । सापेक्षत्वेऽपि गमकत्वात् समासः । अनेन देवसर्वस्वापहारित्वमुक्तम् । भीषयत इति भीषणम् । नन्द्यादित्वाल्ल्युः । 'भियो हेतुभये षुक्' इति षुक् । निकामं भीषणः ।

धृततुषारकणस्य नभस्वतस्तरुलताङ्गुलितर्जनविभ्रमाः ।
पृथु निरन्तरमिष्टभुजान्तरं वनितयानितया न विषेहिरे ॥६०॥
हिमऋतावपि ताः स्म भृशस्विदो युवतयः सुतरामुपकारिणि ।
प्रकटयत्यनुरागमकृत्रिमं स्मरमयं रमयन्ति विलासिनः ॥ ६१ ॥
कुसुमयन् फलिनीरलिनीरवैर्मदविकाशिभिराहितहुङ्कृतिः ।
उपवनं निरभर्त्सयत प्रियान् वियुवतीर्युवतीः शिशिरानिलः ॥६२

दन्तमरीचयस्तन्मयं तद्रूपं स्फुटमावरणमाच्छादनं दधे इव धृतमिवेत्युत्प्रेक्षा । दधातेः कर्मणि लिट् ॥ ५९ ॥

धृतेति । धृतास्तुषारकणास्तुहिनशीकरा येन तस्य नभस्वतः पवनस्य सम्बन्धिनः तरुलता एवाङ्गुलयस्ताभिस्तर्जनानि यानि तान्येव विभ्रमा विलासाः पृथु विशालम् इष्टस्य दयितस्य भुजान्तरं भुजमध्यं वक्षःस्थलं निरन्तरमनितया अप्राप्तया, गाढालिङ्गनमलभमानया इत्यर्थः । इणः कर्त्तरि क्तः । वनितया स्त्रिया न विषेहिरे न सोढाः । विरहिण्यस्तर्जिता इव नभस्वतो बिभ्यतीति भावः ॥ ६० ॥

हिमेति । स्मरमयं स्मरादागतम्, स्मरप्रयुक्तमित्यर्थः । 'तत आगतः' इति मयट् । अकृत्रिममनुरागं सहजं प्रेम प्रकटयति प्रकटीकुर्व्वाणे, तत्कार्येण स्वेदेनेति भावः । अत एव सुतरामुपकारिणि पुंसां रिरंसाजननात् तेभ्यः स्वानुरागप्रकाशनाच्च अत्यन्तोपकर्त्तरीत्यर्थः । एवम्भूते हिमऋतौ हेमन्तेऽपि, स्वेदसम्भावनारहितकालेऽपीत्यर्थः । सांहितः । 'ऋत्यकः' इति प्रकृतिभावः । भृशं स्विद्यन्ति रागोष्मणा भृशस्विद इति सात्त्विकोक्तिः । क्विप् । हेमन्तोऽपि रागिणां स्वेदहेतुरेव । तद्धेतुरागहेतुत्वादिति भावः । तास्तथा धीरा युवतयो विलासिनः प्रियान् रमयन्ति स्म । हेमन्तस्योद्दीपकत्वादिति पीड़ाक्षमत्वात्, दीर्घरात्रित्वाच्चोभयेच्छासद्दशमरमन्तेत्यर्थः ॥ ६१ ॥

अथ शिशिरं वर्णयति—कुसुमयन्नित्यादिना । उपवनम्, वन इत्यर्थः । विभक्त्यर्थेऽव्ययीभावः 'तृतीयासप्तम्योर्बहुलम्' इति विकल्पादम्भावः । फलिनीः प्रियङ्गुलताः । 'प्रियङ्गुः फलिनी फली' इत्यमरः । कुसुमयन् कुसुमवतीः कुर्व्वन् । इत्युद्दीपनसामग्रीवर्णनम् । कुसुमयतेर्ण्यन्तप्रकृतिकात् 'तत्करोति'—

उपचितेषु परेष्वसमर्थतां व्रजति कालवशाद् बलवानपि ।
तपसि मन्दगभस्तिरभीषुमान् नहि महाहिमहानिकरोऽभवत्॥६३
अभिषिषेणयिषुं भुवनानि यः स्मरमिवाख्यत लोध्ररजश्चयः ।
क्षुभितसैन्यपरागविपाण्डुरद्युतिरयं तिरयन्नुदभूद्दिशः ॥ ६४ ॥

इति ण्यन्ताल्लटः शत्रादेशः । णाविष्टवद्भावे विन्मतोर्लुक् । मदविकासिभिर्मदेन विजृम्भमाणैरलिनीरवैः भृङ्गीहुङ्कारैराहितहुङ्कृतिः कृतहुङ्कारः । माधुर्याद्युद्दीपकत्वातिशयद्योतनार्थमलिनीति स्त्रीलिङ्गनिर्देशः । शिशिरानिलः प्रियान् वियुवतीः कोपाद्वियुञ्जानाः । यौतेः शतरि धातोरुवङादेशः 'उगितश्च' इति ङीप् । युवतीर्वधूः । 'यूनस्तिः' इति तिप्रत्ययः । निरभर्त्सयतातर्जयत । तर्जिभर्त्सोश्चौरादिकयोरनुदात्तेत्त्वादात्मनेपदम् । अत्र वायौ अचेतने चेतनधर्म्मो निर्भर्त्सनमुत्प्रेक्ष्यते । सा चालिनीहुङ्कारभङ्काराङ्गीवितेति रूपकसङ्कीर्णा व्यञ्जकाप्रयोगाद्गम्या च ॥ ६२ ॥

उपचितेष्विति । कालवशात् बलवानपि परेषु शत्रुषूपचितेषु प्रवृद्धेषु सत्सु असमर्थतां दौर्बल्यं व्रजति । हि यस्मात्तपसि माघमासे, 'तपा माघे' इत्यमरः । मन्दगभस्तिर्मृदुरश्मिरभीषुमान् अंशुमान्। 'अभीषुः प्रग्रहे रश्मौ' इत्यमरः । महत उपचितस्य हिमस्य हानिं नाशं करोतीति महाहिमहानिकरस्तद्धेतुर्नाभवत् । 'कृञो हेतु'—इत्यादिना हेत्वर्थे टप्रत्ययः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६३ ॥

अभीति । क्षुभित उद्गतो यः सैन्यपरागः सेनारजः स इव विपाण्डुरद्युतिः शुभ्रवर्णो यो लोध्ररजश्चयः भुवनानि अभिषिषेणयिषुं सेनयाभियातुमिच्छन्तम् । 'यत्सेनयाभिगमनमरौ तदभिषेणम्' इत्यमरः । 'सत्यापपाश'—इत्यादिना सेनाशब्दाण्णिचि सनि 'सनाशंसभिक्ष उः' इत्युप्रत्ययः । 'स्थादिष्वभ्यासेन'—इति धात्वभ्याससकारयोः षत्वम् । स्मरमाख्यतेव ख्यातवानित्युत्प्रेक्षा । चक्षिङः ख्याञ् 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः । अयं लोध्ररजश्चयो दिशस्तिरयन् तिरस्कुर्वन् । तिरःशब्दात् 'तत्करोति'—इति ण्यन्ताल्लटः शत्रादेशः । णाविष्टवद्भावे टिलोपः । उदभूत् ॥ ६४ ॥

शिशिरमासमपास्य गुणोऽस्य नः क इव शीतहरस्य कुचोष्मणः ।
इति धियास्तरुषः परिरेभिरे घनमतो नमतोऽनुमतान् प्रियाः ॥ ६५ ॥
अधिलवङ्गममी रजसाधिकं मलिनिताः सुमनोदलतालिनः ।
स्फुटमिति प्रसवेन पुरोऽहसत् सपदि कुन्दलता दलतालिनः ॥ ६६ ॥
अतिसुरभिरभाजि पुष्पश्रियामतनुतरतयेव सन्तानकः ।
तरुणपरभृतः स्वनं रागिणामतनुत रतये वसन्तानकः ॥ ६७ ॥

शिशिरेति । शिशिरमासम् अपास्यापहाय शीतं हरतीति शीतहरस्य । 'हरतेरनुद्यमनेऽच्' इत्यच्प्रत्ययः । नोऽस्माकमस्य कुचोष्मणः कुचोष्णस्य क इव गुणः, किं फलं सम्पाद्यत इति शेषः । गम्यमानक्रियापेक्षया क्वानिर्देशः । इवशब्दो वाक्यालङ्कारे । इति धियातोऽस्मिन् शिशिरमासे । सार्वविभक्तिकस्तसिः । प्रियाः कान्ता अस्तरुषो निरस्तरोषाः सत्यो नमतः प्रणताननुमतान् स्वप्रियान् घनं निविडं परिरेभिर आश्लिष्टवत्यः । इति धियेति । सुखार्थस्य परिरम्भस्य कुचोष्मसाफल्यार्थत्वमुत्प्रेक्ष्यते व्यञ्जकाप्रयोगाद्गम्यत्वं च ॥ ६५ ॥

अधीति । लवङ्गेष्वधिलवङ्गम् । विभक्त्यर्थेऽव्ययीभावः । सुमनसां पुष्पाणां दलेषु तालयन्ति प्रतितिष्ठन्तीति सुमनोदलतालिनः । ताच्छील्ये आभीक्ष्ण्ये वा णिनिः । अमी अलिनो मधुपाः रजसा परागेणार्तवेन चाधिकं मलिना मलीमसाः पापिनश्च जाता मलिनिता इति हेतोः पुरोऽग्रे सपदि कुन्दलता माघ्यवल्ली । 'माघ्यं कुन्दम्' इत्यमरः । दलता विकसता प्रसवेन निजकुसुमेनाहसज्जहास । स्फुटमित्युत्प्रेक्षायाम् । रजस्वलां गन्तारं कामिनं सपत्न्यो हसन्तीति भावः । कुन्दकुसुमस्य धावल्याद्धासत्वेनोत्प्रेक्षा ॥ ६६ ॥

अथ यमकविशेषकौतुकितया कविः पुनर्द्वादशभिरृतून् वर्णयन्नाद्यैश्चतुर्भिर्वसन्तं वर्णयति—अतिसुरभिरिति । अतिसुरभिरत्यन्तसुगन्धिः सन्तानकः कल्पवृक्षः पुष्पश्रियां पुष्पसम्पदामतनुतरया महत्तरत्वेन । अतनुशब्दात्तरबन्तात्तल्प्रत्ययः । अभाजीव अभञ्जीवेत्युत्प्रेक्षा । तथा नम्र इत्यर्थः । 'भञ्जेश्च चिणि' इति विभाषा नलोपे उपधावृद्धिः । चिणो लुक् । किञ्च वसन्तस्यानको वसन्तानकः । दुन्दुभिरिति रूपकम् । तरुणपरभृतस्तरुण-

नोज्झितुं युवतिमाननिरासे दक्षमिष्टमधुवासरसारम् ।
चूतमालिरलिनामतिरागादक्षमिष्ट मधुवासरसारम् ॥ ६८ ॥
जगद्वशीकर्तुमिमाः स्मरस्य प्रभावनीके तनवै जयन्तीः ।
इत्यस्य तेने कदलीर्मधुश्रीः प्रभावनी केतनवैजयन्तीः ॥ ६९ ॥
स्मररागमयी वपुस्तमिस्रा परितस्तार रवेरसत्यवश्यम् ।
प्रियमाप दिवापि कोकिले स्त्री परितस्ताररवे रसत्यवश्यम्॥७०

कोकिलो रागिणां कामिनां रतये रागवर्द्धनाय स्वनम् अतनुत, मधुरं चुकूजेत्यर्थः । प्रभा वृत्तम् । 'स्वरशरविरतिर्ननौ रौ प्रभा' इति लक्षणात् ॥ ६७ ॥

नोज्झितुमिति । अरमत्यन्तमिष्टेष्वीप्सितेषु मधुषु मकरन्देषु वासे वसतौ रसो रागो यस्याः सा इष्टमधुवासरसा, मधुपानप्रियेत्यर्थः । अत एव अलिनामालिर्भृङ्गश्रेणिर्युवतिमाननिरासे दक्षं कुशलम्, उद्दीपकत्वादिति भावः । मधुवासरेषु वसन्तदिनेषु सारं श्रेष्ठं मधुवासरसारम् । तत्कालस्थायिमित्यर्थः । चूतं सहकारमतिरागादतिलौल्यात् उज्झितुं हातुं नाक्षमिष्ट । क्षमेर्भौवादिकात् लुङ् । स्वागता वृत्तम् । 'स्वागतेति रनभाद्गुरुयुग्मम्' इति लक्षणात् ॥ ६८ ॥

जगदिति । प्रभावयतीति प्रभावनी सम्पादयित्री । कर्त्तरि ल्युटि ङीप् । मधुश्रीः कर्त्री जगद्वशीकर्तुं प्रभौ समर्थे अस्य स्मरस्यानीके सैन्ये जयन्तीर्जित्वरीः केतनवैजयन्तीर्ध्वजपताकास्तनवै करवाणि । तनोतेः प्राप्तकाले लोट् । टेरेत्वमित्येकारः 'एत ऐ' 'आङुत्तमस्य पिच्च' इति आटि 'आटश्च' इति वृद्धिः इति मनीषयेति शेषः । इमाः कदली रम्भातरूंस्तेने वितस्तार । 'कदली वारणबुसा रम्भा मोचांशुमत्फला' इत्यमरः । कदलीषु कामवैजयन्तीत्वोत्प्रेक्षा । वृत्तमुपजातिः ॥ ६९ ॥

स्मरेति । असती दुष्टा स्मरेण कामेन निमित्तेन यो रागो रमणेच्छा स एव तन्मयी तमिस्रा तमस्तोमः । 'तमिस्रा तिमिरे रोगे तमिस्रा तु तमस्ततौ । कृष्णपक्षनिशायां च' इति विश्वः । रवेर्वपुर्मण्डलं परितस्तार आवव्रे, अहनि रजनीधियं जनयामासेत्यर्थः । परिपूर्वात्-

**वपुरम्बुविहारहिमं शुचिना रुचिरं कमनीयतरा गमिता ।**
**रमणेन रमण्यचिरांशुलतारुचिरङ्कमनीयत रागमिता ॥ ७१ ॥**
**मुदमब्दभुवामपां मयूराः सहसायन्त नदी पपाट लाभे ।**
**अलिना रसतालिनी शिलीन्ध्रे सहसायन्तनदीपपाटलाभे ॥७२॥**

स्मृणातेर्लिट् । अवश्यम्, सत्यमित्यर्थः । कुतः, परितः समन्तात्तारख उच्चतरध्वनौ कोकिले रसति कूजति सति इत्युद्दीपकोक्तिः । स्त्री । स्त्रिय इत्यर्थः । जातावेकवचनम् । दिवेति सप्तम्यर्थेऽव्ययम् । वशं गतो वश्यः । 'वशं गतः' इति यत्प्रत्ययः । न वश्यस्तमवश्यम्, अवशं गतमपीत्यर्थः । प्रियमाप, स्वयमभिससारेत्यर्थः । यदवगणयन्तमपि प्रियं दिवापि मानमवगणय्य निषेधं चोल्लङ्घ्य समगच्छंस्तत्सत्यम् । रागतिमिरतिरोहितमानभानुमण्डला मानिन्य इति रूपकानुप्राणिता प्रियाभिक्रियानिमित्ता परिस्तरणक्रियास्वरूपोत्प्रेक्षा अवश्यमिति व्यञ्जकप्रयोगाद्वाच्या । औपच्छन्दसिकं वृत्तम् । 'विषमे ससजा गुरू समे चेत् सरयाश्छन्दसिकं तदौपपूर्वम्' इति लक्षणात् ॥ ७० ॥

अथैकेन ग्रीष्ममाह—वपुरिति । शुचिना ग्रीष्मेण प्रयोजककर्त्रा अम्बुविहारेण जलक्रीड़या हिमं शीतलमत एव रुचिरमुज्ज्वलं वपुर्देहं गमिता प्रापिता । 'गतिबुद्धि'–इत्यादिना अणिकर्त्तुः कर्मत्वम् । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इत्यभिहितत्वं च । अत एव कमनीयतरा रमणीयतरा अचिरांशुलतेवाचिरांशुलता विद्युल्लता तस्या रुचिर्यस्याः सा अचिरांशुलतारुचिः इत्युपमाद्वयम् । रागमनुरागम् इता प्राप्ता । इणः कर्त्तरि क्तः । रमणी रमणेन प्रियेणाङ्कमुत्सङ्गमनीयत नीता । 'नीह्वृकृष- मथिवह्यिग्रहाम्' इति नयतेर्द्विकर्मकता । शेषं पूर्ववत् । तोटकं वृत्तम् । 'वद तोटकमब्धिसकारयुतम्' इति लक्षणात् ॥ ७१ ॥

अथ द्वाभ्यां वर्षर्त्तुं वर्णयति—मुदमित्यादि । अब्दभुवां मेघप्रभवानामपां लाभे, मेघे वर्षति सतीत्यर्थः । सहसा मयूरा मुदमानन्दमायन्त आलभन्त । 'अय गतौ' लङि 'आड़जादीनाम्' इत्याड़ागमे वृद्धिः । नदी पपाट, नद्यः प्रावहन्नित्यर्थः । 'पट पट गतौ' लिट् । जातावेक-

कुटजानि वीक्ष्य शिखिभिः शिखरीन्द्रं
समयावनौ घनमदभ्रमराणि ।
गगनं च गीतनिनदस्य गिरोच्चैः
समया वनौघनमदभ्रमराणि ॥ ७३ ॥

अभीष्टमासाद्य चिराय काले समुद्धृताशं कमनी चकाशे ।
योषिन्मनोजन्मसुखोदयेषु समुद्धृताशङ्कमनीचकाशे ॥ ७४ ॥

वचनम् । अलिना भृङ्गेण सह सायन्तनः सायम्भवः । 'सायञ्चिरम्'—इत्यादिना ट्युप्रत्ययः तुडागमश्च । स चासौ दीपश्च तद्वत्पाटलाभे पाटलप्रभे । इत्युपमालङ्कारः । तस्मिन् शिलीन्ध्रे कन्दलीकुसुमे अलिनी अरमत । अत्र मयूरमोदप्राप्त्याद्यनेककर्तृकक्रियायौगपद्यात् भिन्नाधिकरणक्रियासमुच्चयरूपः समुच्चयालङ्कारभेदः । गुणक्रियायौगपद्यं समुच्चयः' इति सामान्यलक्षणम् । औपच्छन्दसिकं वृत्तम् ॥ ७२ ॥

कुटजानीति । शिखरीन्द्रं समया रैवतकाद्रेः समीपे । 'अभितः परितः समया'—इत्यादिना द्वितीया । अवनौ प्रदेशे घनमदा भ्रमरा येषु तानि घनमदभ्रमराणि कुटजानि कुटजकुसुमानि वनौघेन पयःपूरेण नमन्त्यभ्राणि मेघा यस्मिंस्तद्वनौघनमदभ्रम् । 'पयः कीलालममृतं जीवनं भुवनं वनम्' इत्यमरः । गगनं च वीक्ष्य शिखिभिर्मयूरैर्गीतनिनदस्य गानध्वनेः समया तुल्यया । 'तुल्यार्थैः'—इत्यादिना वैकल्पिकी षष्ठी । गिरा वाचा, केकयेत्यर्थः । उच्चैरराणि रणितम् । 'रण शब्दे' भावे लुङ् । चिणो लुक् । कुटजा वृत्तम् । 'सजसा भवेदिह सगौ कुटजाख्यम्' इति लक्षणात् ॥ ७३ ॥

अथ त्रिभिः शरदं वर्णयति—अभीष्टमित्यादि । कामयत इति कमनी कामयित्री । 'कम्रः कामयिताभीकः कमनः कामनोऽभिकः' इत्यमरः । कमेः कर्तरि ल्युटि ङीप् । योषित् । जातावेकवचनम् । अनीचा उन्नताः काशा अश्ववाला यस्मिन्ननीचकाशे काले, शरदीत्यर्थः । मनोजन्मसुखोदयेषु कामसुखाविर्भावेषु धृता आशा अभिलाषो येन तमभीष्टं प्रियं चिराय चिरकालेन । 'चिराय चिररात्राय' इत्यमरः । सम्यगुद्धृता उत्सृष्टा आशङ्का सङ्कोचो यस्मिन् कर्मणि तत्समुद्धृताशङ्कं विस्रब्धं यथा तथा आसाद्य

स्तनयोः समयेन याङ्गनानामभिनद्धारसमा न सा रसेन ।
परिरम्भरुचिं ततिर्जलानामभिनद्धा रसमानसारसेन ॥ ७५ ॥

जातप्रीतिर्या मधुरेणानुवनान्तं
कामे कान्ते सारसिकाकाकुरुतेन ।
तत्सम्पर्कम्प्राप्य पुरा मोहनलीलां
कामेकान्ते सा रसिका का कुरुते न ॥ ७६ ॥

प्राप्य मुदा सह वर्त्तत इति समुत् सानन्दा सती चकाशे, विललासेत्यर्थः। अत्र समुच्चकाश इति योषितः प्रियप्राप्तिनिमित्तहर्षाख्यभावनिबन्धनात्प्रेयो-ऽलङ्कारः। रसभावतदाभासतत्प्रकाशसमानानां निबन्धे रसवत्प्रेय ऊर्ज-स्विसमाहितानीति लक्षणात्। वृत्तमुपजातिः ॥ ७४ ॥

स्तनयोरिति। रसमानाः कूजनशीलाः। 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति ताच्छील्ये चानश्प्रत्ययः। रसतेः परस्मैपदित्वान्न शानच्-प्रत्ययः। ते सारसाः पक्षिविशेषा यस्मिंस्तेन रसमानसारसेन समयेन। शरत्कालेनेत्यर्थः। सारसानां तत्रैव सम्भवात्। 'सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः' इति यादवः। अङ्गनानां स्तनयोर्या जलानां ततिः शारदोष्मजन्मा स्वेदोदबिन्दुसन्दोहः अभितो नद्धाभिनद्धा। नह्यते-रभिपूर्वात् कर्म्मणि क्तः 'नहो धः' इति धत्वम्। हारसमा मुक्ताहारतुल्या। कुचमण्डलमण्डनायमानेति भावः। सा जलानां ततो रसेन रागेण हेतुना। बलीयसेति भावः। परिरम्भरुचिमालिङ्गनेच्छां नाभिनन्न बिभेद। शारद-स्वेदस्याप्यलङ्कारतया उद्दीपकस्याजुगुप्सितत्वान्निःसपत्नशृङ्गारा विजयन्त इत्यर्थः। अत एव रसनिबन्धनाद्रसवदलङ्कारः। लक्षणमुक्तं पूर्वश्लोके। औपच्छन्दसिकं वृत्तम् ॥ ७५ ॥

जातेति। या स्त्री अनुवनान्तम्। विभक्त्यर्थेऽव्ययीभावः। मधुरेण श्राव्येण सारसिकाकाकुरुतेन सारस्य एव सारसिकाः सारसाङ्गनाः। कात्पूर्व-स्येत्वम्। तासां काकुरुतेन विकृतशब्देन। 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमरः। काकुश्च तद्रुतं च तेन। कामे काम-कार्ये। 'सिंहो देवदत्त इतिवद्गौणप्रयोगः। कान्ते प्रिये जातप्रीतिर्जात-

कान्ताजनेन रहसि प्रसभं गृहीत-
केशे रते स्मरसहासवतोषितेन ।
प्रेम्णा मनःसु रजनीष्वपि हैमनीषु
के शेरते स्म रसहासवतोषितेन ॥७७॥

गतवतामिव विस्मयमुच्चकैरसकलामलपल्लवलीलया ।
मधुकृतामसकृद् गिरमावलीरसकलामलपल्लवलीलया ॥ ७८ ॥

स्नेहाभूत् । रसिका रसवती, रागवतीत्यर्थः । 'अत इनिठनौ' इति ठन्प्रत्ययः । सा का स्त्री एकान्ते रहसि तस्य कान्तस्य सम्पर्कं प्राप्य पुरा पुरुषप्रेरणात् पूर्वमेव कां मोहनलीलां सुरतक्रीड़ां न कुरुते । सर्वापि स्त्री सर्वानपि सुरतविशेषान् कामतन्त्रप्रसिद्धान् विस्रब्धं चकारेत्यर्थः । तेन शृङ्गारस्य परा काष्ठा प्राप्तेत्युक्तम् । मत्तमयूरं वृत्तम् ॥ ७६ ॥

अथैकेन हेमन्तमाह—कान्तेति । सहत इति सहः, पचाद्यच्, स्मरस्य सहः, कामोद्दीपक इत्यर्थः । तेनासवेन तोषितः तेन स्मरसहासवतोषितेन, अत एव रसहासावस्य स्त इति रसहासवता रागहास्यवता अत एव प्रेम्णा मनःसु पुंसां चित्तेषूषितेन वसता । वसतेः कर्त्तरि क्तः, 'वसतिक्षुधोरिट्' इतीडागमः, 'गतिबुद्धि'—इत्यादिसूत्रे चकाराद्वर्त्तमानार्थता । कान्तैव जनस्तेन कान्ताजनेन । जातावेकवचनम् । प्रसभं रहसि बलाद्गृहीतकेशे आकृष्टशिरोरुहे रते सुरते हेमन्ते भवा हैमन्त्यस्तासु हैमनीष्वपि, द्राघीयसीष्वपीति भावः । 'सर्व्वत्राण् च तलोपश्च' इति हेमन्तशब्दादण्प्रत्ययः तकारलोपश्च, 'ढिड्ढाणञ्'—इत्यादिना ङीप् । रजनीषु के युवानः शेरते स्म स्वपन्ति स्म, न केऽपीत्यर्थः । 'लट् स्मे' इति भूते लट् । एतेनातिभूमिं गतः शृङ्गार इति व्यज्यते । वसन्ततिलका वृत्तम् ॥ ७७ ॥

अथैकेन शिशिरं वर्णयति—गतवतामिति । असकलामलपल्लवलीलया असकला असमग्रविकासिनोऽमला निर्म्मलाश्च ये पल्लवास्तेषां लीला तया । नृत्यरूपयेत्यर्थः । विस्मयं गतवतामिव स्थितानामिवेत्युत्प्रेक्षा । मधुकृतां मधुकराणां सम्बन्धिनी लवलीषु लताविशेषेषु लयो लयनं स्थितिर्यस्याः सा लवलीलया आवलिः पङ्क्तिः रसकलां रसेन मध्वास्वादेन कलामव्यक्तमधुराम् ।

कुर्वन्तमित्यतिभरेण नगानवाचः
पुष्पैर्विराममलिनां च न गानवाचः ।
श्रीमान् समस्तमनुसानु गिरा विहर्तुं
बिभ्रत्यचोदि स मयूरगिरा विहर्तुम् ॥ ७९ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये ऋतुवर्णनं
नाम षष्ठः सर्गः ॥ ६ ॥

'ध्वनौ तु मधुरास्फुटे । कलः' इत्यमरः । गिरं वाचमसकृदुच्चैरलपत् । मधुमदहेतुकस्य मधुकरालापस्य पल्लवलीलया जनितविस्मयहेतुकत्वमुत्प्रेक्ष्यत इतिगुणहेतूत्प्रेक्षा । द्रुतविलम्बितं वृत्तम् ॥ ७८ ॥

कुर्व्वन्तमिति । इतीत्थं पुष्पैरेवातिभरेण महाभरेण तत्कृतेन वा गौरवेण नगान् वृक्षानवाञ्चन्तीत्यवाचो नम्रान् । अञ्चेरवपूर्व्वात् 'ऋत्विक्'— इत्यादिना क्विन्प्रत्ययः । कुर्व्वन्तमलिनां गानवाचो गीतध्वनेर्भङ्कारस्य च न विराममविरामम् असमाप्तिं कुर्व्वन्तं समस्तमृतुं सर्व्वानृतून् अनुसानु, सानुष्वित्यर्थः । विभक्त्यर्थेऽव्ययीभावः । बिभ्रति बिभ्राणे इह गिरौ रैवतकाद्रौ विहर्तुं क्रीडितुं श्रीमान् स हरिर्मयूरगिरा केकया अचोदि प्रेरितः । भगवन् ! इह विहर ऋतुगणमनुगृहाणेति प्रार्थित इवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । वृत्तमुक्तम् ॥७९॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवधकाव्यव्याख्याने सर्वङ्कषाख्ये षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ।

अनुभिरमृतुभिर्वितायमाना-
मथ स विलोकयितुं वनान्तलक्ष्मीम् ।
निरगमदभिराद्धुमाहृतानां
भवति महत्सु न निष्फलः प्रयासः ॥ १ ॥

दधति सुमनसो वनानि वल्ली-
र्युवतियुता यदवः प्रयातुमीषुः ।
मनसिशयमहास्त्रमन्यथामी
न कुसुमपञ्चकमप्यलं विसोढुम् ॥ २ ॥

इत्यमृतुगणप्रादुर्भावमभिधाय तत्फलतया भगवतः सानुचरस्य वनविहारलीलावर्णनमारभते—अनुगिरमिति । अथर्तुप्रादुर्भावानन्तरं स हरिः गिरावित्यनुगिरम् । वितक्त्यर्थेऽव्ययीभावः । 'गिरेश्च सेनकस्य' इति समासान्तः । ऋतुभिर्वितायमानां वितन्यमानाम् । तनोतेः कर्मणि लटः शानजादेशः । 'तनोतेर्यकि' इति वैभाषिक आकारादेशः । वनान्तलक्ष्मीं विलोकयितुं निरगमन्निर्गतः । 'पुषादि'—इत्यादिना गमेर्लुङि च्लेरङादेशः । ऋतुगणभक्तिं स्वीकर्तुमिति भावः । तथाहि—अभिराद्धुमाराधयितुमाहृतामादरं कुर्व्वताम्, आस्थावतामित्यर्थः । कर्त्तरि क्तः । प्रयासः सेवायासो महत्सु विषये निष्फलो न भवति । न हि भक्तानुकम्पिनो महान्तस्तत्सेवां व्यर्थयन्तीति भावः । अतो हरेरप्यृतुगणानुग्रहणार्थे निर्गमो युक्त इति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । सामान्यविशेषकार्य्यकारणभावाभ्यां निर्दिष्टप्रकृतार्थसमर्थनादर्थान्तरन्यास इति सर्व्वस्वसूत्रम् । अत्र सर्गे पुष्पिताग्रा वृत्तम् । 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ १ ॥

दधतीति । यदवो यादवाः । व्याख्यातं चैतत् । वल्लीर्बह्वीः, बहुविधा

अवसरमधिगम्य तं हरन्त्यो
हृदयमयत्नकृतोज्ज्वलस्वरूपाः ।
अवनिषु पदमङ्गनास्तदानीं
न्यदधत विभ्रमसम्पदोऽङ्गनासु ॥ ३ ॥

इत्यर्थः । 'बह्वादिभ्यश्च' इति विकल्पादीकारः । सुमनसः पुष्पाणि । 'स्त्रियः सुमनसः पुष्पम्' इत्यमरः । दधति दधन्ति । 'वा नपुंसकस्य' इति अभ्यस्तात्परस्य शतुर्वैकल्पिको नुम्प्रतिषेधः । वनानि युवतियुताः स्त्रीसमेता एव प्रयातुमीषुरिच्छन्ति स्म । तत्र हेतुमाह—अन्यथा युवतिजनाभावे अमी यदवो मनसि शेते इति मनसिशयः कामः । 'अधिकरणे शेतेः' इत्यच्प्रत्ययः, 'हलदन्तात् सप्तम्याः संज्ञायाम्' इत्यलुक् । तस्य महास्त्रभूतं कुसुमपञ्चकमपि," पञ्चापि कुसुमानीत्यर्थः । पञ्चानां सङ्घः पञ्चकम् । 'सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति कप्रत्ययः । विसोढुं नालं न शक्ताः । सकलसुमनसां सामर्थ्ये तत्रारविन्दादीनामेव पञ्चबाणबाणत्वस्य सम्भवप्रमाणसिद्धत्वादिति भावः । अतो युवतिभिः सह प्रयाणं युक्तमिति वाक्यार्थेन वाक्यार्थसमर्थनाद्वाक्यार्थसमर्थनरूपकाव्यलिङ्गमलङ्कारः । 'अरविन्दमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः' ॥ २ ॥

अवसरमिति । तमवसरं सहजिगमिषाकालमधिगम्य हृदयं हरन्त्यो हृदयङ्गमा भवन्त्यः, सर्वं हि प्रार्थ्यमानमेव प्रियं भवतीत्यर्थः । यत्नेन कृतं न भवतीत्ययत्नकृतं तथाप्युज्ज्वलं स्वरूपं यासां ताः । स्वभावसुन्दरमूर्त्तय इत्यर्थः । अङ्गनास्तदानीं तस्मिन्नवसरेऽवनिषु पदं न्यदधत निहितवत्यः, पादचारेणैव चेलुरित्यर्थः । दधातेर्लङि 'आत्मनेपदेष्वनतः' इति झस्यादादेशः । अङ्गनासु विभ्रमसम्पदो विलाससम्पदः पदं न्यदधत, तदानीं विलासाः प्रवृत्ता इत्यर्थः । अत्राङ्गनानां विलाससम्पदां चोभयोनामपि प्रकृतानामेव हृदयहरणादिना वर्णमासाम्येनौपम्यस्य गम्यमानत्वात् केवलप्रकृतविषया तुल्ययोगितालङ्कारः । वाच्यभेदेनाप्यङ्गनाविलाससम्पदामुत्तरोत्तरस्य पूर्वपूर्वविशेषकत्वावगमादेकावलीभेदो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ३ ॥

नखरुचिरचितेन्द्रचापलेखं
ललितगतेषु गतागतं दधाना ।
मुखरितवलयं पृथौ नितम्बे
भुजलतिका मुहुरस्खलत्तरुण्याः ॥ ४ ॥
अतिशयपरिणाहवान् वितेने
बहुतरमर्पितरत्नकिङ्किणीकः ।
अलघुनि जघनस्थलेऽपरस्या
ध्वनिमधिकं कलमेखलाकलापः ॥ ५ ॥

"न्यदधत विभ्रमसम्पदोऽङ्गनासु" इत्युक्तं ता एव प्रपञ्चयति—नखेति । ललितगतेषु मन्दगमनेषु नखानां रुचिभिः प्रभाभी रचिता इन्द्रचापलेखा यस्मिन् कर्म्मणि तद्यथा तथा गतागतं यातायाते । 'विप्रतिषिद्धं चानधिकरणवाचि' इति वैभाषिकी द्वन्द्वैकवद्भावः । दधाना तरुण्याः भुजलतिका मुखराः कृता इति मुखरिता ध्वनिता वलया यस्मिन् कर्म्मणि तद्यता तथा । 'कटको वलयोऽस्त्रियाम्' इत्यमरः । पृथौ नितम्बे मुहुरस्खलच्चस्खाल । अत्र नखरुचीत्यालम्बनगुण उक्तः । गतागतं दधाना अस्खलदिति तच्चेष्टा मुखरितवलयमिति तदलङ्कृतिः । तटस्थास्तूक्तावसन्तादयः । अन्यत्र विस्तारत इति चतुर्विधोऽप्युद्दीपनक्रम उक्तः । उक्तं च—'आलम्बनगुणाश्चैव तच्चेष्टा तदलङ्कृतिः । तटस्थश्चेति विज्ञेयाश्चतुष्कोद्दीपनक्रमः ॥' इति । तत्रालम्बनं रसस्य समवायिकारणं नायिका नायकश्च । तद्गुणो रूपलावण्यादिः । तच्चेष्टा भावहावादिः । अन्यत् सुगमम् । एवमुत्तरत्रापि ॥ ४ ॥

अतिशयेति । अतिशयेन परिणाहवान्, अतिविशाल इत्यर्थः । अन्यथा तज्जघनस्यापर्याप्तेरिति भावः । 'परिणाहो विशालता' । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । बहुतरमर्पिता आहिता रत्नानां किङ्किण्यो यस्मिन् सः 'नद्यृतश्च' इति कप्प्रत्ययः । कलो मधुरारावी मेखलाकलापोऽपरस्याः स्त्रियः अलघुनि जघनस्थलेऽधिकं ध्वनिं वितेने । तदलङ्कृतिरियम् ॥ ५ ॥

गुरुनिविडनितम्बबिम्बभारा-
क्रमणनिपीडितमङ्गनाजनस्य ।
चरणयुगमसुस्रुवत् पदेषु
स्वरसमसक्तमलक्तकच्छलेन ॥ ६ ॥

तव सपदि समीपमानये ता-
महमिति तस्य मयाग्रतोऽभ्यधायि ।
अतिरभसकृतालघुप्रतिज्ञा-
मनृतगिरं गुणगौरि मा कृथा माम् ॥ ७ ॥

गुर्विति । गुरु गुरुत्वगुणयुक्तं निविडं दृढं च यन्नितम्बबिम्बं तदेव भारस्तस्याक्रमणेनाधिष्ठानेन निपीडितं निष्पीडितमङ्गनाजनस्य चरणयुगं कर्तृ पदेषु पादन्यासस्थानेष्वलक्तकच्छलेन लाक्षारसमिषेण स्वरसं स्वद्रवमेव । 'गुणे रागे द्रवे रसः' इत्यमरः । आसक्तमविच्छिन्नं यथा तथा असुस्रुवत् स्रवति स्म । स्रवतेः चरणार्थाल्लुङि 'णिश्रि' इत्यादिना चङि धातोरुवङादेशः । द्रवद्रव्यकर्तृक एवायमकर्म्मकः । अन्यकर्तृकत्वे तु सकर्मकः । अत्रालक्तकच्छलेनेत्यलक्तकापह्नवेन स्वरसत्वारोपाच्छलादिशब्दैरसत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः ॥ ६ ॥

अथ कस्याश्चित् सख्याः कुपितनायिकानुनयवचनं पञ्चभिः कुलकेनाह— तवेत्यादि । मत्सखीं सपदि तव समीपमहमानये आनयिष्यामि । वर्त्तमानसामीप्ये वर्त्तमानप्रत्ययः । कर्तुरभिप्राये आत्मनेपदम् । इति मया तस्याग्रतोऽभ्यधायि अभिहितम् । दधातेः कर्म्मणि लुङ्, 'आतो युक् चिण्कृतोः' इति युगागमः । हे गुणगौरि गुणैः सौभाग्यदाक्षिण्यादिभिर्गौरि पार्व्वतीति रूपकम् । अतिरभसेनातित्वरया कृता अलघुर्म्महती प्रतिज्ञा त्वदानयनार्था यया तां मामनृतगिरमसत्यवाचं मा कृथाः मा कार्षीः । मद्वचनं सर्व्वथा कर्तव्यमित्यर्थः । करोतेर्लुङि थाम् 'न माङ्योगे' इत्यडागमप्रतिषेधः ॥ ७ ॥

न च सुतनु न वेद्मि यन्महीया-
नसुनिरसस्तव निश्चयः परेण ।
वितथयति न जातु मद्वचोऽसा-
विति च तथापि सखीषु मेऽभिमानः ॥ ८ ॥
सततमनभिभाषणं मया ते
परिपणितं भवतीमनानयन्त्या ।
त्वयि तदिति विरोधनिश्चितायां
भवति भवत्वसुहृज्जनः सकामः ॥ ९ ॥

ननु मत्प्रतिज्ञापि दुस्त्याज्येति विप्रतिषेधमाशङ्क्याह—न चेति । हे सुतनु शुभाङ्गि । दीर्घान्तोत्तरपदात् सम्बुद्धिः, अन्यथा गुणः स्यात् । अहं न वेद्मीति न, किन्तु वेद्म्यवेत्यर्थः । किं तद्वेत्सीत्यत आह—महीयान् महत्तरस्तव निश्चयस्त्वदनैक्ये प्रतिज्ञा परेण जनान्तरेण सुनिरसः सुखमोच्यः, अस्यतेः खल्प्रत्ययः, स न भवतीत्यसुनिरस इति यत्तदित्यर्थलभ्यम् । उद्देश्येन विधेयाक्षेपात् यच्छब्दस्योत्तरवाक्यस्थत्वाच्च न पूर्ववाक्ये तच्छब्दप्रयोग इति निबन्धः । तथापि विदितत्वेऽप्यसौ मत्सखी जातु कदाचिदपि मद्वचो न वितथयति नानृतीकरोतीति सखीषु मध्ये मेऽभिमानः । स्वप्रतिज्ञाभङ्गेऽपि मत्प्रतिज्ञामेव पालयसीत्यहङ्कारान्निःशङ्कं प्रतिज्ञातमित्यर्थः ॥ ८ ॥

सततमिति । भवतीं त्वामनानयन्त्या, आनयितुमशक्नुवत्या इत्यर्थः । मया सततं सदा ते तव । कर्मणि षष्ठी । अनभिभाषणमसम्भाषणं परिपणितं भवतीति, 'भातेर्डवतुः' इत्यौणादिको डवतुप्रत्ययः 'उगितश्च' इति ङीप् । तस्याः सम्बुद्धिर्हे भवति सुभगे, त्वयि तदिति तदसम्भाषणमस्त्विति विरोधनिश्चितायां निश्चितविरोधायां सत्याम् । वाहिताग्न्यादिष्विति विकल्पान्निष्ठायाः परनिपातः । असुहृज्जनो विपक्षवर्गः सकामः फलितमनोरथो भवतु भवेत् । प्राप्तकाले लोट् । अस्माद्विरोधकाङ्क्षिणामयमानन्दकालः प्राप्त इत्यर्थः ॥ ९ ॥

गतधृतिरवलम्बितुं बतासू-
ननलमनालपनादहं भवत्याः ।
प्रणयिनि यदि न प्रसादबुद्धि-
र्भव मम मानिनि जीविते दयालुः ॥ १० ॥
प्रियमिति वनिता नितान्तमागः-
स्मरणसरोषकषायितायताक्षी ।
चरणगसखीवचोऽनुरोधात्
किल कथमप्यनुकूलयाञ्चकार ॥ ११ ॥

न केवलमावयोर्विरोधः प्राणहानिरपि मम स्यादित्याह—गतेति । गतधृतिरधीरा अहं भवत्यास्तव अनालपनादसम्भाषणात्, आलपनं विहायेत्यर्थः । ल्यब्लोपे पञ्चमी । असून् प्राणानवलम्बितुं धारयितुम् अनलमशक्ता । 'अलं भूषणपर्य्याप्तिशक्तिवारणवाचकम्' इत्यमरः । बतेति खेदे । अत एव हे मानिनि, प्रणयिनि प्रिये प्रसादबुद्धिरनुग्रहबुद्धिर्न यदि नास्ति चेत् तथापि मम जीविते दयालुर्भव । 'स्पृहि' इत्यादिना आलुच्प्रत्ययः । स धूर्त्तोऽपि मत्प्राणत्राणार्थमनुग्राह्य इति भावः ॥ १० ॥

प्रियमिति । इतीत्थं नितान्तमागसोऽन्यासङ्गापराधस्य स्मरणेन सरोषे अत एव कषाये लोहिते कृते कषायिते आयते चाक्षिणी यस्याः सा तथोक्ता । 'निर्य्यासे च कषायोऽथ सौरभे लोहितेऽन्यवत्' इति विश्वः । वनिता नायिका चरणगतायाः पूर्वोक्तवाक्यान्ते प्रणतायाः सख्या वचसोऽनुरोधादनुसरणात् किल । किलेत्यपरमार्थे । वस्तुतस्त्वनुरागादेवेति भावः । प्रियं कथमपि कथञ्चिदनुकूलयाञ्चकार अभिमुखीचकार, अनुजग्राहेत्यर्थः । एषा खण्डिता नायिका । 'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति दशरूपकलक्षणात् । अत एव कविना—'आगःस्मरणसरोषकषायिताक्षी' इत्युक्तम् । एषा चासम्भाषणचिन्ताखेदाश्रुनिःश्वासाद्यनुभाववती ॥ ११ ॥

द्रुतपदमिति मा वयस्य यासी-
र्ननु सुतनुं परिपालयानुयान्तीम्।
न हि न विदितखेदमेतदीय-
स्तनजघनोद्वहने तवापि चेतः॥ १२॥
इति वदति सखीजनेऽनुरागा-
द्दयिततमामपरश्चिरं प्रतीक्ष्य।
तदनुगमवशादनायतानि
न्यधित मिमान इवावनिं पदानि॥ १३

अथ काचित् सखी कञ्चिदग्रे शीघ्रगामिनं युग्मेनाह—द्रुतेति। हे वयस्य! सखे! इतीत्थं द्रुतपदं शीघ्रपदक्रमं यथा तथा मा यासीर्मा गमः। यातेर्लुङि 'न माङ्योगे' इत्यट्प्रतिषेधः। अनुयान्तीमनुगच्छन्तीं सुतनुं शुभाङ्गीं प्रियमनुपालय प्रतीक्षस्व। असावपि शीघ्रमायातु तत्राह—न हीति। तव चेतोऽपि एतदीयस्तनजघनोद्वहने विदितखेदमनुभूतखेदं नेति न। किन्तु वेत्त्येवेत्यर्थः। अतः कथं शीघ्रमायास्यतीति भावः। 'सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ' इति वामनः॥ १२॥

इतीति। सखीजने इति वदति सति अपरः कश्चिद्दयिततमामनुरागात् स्नेहाच्चिरं प्रतीक्ष्य तदनुगमवशात् तस्याः प्रियायाः कर्त्र्याः अनुगमः पश्चाद्गमनं तस्य वशादनुसारादवनिं मिमानो मानं कुर्वाण इवेत्युत्प्रेक्षा। माङो लटः कर्त्तरि शानजादेशः, 'श्नौ' इति द्विर्भावः। अनायतान्यनन्तरालानि पदानि न्यधित निहितवान्। धाञो लुङि तङ्, 'स्थाघ्वोरिच्च' इतीकारः, सिचः कित्त्वान्न गुणः 'ह्रस्वादङ्गात्' इति सकारलोपः। एषा च नायिका स्वाधीनपतिका। 'स्वाधीनपतिका सा तु या न मुञ्चति वल्लभम्' इति लक्षणात्। हृष्टा चेयम्॥ १३॥

यदि मयि लघिमानमागतायां
तव धृतिरस्ति गतास्मि सम्प्रतीयम् ।
अनिभृतपदपातमापपात
प्रियमिति कोपपदेन कापि सख्या ॥ १४ ॥
अविरलपुलकः सह व्रजन्त्याः
प्रतिपदमेकतरस्तनस्तरुण्याः ।
घटितविघटितः प्रियस्य वक्ष-
स्तटभुवि कन्दुकविभ्रमं बभार ॥ १५ ॥

अथ काचित् पुरः प्रयातप्रियमेलनाय शीघ्रानुधावनं प्रार्थयमानां सखीमाह—यदीति । हे सखि ! मयि लघिमानमागतायां स्वयं गमनेन लाघवं प्राप्तायां तव धृतिरस्ति यदि सन्तोषो भवति चेत् । 'धृतिः सन्तोषधैर्य्ययोः' इत्यमरः । इयमेतदवस्थैव सम्प्रत्यस्मिन् क्षण एव गतास्मि इति, वदन्तीति शेषः । इतिना गम्यमानार्थत्वादप्रयोगः । अन्यथा पौनरुक्त्यादित्यालङ्कारिकाः । सख्या सह कोपपदेन कोपव्याजेन, वस्तुतस्तु रागादेवेति भावः । 'व्याजोऽपदेशो लक्ष्यञ्च', 'निमित्तं व्यञ्जनं पदम्' इति चामरः । काचिन्नायिका द्रुततराः शीघ्रतराः पदपाताः पादन्यासा यस्मिन् कर्म्मणि तद्यथा तथा प्रियं वल्लभमापपात अनुधावति स्म । एषा च स्वयं प्रवृत्ता स्वलाघवशङ्कितया पूर्व्वं निर्वासितप्रिया, अथेदानीं स्वयं प्रवृत्तेः पश्चात्तप्ता चेति गम्यते । अतः कलहान्तरिता । 'कोपात् कान्तं पराणुद्य पश्चात्तापसमन्विता' इति लक्षणात् ॥ १४ ॥

अविरलेति । सह व्रजन्त्याः, पार्श्वमाश्रित्य गच्छन्त्या इत्यर्थः । तरुण्याः सम्बन्धी अविरलपुलकः प्रियाङ्गसङ्गमात् सान्द्ररोमाञ्चः एकतरोऽन्यतरो द्वयोरन्यः, सन्निकृष्ट इति भावः । 'एकाच्च प्राचाम्' इति द्वयोरेकस्य निर्धारणे डतरच्प्रत्ययः । स्तनः प्रियस्य वक्षस्तटमिव तस्य भूः प्रदेशस्तस्यां वक्षस्तटभुवि प्रतिपदं घटितविघटितः संयुक्तवियुक्तः, पतितोत्पतितः सन्निति यावत् । विशेषणयोरपि मिथोगुणप्रधानभावविवक्षया 'विशेषणं विशेष्येण बहुलम्' इति

अशिथिलमपरावसज्य कण्ठे
दृढपरिरब्धबृहद्बहिःस्तनेन ।
हृषिततनुरुहा भुजेन भर्त्तु-
र्मृदुममृदु व्यतिविद्धमेकबाहुम् ॥ १६ ॥
मुहुरसुसममाघ्नती नितान्तं
प्रणदितकाञ्चिनितम्बमण्डलेन ।
विषमितपृथुहारयष्टि तिर्य्यक्
कुचमितरस्तदुरःस्थले निपीड्य ॥१७॥

समासः । कन्दुकविभ्रमं गेन्दुकशोभाम् । 'गेन्दुकः कन्दुकः' इत्यमरः । बभार । अन्यविभ्रमस्यान्यसम्बन्धायोगात् सादृश्याक्षेपे निदर्शना । एषा च प्रियपार्श्वगामिनी । इतः प्रभृति मदनरसेत्यतः प्राग्वक्ष्यमाणाः षट् नायिकाः स्वाधीनपतिका हृष्टाः प्रगल्भाश्चेत्यनुसन्धेयम् ॥ १५ ॥

अथापरस्या अपरं गतिविशेषं विशेषकेणाह—अशिथिलमित्यादि । अपरा स्त्री दृढं परिरब्धौ गृहीतौ बृहद्बहिः स्तनौ येन तेन, हृषितान्युदञ्चितानि तनुरूंहि रोमाणि यस्य तेन, पुलकितेनेत्यर्थः । क्विबन्तोत्तरपदो बहुव्रीहिः । 'हृषेर्लोमसु' इतीडागमः । भुजेन भर्त्तुर्वामबाहुना अमृदु गाढं यथा तथा व्यतिविद्धं व्यतिषञ्जितं मृदुं कोमलमेकबाहुं निजदक्षिणबाहुं भर्त्तुः कण्ठेऽशिथिलं दृढमवसज्यासज्य जगामेति भाविना सम्बध्यते ॥ १६ ॥

मुहुरिति । पुनः किं कृत्वा ? नितम्बमण्डलेन करणेन नितान्तमतिशयेन प्रणदिता प्रकर्षेण नदन्ती काञ्ची यस्मिन् कर्म्मणि तद्यथा तथा । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । मुहुरसुसमं प्राणसममाघ्नती ताडयन्ती । हन्तेराङ्पूर्व्वाल्लटः शत्रादेशे ङीप् । सकर्म्मकत्वान्न 'आङो यमहनः' इत्यात्मनेपदम् । विषमिता विषमीकृता पृथुहारयष्टिर्यस्मिन् कर्म्मणि तद्यथा तथा इतरं पूर्व्वश्लोकोक्तबहिः स्तनादन्यम् । दक्षिणमित्यर्थः । कुचं तस्य भर्त्तुरुरःस्थले तिर्य्यङ्निपीड्य । पूर्व्ववत् सम्बन्धः ॥ १७ ॥

गुरुतरकलनूपुरानुनादं
सललितनर्त्तितवामपादपद्मा ।
इतरदनतिलोलमादधाना
पदमथ मन्मथमन्थरं जगाम ॥ १८ ॥

विशेषकम् ।

लघुललितपदं तदंसपीठ-
द्वयनिहितोभयपाणिपल्लवान्या ।
सकठिनकुचचूचुकप्रणोदं
प्रियमबला सविलासमन्वियाय ॥१९॥

गुरुतरेति । पुनर्गुरुतरः सान्द्रतरः कलो मधुरश्च नूपुरस्यानुनादो ध्वनिर्यस्मिन् कर्म्मणि तद्यथा तथा सललितं सलीलं नर्तितं व्यापारितं वामं सव्यं पादपद्मं यया सा, इतरद्दक्षिणं पदमनतिलोलं भर्त्तृचरणस्खलनादनतिचपलं यथा तथा आदधाना निक्षिपन्ती सती मन्मथेन मन्थरमलसं जगाम । एषा च पार्श्वगामिनी ॥ १८ ॥

अथान्यासामप्येकैकेन गतिविशेषमाह—लघ्वित्यादि । अन्या अबला स्त्री तस्य प्रियस्यांसौ पीठे इव तयोर्द्वये निहितावुभौ पाणिपल्लवौ यया सा सती । 'उभादुदात्तो नित्यम्' इति पृथक्सूत्रकरणादेव सिद्धे पुनर्नित्यग्रहणसामर्थ्याद्वृत्तिविषये उभशब्दस्थानेऽप्युभयशब्दप्रयोगः । यथाह कैयटः । तत्र 'उभादुदात्तो नित्यम्' इति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषये उभशब्दस्य प्रयोगो माभूत्, उभयशब्दस्यैव यथा स्यादित्युभयचेत्यादि भवतीति । लघुनी द्रुते ललिते च पदे यस्मिन् कर्म्मणि तद्यथा तथा कठिनाभ्यां कुचचूचुकाभ्यां स्तनाग्राभ्यां यः प्रणोदो निपीड़नं तेन सह यथा तथा । 'चूचुकन्तु कुचाग्रं स्यात्' इत्यमरः । तेन सहेत्यादिना समासे 'वोपसर्जनस्य' इति सहशब्दस्य सभावः । णोपदेशत्वात् प्रणोद इति णत्वम् । सविलासं च प्रियमन्वियाय अनुजगाम । एषा पृष्ठगामिनी ॥ १९ ॥

जघनमलघुपीवरोरु कृच्छ्रा-
द्रुरुनिविरीसनितम्बभारखेदि ।
दयिततमशिरोधरावलम्बि-
स्वभुजलताविभवेन काचिदूहे ॥२०॥
अनुवपुरपरेण बाहुमूल-
प्रहितभुजाकलितस्तनेन निन्ये ।
निहितदशनवाससा कपोले
विषमवितीर्णपदं बलादिवान्या ॥२१॥
अनुवनमसितभ्रुवः सखीभिः
सह पदवीमपरः पुरोगतायाः ।
उरसि सरसरागपाटलेखा-
प्रतिमतयानुययावसंशयानः ॥२२॥

जघनमिति । काचित् स्त्री अलघू गुरू पीवरौ पीनौ चोरू यस्य तत् उरुर्महान् निविरीसो निविड़ः । 'निविड़ं निविरीसं च दृढ़ं गाढ़ं प्रचक्षते' इति वैजयन्ती । 'नेर्बिड्ज्विरीसचौ' इति निशब्दाद्बिरीसच्प्रत्ययः । स च यो नितम्बः स्त्रीकटिपश्चाद्भागः । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः । स एव भारस्तेन खिद्यन्त इति तथोक्तम् । आभीक्ष्ण्ये णिनिः । जघनं कटिपुरोभागं दयिततमस्य शिरोधरायां ग्रीवायामवलम्बिन्योर्लम्बमानयोः स्वभुजलतयोर्विभवेन सामर्थ्येन कृच्छ्रादूहे उवाह । वहेः स्वरितेत्त्वात् कर्त्रभिप्राय आत्मनेपदम् । इयं च पृष्ठगामिनी प्रियकण्ठावलम्बा ॥२०॥

अनुवपुरिति । अन्या स्त्री वपुषः पश्चादनु । वपुः स्त्रीपृष्ठभागः । 'अव्ययं विभक्ति' इत्यादिना पश्चादर्थेऽव्ययीभावः । बाहुमूलयोः स्त्रीकक्षयोः प्रहितावधः प्रसारितौ भुजौ ताभ्यामाकलितस्तनेन गृहीतस्तनेन कपोले निहितदशनवाससा न्यस्ताधरेण किञ्चिदावृत्तमुख्याः सत्याः कपोलं चुम्बतेत्यर्थः । अपरेण कामिना विषमं प्रियाङ्घ्रिसङ्घर्षोच्छिष्टं वितीर्णपदं न्यस्ताङ्घ्रि यथा तथा बलादिव निन्ये नीता, आरोप्य नीयमानेव गमयाश्चक्र इत्यर्थः ।एषा पुरोगामिनी ॥२१॥

अनुवनमिति । अपरः कामी अनुवनं वनं प्रति सखीभिः सह पुरो-

मदनरसमहौघपूर्णनाभी-
ह्रदपरिवाहितरोमराजयस्ताः ।
सरित इव सविभ्रमप्रयात-
प्रणदितहंसकभूषणा विरेजुः ॥२३॥

श्रुतिपथमधुराणि सारसाना-
मनुनदि शुश्रुविरे रुतानि ताभिः ।
विदधति जनतामनःशरव्य-
व्यधपटुमन्मथचापनादशङ्काम् ॥२४॥

गतायाः असितभ्रुवः स्वकान्तायाः पदवीमुरसि वक्षसि सरस आर्द्रः रागो लाक्षारञ्जनं यस्य तस्य पादस्य या रेखा विन्यासः सा प्रतिमा उपमानं यस्याः सा तत्प्रतिमा तस्य भावस्तत्ता तया, तत्सदृशतयेत्यर्थः । असंशयानोऽसन्दिहानः । शीङो लटः कर्त्तरि शानजादेशः । अनुययौ । अत्र पादरेखाप्रतिमतयेति सादृश्यवस्तुना सुरतकालीनं पादताड़नं वस्तु सरागपदार्थमहिम्ना प्रतीयत इति पदगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुध्वनिः संलक्ष्यक्रमध्वनेर्भेदः ॥ २२ ॥

मदनेति । मदनस्य रसः शृङ्गारः, अन्यत्र रसो जलं तस्य महौघेन महापूरेण पूर्णा नाभ्य एव ह्रदास्तेषां परिवाहाः कृताः परिवाहिता जलोच्छ्वासीकृता रोमराजयो यासां ताः । 'जलोच्छ्वासाः परीवाहाः' इत्यमरः । सरिज्जलानि ह्रदानापूर्य्य परित उच्छ्वसन्तीति प्रसिद्धिः । सविभ्रमैः सविलासैः प्रयातैः प्रकृष्टगमनैः प्रणदिताः शिञ्जिता ये हंसकाः पादकटकाः । 'हंसकाः पादकटकाः' इत्यमरः । अन्यत्र हंसा एव हंसका मरालास्त एव भूषणानि यासां ताः स्त्रियः सरित इव विरेजुः । मदनरसपूर्णेत्यनेन नाभीनां तदुद्बोधकत्वं व्यज्यते । परिवाहितरोमराजय इति रोमराजीनां परिवाहत्वनिरूपणान्नाभ्य एव ह्रदा इति रूपकाश्रयणम् । ताः सरित एवेति श्लिष्टविशेषणेयमुपमा श्लेष एवे- त्यन्ये ॥ २३ ॥

श्रुतिपथेति । अनुनदि नदीनां समीपे । समीपार्थेऽव्ययीभावः ।

मधुमथनवधूरिवाह्वयन्ति
भ्रमरकुलानि जगुर्यदुत्सुकानि ।
तदभिनयमिवावलिर्वनाना-
मतनुत नूतनपल्लवाङ्गुलीभिः ॥२५॥

असकलकलिकाकुलीकृतालि-
स्खलनविकीर्णविकाशिकेशराणाम् ।
मरुदवनिरुहां रजो वधूभ्यः
समुपहरन् विचकार कोरकाणि ॥२६॥

'अव्ययीभावश्च' इति नपुंसकत्वे ह्रस्वत्वम् । ताभिः स्त्रीभिर्जनानां समूहो जनता । 'ग्रामजन' इत्यादिना सामूहिकस्तल्प्रत्ययः । तस्या मनांस्येव शरव्यं लक्ष्यम् । 'लक्ष्यं शरव्यं च' इत्यमरः । तस्य व्यधो वेधः । 'व्यध-जपोरनुपसर्गे' इत्यपप्रत्ययः । तत्र पटुः समर्थो यो मन्मथचापनादः स इति शङ्कां भ्रमं विदधति विदधानानि । 'वा नपुंसकस्य' इति वैकल्पिको नुम्प्र-तिषेधः । श्रुतिपथमधुराणि, श्राव्याणीत्यर्थः । सारसानां रुतानि शुश्रुविरे श्रुतानि । सारसरुतश्रवणान्मन्मथोद्दीपनमासीदित्यर्थः । अत्र सारसरुते मन्मथचापनादभ्रमाद्भ्रान्तिमदलङ्कारः । 'कविसम्मतसादृश्याद्विधेये पिहिता-त्मनि । आरोप्यमाणानुभवो यत्र स भ्रान्तिमान् मतः ॥' इति लक्षणात् ॥२४॥

मध्विति । उत्सुकान्युन्मनांसि भ्रमरकुलानि मधुमथनस्य हरेर्वधूराह्वयन्ती आकारयन्तीवेत्युत्प्रेक्षा । 'हूतिराकारणाह्वानम्' इत्यमरः । 'शप्श्यनो-र्नित्यम्' इति ह्वयतेः शतुर्नुमागमः । जगुरिति गायतेर्लिट् । वनानामावलिर्नू-तनपल्लवा एवाङ्गुल्य इत्येकदेशवर्तिसावयवरूपकम् । अस्यैव वनावली नर्त्तकीत्व-रूपगमकत्वादिति । ताभिस्तदभिनयं व्यञ्जकचेष्टामतनुतेव । 'व्यञ्जकाभिनयौ समौ' इत्यमरः । 'अङ्गैरालम्बयेद्गीतं हस्तेनार्थं प्रदर्शयेत्' इति वचनात् । गीतार्थ-स्याह्वानस्य व्यञ्जनमङ्गुलिभिरकार्षीदिवेति क्रियास्वरूपोत्प्रेक्षा । पूर्वोक्त-रूपकानुप्राणिता साह्वानोत्प्रेक्षासापेक्षेति सजातीयसङ्करोऽपीति ॥ २५ ॥

असकलेति । मरुद्वनानिलः असकला असमग्राः, अर्द्धविकचा इत्यर्थः । ताभिः कलिकाभिः कोरकैराकुलीकृतानां सङ्क्षोभितानामलीनां स्खलनेन

उपवनपवनानुपातदक्षै-
रलिभिरलाभि यदङ्गनागणस्य ।
परिमलविषयस्तदुन्नताना-
मनुगमने खलु सम्पदोऽग्रतःस्थाः ॥२७॥
रथचरणधराङ्गनाकराब्ज-
व्यतिकरसम्पदुपात्तसौमनस्याः ।
जगति सुमनसस्तदादि नूनं
दधति परिस्फुटमर्थतोऽभिधानम् ॥२८॥

विघट्टनेन विकीर्णा विक्षिप्ताः विकासिनः केशराः किञ्जल्का येषां तेषा-मवनिरुहाम् । क्विप् । रजः परागं बधूभ्यः समुपहरन् प्रयच्छन् यथा । कश्चित् कामीति भावः ।धनमर्जयन् वसतीतिवत् 'लक्षणहेत्वोः क्रियायाः' इति हेत्वर्थे शतृप्रत्ययः । कोरकाणि कुड्मलानि, 'कलिका कोरकः पुमान्' इत्यमरकोषे पुंस्त्वाभिधानं प्रायिकाभिप्रायम् । 'कोरकं कुड्मलेऽपि स्यात् कक्कोलकमृणालयोः' इति विश्वप्रकाशादौ नपुंसकत्वस्याभिधानात् । विचकार, विकासयामासेत्यर्थः । विपूर्वात् किरतेः करोतेर्वा लिट् । अत्र कोरकविकासकरणस्य समुपहरन्निति हेत्वर्थेन बधूसम्प्रदानकपरागोपहरणार्थत्वावगमात् फलोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ २६ ॥

उपवनेति । वने उपवनम् । विभक्त्यर्थेऽव्ययीभावः । तत्र यः पवनस्तस्यानुपातेनानुसारेण दक्षैर्विचक्षणैरलिभिर्यत् यतः कारणादङ्गनाजनस्य सम्बन्धी परिमलो गन्धविशेषः, 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमरः । स एव विषयो भोग्यार्थः । 'रूपं स्पर्शो गन्धरसशब्दाश्च विषया अमी' इति । अलाभि लब्धः । लभेः कर्मणि लुङ्, 'विभाषा चिण्णमुलोः' इति विकल्पान्नुमभावः 'अत उपधायाः' इति वृद्धिः । तस्मादुन्नतानां महतामनुगमने पश्चाद्धावने, अनुवृत्तौ च सम्पदोऽग्रतःस्थाः पुरोवर्तिन्यः खलु । 'सुपि स्थः' इति कप्रत्ययः । अत्रानुगमनयोर्द्वयोरभेदाध्यवसायाच्छ्लेषोत्थापितातिशयोक्त्यानुप्राणितोऽयमर्थान्तरन्यासः सामान्येन विशेषसमर्थनरूपः ॥ २७ ॥

रथेति । सुमनसः पुष्पाणि रथचरणं चक्रं तस्य धरो धारयिता हरिः ।

अभिमुखपतितैर्गुणप्रकर्षा-
दवजितमुद्धतिमुज्ज्वलां दधानैः ।
तरुकिसलयजालमग्रहस्तैः
प्रसभमनीयत भङ्गमङ्गनानाम् ॥ २९ ॥
मुदितमधुभुजो भुजेन शाखा-
स्खलितविशृङ्खलशङ्खकं धुवत्याः ।
तरुरतिशयितापराङ्गनायाः
शिरसि मुदेव मुमोच पुष्पवर्षम् ॥३०॥

पचाद्यच् । तस्याङ्गनास्तासां कराग्रैर्व्यतिकरः सम्पर्कः स एव सम्पत्तयो-पात्तं लब्धं सौमनस्यं सुमनस्त्वं सन्तुष्टचित्तत्वं याभिस्ताः सत्यः अत एव सौमनस्यलाभ आदिर्यस्मिन् कर्म्मणि तत्तदादि, ततः प्रभृतीत्यर्थः । अर्थतः पूर्वोक्तावयवार्थात् परिस्फुटं प्रसिद्धावयवार्थमभिधानं सुमनस इति नामधेयं दधति, पूर्वं लम्बकर्णकादिवद्रूढमिति भावः । 'आख्याह्वे चाभिधानञ्च नामधेयञ्च नाम च' इत्यमरः । स्त्रियः पुष्पाख्यवर्चेतुं प्रवृत्ता इति फलितो-ऽर्थः । नूनमित्युत्प्रेक्षायाम् । अत्रोपात्तसौमनस्या इति सौमनस्योपादानस्य पदार्थस्य विशेषणगत्या सुमनःपदान्वर्थताहेतुकत्वोक्त्या काव्यलिङ्गम् । तदुत्था-पिता चेयं तदादित्वोत्प्रेक्षेति सङ्करः । तेन चाङ्गनाकराणामतिश्लाघ्यत्वं व्यज्यते ॥ २८ ॥

अभिमुखेति । अभिमुखपतितैर्भञ्जनार्थमभिमुखमागतैः उज्ज्वलामुत्कृ-ष्टामुद्धतिमुपरिप्रसारमौद्धत्यञ्च दधानैरङ्गनानामग्राणि च ते हस्ताश्चेति समानाधिकरणसमासः । अत एव । 'हस्ताग्राग्रहस्तयोर्गुणगुणिनोरभेदात्' इति वामनः । तैरग्रहस्तैः कर्तृभिः गुणप्रकर्षाद्धेतोरवजितमवधीरितं तरुकिसलयजालं प्रसभं बलाद्भङ्गं छेदं पराजयं चानीयत नीतम् । 'प्रधान-कर्म्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति किसलयजालस्य प्राधान्यादभि-धानम् । अत्राग्रहस्तेषु विशेषणमहिम्ना जिगीषुत्वस्य किसलयजाले जेतव्य-त्वस्य च प्रतीतेः समासोक्तिरलङ्कारः ॥ २९॥

मुदितेति । मुदिता हृष्टा मधुभुजो मधुपा यासु ताः शाखा भुजेन

अनवरतरसेन रागभाजा करजपरिक्षतिलब्धसंस्तवेन ।
सपदि तरुणपल्लवेन वध्वा विगतदयं खलु खण्डितेन मम्ले ॥३१

प्रियमभि कुसुमोद्यतस्य बाहोर्नवनखमण्डनचारु मूलमन्या ।
मुहुरितरकराहितेन पीनस्तनतटरोधि तिरोदधेंऽशुकेन ॥३२॥

हस्तेन चलितानि विशृङ्खलान्यप्रतिहतरवाणि शङ्कानि वलयानि यस्मिन् कर्मणि तद्यथा तथा धुवत्याः कम्पयन्त्याः । 'धू विधूनने' इति धातोस्तौदादिकाच्छतरि ङीप् । 'क्ङिति च' इति गुणवृद्धिप्रतिषेधादुवङादेशः । अतिशयिता सौन्दर्येणातिक्रान्ता अपराङ्गना यया सा तस्याः शिरसि तरुर्मुदेव तदभिसरणसन्तोषेणेवेति गुणहेतूत्प्रेक्षा । पुष्पवर्षं पुष्पवृष्टिं मुमोच ॥ ३० ॥

अनवरतेति । अनवरतसेनानवच्छिन्नद्रवेण, अन्यत्रानुबद्धशृङ्गारेण रागभाजा रक्तेन, प्रीतिभाजा च करजपरिक्षतिषु नखक्षतेषु लब्धसंस्तवेन प्राप्तपरिचयेन । 'संस्तवः स्यात् परिचयः' इत्यमरः । वध्वा विगतदयं निर्दयं यथा तथा खण्डितेन छिन्नेन निराकृतेन च तरुणपल्लवेन नवकिसलयेन युवविटेन च । 'पल्लवः किसलये विटे' इति विश्वः । सपदि मम्ले म्लानम् । खलु प्रसिद्धौ । म्लायतेर्भावे लिट् । अत्राभिधायाः प्रकृतार्थे नियन्त्रितत्वादप्रकृतार्थप्रतीतिः शब्दशक्तिमूलो ध्वनिः । न श्लेषः तेन चोभयोः पल्लवयोरौपम्यं गम्यते ॥ ३१ ॥

अथासां पुष्पावचये शृङ्गारचेष्टाः वर्णयन् कस्याश्चिच्चेष्टाविशेषमेकेनाह —

प्रियमिति । अन्या स्त्री प्रियमभि, प्रियस्याग्रत इत्यर्थः । 'अभिरभागे' । इत्यभेर्लक्षणार्थे कर्मप्रवचनीयत्वात् तद्योगे द्वितीया । कुसुमेषूद्यतः कुसुमोद्यतः । कुसुमग्रहणार्थमुत्क्षिप्त इत्यर्थः । प्रकृतिविकारभावाभावान्न तादर्थ्ये चतुर्थीसमासः । तस्य बाहोर्नवं यन्नखं नखक्षतं तदेव मण्डनं तेन चारु सुन्दरं मूलम्, कक्षभागमित्यर्थः । मुहुरितरकरेण सव्यपाणिना आहितेन निहितेनांशुकेनोत्तरीयेण पीनं स्तनतटं रुणद्धीति पीनस्तनतटरोधि तदावरणं यथा तथा तिरोदधे तिरश्चकार । अयञ्चापलाख्यः सञ्चारिभावः । 'आत्मप्रकाशिनी चेष्टा रागादेश्चापलं मतम्' इति लक्षणात् । प्रौढ़ा चेयम् ॥ ३२ ॥

विततवलिविभाव्यपाण्डुरेखाकृतपरभागविलीनरोमराजिः।
कृशमपि कृशतां पुनर्नयन्ती विपुलतरोन्मुखलोचनावलग्नम्॥३३
प्रसकलकुचबन्धुरोद्धुरोरःप्रसभविभिन्नतनूत्तरीयबन्धा।
अवनमदुदरोच्छ्वसद्दुकूलस्फुटतरलक्ष्यगभीरनाभिमूला॥ ३४॥
व्यवहितमविजानती किलान्तर्वणभुवि वल्लभमाभिमुख्यभाजम्।
अधिविटपि सलीलमग्रपुष्पग्रहणपदेन चिरं विलम्ब्य काचित्॥३५

अथापरस्याश्चेष्टाविशेषं षड्भिः कुलकेनाह—वितततेत्यादि। काचित् वितताभिर्गात्रोन्नमनाद्विश्लिष्टाभिर्वलिभिस्त्रिवलिभिर्विभाव्याः संलक्ष्याः पाण्डुरेखा रेखाकारा वलीत्रयान्तरालभागास्ताभिः कृतपरभागा जनितवर्णोत्कर्षा: अत एव विशेषेण लीना विलीना रोमराजिर्यस्याः सा तथोक्ता कृशमपि, स्वभावत एवेति भावः। अवलग्नं मध्यम्। 'मध्यमञ्चावलग्नञ्च मध्योऽस्त्री' इत्यमरः। पुनः कृशतां नयन्ती। अग्रपुष्पग्रहणाय गात्रविजृम्भणादिति भावः। तथा विपुलतरे उन्मुखे ऊर्ध्वमुखे च लोचने यस्याः सा। अग्रपुष्पग्रहणार्थमिति भावः॥ ३३॥

प्रसकलेति। प्रसकलाभ्यामतिसमग्राभ्यां कुचाभ्यां बन्धुरमुन्नतानतम्। 'बन्धुरन्तून्नतानतम्' इत्यमरः। उद्धुरं निर्भरम्। दृढमिति यावत्। 'ऋक्पूर्'—इत्यादिना समासान्तः। तस्मादुरसः प्रसभाद्बलात्काराद्विभिन्नो विश्लिष्टस्तनूत्तरीयबन्धो यस्याः सा। गात्रविजृम्भणाद्विस्रस्तकुचावरणेत्यर्थः। किञ्च अवनमतोऽन्तर्लीयमानादुदरादुच्छ्वसद्विश्लिष्यद्दुकूलं यस्य तत्, अत एव स्फुटतरं यथा तथा लक्ष्यं गभीरमगाधं नाभेर्मूलमन्तरालं यस्याः सा॥ ३४॥

व्यवहितमिति। काचित् पूर्वोक्तविशेषणविशिष्टाङ्गना अन्तर्वणभुवि वनाभ्यन्तरप्रदेशे। 'प्रनिरन्तः'—इत्यादिना वननकारस्य णत्वम्। व्यवहितं तिरोहितमाभिमुख्यभाजम्। अभिमुखावस्थितमित्यर्थः। तं वल्लभं प्रियमविजानती किल जानानाप्यजानानेव अधिविटपि विटपिनि वृक्षे। विभक्त्यर्थेऽव्ययीभावः। सलीलं यथा तथाग्रे वृक्षाग्रे यानि पुष्पाणि तेषां ग्रहणस्य पदेन मिषेण चिरं विलम्ब्य। प्रियाय स्वाङ्गप्रकाशनार्थमिति भावः॥ ३५॥

अथ किल कथिते सखीभिरत्र क्षणमपरेव ससम्भ्रमा भवन्ती ।
शिथिलितकुसुमाकुलाग्रपाणिः प्रतिपदसंयमितांशुकावृताङ्गी॥३६
कृतभयपरितोषसन्निपातं सचकितसस्मितवक्त्रवारिजश्रीः ।
मनसिजगुरुतत्क्षणोपदिष्टं किमपि रसेन रसान्तरं भजन्ती ॥३७
अवनतवदनेन्दुरिच्छतीव व्यवधिमधीरतया यदस्थितास्मै ।
अहरत सुतरामतोऽस्य चेतः स्फुटमभिभूषयति स्त्रियस्त्रपैव ॥३८

षड्भिः कुलकम् ।

अथेति । अथ विलम्बानन्तरमत्रास्मिन् प्रिये सखीभिः कथिते सति किलायमत्रैवास्त इति निवेदिते सति क्षणं ससंभ्रमा अपरेव पूर्व्वविपरीतव्यापारकारणादन्येव भवन्ती । बुद्धिपूर्व्वकारित्वमज्ञाननाटनेन व्यञ्जयन्तीत्यर्थः । शिथिलितः पुष्पग्रहणान्निवर्त्तितः कुसुमाकुलः कुसुमव्याप्ततोऽग्रपाणिर्यया सा तथोक्ता प्रतिपदं प्रतिस्थानं संयमितेन नियमितेनांशुकेन । 'अंशुकं सूक्ष्मवस्त्रे स्यात्' इति विश्वः । वस्त्रेणावृतमङ्गं यस्याः सा तथोक्ता सती ॥ ३६ ॥

कृतभयेति । किञ्च कृतः भयपरितोषयोर्भर्त्तृदर्शनोत्थसाध्वसहर्षयोः सन्निपातः सङ्करो येन तत् । मनसि जातो मनसिजः स्मरः । 'सप्तम्यां जनेर्डः' । 'हलदन्तात् सप्तम्याः संज्ञायाम्' इत्यलुक् । स एव गुरुराचार्य्यस्तेन तत्क्षण उपदिष्टम् । तदेकहेतुकमित्यर्थः । किमप्यनिर्वाच्यं रसान्तरं लक्षणया भावान्तरं तच्चेह किल किञ्चिताख्यं विवक्षितम् । कृतभयेत्यादिविशेषणेन क्रोधाश्रुहर्षभीत्यादेः सङ्करः । किलकिञ्चितमिति लक्षणार्थस्य प्रतीतेः । रसेन रागेण हेतुना भजन्ती अतएव सचकिता सभयसम्भ्रमा । 'चकितं भयसम्भ्रमः' इत्यमरः । सस्मिता हर्षात् समन्दहासा वक्त्रवारिजश्रीर्यस्याः सा सती । अत्र चकितस्मितयोः पूर्व्वोक्तभयहर्षानुभावत्वेनोक्तिः ॥ ३७॥

अवनतेति । अवनतवदनेन्दुः । लज्जया नम्रमुखीत्यर्थः । अधीरतया अधृष्टतया व्यवधिं किञ्चिद्व्यवधानम् । 'उपसर्गे घोः किः' इति किप्रत्ययः । इच्छती वाञ्छन्तीव । तथा व्याकुला सतीत्यर्थः । 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभावः । अस्मै प्रियाय अस्थित, आत्मानं प्रकाशयन्ती स्थितेत्यर्थः ।

किसलयशकलेष्ववाचनीयाः पुलकिनि केवलमङ्गके निधेयाः ।
नखपदलिपयोऽपि दीपितार्थाः प्रणिदधिरे दयितैरनङ्गलेखाः॥३९

क्षतकृतककरुषा सखीमपास्य
त्वमकुशलेति कयाचिदात्मनैव ।
अभिमतमभि साभिलाषमावि-
ष्कृतभुजमूलमबन्धि मूर्ध्नि माला ॥ ४० ॥

तिष्ठतेः कर्त्तरि लुङ् । 'प्रकाशनस्थेयाख्ययोश्च' इत्यात्मनेपदम्, 'स्थाघ्वोरिच्च' इति सिचः कित्त्वमिकारश्च धातोरन्तादेशः कित्त्वान्न गुणः । इति यदतो हेतोरस्य प्रियस्य चेतः सुतरामहरत । तथाहि त्रपैव स्त्रियोऽभिभूषयति स्फुटम् । प्रसिद्धमित्यर्थः । अतोऽस्या अपि त्रपाभूषितत्वादतिमनोहरत्वं युक्तमिति भावः । कुलकार्थान्तरन्यासौ । मध्या चेयं नायिका । 'लज्जामन्मथमध्यस्था मध्यमोदितयौवना' इति लक्षणात् ॥ ३८ ॥

किसलयेति । किसलयशकलेषु । वर्त्तमाना इति शेषः । अवाचनीयाः प्रसिद्धलिपिवैलक्षण्याद्वाचयितुमनर्हाः किन्तु केवलं पुलकिनि दयितस्पृष्टत्वात् तत्स्पर्शादेव रोमाञ्चव्यत्यङ्गके वपुषि निधेया विरहतापशान्त्यर्थमर्पणीयाः । कुतः । नखपदानि नखाङ्का एव लिपयोऽक्षराणि येषु ते न तु प्रसिद्धाक्षराः । अतोऽवाचनीया इत्यर्थः । नैतावतानुतापकारित्वं चेत्याह—तथापि दीपितार्थाः सङ्केतितसन्निवेशवशादेव द्योतिताभिधेयाः लिख्यन्त इति लेखाः । कर्म्मणि घञ्प्रत्ययः । अनङ्गस्य लेखाः । तत्प्रयुक्ता इत्यर्थः । दयितैः दयिताभिः दयितैश्च । 'पुमांस्त्रिया' इत्येकशेषः । प्रणिदधिरे प्रणिहिताः । लिखिता इत्यर्थः । दधातेः कर्म्मणि लिट् । 'नेर्गदनद'—इत्यादिना नकारस्य णत्वम् । लोकप्रसिद्धलेख्यवैलक्षण्याद्व्यतिरेकालङ्कारः ॥ ३९ ॥

क्षतेति । क्षतकृतकरुषा क्षतकृत्रिमरोषया कयाचिन्नायिकया त्वमकुशला माल्यग्रथने कुशला नासीति सखीमपास्य निरस्यात्मना स्वयमेवाभिमतमभिप्रायाभिमुखं साभिलाषमाविष्कृतभुजमूलं प्रकाशितकक्षप्रदेशं यथा तथा मूर्ध्नि माला अबन्धि बद्धा । अयञ्च स्वाभिप्रायव्यञ्जकचेष्टारूपभाव-

अभिमुखमुपयाति मा स्म किञ्चित्
त्वमभिदधाः पटले मधुव्रतानाम् ।
मधुसुरभिमुखाब्जगन्धलब्धे-
रधिकमधित्वदनेन मा निपाति ॥४१॥
सरजसमकरन्दनिर्भरासु प्रसवविभूतिषु भूरुहां विरक्तः ।
ध्रुवममृतपनामवाञ्छयासावधरममुं मधुपस्तवाजिहीते ॥४२॥
विशेषकम् ।

लाख्यः सञ्चारिविशेषः । नायिका प्रौढैव । 'स्मरमन्दीकृतव्रीडा प्रौढा सम्पूर्ण-यौवना' इति लक्षणात् ॥ ४० ॥

अथ काञ्चिन्नायिकां प्रति सखीवचनं विशेषकेणाह—अभिमुखमिति । मधु मकरन्दं व्रतयन्ति भुञ्जत इति मधुव्रता मधुपाः । कर्म्मण्यण्प्रत्ययः । तेषां पटले अभिमुखमुपयाति आगते सति त्वं किञ्चिन्मास्माभिदधाः न किञ्चिदालप, मौनं भजेत्यर्थः । स्मोत्तरे लङ्, 'न माङ्योगे' इत्यट्प्रतिषेधः । मौनस्य मधुकरबाधनिवृत्तिरेव फलमित्याह—मध्विति । मधुना मद्येन सुरभिमुखाब्जस्य यो गन्धस्तस्य लब्धेर्लाभात् । स्त्रियां क्तिन् । अनेन मधुव्रतपटलेन अधित्वत् त्वयि । विभक्त्यर्थेऽव्ययीभावः । 'त्वमावेकवचने' इत्यत्रैकवचन इत्यर्थनिर्देशादिह विभक्त्यभावेऽप्येकार्थवृत्तेर्युष्मदो मपर्य्यन्तस्य त्वादेशः । अत एव विभक्त्यभावाच्च त्वादेशोऽत्र चिन्त्य इति वल्लभवचनं चिन्त्यम् । अधिकमत्यन्तं सर्व्वतेत्यर्थः । मा निपाति मा निपत्यताम् । भावे लुङि चिणवृद्धिः । अत्र निपातासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥ ४१ ॥

सरजसेति । किञ्च, मधु पिबतीति मधुपो मधुलिट्, मद्यपश्च । 'आतोऽनुपसर्गे कः' । भुवि रोहन्ति जायन्त इति भूरुहाणां भौमानाञ्च देहिनां सम्बन्धिनीषु सह रजसा सरजसम् । 'अचतुर'—इत्यादिना साकल्यार्थेऽव्ययीभावः समासान्तनिपातः । तेन सरजस्क इति बहुव्रीह्यर्थो लभ्यः, मुख्यो वा । महाकविप्रयोगबाहुल्यात् । अव्ययीभावदर्शनन्तु प्रायिकमित्युक्तं प्राक् । तथा च सरजसं सरजसो वा यो मकरन्दस्तेन निर्भरासु पूर्णासु । न तु त्वदधरामृतेन नाप्यरजस्केनेति भावः । अन्यत्र रजः स्त्रीपुष्पम् । 'स्याद्रजः पुष्पमार्त्त-

इति वदति सखीजने निमीलद्-
द्विगुणितसान्द्रतराक्षिपक्ष्ममाला ।
अपतदलिभयेन भर्त्तुरङ्कं
भवति हि विक्लवता गुणोऽङ्गनानाम् ॥४३॥

वम्' इत्यमरः । तस्मान्नचर्थात्मकरन्दशब्देन शुक्रप्रतीतिः तेन । शुक्रशोणितसन्निपातप्रायास्वित्यर्थः । प्रसविभूतिषु पुष्पसमृद्धिषु जन्मपरम्परासु च विरक्तः निस्पृहः सन् अमृतं पिबतीति अमृतप इति नाम्नो वाञ्छयासावमुं तवाधरमोष्ठं प्रति आजिहीते आगच्छति ध्रुवं सत्यमित्युत्प्रेक्षायाम् । अन्यत्र तु अमृतपो देव इति नामवाञ्छया । देवभूयापित्तयेत्यर्थः । अथवा, निःश्रेयसप्राप्तीच्छयेत्यर्थः । 'श्रेयो निःश्रेयासामृतम्' इत्यमरः । ध्रुवं शाश्वतं अधरं धरासम्बन्धरहितममुं परलोकपथम् । शुभमिह चामुत्र चान्वेति इत्यादौ लोके वेदे चेदमदसोर्लोकद्वये रूढ़िप्रदर्शनात् । आजिहीते । अन्विष्यतीत्यर्थः । 'ओहाङ् गतौ' इति धातोर्लटि 'श्लौ' इति द्विर्भावः । 'ई हल्यघोः' इतीकारः । इह नायिकावदनसौरभहेतुकस्य मधुपानामागमनस्यामृतपनामवाञ्छाहेतुकत्वोत्प्रेक्षणादुगहेतूत्प्रेक्षा । सा च ध्रुवमिति व्यञ्जकाप्रयोगाद्वाच्या सती मधुपस्याधरोद्देशस्यासम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्त्युत्थापितेति सङ्करः । पूर्व्वोक्ताप्रकृतार्थप्रतीतिस्तु मधुपादिशब्दानामभिधया प्रकृतार्थनियन्त्रितत्वाच्छब्दशक्तिमूलो ध्वनिरेव न श्लेष इत्यलं विस्तरेणेति ॥ ४२ ॥

इतीति । इतीत्थं सख्येव जनस्तस्मिन् सखीजने वदति सति निमीलन्त्यौ भयान्मुकुलीभवन्त्यौ अत एव द्वे आवृत्ती ययोस्ते द्विगुणे द्विरावृत्ते । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती । ते कृते द्विगुणिते अत एव सान्द्रतरे अक्षिपक्ष्ममाले नेत्रलोमपङ्क्ती यस्याः सा । काचिदिति शेषः । अक्षिग्रहणस्य पक्ष्मद्वयद्वैगुण्यलक्ष्मीरक्षणोरेवेति द्योतनार्थत्वान्न पौनरुक्त्यम् । अलिभयेन भर्तुरङ्कमुत्सङ्गमपतत् प्राप्तवती । अहो महत् कष्टं यत् कीटकादपि भयमित्याशङ्क्याह—अङ्गनानाम् । न तु पुंसामिति भावः । विक्लवता भीरुता गुणो भवति हि । न तु दोष इति

मुखकमलकमुन्नमय्य यूना यदभिनवोढवधूर्बलादचुम्बि ।
तदपि न किल बालपल्लवाग्रग्रहपरया विविदे विदग्धसख्या ॥४४
व्रततिविततिभिस्तिरोहितायां प्रतियुवती वदनं प्रियः प्रियायाः ।
यदधयदधरावलोपनृत्यत्करवलयस्वनितेन तद्विवव्रे ॥ ४५ ॥
विलसितमनुकुर्वती पुरस्ताद्धरणिरुहाधिरुहो वधूर्लतायाः ।
रमणमृजुतया पुरः सखीनामकलितचापलदोषमालिलिङ्ग ॥४६

भावः । अत एव जनसमक्षं भर्तुरङ्कारोहणमपि न दोषः पार्श्वस्थालम्बनादीनां भयानुभावत्वात् । कुलकेऽलङ्कारोऽयमर्थान्तरन्यासः ॥ ४३ ॥

मुखेति । यूना अभिनवोढवधूर्नवोढाङ्गनापि बलाद्बलात्कारात् । मुखं कमलमिवेत्युपमितसमासः । तदल्पं मुखकमलकम् । अल्पार्थे कन्प्रत्ययः । उन्नमय्योद्यम्य । 'ल्यपि लघुपूर्वात्' इत्ययादेशः । अचुम्बि चुम्बितेति यत् तच्चुम्बनं विदग्धसख्या चतुरसख्या बालपल्लवाग्राणां ग्रहो ग्रहणम् । 'ग्रहवृदृनिश्चिगमश्च' इत्यप्प्रत्ययः । तत्परया तदासक्तया सत्या । कञ्चिद्व्यासङ्गं कल्पयन्त्येत्यर्थः । न विविदे अपि किल । न प्रकाशितमिति किमुत वक्तव्यमित्यपिशब्दार्थः । किलेत्यलीके । वस्तुतो विदित्वाप्यविदित्वेव स्थितं वैदग्ध्यात् । अन्यथा तयोर्विस्रम्भविहारविघातादिति भावः । मुग्धेयं नायिका । 'उदययौवना मुग्धा लज्जापिहितमन्मथा' इति लक्षणात् ॥४४ ॥

व्रततीति । प्रतिकूला युवतिः प्रतियुवतिः सपत्नी तस्यां व्रततिविततयो लताजालानि । 'वल्ली तु व्रततिर्लता' इत्यमरः । ताभिस्तिरोहितायां सत्यां प्रियः प्रियाया वदनमधयदपिबदिति यत् । धेटो भौवादिकाल्लङ् । तद्वदनपानमधरावलोपेनाधरखण्डनेन । तज्जनितव्यथयेत्यर्थः । नृत्यतोचलतोः करयोर्वलयानां कङ्कणानां स्वनितेन ध्वनिना विवव्रे विवृतम् । तदेव तस्यास्तदनुमापकमभूदित्यर्थः । अत्रैका दृष्टा अपरा त्वीर्ष्यानिर्वेदवतीत्यनुसन्धेयम् ॥ ४५ ॥

विलसितमिति । वधूः काचित् स्त्री पुरस्तादग्रे धरणिरुहमधिरोहतीति धरणिरुहाधिरुट् वृक्षाधिरूढा । रुहेः क्विप् । तस्या लताया विलसितं चेष्टितम् । भावे क्तः । अनुकुर्वती एवमित्थमाश्लेषप्रकारमभिनयन्ती ऋजुतया

सललितमवलम्ब्य पाणिनांसे सहचरमुच्छ्रितगुच्छवाञ्छयान्या ।
सकलकलभकुम्भविभ्रमाभ्यामुरसि रसादवतस्तरे स्तनाभ्याम् ॥ ४७

मृदुचरणतलाग्रदुःस्थितत्वादसहतरा कुचकुम्भयोर्भरस्य ।
उपरि निरवलम्बनं प्रियस्य न्यपततयोच्चतरोच्चिचीषयान्या ॥ ४८

उपरिजतरुजानि याचमानां कुशलतया परिरम्भलोलुपोऽन्यः ।
प्रथितपृथुपयोधरां गृहाण स्वयमिति मुग्धवधूमुदास दोर्भ्याम् ॥ ४९

अकुटिलबुद्धितया सखीनां पुरोऽग्रे अकलितोऽविचारितश्चापलमनुचितकरणमेव दोषो यस्मिन् कर्म्मणि तद्यथा तथा रमणं प्रियमालिलिङ्ग । एषा हर्षौत्सुक्यवती प्रौढा च ॥ ४६ ॥

सललितमिति । अन्या स्त्री उच्छ्रितगुच्छवाञ्छया उन्नतस्तवकजिघृक्षया सललितं सविलासं यथा तथा सहचरं प्रियं पाणिना । औचित्यादासेनेति शेषः । अंसेऽवलम्ब्यावष्टभ्य सकलयोः समग्रयोः कलभकुम्भयोः करिकुम्भयोर्विभ्रम इव विभ्रमः सौन्दर्य्यं ययोस्ताभ्यां स्तनाभ्यां रसाद्रागादुरस्यवतस्तरे आच्छादयामास । सहचरमित्यनुषङ्गः । अभिमुखावस्थानादिति भावः । स्तृणातेः कर्त्तरि लिट् । 'ऋतश्च संयोगादेर्गुणः' 'शर्पूर्वाः खयः' इत्यभ्यास-सकारलोपः । इयञ्च प्रौढैव ॥ ४७ ॥

मृद्विति । अन्या स्त्री उच्चतराणामत्युन्नतकुसुमानामुच्चेतुमवचेतुमिच्छया उच्चतरोच्चिचीषया । चिनोतेः सन्नन्तात् स्त्रियामप्रत्यये टाप् । 'विभाषा चेः' इति कुत्वविकल्पः । मृदुचरणतलाग्रेण दुःस्थितत्वाद्दुःखेन स्थितत्वात् कुचकुम्भयोर्भरस्य । 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्ययः । न सहतेऽत्यन्तमित्यसहतरा । सहेः पचाद्यजन्तान्नञ्समासात् तरप्प्रत्ययः । भरमसहमानेत्यर्थः । कृद्योगात् कर्म्मणि षष्ठी । अथास्मिन्नवसरे निरवलम्बनं यथा तथा प्रियस्योपरि न्यपतत् । निरवलम्बनत्वान्निपपातेत्यर्थः । एषा च प्रौढा । स्वभावोक्तिरलङ्कारः ॥ ४८ ॥

उपरिजेति । उपरिजान्युपरि जातानि तरोर्जातानि तरुजानि कुसुमानि तानि याचमानां अपचित्य देहीति प्रार्थयमानां प्रथितपृथुपयोधरां प्रशस्तपीवरकुचां मुग्धवधूमकुटिलधियं स्त्रियं परिरम्भलोलुप आश्लेषलालसो-

इदमिदमिति भूरुहां प्रसूनैर्मुहुरतिलोभयता पुरः पुरोऽन्या ।
अनुरहसमनायि नायकेन त्वरयति रन्तुमहो जनं मनोभूः॥५०॥

विजनमिति बलादमुं गृहीत्वा
क्षणमथ वीक्ष्य विपक्षमन्तिकेऽन्या ।
अभिपतितुमना लघुत्वभीते-
रभवदमुञ्चति वल्लभेऽतिगुर्वी ॥ ५१ ॥

अधिरजनि जगाम धाम तस्याः
प्रियतमयेति रुषा स्रजावनद्धः ।
पदमपि चलितुं युवा न सेहे
किमिव न शक्तिहरं ससाध्वसानाम् ॥५२॥

ऽन्यः कुशलतया वञ्चनापटुतया स्वयं गृहाण । त्वमेवापचिनुस्वेत्यर्थः । इति गम्यमानार्थत्वादुक्तेति न प्रयुक्तं पौनरुक्त्यात् । दोर्भ्यामुदास उदयच्छति स्म । अयञ्चैकायत्तत्वादनुकूलनायकः । नायिका तु स्वाधीनपतिका प्रौढ़ा च ॥ ४९॥

इदमिदमिति । अन्या स्त्री इदमिदमिति । । इदं ग्राह्यमिदं ग्राह्यमित्युक्तेत्यर्थः । भूरुहां वृक्षाणां प्रसूनैः पुष्पैः पुरः पुरो मुहुरतिलोभयता प्रलोभयता नायकेन रहोऽनु अनुरहसमेकान्तम् । 'अन्ववतप्तात्'—इत्यव्ययीभावसमासान्तः । अनायि नीता । तथाहि—मनोभूः कामो जनं रन्तुं त्वरयति । देशकालानपेक्षयेति भावः । अत एवाश्चर्यमहो इति । पूर्ववन्नायिकानायकविवेकः । अर्थान्तरन्यासः ॥ ५० ॥

विजनमिति । अन्या स्त्री विजनमेकान्तमिति हेतोरमुं वल्लभं क्षणं बलाद्गृहीत्वा आकृष्य अथान्तिके विपक्षं सपत्नीजनं वीक्ष्य लघुत्वभीतेस्तुच्छत्वभयादभिपतितुं मनो यस्याः सा अभिपतितुमनाः । 'तुं काममनसोरपि' इति मकारलोपः । अपसर्त्तुकामेत्यर्थः । वल्लभे अमुञ्चति त्यजति सति । तस्य विपक्षानवेक्षणादिति भावः । अतिगुर्व्यतिगौरववत्यभवत् । स्वयंग्रहलाघवतिरोधानाद्भर्त्तृवल्लभत्वप्रकाशनाच्चेति भावः । भाग्यवतां सर्वं श्रेयसे भवतीति रहस्यम् । एषा त्वतिप्रगल्भैव ॥ ५१ ॥

अधीति । अधिरजनि रजन्याम् । विभक्त्यर्थेऽव्ययीभावः । तस्याः ।

अन्यूनं गुणममृतस्य धारयन्ती
संफुल्लस्फुरितसरोरुहावतंसा ।
प्रेयोभिः सह सरसी निषेव्यमाणा
रक्तत्वं व्यधित वधूदृशां सुरा च ॥ ५२ ॥

धत्यूठसु' इति ह्रस्वदीर्घौकारः । आपाण्डोः पाण्डुवर्णादङ्गनायाः स्तनकलशद्वयात् गतपरभागया सावर्ण्याद्विगतवर्णोत्कर्षया । अत एव सामान्यालङ्कारः । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् । हारयष्ट्या कर्त्र्या सहृदयया सचित्तयेवेत्युत्प्रेक्षा, निजपरभागहानिपरिज्ञानवत्येवेत्यर्थः । अञ्जाय सपदि । 'द्राक् झटित्यञ्जसाञ्जाय स्राङ् मङ्क्षु सपदि द्रुते' इत्यमरः । विच्छेदस्त्रुटनमुपेये प्राप्तः । हीनजीवनादजीवनमेव वरमिति भावः । उपपूर्व्वादिणः कर्म्मणि लिट् । विक्षोभहेतुकस्य हारविच्छेदस्य सहृदयहेतुकत्वोत्प्रेक्षा सा चोक्तसामान्योत्थापितेति सङ्करः ॥ ५१ ॥

अन्यूनमिति । अन्यूनं समग्रममृतस्य पीयूषस्य गुणं माधुर्य्यादिकं धारयन्ती । 'अगन्धमव्यक्तरसं शीतलञ्च तृषापहम् । अच्छं लघु च पथ्यञ्च तोयं गुणवदुच्यते' । इति । उक्तोदकगुणञ्च धारयन्ती सरसी । पक्षे 'अमृतं यज्ञशेषे स्यात् पीयूषे सलिले ध्रुवम्' इति विश्वः । संफुल्लानि विकचानि । उत्फुल्लसम्फुल्लयोरुपसंख्यानान्निष्ठातस्य लत्वत् । स्फुरितान्युज्ज्वलानि च यानि सरोरुहाण्येकत्र सहजानि अन्यत्र संस्कारार्थं क्षिप्तानि तान्यवतंसो भूषणं यस्याः सा तथोक्ता । प्रेयोभिः सह निषेव्यमाणा, स्नानपानाभ्यामिति भावः । सरसी पुष्करिणी वधूदृशां रक्तत्वमारुण्यं व्यधित विधत्ते स्म । तथा सुरा च । व्यधितेति धाञः कर्त्तरि लुङि तङ् । इन्द्रोत्साहवर्द्धनाय मुहुः सेव्यत्वात् शृङ्गाणीति श्लोके सलिलक्रीडासम्भारेषु मार्द्वीकमिति परिगणनाच्च सरसीवत् सुराया अपि प्रकृतत्वविवक्षायां तुल्ययोगिता । तदविवक्षायान्तु दीपकम् । सुरेवेति पाठे त्वप्रकृतविवक्षैव कार्य्या । अन्यथा उपमानुपमा स्यात् । न च तुल्ययोगितावकाशः । इवशब्देन गम्यौपम्यलक्षणभङ्गादिति ॥ ५२ ॥

स्नान्तीनां बृहदमलोदबिन्दुचित्रौ
रेजाते रुचिरदृशामुरोजकुम्भौ ।
हाराणां मणिभिरुपाश्रितौ समन्ता-
दुत्सूत्रैर्गुणवदुपघ्नकाम्ययेव ॥ ५३ ॥
आरूढः पतित इति स्वसम्भवोऽपि
स्वच्छानां परिहरणीयतामुपैति ।
कर्णेभ्यश्च्युतमसितोत्पलं वधूनां
वीचीभिस्तटमनु यन्निरासुरापः ॥ ५४ ॥

स्नान्तीनामिति। स्नान्तीनां जलमवगाहमानानां रुचिरदृशां सुदृशां सम्बन्धिनौ बृहद्भिरमलैश्चोदबिन्दुभिश्चित्रौ। 'मन्थौदन'—इत्यादिनोदकशब्दस्योदादेशः। उरोजकुम्भौ उत्सूत्रैर्हाराणां मुक्ताहाराणां मणिभिर्गुटिकाभिरुपहन्यते उपगम्यते, पीड्यते वा। 'उपघ्न आश्रये' इति हन्तेरप्प्रत्ययान्त उपधालोपीति निपातः। गुणवत औदार्यादिगुणवतः, सूत्रवतश्च उपघ्नस्य काम्या आत्मन इच्छा गुणवदुपघ्नकाम्या तया गुणवदुपघ्नकाम्यया, आत्मनो गुणवदाश्रयाकाङ्क्षयेत्यर्थः। 'काम्यच्च' इति काम्यच् प्रत्यये। प्रत्ययान्तधातुत्वात् 'अप्रत्ययात्' इति स्त्रियामप्रत्यये टाप्। समन्तादुपाश्रितौ संश्रिताविव रेजाते राजेते स्म। 'फणाञ्च सप्तानाम्' इति विकल्पादेत्त्वाभ्यासलोपौ। गुणवच्छब्देन सूत्रशब्देन च सूत्रभेदे सूत्रान्तरमाश्रियदिति प्रतीतेः श्लेषानुप्राणितयातिशयोक्त्यानुप्राणितेयमुत्प्रेक्षा ॥ ५३ ॥

आरूढ इति। स्वसम्भवोऽप्यात्मसम्भवोऽपि आरूढ उच्चस्थानगत उत्तमाश्रमश्च पतितस्तथा भ्रष्ट इति हेतोः, आरूढपतितत्वादित्यर्थः। स्वच्छानां निर्मलानां परिहरणीयतां त्याज्यत्वमुपैति। 'प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकः' इति स्मरणादिति भावः। वीचीभिस्तटमनु तटं प्रति निरासुश्चिक्षिपुः। कुतः यस्मादापः वधूनां कर्णेभ्यश्च्युतमसितोत्पलम्। स्वसम्भवमपीति भावः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। समर्थनवाक्यगतश्लेषमूलातिशयोक्त्या सङ्कीर्णः ॥ ५४ ॥

दन्तानामधरयावकं पदानि
प्रत्यग्रास्तनुमविलेपनां नखाङ्काः।
आनिन्युः श्रियमधितोयमङ्गनानां
शोभायै विपदि सदाश्रिता भवन्ति॥ ५५॥
कस्याश्चिन्मुखमनु धौतपत्रलेखं
व्यातेने सलिलभरावलम्बिनीभिः।
किञ्जल्कव्यतिकरपिञ्जरान्तराभि-
श्चित्रश्रीरलमलकाग्रवल्लरीभिः॥ ५६॥
वक्षोभ्यो घनमनुलेपनं यदूनामुत्तंसानहरत वारि मूर्द्धजेभ्यः।
नेत्राणाम्मदरुचिरक्षतैव तस्थौ चक्षुष्यः खलु महतामपरैरलङ्घ्यः॥५७

दन्तानामिति। तोयेष्वधि अधितोयम्। विभक्त्यर्थेऽव्ययीभावः। अङ्गना-नामयावकं प्रक्षालितलाक्षारागमधरं दन्तानां पदानि दन्तक्षतानि। तथा अविलेपनां धौताङ्गरागां तनुं शरीरं प्रत्यग्रा नवा नखाङ्काश्च श्रियमानिन्युः प्रापयामासुः। 'नीवह्योर्हरतेश्चैव' इति वचनाद्दिकर्म्मकत्वम्। तथाहि सतः सज्जनान्, सुन्दरांश्चाश्रिताः सदाश्रिताः, ये केचिदिति शेषः। विपदि विभवाभावकालेऽपि शोभायै वैभवाय भवन्ति। 'क्लृपिः सम्पद्यमाने चतुर्थी वक्तव्या' इति क्लृपेरर्थनिर्देशाच्चतुर्थी। अर्थान्तरन्यासः॥ ५५॥

कस्याश्चिदिति। धौतपत्रलेखं क्षालितपत्त्रावलीकं कस्याश्चिन्मुखमनु मुखेन संबद्धं यथा तथा, मुखे इति यावत्। 'तृतीयार्थे' इत्यनोः कर्म्मप्र-वचनीयत्वाद्द्वितीया। सलिलभरेणावलम्बिनीभिर्लम्बमानाभिः, आर्जवं गता-भिरित्यर्थः। किञ्जल्कव्यतिकरेण केशरमिश्रणेन पिञ्जराण्यन्तराणि मध्यभागा यासां ताभिः। अलकाग्राणि वल्लर्य्यो मञ्जर्य्य इवेत्युपमितसमासः। 'वल्लरी मञ्जरो स्त्रियाम्' इत्यमरः। ताभिरलकाग्रवल्लरीभिश्चित्रश्रीर्म्मकरिकापत्त्र-शोभा अलं व्यातेने सम्पादिता। तनोतेः कर्म्मणि लिट्। अत्र चित्रस्य श्रीरिव श्रीरिति निदर्शनाभेदः॥ ५६॥

अथ श्लोकद्वयेन पुंसामप्यवस्थाभेदं वर्णयति—वक्षोभ्य इत्यादि। वारि

यो बाह्यः स खलु जलैर्निरासि रागो
यश्चित्ते स तु तदवस्थ एव तेषाम् ।
धीराणां व्रजति हि सर्व एव नान्तः-
पातित्वादभिभवनीयतां परस्य ॥ ५८ ॥

फेनानामुरसिरुहेषु हारलीला
चेलश्रीर्जघनतलेषु शैवलानाम् ।
गण्डेषु स्फुटरचनाब्जपत्रवल्ली
पर्य्याप्तं पयसि विभूषणं वधूनाम् ॥ ५९ ॥

सरउदकं कर्त्तृ यदूनां यादवानां वक्षोभ्यो घनं सान्द्रमनुलेपनमङ्गरागमहरत । जित्वात्तङ् । अत्र बधूनामिति क्वाचित्कः पाठो वक्षोजानुपेक्ष्य वक्षोमात्रनिर्देशादुत्तरश्लोके तेषामिति पुंलिङ्गपरामर्शाच्च न ग्राह्यः । मूर्द्धजेभ्यः शिरोरुहेभ्य उत्तंसाञ्शेखरानहरत । नेत्राणां मदरुचिर्म्मदरागोऽत्रतैव तथैव तस्थौ, वारिविहारस्यापि रागजनकत्वादिति भावः । अत एव रागद्वयस्याप्यभेदाध्यवसायेन तदवस्थानिर्देशादतिशयोक्तिः । तथा हि महतां चक्षुषि भवश्चक्षुष्यः प्रियोऽस्त्रिजश्च । 'प्रियेऽक्षिजे च चक्षुष्यः' इति विश्वः । 'शरीरावयवाच्च' इति यत् । परैरलङ्घ्यो दुर्धर्षः खलु । चक्षुष्य इति श्लेषमूलातिशयोक्तिः । तया पूर्व्वोक्तया च सङ्कीर्णोऽयमर्थान्तरन्यासः ॥ ५७ ॥

य इति । तेषां यदूनां बहिर्भवो बाह्यः । 'बहिषष्टिलोपो यञ्च' इति वचनात् यञ् प्रत्ययः । यो रागोऽङ्गरागः स रागो जलैस्तोयैर्जडैश्च निरासि निरस्तः खलु । अस्यतेः कर्म्मणि लुङ् । चित्ते यो रागः स तु सैवावस्था यस्य स तदवस्थ एव, न निरस्त इत्यर्थः । अत्र रागयोरभेदाध्यवसायादतिशयोक्तिः । तथाहि सर्व्वोऽपि धीराणां महतामन्तःपातित्वात् । अन्तर्गतत्वादेवेति यावत् । परस्याभिभवनीयतां न व्रजति, अन्यथा व्रजत्येवेत्यर्थः । पूर्व्ववदलङ्कारः ॥ ५८ ॥

फेनानामिति । बधूनाम्, भ्रष्टभूषणानामपीति भावः । पयसि विभूषणं पर्य्याप्तम्, समग्रमासीदित्यर्थः । कुतः ? फेनानां डिण्डीराणामुरसि

भ्रश्यद्भिर्जलमभि भूषणैर्वधूना-
मङ्गेभ्यो गुरुभिरमज्जि लज्जयेव ।
निर्माल्यैरथ ननृतेऽवधीरितानां-
मप्युच्चैर्भवति लघीयसां हि धार्ष्ट्यम् ॥ ६० ॥
आमृष्टास्तिलकरुचः स्रजो निरस्ता
नीरक्तं वसनमपाकृतोऽङ्गरागः ।
कामः स्त्रीरनुशयवानिव स्वपक्ष-
व्याघातादिति सुतरां चकार चारूः ॥ ६१ ॥

रोहन्तीत्युरसिरुहाः स्तनाः । सुपीति योगविभागात् कप्रत्ययः, 'हलद-न्तात्'—इत्यलुक् । तेषु हारलीला मुक्तावलिश्रीः जातेति शेषः । शैवलानां जघनतलेषु चेलश्रीर्वसनशोभा जाता । गण्डेषु कपोलेषु शैवला इति विभक्ति-विपरिणामादनुषङ्गः । स्फुटरचना व्यक्तविन्यासाः पत्रवल्ली पत्रपत्रलता जातेति शेषः । अत्र फेनानां हारलीलेव लीला शैवलानां चेलश्रीरिव श्रीरिति निदर्शनाभ्यां शैवलाः पत्रवल्लीति रूपकेण च वाक्यार्थैश्चतुर्थसमर्थनात् तैरेवाङ्गाङ्गिभावेन सङ्कीर्णं वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ५९ ॥

भ्रश्यद्भिरिति । वधूनामङ्गेभ्यो भ्रश्यद्भिः पतद्भिर्गुरुभिः सौवर्णत्वाद्गुरुत्व-युक्तैर्भूषणैर्लज्जया भ्रंशप्रयुक्तया ह्रियेवेत्युत्प्रेक्षा । जलमभि अमज्जि जले मग्नम् । भावे लुङ् । अथानन्तरमेव न तु विलम्बेनेति भावः । निर्माल्यै-र्भुक्तोज्झितमाल्यैर्ननृते जलेऽनर्ति । भ्रंशेऽपि निर्लज्जैरिति भावः । तथा हि अवधीरितानां तिरस्कृतानामपि लघीयसां तुच्छानामुच्चैर्धार्ष्ट्यं निर्लज्जत्व-मेवाधिकं भवतीत्यर्थान्तरन्यासः । महान्तः पदभ्रंशे लज्जिताः क्वचिन्निली-यन्ते, तुच्छास्तु निर्लज्जा विजृम्भन्त इति भावः । अप्सु गुरूणि मज्जन्ति लघूनि प्लवन्त इति परमार्थः ॥ ६० ॥

आमृष्टा इति । तिलकरुचः पत्रशोभा आमृष्टाः । स्रजो माला निरस्ताः । वसनं कौसुम्भं वासो नीरक्तमरक्तम्, निरस्तरागमित्यर्थः । कृत-मिति शेषः । अङ्गरागोऽपाकृतः, सर्व्वत्र जलैरित्यर्थः । इतीत्थं स्वपक्ष-

शीतार्त्तिं बलवदुपेयुषेव नीरै-
रासेकाच्छिशिरसमीरकम्पितेन ।
रामाणामभिनवयौवनोष्मभाजो-
राश्लेषि स्तनतटयोर्नवांशुकेन ॥ ६२ ॥

स्रोतस्त्रिः समधिकमात्तमङ्गसङ्गा-
ल्लावण्यं तनुमदिवाम्बुवाससोऽन्तैः ।
उत्तेरे तरलतरङ्गरङ्गलीला-
निष्णातैरथ सरसः प्रियासमूहैः ॥ ६३ ॥

व्याघातात् स्ववर्गक्षयादश्रयवाननुतापवानिवेत्युत्प्रेक्षा । कामः स्त्रीः स्त्रियः । 'वाम्शसोः' इतीयङादेशविकल्पात् पक्षे पूर्व्वसवर्णदीर्घः । सुतरां चारुः पूर्व्वतोऽपि रमणीयाश्चकार । स्त्रीणां काम एव भूषणमन्यद्दैरूप्यमेवेति भावः ॥६१ ॥

शीतेति । नीरैस्तोयैरासेकादासेचनाच्छीतार्तिं शीतव्यथां बलवत् सुष्ठु उपेयुषेव प्राप्तवतेवेत्युत्प्रेक्षा । अतएव शिशिरसमीरकम्पितेन शीतवातवेपितेन नवांशुकेन कर्त्रा अभिनवो यो यौवनोष्मा उष्णत्वं तद्भाजोः रामाणां स्तनतट-योराधारयोराश्लेषि आश्लिष्टं संसक्तम् । भावे लुङ् । सेकहेतुकस्यांशुकश्लेषस्य शीतार्तिहेतुकत्वमुत्प्रेक्ष्यत इति गुणहेतूत्प्रेक्षा ॥ ६२ ॥

इत्थमासां जलक्रीड़ामुक्त्वा जलादुत्तरणं वर्णयति—स्रोतस्त्रिरिति । अथ जलक्रीड़ानन्तरमङ्गसङ्गाद्गात्रसम्पर्कादात्तमुपात्तं, संसक्तमिति यावत् । सम-धिकमतिरिक्तं तनुमन्मूर्तिमत् लावण्यमिव, कान्तिसारमिवेत्युत्प्रेक्षा । अम्बु स्रोतस्त्रिः क्षरद्भिः । भौवादिकत्वाल्लघूपधगुणः । तरलाश्चपलास्तरङ्गा एव रङ्गा नृत्यस्थानानि तेषु लीलानर्तितानि तासु निष्णातैः कुशलैः । 'निनदीभ्यां स्नातेः कौशले' इति षत्वम् । वाससोऽन्तैर्वस्त्राञ्चलैरुपलक्षितैः प्रियासमूहैः स्त्रीसङ्घैः सरसो ह्रदादुत्तेरे उत्तीर्णम्, निर्गतमित्यर्थः । तरतेर्भावे लिट् ॥६३॥

दिव्यानामपि कृतविस्मयां पुरस्ता-
दम्भस्तः स्फुरदरविन्दचारुहस्ताम् ।
उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्ती-
मस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥ ६४ ॥

श्लक्ष्णं यत्परिहितमेतयोः किलान्त-
र्ज्ञानार्थं तदुदकसेकसक्तमूर्वोः ।
नारीणां विमलतरौ समुल्लसन्त्या
भासान्तर्दधतुरुरू दुकूलमेव ॥ ६५ ॥

दिव्यानामिति । दिवि भवा दिव्यास्तेषामपि कृतविस्मयां सौन्दर्यातिरेकेण जनिताद्भुतरसां स्फुरदरविन्दाभ्यां चारू हस्तौ यस्यास्ताम्, पद्महस्तामित्यर्थः । पुरस्तादग्रतः अम्भस्तो जलात् । पञ्चम्यास्तसिल् । उत्तरन्तीं निष्क्रामन्तीं काञ्चित् स्त्रियं मथ्यमानात् समुद्रात् सद्यः प्रादुर्भवन्तीं श्रियमिव लक्ष्मीमिवोद्वीक्ष्य जलनिधिमन्थनस्य, समुद्रमन्थनमित्यर्थः । मन्थे र्भौवादिकस्येदित्त्वानुमागमः, 'अधीगर्थ' इत्यादिना कर्मणि षष्ठी । अस्मार्षीत् स्मृतवान् । अत्र समुद्रमन्थनस्मारिकया श्रियमिवेत्युपमया सादृश्याच्छौरेः स्मृतेति स्मरणालङ्कारप्रतीतेरलङ्कारध्वनिः ॥ ६४ ॥

श्लक्ष्णमिति । एतयोरूर्वोरन्तर्ज्ञानार्थं किल च्छादनार्थं श्लक्ष्णं स्निग्धं यद्दुकूलं परिहितमाच्छादितमुदकसेकेन संसक्तं संसृष्टं तत् दुकूलं कर्म । विमलतरौ नारीणामूरू पीवरावूरू कर्त्तारौ समुल्लसन्त्या स्फुरन्त्या भासा निजकान्त्यान्तर्दधतुश्छादितवन्तौ, तदेतद्भूषणमिति भावः । अत्र दुकूलस्योरुच्छादकत्वेऽपि तदभावोक्तेरसम्बन्धेऽपि सम्बन्धरूपातिशयोक्तिः । तदपेक्षया चोर्वोर्दुकूलानाच्छादकयोराच्छादकत्वोक्तेरसम्बन्धे सम्बन्धरूपातिशयोक्त्यानुप्राणितेति सजातीयसङ्करः तदनुप्राणितश्च विषमालङ्कार इति विजातीयसङ्करः । तेन चोर्वोर्लोकोत्तरं लावण्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ६५ ॥

वासांसि न्यवसत यानि योषितस्ताः
शुभ्राभ्रद्युतिभिरहासि तैर्मुदेव ।
अत्याक्षुः स्नपनगलज्जलानि यानि
स्थूलाश्रुस्नुतिभिररोदि तैः शुचेव ॥ ६६ ॥

आर्द्रत्वादतिशयिनीमुपेयिवद्भिः
संसक्तिं भृशमपि भूरिशोऽवधूतैः ।
अङ्गेभ्यः कथमपि वामलोचनानां
विश्लेषो बत नवरक्तकैः प्रपेदे ॥ ६७ ॥

वासांसीति । ताः योषितो यानि वासांसि न्यवसत निवसितवत्यः । 'वस आच्छादने' इति धातोः कर्त्तरि लङ् । शुभ्राभ्राणां द्युतिरिव द्युतिर्येषां तैर्वासोभिर्मुदा नारीनिवसनानन्देन अहासीव हसितमिव । भावे लुङ् । स्नपनेन गलज्जलानि स्रवत्तोयानि यानि वासांसि अत्याक्षुस्त्यक्तवत्यः तैः शुचा स्थूला अश्रस्नुतिर्येषां तैररोदीव रोदनं कृतमिव । भावे लुङ् । अत्र धावल्यगुणजलगलनक्रियानिमित्तयोर्हासरोदनक्रिययोः सजातीयोत्प्रेक्षयोः सङ्करः ॥ ६६ ॥

आर्द्रत्वादिति । आर्द्रत्वाज्जलेन प्रेम्णा च सरसत्वादतिशयिनीमतिशयवतीं संसक्तिं संश्लेषं परिचयं चोपेयिवद्भिः प्राप्तवद्भिः अत एव भृशं भूरिशो बहुशोऽवधूतैर्निरस्तैरपि अन्यत्र निष्कासितैरपि नवरक्तैरिव नवरक्तकैः नूतनरक्तवस्त्रैर्नवानुरागिभिश्च वामलोचनानां सुदृशामङ्गेभ्यो विश्लेषः, बत खेदे कथमपि प्रपेदे प्राप्तः । एकत्रातिश्लेषादन्यत्रातिपरिचयाच्चेति भावः । अत्यासक्ताः कामिनो धनपरायणाभिर्वेश्याभिरवधूताः कथञ्चिन्मुञ्चन्तीत्यर्थान्तरप्रतीतिः । इह विशेष्यस्यापि श्लिष्टत्वाच्छब्दशक्तिमूलो ध्वनिरेव ॥ ६७ ॥

प्रत्यंसं विलुलितमूर्द्धजा चिराय
स्नानार्द्रं वपुरुदवापयत् किलैका ।
नाजानादभिमतमन्तिकेऽभिवीक्ष्य
स्वेदाम्बुद्रवमभवत्तरां पुनस्तत् ॥ ६८ ॥

सीमन्तं निजमनुबध्नती कराभ्या-
मालक्ष्यस्तनतटबाहुमूलभागा ।
भर्त्रान्या मुहुरभिलष्यता निदध्ये
नैवाहो विरमति कौतुकं प्रियेभ्य: ॥ ६९ ॥

प्रत्यंसमिति । एका स्त्री प्रत्यंसमंसयो: । विभक्त्यर्थेऽव्ययीभाव: । विलुलितमूर्द्धजा विकीर्णकेशा सती स्नानार्द्रं वपु: चिराय चिरमुदवापयन्निरवापयत्, अशोषयदिति यावत् । वयतेर्ण्यन्ताल्लङ् । 'अर्त्तिह्री'—इत्यादिना पुगागम: । किल खलु । पुनस्तद्वपुरभिमतं प्रियमन्तिकेऽभिवीक्ष्य स्वेदाम्बुनो द्रवम् । द्रवशब्द: शुक्लादिवद्गुणे पुंसि गुणिनि भेद्यलिङ्ग: । आपो द्रवा: सर्वाणि द्रवाणि तूदङ्मुखेन जुहोतीत्यादिप्रयोगात् । अभवत्तराम्, अतिशयेनाभवदित्यर्थ: । 'तिङश्च' इति तरप् 'किमेत्तिङ'—इत्यादिना तिङन्तादामुप्रत्यय: । 'तद्धितश्चासर्वविभक्ति:' इत्यव्ययत्वम् । नाजानात् । वाक्यार्थ: कर्म । तद्द्रवभवनं नाज्ञासीदित्यर्थ: । अविरतस्नेहार्द्रतामजानती । स्नानार्द्रमेवेति मन्यमाना पुन:पुनर्वपुरुद्वापयन्त्येवास्त इति तात्पर्य्यार्थ: । अत्र वपुष्कर्त्तृकस्य वीक्षणस्य वपुष्युपचारात् द्रवणक्रियाया: समानकर्त्तृकत्वात् पूर्वकालतानिर्वाह: । एषा च गर्वौत्सुक्यादिसञ्चारिसङ्कीर्णस्वेदरोमाञ्चादिसात्विकसम्पन्ना स्मिताद्यनुभाववती चेत्यनुसन्धेयम् । अत्रोद्वापनरूपकारणे सति द्रवत्वनिवृत्तिरूपकार्य्यानुत्पत्तेस्तद्विरुद्धद्रवत्वप्रतिपादनमुखेनाभिधानाद्विशेषोक्तिरलङ्कार: । 'तत्सामग्र्यामनुत्पत्तिविशेषोक्तिर्निगद्यते' इति लक्षणात् ॥ ६८ ॥

सीमन्तमिति । निजमात्मीयं सीमन्तं मूर्द्धजमध्यपद्धतिम् ।' सीमन्त-

स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठ-
स्ताम्बूलद्युतिविशदो विलासिनीनाम् ।
वासश्च प्रतनु विविक्तमस्त्वितीया-
नाकल्पो यदि कुसुमेषुणा न शून्यः ॥ ७० ॥

मस्त्रियां स्त्रीणां केशमध्ये तु पद्धतिः' इति वैजयन्ती । कराभ्यामनुबध्नती गृह्णन्ती, विभजन्तीत्यर्थः । अत एव आ समन्तात् लक्ष्या विभाव्याः स्तनतटे बाहुमूले च तेषां भागाः प्रदेशा यस्याः सा अन्या स्त्री अभिलष्यताभिलषता । 'वा भ्राश'—इत्यादिना वैकल्पिकः श्यन्प्रत्ययः । भर्त्रा मुहुर्निदध्ये ध्याता तां निरीक्ष्येत्यर्थः । 'निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः । अहो आश्चर्यं कौतुकमभिलाषः प्रीणन्तीति प्रियाः विषयाः । 'इगुपधज्ञाप्रीकिरः'—इति कः । तेभ्यो न विरमति उपभोगेऽपि न निवर्त्तते इति आश्चर्यम् । 'न जातु कामः कामानामुपभोगेन शाम्यति' इति भावः । 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' इति पञ्चमी, 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । अर्थान्तरन्यासः ॥ ६९ ॥

स्वच्छेति । स्वच्छेनाम्भसा स्नपनेन अभिषेकेण विधौतं विमलितमङ्गं वपुः । ताम्बूलद्युत्या ताम्बूलरागेण विशद उज्ज्वल ओष्ठोऽधरः । प्रतनु सूक्ष्मं विविक्तं विमलं वासश्च अथवा विविक्तमेकान्तस्थानञ्च । 'विविक्तौ पूतविजनौ' इत्यमरः । इत्येवंरूप इयानेतावानेव विलासिनीनामाकल्पो नेपथ्यमस्तु, किमन्यैरित्यर्थः । कुसुमेषुणा कामेन शून्यो यदि न स्यात्, अन्यथा उद्विजितानामिव कनकभूषणमपि भारायत एवेति भावः । एतेन विच्छित्याख्य आलम्बनचेष्टारूप उद्दीपनविभाव उक्तः । 'स्तोकभूषणयोगेऽपि विच्छित्तिरिति गद्यते' इति लक्षणात् । अत्र स्नानताम्बूलादिपदार्थान्वितविशेषणगत्या अङ्गौष्ठादीनामाकल्पत्वप्रतिपादनार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ७० ॥

इति धौतपुरन्ध्रिमत्सरान् सरसि मज्जनेन
श्रियमाप्तवतोऽतिशायिनीमपमलाङ्गभासः ।
अवलोक्य तदैव यादवानपरवारिराशेः
शिशिरेतररोचिषाप्यपान्ततिषु मङ्क्तुमीषे ॥ ७१ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये जलविहार-
वर्णनं नाम अष्टमः सर्गः ॥ ८ ॥

अथोत्तरसर्गे सूर्यास्तमयादिवर्णनं प्रस्तौति—इतीति । इतीत्थं सरसि मज्जनेन स्नानेन धौतपुरन्ध्रिमत्सरान् चालितमानिनीमानान् अभीक्ष्णमतिशेते अतिशायिनीम् । आभीक्ष्ण्ये णिनिः । श्रियमाप्तवतः अपमलाङ्गकान्तीन् यादवानवलोक्य तदैव शिशिरेतररोचिषा उष्णांशुनाप्यपरवारिराशेः पश्चिमाब्धेरपां ततिषु पूरेषु मङ्क्तुं प्रवेष्टुमीषे इष्टम् । भावे लिट् । परचेष्टासाक्षात्कारो विषयिणां तादृग्विषयाभिलाषमन्तरायत्त इति भावः । अत्र भानोः कालप्राप्तमज्जनस्य यादवमज्जनावलोकनहेतुकत्वमुत्प्रेक्ष्यते । अतिशायिनीवृत्तम् । 'ससजा भजतोऽतिशायिनी भवति गौ दिगश्वैः' इति छन्दोलक्षणात् ॥ ७१ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपाल-
वधमहाकाव्यव्याख्याने सर्वङ्कषाख्येऽष्टमः सर्गः ॥ ८ ॥

———

## नवमः सर्गः ।



अभितापसम्पदमथोष्णरुचिर्निजतेजसामसहमान इव ।
पयसि प्रपित्सुरपराम्बुनिधेरधिरोढुमस्तगिरिमभ्यपतत् ॥ १ ॥
गतया पुरः प्रतिगवाक्षमुखं दधती रतेन भृशमुत्सुकताम् ।
मुहुरन्तरालभुवमस्तगिरेः सवितुश्च योषिदमिमीत दृशा ॥ २ ॥
विरलातपच्छविरनुष्णवपुः परितोविपाण्डु दधदभ्रशिरः ।
अभवद्गतः परिणतिं शिथिलः परिमन्दसूर्यनयनो दिवसः ॥३॥

अथ सूर्यास्तमयं वर्णयति—अभितापेति । अथ मिमङ्क्षानन्तरमुष्णरुचिः सूर्यो निजतेजसामभितापसम्पदं सन्तापातिरेकमसहमान इवापराम्बुनिधेः पश्चिमाब्धेः पयसि प्रपित्सुः पतितुमिच्छुः, पततेः सन्नन्तादुप्रत्ययः, 'सनिमीमा'—इत्यादिना इसादेशः, 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । अस्तगिरिमस्ताद्रिम् । 'अस्तस्तु चरमक्ष्माभृत्' इत्यमरः । अधिरोढुमभ्यपतदभ्यधावत् । अत्रासहमान इवेति कालप्राप्तस्य पयसि प्रपातस्य निजतेजोऽसहनहेतुकत्वमुत्प्रेक्ष्यते । अस्मिन् सर्गे प्रमिताक्षरावृत्तम् । 'प्रमिताक्षरा सजससैरुदिता' इति लक्षणात् ॥ १ ॥

गतयेति । रतेन रत्यर्थे । 'प्रसितोत्सुकाभ्यां तृतीया च' इति सप्तम्यर्थे तृतीया । भृशमुत्सुकतां कालाक्षमत्वलक्षणमौत्सुक्यं दधती योषित्पुरोऽग्रे गवाक्षमुखं गवाक्षद्वारं प्रति गतयाप्रसृतया दृशा अस्तगिरेः सवितुश्चान्तरालभुवं मध्याकाशदेशं मुहुरमिमीत माति स्म । हस्तमात्रमवशिष्टमरत्निमात्रमवशिष्टमित्यादिमानकरणेनास्तमयं प्रतीक्षितवतीत्यर्थः । माङो लङि 'श्नौ' इति द्विर्भावः, 'भृञामित्' इत्यभ्यासस्येत्वम् । एतच्चास्तमयप्रतीक्षणभ्रमादौत्सुक्यानुभवान्तरोपलक्षणम् । अत्रौत्सुक्यभाववचनात् प्रेयोलङ्कारः ॥ २ ॥

विरलेति । परिणतिं परिवृत्तिम्, अन्यत्र जरावस्थां च गतः, अत एव विरला अल्पा आतपस्य छविर्यस्य सः, अन्यत्र क्षीणप्रभः । अनुष्णवपुः, अन्यत्र

अपराह्णशीतलतरेण शनैरनिलेन लोलितलताङ्गुलये ।
निलयाय शाखिन इवाह्वयते ददुराकुलाः खगकुलानि गिरः ॥४
उपसन्ध्यमास्त तनु सानुमतः शिखरेषु तत्क्षणमशीतरुचः ।
करजालमस्तसमयेऽपि सतामुचितं खलूच्चतरमेव पदम् ॥ ५ ॥
प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ ६ ॥

श्लेषोदयादीषदुष्णदेहः । अलवणा यवागूरिति वदल्पार्थे नञ्प्रयोगः । परितो विपाण्डु एकत्र शुभ्राभ्रपटलच्छन्नत्वादपरत्र पलितैश्च पाण्डुरमभ्रमाकाशमेव शिरो दधदुद्वहत् परिमन्दं प्रशान्तम् अर्थग्रहणासमर्थञ्च सूर्य एव नयनं यस्य स दिवसः शिथिलः शिथिलवृत्तिः, शिथिलाङ्गश्चाभवत् । अत्राभ्रशिर इत्याद्यवयवरूपणाद्दिवस एव स्थविर इत्यवयविरूपकसिद्धेस्तद्रूपणादेकदेशवृत्तिरूपकं श्लेषानुप्राणितम् ॥ ३ ॥

अपराह्णेति । अपरोऽपरभागोऽह्नोऽपराह्णो दिनान्तः । 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' इत्येकदेशिसमासः 'राजाहःसखिभ्यष्टच्' 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः 'अह्नोऽदन्तात्' इति णत्वम् । तस्मिन्नपराह्णे शीतलतरेणानिलेन शनैर्लोलितायालिता लता एवाङ्गुलयो यस्य तस्मै अत एव निलयाय निवासायाह्वयते अङ्गुलिसंज्ञया आह्वानं कुर्वाणायेव स्थितायेत्युत्प्रेक्षा । शाखिने वृक्षाय खगकुलानि पक्षिसङ्घा आकुलास्तुमुला गिर इदमागम्यत इति प्रत्युत्तराणि ददुरिवेत्यनुषङ्गादुत्प्रेक्षा ॥ ४ ॥

उपसन्ध्यमिति । उपसन्ध्यं सन्ध्यायाः समीपे । समीपार्थेऽव्ययीभावे नपुंसकत्वाद्ध्रस्वत्वम् । अशीतरुच उष्णांशोस्तनु करजालं तत्क्षणं तस्मिन् क्षणे, तत्कालेऽपीत्यर्थः । अत्यन्तसंयोगे द्वितीया । सानुमतोऽद्रेः शिखरेष्वास्त अतिष्ठत् । आसेः कर्त्तरि लङ् । सतामस्तसमये नाशसमयेऽप्युच्चतरमेव पदमुन्नतस्थानमेवोचितं खलु । अर्थान्तरन्यासः ॥ ५ ॥

प्रतिकूलतामिति । विधौ दैवे प्रतिकूलतामुपगते सति बहुसाधनता अनेकसाधनवत्ता विफलत्वमेति । महत्यपि साधनसम्पत्तिर्निष्फलैवेत्यर्थः । तथाहि, पतिष्यत आसन्नापातस्य दिनभर्तुः करा अंशवो हस्ताश्च । 'बलि-

नवकुङ्कुमारुणपयोधरया स्वकरावसक्तरुचिराम्बरया ।
अतिसक्तिमेत्य वरुणस्य दिशा भृशमन्वरज्यदतुषारकरः ॥७॥
गतवत्यराजत जपाकुसुमस्तवकद्युतौ दिनकरेऽवनतिम् ।
बहलानुरागकुरुविन्ददलप्रतिबद्धमध्यमिव दिग्वलयम् ॥८॥
द्रुतशातकुम्भनिभमंशुमतो वपुरर्द्धमग्नवपुषः पयसि ।
रुरुचे विरिञ्चिनखभिन्नबृहज्जगदण्डकैकतरखण्डमिव ॥९॥

हस्तांशवः कराः' इत्यमरः । तेषां सहस्रमपि अवलम्बनाय अवष्टम्भनाय नाभूत्, अतो दैवमेव प्रबलमिति भावः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६ ॥

नवेति । अतुषारकर उष्णांशुः नवकुङ्कुमवदरुणपयोधरया नवसन्ध्यारुणमेघया अन्यत्र नवकुङ्कुमारुणकुचया स्वकरावसक्तरुचिराम्बरया स्वकिरणाक्रान्तरुचिराकाशया, अन्यत्र स्वहस्तलग्नचारुवस्त्रया वरुणस्य दिशा, पश्चिमदिशा, पश्चिमदिशा सहेत्यर्थः । वरुणसम्बन्धात्पराङ्गनात्वञ्च गम्यते । 'वृद्धो यूना'—इति सूत्रादौ सहार्थाप्रयोगात् सहार्थानामप्रयोगेऽपि 'सहयुक्तेऽप्रधाने' इति सहार्थे तृतीया । अतिसक्तिमतिसन्निकर्षमत्यासक्तिञ्च एत्य प्राप्य भृशमन्वरज्यत् लोहितो रक्तवांश्चाभवत्, रञ्जेर्दैवादिकात् कर्त्तरि लङ् । 'कुषिरञ्जोः प्राचां श्यन् परस्मैपदञ्च इति कर्म्मकर्त्तरि वा । अत्र वारुणीदिनकरादिविशेषणमहिम्नैव तयोर्जारभावप्रतीतेः समासोक्तिरलङ्कारः ॥ ७ ॥

गतवतीति । जपाकुसुमस्तवकद्युतौ लोहितवर्णे दिनकरेऽवनतिमस्ततां गतवति सति, लम्बमाने सतीत्यर्थः । दिग्वलयं दिङ्मण्डलं कङ्कणञ्च ध्वन्यते, बहलानुरागैः सान्द्ररागैः कुरुविन्ददलैः पद्मरागशकलैः प्रतिबद्धः प्रत्युप्तो मध्यो यस्य तदिवाराजत इत्युत्प्रेक्षा । 'कुरुविन्दस्तु मुस्तायां कुल्माषव्रीहिभेदयोः । इङ्गुदे पद्मरागे च मुकुलेऽपि समीरितः' । इति विश्वः ॥ ८ ॥

द्रुतेति । द्रुतं तप्तं यच्छातकुम्भं तपनीयम् । 'तपनीयं शातकुम्भम्' इति सुवर्णपर्य्यायेष्वमरः । तेन सदृशं सन्निभमिति नित्यसमासः । पयसि समुद्रोदके अर्धं यथा तथा मग्नं वपुर्य्यस्य तस्यांशुमतोऽर्कस्य मण्डलं विरिञ्चे-

अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।
निरकाशयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥१०॥
अभितिग्मरश्मि चिरमाविरमादवधानखिन्नमनिमेषतया ।
विगलन्मधुव्रतकुलाश्रुजलं न्यमिमीलदब्जनयनं नलिनी ॥११॥

ब्रह्मणो नखेन विभिन्नस्य द्वेधा विदलितस्य बृहतो महतो जगदण्डकस्य जगदाश्रयकोशस्य ब्रह्माण्डकस्यैकतरखण्डमन्यतरदलमिव रुरुचे रराज । अत्रोपमानस्य पुराणप्रसिद्धत्वादुपमालङ्कारः ॥ ९ ॥

अनुरागवन्तमिति । अपरदिक् पश्चिमा सैव गणिका वेश्या अनुरागो लौहित्यमभिलाषश्च तद्वन्तमपि लोचनयोः सुखयतीति सुखं सुखकरं शान्तत्वादाभिरूप्याच्च दर्शनीयं वपुर्दधतमर्पोति अतापकरमनौष्ण्यात् अशठत्वाच्च असन्तापकारिणं सुखस्पर्शं वा तथाप्यपेतवसुं नीरश्मिं निर्धनञ्च । 'देवभेदे नले रश्मौ वसू रत्ने धने वसु इत्यमरः । रविः सूर्य्यो विटश्च गम्यते । तं वियदाकाशमेवालयो गृहं तस्मान्निरकासयन्निष्काशितवती । धनपरा हि वेश्या निर्गुणमपि धनिकमासर्व्वस्वहरणात् अत्यनुरक्तवदनुवर्त्तन्ते, गुणवन्तमपि हृतसर्व्वस्वं निर्वासयन्ति सद्य एवेति भावः । अस्तं गतोऽर्क इति श्लोकार्थः । अत्र वियदालयात् अपरदिग्गणिकेत्येकदेशरूपणात् रवेर्व्विटत्वरूपणावगमात् एशवर्त्ति रूपकं श्लेषोऽपि तदुत्थापितत्वादनुराग एवानुरागो वसव एव च वसूनीति रूपकपर्य्यवसित एवेत्यङ्गम् ॥ १० ॥

अभीति । नलिनी अभितिग्मरश्मि सूर्य्याभिमुखं चिरमाविरमात् अस्तमयात् अनिमिषतया अपक्ष्मपाततया । दलसङ्कोच एवात्र निमेषः । अवधानेनाभिमुखावस्थाननिर्ब्बन्धेन खिन्नमलसम् । अत एव विगलन्निःसरन्मधुव्रतकुलमेवाश्रुजलं यस्य तदब्जमेव नयनं न्यमिमीलत् मीलयति स्म । 'भ्राजभास'—इत्यादिना विकल्पादुपधाह्रस्वः । अत एव नाभ्यासदीर्घः ।' अनुरक्ता हि कान्ता कान्तमनिमेषं पश्यन्ती तदपाये सति निमीलिताक्षी स्यादिति भावः । अत्राप्यब्जनयनमित्याद्यवयवरूपणादवयविनोर्नलिनीतिग्मरश्मयोर्नायिकानायकत्वरूपकदेशविवर्त्ति रूपकम् ॥ ११ ॥

अविभाव्यतारकमदृष्टहिमद्युतिबिम्बमस्तमितभानु नभः ।
अवसन्नतापमतमिस्रमभाद्पदोषतैव विगुणस्य गुणः ॥१२॥
रुचिधाम्नि भर्त्तरि भृशं विमलाः परलोकमभ्युपगते विविशुः ।
ज्वलनं त्विषः कथमिवेतरथा सुलभोऽन्यजन्मनि स एव पतिः ॥१३॥
विहिताञ्जलिर्जनतया दधती विकसत्कुसुम्भकुसुमारुणताम् ।
चिरमुज्झतापि तनुरौज्झदसौ न पितृप्रसूः प्रकृतिमात्मभुवः ॥१४॥

अविभाव्येति । अविभाव्यतारकमलक्ष्यनक्षत्रम् अदृष्टं हिमद्युतेरिन्दोर्बिम्बं यस्मिंस्तत्, अद्याप्यनुदितचन्द्रतारकमित्यर्थः । अस्तमित्यदर्शनेऽव्ययम् । अस्तमितोऽस्तं गतो भानुर्यस्मिंस्तत् । एतावता निर्गुणत्वमुक्तम् । अथ निर्दोषत्वमाह—अवसन्नतापमर्कास्तमयात् प्रशान्तसन्तापम् । अतमिस्रमनुदितान्धकारं नभोऽन्तरीक्षमभाद्भाति स्म । भातेर्लङ् । ननु निर्गुणस्य का शोभेति न वाच्यं, निर्दोषताया अपि गुणत्वादित्यर्थान्तरन्यासेनाह—विगुणस्य गुणहीनस्यापदोषता निर्दोषत्वमेव गुणः । अतो गुणवत्त्वाच्छोभा युक्तेति कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १२ ॥

रुचीति । रुचिधाम्नि तेजोनिधौ सूर्य्ये भर्त्तरि पत्यौ परलोकं देशान्तरमभ्युपगते, मृते च सति विमलाः शुद्धास्त्विषो ज्वलनं विविशुः । 'अग्निं वावादित्यः सायं प्रविशति' इति श्रुतेरिति भावः । अन्यत्र 'मृते या म्रियते पत्यौ सा स्त्री ज्ञेया पतिव्रता' इति स्मरणादिति भावः । अग्निप्रवेशफलमाह—इतरथा ज्वलनप्रवेशे अन्यजन्मनि जन्मान्तरे स एव स सूर्य्य एव पतिः, अन्यत्र तु योऽस्मिञ्जन्मनि पतिः स एव कथं सुलभः, न कथञ्चिदित्यर्थः । 'उद्यन्तं वावादित्यमग्निरनुसमारोहति' इति श्रुतेः । तेनैव सह मोदत इति स्मरणादिति भावः । अतोऽग्निप्रवेशो युक्त इति समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १३ ॥

अथ सन्ध्याप्रादुर्भावमाह—विहितेति । जनतया जनसमूहेन । 'ग्रामजन'—इत्यादिना समूहार्थे तल्प्रत्ययः । विहिताञ्जलिः, कृतप्रणामेत्यर्थः । विकसत्कुसुम्भकुसुमवदरुणतां दधती, राजसत्वादिति भावः । तदुक्तं 'सर्गाय रक्तं रजसोपबृंहितम्' इति । प्रसूत इति प्रसूर्माता । 'जनयित्री प्रसूर्माता'

अथ सान्द्रसान्ध्यकिरणारुणितं हरिहेतिहूति मिथुनं पततोः ।
पृथगुत्पपात विरहार्त्तिदलद्धृदयसृुतासृगनुलिप्तमिव ॥ १५ ॥
निलयः श्रियः सततमेतदिति प्रथितं यदेव जलजन्म तया ।
दिवसात्ययात्तदपि मुक्तमहो चपलाजनं प्रति न चोद्यमदः ॥१६

इत्यमरः । पितॄणां प्रसूः पितृप्रसूः असाविय सन्ध्यारूपिणी आत्मभुवो ब्रह्मण स्तनुर्मूर्तिश्चिरमुज्झिता त्यताऽपि प्रकृतिं स्वभावम् । जगद्वन्द्यत्वादि निजधर्ममित्यर्थः। नोज्झत् न विससर्ज । 'उज्झ विसर्गे' लङ् 'आडजादीनाम्' इत्याडागमः 'आटश्च' इति वृद्धिः । भूतपूर्वोऽपि महाजनपरिग्रहः फलतीति भावः । 'पितामहः पितॄन् सृष्ट्वा मूर्तिं तामुत्ससर्ज ह । सा प्रातः सायमागत्य सन्ध्यारूपेण पूज्यते' ॥ इत्यादि भविष्यपुराणमत्र प्रमाणम् । अत्र तनुत्यागरूपकारणसद्भावेऽपि प्रकृतित्यागरूपकार्य्यानुदयाद्विशेषोक्तिरलङ्कारः । तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते इति लक्षणात् ॥ १४ ॥

अथेति । अह सन्ध्योदयानन्तरं सान्द्रा ये सान्ध्याः सन्ध्यायां भवाः । 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यण्प्रत्ययः । तैः किरणैररुणितमरुणीकृतम् अतएव विरहार्त्या विरहवेदनया दलतो दीर्य्यमाणाद्धृदयात् सुतेन क्षरितेनासृजा रुधिरेणानुलिप्तमिव स्थितमित्युत्प्रेक्षा । हरेर्विष्णोर्हेतिरायुधम् । 'हेतिः शस्त्रे तु नृस्त्रियोः' इति केशवः । हरिहेतेर्हूतिरिव हूतिराह्वा यस्य तद्धरिहेतिहूति, चक्राह्वमित्यर्थः । पततोः पक्षिणोः । 'पतत्रिपत्रिपतगपतत्पत्त्ररथाण्डजाः' इत्यमरः । मिथुनम्, चक्रवाकद्वन्द्वमित्यर्थः । पृथक् भेदेनोत्पपात उदडीयत् ॥ १५ ॥

निलय इति । यदेव जले जन्म यस्य तज्जलजन्म जलजमेतदेव सततं श्रियो निलय आलय इति प्रथितं प्रसिद्धम् । 'निकाय्यनिलयालयाः' इत्यमरः तदपि, नित्यवासभूतमपीत्यर्थः । तया श्रिया दिवसात्यये सायंकाले मुक्तम् । अहो देवानामपि कृतघ्नत्वं यदापदि महोपकारिणस्त्याग इत्याश्चर्य्यम् । अथवा चपला चापलवती स्त्री, कमला च । 'चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च' इति विश्वः । सैव जनश्चपलाजनः । 'जातेश्च' इति संज्ञापूरण्योश्च' इति चोभयत्रापि पुंवद्भावप्रतिषेधः । तं प्रति, तस्मिन्नि-

**दिवसोऽनुमित्रमगमद्विलयं किमिहास्यते बत मयाऽबलया ।**
**रुचिभर्त्तुरस्य विरहाधिगमादिति सन्ध्ययापि सपदि व्यगमि ॥१७**
**पतिते पतङ्गमृगराजि निजप्रतिविम्बरोषित इवाम्बुनिधौ ।**
**अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे ॥१८॥**

त्यर्थः । अद इदं क्षतघ्नत्वं चोद्यं चोदनीयं कथमित्याक्षेप्यं न चपलत्वान्नाश्चर्यमेतदिति भावः । श्लेषमूलातिशयोक्त्यनुप्राणितोऽयमर्थान्तरन्यासः ॥१६॥

दिवस इति । दिवसो वासरः । पुमानिति भावः । मित्रं सूर्यं सुहृदं चानु । मित्रेण सहेत्यर्थः । 'तृतीयार्थे' इत्यनोः कर्मप्रवचनीयत्वाद्द्वितीया । 'मित्रं सुहृदि मित्रोऽर्के' इति विश्वः । विलयं नाशमगमद्गतः । गमेर्लुङि 'पुषादि'—इति च्लेरङादेशः । अबलया स्त्रिया मया रुचिभर्तुस्तेजोनिधेः प्रेमास्पदपतेश्चास्य सूर्यस्य विरहाधिगमात् । ल्यब्लोपे पञ्चमी । विरहज्ञानं प्राप्येत्यर्थः । इहास्मिन् लोके किमास्यते किमर्थं स्थीयते । आसेर्भावे लिट् । बतेति खेदे । इतीत्थमालोच्येवेत्यर्थः । अत एव उत्प्रेक्षा । सन्ध्यापि सपदि व्यगमि । व्यपागमीत्यर्थः । गमेः स्वार्थण्यन्ताद्भावे लुङ् मित्त्वाद्ध्रस्वः । 'अण्यन्तादुपधावृद्धिर्नायं स्याद्धेतुमण्णिचि । तस्मात् स्वार्थे णिजुत्पाद्यो मितां ह्रस्वो यतो भवेत्' ॥ विगमशब्दात् 'तत्करोति'—इति ण्यन्ताल्लुङिति केचित् ॥ १७ ॥

अथान्धकारं वर्णयति—पतित इति । पतङ्गोऽर्क एव मृगराट् सिंह इति रूपकसमासः । तस्मिन्निजेन प्रतिविम्बेन रोषिते कोपित इवेत्युत्प्रेक्षा । स्वप्रतिविम्बे प्रतिसिंहभ्रमादिति भावः । अत एवाम्बुनिधौ पतिते सति । तज्जिघांसयेति भावः । भावलक्षणसप्तमी । अथ अस्, पतनानन्तरं नागयूथानि करिकुलानीव मलिनानि श्यामानि । 'उपमानानि सामान्यवचनैः' इति समासः । तमांसि जगल्लोकं परितस्तरिरे आच्छादयामासुः । स्तृणातेः कर्तरि लिट् । 'ऋतश्च संयोगादेर्गुणः' । अत्र यद्यपि नागयूथमलिनानीत्युक्त्या अनुशासनसिद्धोपमानुसारात् पतङ्गमृगराजीत्यत्राप्युपमितसमासाश्रयणेनोपमैवोचिता, तथापि तदुत्प्रेक्षायाः पतङ्गेऽसम्भवात् सिंहे सम्भवाच्च रूपकमेव युक्तम् । तथा च रूपकानुप्राणितोत्प्रेक्षेयमुपमेति च सङ्करः । तत्रोत्प्रेक्षया भ्रान्तिमदुपमया रूपकं च व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिरिति संक्षेपः ॥१८॥

व्यसरन्नु भूधरगुहान्तरतः पटलं बहिर्बहलपङ्करुचि ।
दिवसावसानपटुनस्तमसो बहिरेत्य चाधिकमभक्त गुहाः ॥१९॥
किमलम्बताम्बरविलग्नमधः किमवर्द्धतोर्ध्वमवनीतलतः ।
विससार तिर्य्यगथ दिग्भ्य इति प्रचुरीभवन्न निरधारि तमः ॥२०॥
युग्मम् ।
स्थगिताम्बरक्षितितले परितस्तिमिरे जनस्य दृशमन्धयति ।
दधिरे रसाञ्जनमपूर्वमतः प्रियवेश्मवर्त्म सुदृशो ददृशुः ॥ २१ ॥
अवधार्य्य कार्य्यगुरुतामभवन्नभयाय सान्द्रतमसन्तमसम् ।
सुतनोः स्तनौ च दयितोपगमे तनुरोमराजिपथवेपथवे ॥२२॥

व्यसरदिति । बहलपङ्करुचि सान्द्रकर्दमच्छवि दिवसावसाने दिनान्ते पटुनः समर्थस्य तमसः पटलं भूधरगुहानामन्तरतोऽभ्यन्तरादेत्य आगत्य बहिर्गवाक्षप्रदेशे व्यसरन्नु विस्तृतं वा बहिर्बाह्यदेशादेत्य गुहा अधिकं भृशमभक्त च भजते स्म, किं प्रविष्टं वेत्यर्थः । भजतेर्लुङि तङ् 'झलो झलि' इति सकारलोपः । अत्र व्यापकत्वसादृश्यात्तमसोऽन्तर्बहिरपादानकत्वसन्देहात् सन्देहालङ्कारः ॥ १९ ॥

किमिति प्रचुरीभवद्बहुलीभवत्तमः कर्त्तृ किमम्बरविलग्नमाकाशस्थं सत् अधो भूतलं प्रति अलम्बतास्रंसत किमिव अवनीतलतो भूतलादूर्ध्वमुपरिष्टादवर्धत किम् । अथ दिग्भ्यस्तिर्य्यग्विससार विस्तृतमिति न निरधारि । अधोलम्बनादीनामन्यतमं नावधारितमित्यर्थः । धारयतेः कर्म्मणि लुङ् । अत्रापि पूर्व्ववत्सन्देहालङ्कारः ॥ २० ॥

स्थगितेति । स्थगिते तिरोहिते अम्बरक्षितितले येन तस्मिंस्तिमिरे परितो जनस्य दृशमन्धयति अन्धां कुर्वति सति सुदृशः स्त्रियोऽपूर्वं नूतनं रसाञ्जनं रसं रागमेवाञ्जनं, सिद्धाञ्जनं च दधिरे दधुः । अतो हेतोः प्रियवेश्मवर्त्म ददृशुः । अत्र रसाञ्जनवाक्यार्थेन प्रियवेश्मदर्शनसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । तेन रसः सिद्धाञ्जनमिवेत्युपमाध्वननादलङ्कारेणालङ्कारध्वनिः ॥ २१ ॥

अवधार्य्येति । सान्द्रतमं यत् सन्तमसं व्यापकं तमः । 'विष्वक् सन्तमसम्'

**दृष्टशोऽपि भास्कररुचाह्नि न यः स तमीं तमोभिरभिगम्य तताम् ।**
**द्युतिमग्रहीद् ग्रहगणो लघवः प्रकटीभवन्ति मलिनाश्रयतः ॥ २३**
**अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपशिखाः ।**
**समयेन तेन चिरसुप्तमनोभवबोधनं सममबोधिषत ॥ २४ ॥**

इत्यमरः । 'अवसमन्धेभ्यस्तमसः' इति समासान्तोऽच् प्रत्ययः । तत्कर्तृ सुतनोः शुभाङ्गया दयितोपगमे प्रियाभिसरणे कार्य्यगुरुतां सम्भोगकार्य्यस्यावश्यकत्वमवधार्य्य निश्चित्य भयाय नाभवत् । स्तनौ कुचौ च तनुः कृशो यो रोमराजिः पन्थाः रोमराजिपथो मध्यभागस्तस्य वेपथवे कम्पाय । 'ट्वितोऽथुच्' इत्यथुच् प्रत्ययः । नाभवतामिति विपरिणामेनानुषङ्गः । कार्य्यासक्तस्य तत्रापि कामुकस्य कुतो भयं क्लेशगणना चेति भावः । अत्र सन्तमसकुचयोः कामनिमित्ते भयकम्पानुदये कार्य्यगौरवावधारणहेतुकत्वोत्प्रेक्षेयमनेन व्यज्यते ॥ २२ ॥

दृष्टश इति । यो ग्रहगणोऽह्नि सवितुस्त्विषा न दृष्टशे नेक्षितः स ग्रहगणस्तमोभिस्ततां व्याप्तां ताम्यन्त्यस्यामिति तमीं रात्रिम् । 'रजनी यामिनी तमी' इत्यमरः । अधिगम्य प्राप्य द्युतिमग्रहीत् । ग्रहेर्लुङि 'ग्रहोऽलिटि' इति इटो दीर्घत्वेऽपि स्थानिवत्त्वेनेट्त्वात्सिचो लोपे सवर्णदीर्घः । तथाहि लघवोऽल्पाः । 'निष्पिष्टेऽल्पे लघुः' इत्यमरः । मलिनाश्रयतो निकृष्टाश्रयणात्प्रकटीभवन्ति । अर्थान्तरन्यासः ॥ २३ ॥

अनुलेपनानीति । तेन समयेन प्रदोषकालेन कर्त्रा अनुलेपनानि कुङ्कुमचन्दनादीनि कुसुमानि माल्यादीनि । तथा पतिषु कृतमन्यवः कृतकोपा अबलाः स्त्रियः तथा दीपशिखाः दीपज्वालाश्चेत्येतानि सर्वाणि चिरं सुप्तस्य पूर्वं स्तब्धस्य मनोभवस्य कामस्य बोधनमुद्दीपनं यस्मिन् कर्म्मणि तद्यथा तथा । तत्पूर्वकमित्यर्थः । इतरथा अनुलेपनादिबोधकस्य वैफल्यासम्भवाच्चेति भावः । समं सहैव अवबोधिषत बोधितानि । बुध्यतेर्ण्यन्तात्कर्म्मणि लुङ् । अत्र गन्धमाल्यसम्पादनस्त्रीमनःप्रसाददीपशिखोत्पादनानामबोधिषतेत्येकेन श्लिष्टशब्देनाभिधानाच्छ्लेषमूलाभेदाध्यवसायरूपातिशयोक्तिरेका । तथा सुप्तमनोभवबोधनमिति क्रियाविशेषणसमर्थ्यात्सममिति यौगपद्यभिधानाच्च मनोभवबोध-

वसुधान्तनिःसृतमिवाहिपतेः पटलं फणामणिसहस्ररुचाम् ।
स्फुरदंशुजालमथ शीतरुचः ककुभं समस्कुरुत माघवनीम् ॥२५॥
विशदप्रभापरिगतं विबभावुदयाचलव्यवहितेन्दुवपुः ।
मुखमप्रकाशदशनं शनकैः सविलासहासमिव शक्रदिशः ॥२६॥
कलया तुषारकिरणस्य पुरः परिमन्दभिन्नतिमिरौघजटम् ।
क्षणमभ्यपद्यत जनैर्न मृषा गगनं गणाधिपतिमूर्त्तिरिति ॥२७॥

तथा कार्यकारणभूतयोस्तद्विपर्ययरूपापरा तदुभयापेक्षया गन्धमाल्यादीनां प्रस्तुतानामवबोधनरूपैकधर्मसम्बन्धात्तुल्ययोगितामिदर्यैति सङ्करः ॥ २४ ॥

अत्र चन्द्रोदयवर्णनं प्रारभते—वसुधेति । अथ मनःप्रसादानन्तरं वसुधान्तेन भूप्रान्तेन निःसृतं वहिर्निर्गतमहिपतेः शेषस्य फणामणिसहस्राणां रुचां भासां पटलं स्तोम इवेत्युत्प्रेक्षा । शीतरुचश्चन्द्रस्य सम्बन्धि स्फुरदुल्लसत् अंशुजालं मघोन इमां माघवनीं माहेन्द्रीम् । 'मघवा बहुलम्' इति विकल्पान्न आदेशः । ककुभं दिशं समस्कुरुत अभूषयत । प्राच्यां दिशि चन्द्रकिरणजालमलक्ष्यतेत्यर्थः । 'सम्पर्युपेभ्यः करोतौ भूषणे' इति सम्पूर्वस्य सुडागमः 'अड्भ्यासव्यवायेऽपि' इति नियमात् ॥ २५ ॥

विशदेति । विशदप्रभापरिगतं शुभ्रकान्तिव्याप्तम् । उदय इति अचलः । 'उदयः पूर्वपर्वतः' इत्यमरः । तेन व्यवहितमिन्दुवपुरिन्दुमण्डलं यस्मिन् शक्रदिशः प्राच्या मुखमग्रभागः वक्त्रञ्च प्रतीयते तदभेदेनोत्प्रेक्ष्यते अप्रकाशदशनमलक्ष्यदन्तं सविलासहासं सविलासस्मितमिव शनकैर्मन्दं विबभौ ॥ २६ ॥

कलयेति । पुरः प्राच्यामग्रभागे च तुषारकिरणस्येन्दोः कलया किरणेन अन्यत्रोपलक्षितं परिमन्दमल्पं भिन्ना विदलितास्तिमिरौघा एव जटा यस्य तत् गगनं न मृषा सत्यम् । गणाधिपतेः प्रमथपतेरीश्वरस्य । 'गणाः प्रमथसंख्यौघाः' इति वैजयन्ती । मूर्तिरिति जनैः क्षणमभ्यपद्यत गगनमष्टानां शिवमूर्तीनामन्यतममिति यत्तत् सत्यम्, अभिपन्नमित्यर्थः । कलामात्रोदितश्चन्द्र इति फलितोऽर्थः । रूपकालङ्कारः ॥ २७ ॥

नवचन्द्रिकाकुसुमकीर्णतमःकबरीभृतो मलयजार्द्रमिव ।
ददृशे ललाटतटहारि हरेर्हरितो मुखे तुहिनरश्मिदलम् ॥२८॥
प्रथमं कलाभवदथार्द्धमथो हिमदीधितिर्महदभूदुदितः ।
दधति ध्रुवं क्रमश एव न तु द्युतिशालिनोऽपि सहसोपचयम् ॥२९॥
उदमज्जि कैटभजितः शयनादपनिद्रपाण्डुरसरोजरुचा ।
प्रथमप्रबुद्धनदराजसुतावदनेन्दुनेव तुहिनद्युतिना ॥ ३० ॥

नवेति । नवचन्द्रिकाभिरेव कुसुमैः कीर्णं तम एव कबरी केशपाशः । 'जानपद' इत्यादिना ङीप् । तां बिभर्तीति तद्भृतः हरेः शक्रस्य हरितो दिशो मुखेऽग्रभाग एव मुखं वक्त्रमिति श्लिष्टरूपकं तस्यैव ललाटतटवद्धारि मनोहरं हिमरश्मिदलमिन्दुखण्डं मलयजेन चन्दनेनार्द्रमिव ददृशे धावल्यादिति भावः । अत्र नवचन्द्रिकाकुसुमेत्याद्येकदेशविवर्त्तिरूपकमहिम्ना हरिवधूत्वप्रतीतौ तत्सहकृतश्लेषावगतवक्त्राभेदाध्यवसितमुखसम्बन्धप्रसादासादितललाटतटोपमोज्जीवितेन्दुदलस्यानुपात्तनिजधावल्यगुणनिमित्तमलयजार्द्रत्वगुणस्वरूपोत्प्रेक्षेति सङ्करः ॥२८॥

प्रथममिति । हिमदीधितिश्चन्द्रः प्रथमं कला कलामात्रमभवत् । 'कला तु षोडशो भागः' इत्यमरः । अथार्धमात्रमभवत् । अथो अनन्तरम् । 'अथो अथ' इत्यमरः । उदितः साकल्यादुत्थितः सन् अमहान्महान् सम्पद्यमानोऽभून्महदभूत् । अभूततद्भावे च्विः । हलन्तत्वान्न कार्य्यान्तरप्राप्तिः । तथाहि द्युतिशालिनस्तेजिष्ठा अपि क्रमशः क्रमेणैवोपचयं वृद्धिं दधति, सहसा झटिति तु न दधति ध्रुवम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २९ ॥

उदमज्जीति । अपनिद्रपाण्डुरसरोजरुचा विकसितपुण्डरीकश्रिया तुहिनद्युतिना चन्द्रेण प्रथमं हरेः पूर्व्वमेव प्रबुद्धायाः, अन्यथा तन्मुखं न दृश्येतेति भावः । नदराजसुतायाः सिन्धुकन्यायाः श्रियो वदनेनेवेत्युत्प्रेक्षा । कैटभजितो हरेः शयनात्, समुद्रादित्यर्थः । उक्तोत्प्रेक्षास्थापनार्थमित्थं निर्देशः । उदमज्जि उन्मग्नम्, उत्थितमित्यर्थः ॥ ३० ॥

अथ लक्ष्मणानुगतकान्तवपुर्जलधिं विलङ्घ्य शशिदाशरथिः।
परिवारितः परित ऋक्षगणैस्तिमिरौघराक्षसकुलं बिभिदे ॥३१॥
उपजीवति स्म सततं दधतः परिमुग्धतां वणिगिवोडुपतेः।
घनवीथिवीथिमवतीर्णवतो निधिरम्भसामुपचयाय कलाः ॥३२॥
रजनीमवाप्य रुचमाप शशी सपदि व्यभूषयदसावपि ताम्।
अविलम्बितक्रममहो महतामितरेतरोपकृतिमच्चरितम् ॥३३॥

अथेति। अथोदयानन्तरं लक्ष्मणा लाञ्छनेन, लक्ष्मणेन सौमित्रिणा च अनुगतमनुसृतं कान्तं वपुर्यस्य सः। लक्ष्मणानुगतकान्तवपुरिति शब्द-श्लेषः। वस्तुतः शब्दभेदेनार्थद्वयाभावेऽपि जतुकाष्ठवदेकशब्दप्रतीतेः। परितः समन्तादृक्षगणैर्नक्षत्रगणैः, जाम्बवदादिभल्लूकसमूहैश्च इत्यर्थश्लेषः। एकना-लावलम्बिफलद्वयवदृक्षगणैकशब्दादर्थद्वयप्रतीतेः। 'नक्षत्रमृक्षं भं तारा' इति। 'ऋक्षाच्छभल्लभल्लूका' इति चामरः। परिवारितः शशीव दाशरथिर्दशरथ-पुत्रो रामः। अत इञ्, जलधिं विलङ्घ्य तिमिरौघ एव राक्षसकुलं तत् बिभिदे बिभेदयामास। भिदेः कर्तरि लिट्। श्लेषसङ्कीर्णसमस्तवस्तुवर्ति-सावयवरूपकालङ्कारः ॥ ३१ ॥

उपजीवतीति। अम्भसां निधिः समुद्रो वणिगिव सततं परिमुग्धतां सौन्दर्य्यम्, अन्यत्र मौढ्यम्, व्यवहारानभिज्ञतामिति यावत्। 'मुग्धः सुन्दरमूढयोः' इति विश्वः। दधतो दधानस्य घनानां वीथिर्घनवीथिरन्त-रीक्षं सा वीथिः पण्यवीथिरिवेत्युपमितसमासः। तामवतीर्णवतः प्रविष्टवत उडुपतेर्नक्षत्रनाथस्य कस्यचिद्धनिकवणिजश्च कलाः षोड़शांशान् मूलधन-वृद्धीश्च। 'कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके। षोड़शांशेऽपि चन्द्रस्य' इति विश्वः। उपचयाय स्वाभ्युन्नतये समृद्धये चोपजीवति स्म सेवते स्म। अन्यत लभते स्मेत्यर्थः। यथा क्रियादिकुशलो ह्यकुशलान्महान्तं लाभ-माप्नोति तद्वदिति भावः। श्लेषसङ्कीर्णेयमुपमासङ्कीर्णः श्लेष इत्यन्ये ॥ ३२ ॥

रजनीमिति। शशी रजनीमवाप्य रुचिं शोभामाप असौ शश्यपि तां रजनीं सपदि व्यभूषयत्। महतां सतां चरितमवलम्बितक्रमं यथा तथा इतरेतरोपकृतिमत् अन्योन्योपकारवत् अहो इत्यविलम्बादाश्चर्य्यम्। अत्र

दिवसं भृशोष्णरुचिपादहतां रुदतीमिवानवरतालिरुतैः ।
मुहुरामृशन् मृगधरोऽग्रकरैरुदशिश्वसत् कुमुदिनीवनिताम् ॥३४
प्रतिकामिनीति ददृशुश्चकिताः स्मरजन्मघर्मपयसोपचिताम् ।
सुदृशोऽभिभर्तृ शशिरश्मिगलज्जलबिन्दुमिन्दुमणिदारुवधूम् ॥३५

रजनीशशिनोर्मिथः शोभाकरत्वादन्योन्यालङ्कारः । 'तदन्योन्यं मिथो यत्रो-त्पाद्योत्पादकता भवेत्' इति लक्षणात् । तत्समर्थकश्चायमर्थान्तरन्यास इत्यङ्गाङ्गिभावेन सङ्करः ॥ ३३ ॥

दिवसमिति । मृगधरश्चन्द्रो दिवसं, दिवस इत्यर्थः । कालाध्वनोरत्यन्तसंयोगे द्वितीया । भृशम् उष्णांशोः पादेन करेणाङ्घ्रिणा च । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । हतां तडिताम् अत एवानवरतैरविच्छिन्नैरलिरुतै रुदतीं क्रन्दन्तीमिव स्थितां कुमुदिन्येव वनिता ताम् । अग्राणि च ते कराश्च इत्यभेदेन समास इति वामनः । तैरग्रकरैरग्रांशुभिरग्रहस्तैर्मुहुरामृशन् स्पृशन् उदशिश्वसदुच्छ्वासयति स्म । परावमृष्टानां पतिभिराश्वासनीयत्वादिति भावः । श्वसधातोः 'णौ चङ्युपधाया ह्रस्वः' । अत्र पाद एव पादस्तेन हतामिति हननसाधितश्लिष्टरूपकोत्थापितेयमलिरुतैरिति व्यधिकरणपरिणामगर्भा रोदनोत्प्रेक्षेति विजातीयसङ्करः । तथा करैरेव करैः कुमुदिनीवनितेति श्लिष्टाश्लिष्टरूपणात् मृगधरे वल्लभत्वप्रतीतेरेकदेशवर्ति रूपकं तत्सापेक्षेयमुदशिश्वसदिति गम्योत्प्रेक्षेत्यपरो विजातीयसङ्करः । रोदनोत्प्रेक्षासापेक्षेयमुच्छ्वासनोत्प्रेक्षेति सजातीयसङ्करोऽपि ॥ ३४ ॥

प्रतीति । सुदृशोऽङ्गनाः अभिभर्तृ भर्तारमभि । 'लक्षणेभिप्रती आभिमुख्ये' इत्यव्ययीभावः । शशिरश्मिभिर्गलन्तः स्रवन्तो जलबिन्दवो यस्यास्तामिन्दुमणिश्चन्द्रकान्तशिला सैव दारु तस्य वधूस्तन्मयी वधूः स्त्रीप्रतिमा तां स्मराज्जन्म यस्य तेन स्मरजन्मना घर्मपयसा स्वेदाम्बुनोपचितां व्याप्तां, खिन्नगात्रामित्यर्थः । प्रतिकूला कामिनी प्रतिकामिनी । सपत्नीति भ्रान्त्येति शेषः । चकिता भीता ददृशुः । अत्र चन्द्रशिलापुत्रिकायां सादृश्यनिबन्धनया प्रतिकामिनीभ्रान्त्या भ्रान्तिमदलङ्कारः ॥ ३५ ॥

अमृतद्रवैर्विदधदब्जदृशामपमार्गमोषधिपतिः स्म करैः ।
परितोविसर्पि परितापि भृशं वपुषोऽवतारयति मानविषम् ॥३६
अमलात्मसु प्रतिफलन्नभितस्तरुणीकपोलफलकेषु मुहुः ।
विससार सान्द्रतरमिन्दुरुचामधिकावभासितदिशां निकरः॥३७
उपगूढवेलमलघूर्मिभुजैः सरितामचुक्षुभदधीशमपि ।
रजनीकरः किमिव चित्रमहो यदरागिणाङ्गणमनङ्गलघुम् ॥३८॥
भवनोदरेषु परिमन्दतया शिथिलोऽलसः स्फटिकयष्टिरुचः ।
अवलम्ब्य जालकमुखोपगतानुदतिष्ठदिन्दुकिरणान् मदनः ॥३९

अमृतेति ॥ ओषधिपतिश्चन्द्र एवौषधिपतिर्वैद्य इति श्लिष्टरूपकम् । अमृतमेवामृतमौषधविशेषः । तेन द्रवैरार्द्रैः करैः किरणैरेव करैर्हस्तैरब्जदृशामपमार्गमङ्गपरिमार्जनं विदधत् कुर्वन् परितो विसर्पि सर्वव्यापि भृशं परितापि सन्तापकारि मानः कोप एव विषं तत् वपुषः शरीरादवतारयति स्म अवारोपितवान् । अत्र सावयवरूपकेणौषधलिप्तजाङ्गुलिकहस्तसंस्पर्शाद्विषमिव निशाकरकरस्पर्शादेवाङ्गनानां वपुषि रोषो न स्पृष्ट इत्युपमा व्यज्यते ॥ ३६ ॥

अमलेति ॥ अधिकमवभासिताः प्रकाशिता दिशो याभिस्तासामिन्दुरुचां निकरोऽमलात्मसु निर्मलमूर्तिषु तरुणीनां ये कपोलाः फलकानीव तेष्वभितो मुहुः प्रतिफलन् संक्रामन् सान्द्रतरं प्रचुरतरं विससार । दर्पणसंक्रमणादिवेति भावः । अत्रेन्दुरुचां कपोलासंक्रमेऽपि संक्रमोक्तेरसम्बन्धे सम्बन्धोक्तिरूपातिशयोक्तिः ॥ ३७ ॥

उपगूढेति । रजनीकरश्चन्द्रः अलघुभिरूर्मिभिरेव भुजैरुपगूढा वेला येन तम् । सावष्टम्भमिति भावः । सरितामधीशं समुद्रमपि स्वभावादक्षोभ्यमपीति भावः । अचुक्षुभत् क्षोभयति स्म । क्षुभ्यतेर्ण्यन्तात्लुङ् 'णौ चङ्युपधाया ह्रस्वः' । अनङ्गेन लघुं गतसारं यदव एव रागिणस्तेषां गणमचुक्षुभदित्यदः किमिव चित्रं, न किञ्चिदित्यर्थः । अत्राक्षोभ्यमब्धिं क्षोभयतश्चन्द्रस्य दण्डापूपिकन्यायात् अन्यक्षोभकत्वोक्तेरर्थापत्तिरलङ्कारः ॥ ३८ ॥

भवनेति ॥ परिमन्दतया एकाकित्वादसमर्थतया भवनोदरेषु गृहाभ्य-

अविभावितेषुविषयः प्रथमं मदनोऽपि नूनमभवत् तमसा ।
उदिते दिशः प्रकटयत्यमुना यदघर्म्मधाम्नि धनुराचकृषे ॥४०॥
युगपद्विकाशमुदयाद्गमिते शशिनः शिलीमुखगणोऽलभत ।
द्रुतमेत्य पुष्पधनुषो धनुषः कुमुदेऽङ्गनामनसि चावसरम् ॥४१॥
ककुभां मुखानि सहसोज्ज्वलयन् दधदाकुलत्वमधिकं रतये ।
अदिदीपदिन्दुरपरो दहनः कुसुमेषुमत्रिनयनप्रभवः ॥ ४२ ॥

न्तरेषु शयितः सुप्तः अत एवालसो मदनो जालकमुखोपगतान् गवाक्षविवरप्रविष्टान् अत एव स्फटिकयष्टीनां रुगिव रुक् शोभा येषां तान् स्फटिकदण्डसन्निभानिन्दुकिरणानवलम्ब्यावष्टभ्य उदतिष्ठदुत्थितः । अत्रोद्बोधोत्थानयोरभेदविवक्षया 'उदोऽनूर्द्धकर्मणि' इति परस्मैपदसिद्धिः । एतत्पदे चाभेदाध्यवसायमूलातिशयोक्त्या स्फटिकयष्टिरुच इत्युपमया च अवलम्बेरत्यन्तावलम्बेरिवेत्युत्थानस्यावलम्बनहेतुकत्वोत्प्रेक्षा प्रत्याय्यत इत्येतासां सङ्करः ॥ ३९ ॥

अविभावितेष्विति । मदनोऽपि प्रथमं चन्द्रोदयात् प्राक् तमसा अविभावितोऽलक्षितः इषुविषयो बाणलक्ष्यं येन सोऽभवत् । नूनमित्युत्प्रेक्षा । यद्यस्मादघर्म्मधाम्नि शीतकरे उदिते दिशः प्रकटयति सति अमुना मदनेन धनुराचकृषे आकृष्टम् । चन्द्र एव महानुद्दीपको मदनस्याभूदिति भावः ॥४०॥

युगपदिति । पुष्पधनुः पुष्पधन्वा । 'वा संज्ञायाम्' इति विकल्पादनङादेशः । तस्य धनुः पुष्पचापं पुष्पान्तरञ्च तस्माच्चलितो निःसृतः शिली शल्यं मुखं येषां ते शिलीमुखाः बाणा, अलयश्च । 'अलिबाणौ शिलीमुखौ' इत्यमरः । तेषां गणः शशिन उदयाद्विकासमौत्सुक्यमुन्मीलनञ्च युगपदेकदा गमिते प्रापिते अङ्गनानां मनसि हृदये कुमुदे चावसरमवकाशमाश्वासमलभत । उभयत्र प्रवेशं लब्धवानित्यर्थः । अत्र चन्द्रोदये कुमुदकामिनीहृदययोर्द्वयोरपि प्रकृतयोः शिलीमुखप्रवेशलक्षणैकधर्म्मयोगादौपम्यात् तुल्ययोगिता, एकधर्म्मत्वञ्चात्र शिलीमुखेति श्लिष्टपदोपात्तयोरलिबाणयोरैकत्वाध्यवसायमूलातिशयोक्तिप्रसादादिति सङ्करः ॥ ४१ ॥

ककुभामिति । ककुभां दिशां मुखानि सहसा झटित्युज्ज्वलयन्नुल्लासयन् रतये सुरताय अधिकमाकुलत्वमौत्सुक्यं दधत् । यूनामिति शेषः ।

इति निश्चितप्रियतमागतयः सितदीधितावुदयवत्यबलाः ।
प्रतिकर्म कर्त्तुमुपचक्रमिरे समये हि सर्वमुपकारि कृतम् ॥४३॥
सममेकमेव दधतुः सुतनोरुरु हारभूषणमुरोजतटौ ।
घटते हि संहततया जनितामिदमेव निर्विवरतां दधतोः ॥४४॥
कदलीप्रकाण्डरुचिरोरुतरौ जघनस्थलीपरिसरे महति ।
रशनाकलापकगुणेन बधूर्मकरध्वजद्विरदमाकलयत् ॥ ४५ ॥

अन्यत्र रतये कामदेव्यै आकुलत्वं भयविह्वलत्वं दधत् । अत्रेरत्रिमुनेर्नयन-प्रभवः । 'अत्रिनेत्रसमुद्भवः' इति पुराणात् । त्रिनयनप्रभवो न भवतीत्य-त्रिनयनप्रभवः । अपरस्त्रिनयनप्रभवादन्यो दहनोऽग्निरिन्दुः । कुसुमेषुं काम-मदिदीपद्दीपयति स्म । दीप्यतेर्णौ चङि भ्राजेत्यादिना विकल्पान्नोपधाह्रस्वः । अत्र प्रकृते कुसुमेषोर्दीपनं नाम प्रवर्धनं तस्य तत्र प्रतीयमानेन प्रज्वलनेना-भेदाध्यवसायात्तन्निमित्तमिन्दोर्दिङ्मुखोद्गमनादिधर्मसम्बन्धादपरोऽयं दहन इत्यपरशब्दप्रयोगसामर्थ्याद्दहनत्वोत्प्रेक्षा न रूपकमिति रहस्यम् । चन्द्रोदया-त्कामी ववृधे इति तात्पर्य्यम् ॥ ४२ ॥

एवं चन्द्रोदयाख्यमुद्दीपनविभावमुक्त्वा तत्फलमाह—इतीति । इत्येवं सितदीधितावुदयवति अबलाः स्त्रियो निश्चिता प्रियतमानामागतिरागमनं याभिस्ताः सत्यः प्रतिकर्म्म प्रसाधनं कर्त्तुमुपचक्रमिरे । 'प्रतिकर्म्म प्रसाधनम्' इत्यमरः । चन्द्रोदयात् प्रियागमनं निश्चित्य अलङ्कर्त्तुं प्रक्रान्ता इत्यर्थः । तथा हि—समये कार्य्यकाले कृतमनुष्ठितं सर्वं कर्म्म उपकार्युपकारकं भवति । अन्यथा विफलमेवेति भावः । अतो निश्चित्य प्रवृत्तिरासां युक्ते-त्यर्थान्तरन्यासः ॥ ४३ ॥

अथ प्रसाधनमेव प्रपञ्चयति—सममिति । सुतनोः स्त्रिया उरोजतटौ उरु श्लाघ्यमेकमेव भूषणं समयवैषम्येण दधतुः । संहततया संश्लिष्टतया, ऐकमत्येन च जनितां निर्विवरतां निरन्तरालतां नीरन्ध्रत्वञ्च दधतोरिदं समभागित्वमेव घटते । अन्तर्भेदान्तराया हि विषयिणां विषयोपभोगाः कुचयोस्तदभावात् समशोभार्थं हारधारणं युक्तमिति भावः ॥ ४४ ॥

कदलीति । बधूः कदलीप्रकाण्डरुचिरे । रम्भास्तम्भसुन्दरे ऊरुरेव तरु-

अधरेष्वलक्तकरसः सुदृशां विशदं कपोलभुवि लोध्ररजः ।
नवमञ्जनं नयनपङ्कजयोर्विभिदे न शङ्खनिहितात्पयसः ॥४६॥
स्फुरदुज्ज्वलाधरदलैर्विलसद्दशनांशुकेशरभरैः परितः ।
धृतमुग्धगण्डफलकैर्विबभुर्विकसद्भिरास्यकमलैः प्रमदाः ॥४७॥
भजते विदेशमधिकेन जितस्तदनुप्रवेशमथवा कुशलः ।
मुखमिन्दुरुज्ज्वलकपोलमतः प्रतिमाच्छलेन सुदृशामविशत्॥४८

बन्धनद्रुमो यस्मिन् । अत्र कदलीकाण्डस्य सौन्दर्यमात्रोपमानत्वान्न बन्धनयोग्यद्रुमत्ववाचिना तरुशब्देन पुनरुक्तिः । महति जघनस्थल्येव परिसरः प्रदेशस्तस्मिन् रशनाकलापक एव गुणस्तेन मकरध्वजो मदनः स एव द्विरदस्तमाकलयदबध्नात् । रशनाबन्धेन जघनमतीव मदनोद्दीपकमासीदित्यर्थः । समस्तवस्तुवर्ति सावयवरूपकम् ॥ ४५ ॥

अधरेष्विति । सुदृशामधरेष्वोष्ठेषु अलक्तकरसो लाक्षाद्रवः तथा कपोलभुवि गण्डस्थले विशदं शुभ्रं लोध्ररजः तथा नयनपङ्कजयोर्नवमञ्जनञ्च शङ्खनिहितात्पयसः क्षीरान्न विभिदे भिन्नं नाभूत् । कर्म्मकर्त्तरि लिट् । अधरादिनिहितं लाक्षारागादिकं शङ्खनिहितक्षीरवत् सावर्ण्यादाश्रयतोऽभेदेन दुर्ग्रहमभूदित्यर्थः । अत्र यदधरालक्तकरसादिकं तच्छङ्खनिहितं क्षीरमित्येकवाक्यतया वाक्यार्थे वाक्यार्थसमारोपादसम्भवद्वस्तुसम्बन्धो वाक्यार्थनिष्ठो निदर्शनालङ्कारः । तेनाधरालक्तकादीनां गुणत एकत्वरूपः सामान्यालङ्कारो गम्यते । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् ॥ ४६ ॥

स्फुरदिति । प्रमदाः स्त्रियः स्फुरन्तश्चलन्तः उज्ज्वलाश्चामला अधरा ओष्ठा एव दलानि पत्त्राणि येषां तैः परितो विलसन्तो दशनांशवो दन्तकान्तय एव केशरभराः किञ्जल्कपुञ्जा येषां तैः धृतानि मुग्धानि गण्डा एव फलकानि कर्णिका येषां तैर्विकसद्भिरास्यकमलैर्विबभुः । अत्रास्यकमलैरिति रूपणात् प्रमदा एव सरस्य इति सिद्धेरेकदेशविवर्ति सावयवरूपकम् । 'आस्यकुमुदैः' इति पाठे कुमुदस्य मुखोपमानकत्वं कविसमयविरुद्धं ज्ञेयम् ॥ ४७ ॥

भजत इति । अधिकेन प्रबलेन जितो विदेशं देशान्तरं भजते, अथवा कुशलः 'कार्य्यचतुरः तदनु प्रवेशं भजते तमेव शरणतया प्रविश्य जीवतीत्यर्थः ।

भ्रुवमागताः प्रतिहतिं कठिने मदनेषवः कुचतटे महति ।
इतराङ्गवन्न यदिदं गरिमक्लपितावलग्नमगमत् तनुताम् ॥४६॥
न मनोरमास्वपि विशेषविदां निरचेष्ट योग्यमिदमेतदिति ।
गृहमेष्यति प्रियतमे सुदृशां वसनाङ्गरागसुमनःसु मनः ॥५०॥
वपुरन्वलिप्त परिरम्भसुखव्यवधानभीरुकतया न वधूः ।
क्षममस्य बाढमिदमेव हि यत् प्रियसङ्गमेष्वनवलेपमदः ॥५१॥

अतो हेतोरिन्दुरुज्ज्वलौ कपोलौ यस्य तदिति मुखस्य बिम्बग्रहणयोग्यतोक्तेः पदार्थहेतुकं काव्यलिङ्गम् । सुदृशां मुखं प्रतिमाच्छलेन प्रतिबिम्बव्याजेन विशत् प्रविष्टः । साक्षाच्चन्द्र एवायं न प्रतिमाचन्द्र इति छलशब्दात् प्रतीतेः, छलशब्देनासत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः । पूर्वोक्तकाव्यलिङ्गमपिच इति सङ्करः । तेन कपोलयोर्लोकोत्तरं लावण्यं दर्पणोपम्यञ्च व्यज्यत इत्यलङ्कारध्वनिः ॥ ४८ ॥

भ्रुवमिति । मदनेषवः कामशराः महति कठिने कुचतटे प्रतिहतिं प्रतिघातमागताः प्राप्ता एवम् । यद्यस्माद्गरिम्णा निजभारेण क्लपितं कल्पितं अवलग्नं मध्यं येन तदिदं कुचतटमितराङ्गेन तुल्यमितराङ्गवत् । 'तेन तुल्यम्'—इति वतिप्रत्ययः । तनुतां कार्श्यं नागमन्नाभजत । पुषादिसूत्रेण च्लेरङादेशः । तदा मदनेषुपातात् कुचातिरिक्तमङ्गनानामङ्गं कृशमासीदित्यर्थः ॥ ४९ ॥

न मनोरमास्विति । प्रियतमे गृहमेष्यति आगमिष्यति सति विशेषविदामपि सुदृशां सम्यग्दर्शनीयानां स्त्रीणां मनः कर्त्तृ मनोरमास्वपि वसनाङ्गरागसुमनःसु वस्त्रगन्धमाल्येषु इदमेतदिति इदं पुरोवर्त्ति दर्शनतदिति वसनमिति, अनुलेपनमिति, सुमनस इति, विशेषाकारेण तथा योग्यमस्माकं धारणार्हमिति च न निरचेष्ट न निरधारयत् । प्रियागमनहर्षातिरेकादितिकर्त्तव्यतामूढमभूदित्यर्थः । विनोतेर्लुङि तङि च्लेः सिच् 'सार्व्वधातुकार्द्धधातुकयोः' इति गुणः । हर्षोऽत्र सञ्चारिभावः । निश्चयसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः, सुमनः सुमन इति यमकमिति चेति संसृष्टिः ॥ ५० ॥

वपुरिति । वधूः स्त्री परिरम्भसुखव्यवधानभीरुकतया आलिङ्गनसुख-

निजपाणिपल्लवतलस्खलनादभिनासिकाविवरमुत्पतितैः ।
अपरा परीक्ष्य शनकैर्मुमुदे मुखवासमास्यकमलश्वसनैः ॥५२॥
विधृते दिवा सवयसा च पुरः परिपूर्णमण्डलविकाशभृति ।
हिमधाम्नि दर्पणतले च मुहुः स्वमुखश्रियं मृगदृशो ददृशुः ॥५३॥
अधिजानु बाहुमुपधाय नमत्करपल्लवार्पितकपोलतलम् ।
उदकण्ठि कण्ठपरिवर्त्तिकलस्वरशून्यगानपरयापरया ॥ ५४ ॥

विच्छेदभीरुत्वेन, 'क्रुकन्नपि वक्तव्यः' इति क्रुकन् प्रत्ययः । वपुर्नान्वलिप्त नानुलिप्तवती, अङ्गरागमात्रव्यवधानमपि न सहत इत्यर्थः । लिम्पतेः कर्त्तरि लुङि तङ् । तथा हि अदो वपुः प्रियसङ्गमेषु अनवलेपमचन्दनमगर्वञ्चेति यत् । 'अवलेपस्तु गर्वे स्याल्लेपने भूषणेऽपि च' इति विश्वः । इदमनवलेपनत्वमेवास्य वपुषो बाढं भृशं क्षमं युक्तम् । श्लेषानुप्राणितोऽयमर्थान्तरन्यासः ॥ ५१ ॥

निजेति । अपरा स्त्री निजपाणिपल्लवतलस्य स्खलनादभिघातादभिनासिकाविवरं नासरन्ध्रं प्रति उत्पतितैरास्यकमलस्य श्वसनैर्मुखमारुतैर्मुखवासं मुखवासनां शनकैः परीक्ष्य मुमुदे । इयं वासकसज्जिका नायिका ॥५२॥

विधृत इति । दिवा आकाशेन सवयसा वयस्यया च पुरोऽग्रे विधृते विधारिते परिपूर्णमण्डलविकाशं बिम्बशोभां बिभर्त्तीति तद्भृत्तस्मिन्, हिमधाम्नि चन्द्रे दर्पणतले च मृगदृशः स्त्रियः स्वमुखश्रियम् । पूर्व्वत्रोपमानभूतामुत्तरत्रोपमेयभूताञ्चेत्यर्थः । मुहुर्ददृशुः औपम्यपरीक्षार्थमिति भावः । अत्रान्यश्रियोऽन्यत्रासम्भवाच्चन्द्रे तत्सदृशीमिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना । तथा चन्द्रदर्पणयोर्द्युसवयसोश्च यथासंख्यमन्वयाद्यथासंख्यालङ्कारश्च । तदुभयापेक्षया चन्द्रदर्शनयोर्मुखश्रीदर्शनस्थानत्वेन प्रस्तुतयोरेवौपम्यस्य गम्यत्वात् तुल्ययोगितेति सङ्करः ॥ ५३ ॥

अधिजान्विति । नमति कपोलार्पणाय प्रह्वीभवति करपल्लवे अर्पितं निहितं कपोलतलं गण्डस्थलं यस्य तं बाहुमधिजानु जानुनि विभक्त्यर्थेऽव्ययीभावः । उपधाय निधाय, कूर्परेण जानुमवष्टभ्येत्यर्थः । कण्ठे परिवर्त्तत इति कण्ठपरिवर्त्ति । न तु मुखोच्चारित इत्यर्थः । कलमव्यक्तमधुरं स्वरशून्यं तारध्वनिहीनम्, षड्जादिस्वराभिव्यक्तिहीनं वा यद्गानं तत्परया

**प्रणयप्रकाशनविदो मधुराः सुतरामभीष्टजनचित्तहृतः ।**
**प्रजिघाय कान्तमनु मुग्धतरस्तरुणीजनो दृश इवाथ सखीः ॥५५॥**
**न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि ।**
**निपुणन्तथैवमुपगम्य वदेरभिदूति काचिदिति सन्दिदिशे ॥५६॥**
**दयिताय मानपरयापरया त्वरितं ययावगदितापि सखी ।**
**किमु चोदिताः प्रियहितार्थकृतः कृतिनो भवन्ति सुहृदः सुहृदाम् ॥५७॥**

तदासक्तया, मन्दकण्ठेनैव गायन्त्येत्यर्थः, कालक्षेपार्थमिति भावः । अयं चोत्कण्ठानुभावः । अपरया स्त्रिया उदकण्ठि उत्कण्ठितम्, प्रियसङ्गमायोत्सुकया स्थितमित्यर्थः । भावे लुङि चिणो लुक् । अत्र कालक्षेपासहिष्णुत्वलक्षणमौत्सुक्यं सञ्चारि तन्निबन्धनात् प्रेयोऽलङ्कारपरयापरयेति यमकविशेषसंसृष्टिः । नायिका विरहोत्कण्ठिता । 'चिरं पत्युरनालोके विरहोत्कण्ठितोन्मना' इति लक्षणात् ॥ ५४ ॥

प्रणयेति । अथ प्रसाधनानन्तरं मुग्धतरोऽत्यन्तकाममोहितस्तरुणीजनः प्रणयप्रकाशनविदः, अनुरागव्यञ्जनचतुरा इत्यर्थः । मधुरा मधुरभाषिणीः अन्यच रम्याकृतीः सुतरामभीष्टजनस्य चित्तहृतो मनोहारिणीः सखीर्दृश इव कान्तमनु प्रेयोजनं प्रति प्रजिघाय प्रेषितवान् । हिनोतेर्लिट् । इवेन सह समासवचनाद्दृश इवेति उपमासमासः । तया सखीनामासत्त्यन्तरङ्गत्वकार्य्यदर्शित्वादिव्यञ्जनादलङ्कारेण वस्तुध्वनिः ॥ ५५ ॥

तथा काचिन्नायिका दूतीं वाचिकमनुशास्ति—न चेति । स मे दयितो यथा मयि करुणां कुरुते यथा लघुतामल्पतां च नावगच्छति न मन्यते । एवं दयितमुपगम्य प्राप्य तथा तेन प्रकारेण निपुणं वदेः । विध्यर्थे प्रार्थने वा लिङ् । इतीत्थं काचिन्नायिका अभिदूति दूतीमभि । 'लक्षणेनाभिप्रती'—इत्यव्ययीभावे नपुंसकह्रस्वत्वम् । सन्दिदिशे सन्दिष्टवती । कर्त्तरि लिट् स्वरितेत्त्वादात्मनेपदम् । नायिका तु कलहान्तरिता 'कोपात्कान्तं पराणुद्य पश्चात्तापसमन्विता' इति लक्षणात् ॥ ५६ ॥

दयितायेति । मानपरया अभिमानवत्या अतएवापरया नायिकया अगदिता दयितमानयेत्यननुज्ञा सखी दयिताय दयितमानेतुम् । 'क्रियार्थोप-

प्रतिभिद्य कान्तमपराधकृतं यदि तावदस्य पुनरेव मया ।
क्रियतेऽनुवृत्तिरुचितैव ततः कलयेदमानमनसं सखि माम्॥५८॥
अवधीर्य्य धैर्य्यकलिता दयितं विदधे विरोधमथ तेन सह ।
तव गोप्यते किमिव कर्त्तुमिदं न सहास्मि साहसमसाहसिकी॥५९

पदस्य च कर्म्मणि स्थानिनः' इति चतुर्थी। त्वरितं शीघ्रं ययौ। अन्यथा मरणशङ्केति भावः। तथाहि—सुष्ठु शोभनं हृदयं येषां ते सुहृदो मित्राणि 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातः। चोदिताः प्रेरिताः सन्तः सुहृदो प्रियो हृद्यः हितः श्रेयस्करश्च योऽर्थस्तं कुर्वन्तीति प्रियहितार्थकृतः। कृत-मेषामस्तीति कृतिनः कृतकृत्या भवन्ति किमु। किन्तु चोदनां विनैवेति भावः। अर्थान्तरन्यासः। नायिका च पूर्ववत् ॥ ५७ ॥

अथ काचित् कलहान्तरिता कान्तं प्रति किभिर्दूतीं सन्दिशति—प्रति-भिद्येत्यादि। अपराधकृतमागस्कारिणं कान्तं प्रतिभिद्य निराकृत्य पुन-र्मयैव अस्यानुवृत्तिरनुसरणं क्रियते यदि तावदुचितैव पतिव्रतानां प्राणेश्वर-चित्तानुवृत्तेर्धर्म्मत्वादिति भावः। किन्तु हे सखि, ततोऽनुवृत्तेर्मामभान-मनसमभिमानहीनचित्तां कलयेत् मन्येत ॥ ५८ ॥

तर्ह्यलाघवाय विरहेव स्थीयतां तत्राह—अवधीर्य्येति। धैर्य्यकलिता कलितधैर्य्या सती। वाहिताग्न्यादिष्विति निष्ठायाः परनिपातः। दयित-मवधीर्य्य तिरस्कृत्य तेन सह विरोधं विदधे करोमीति चेत्। दधातेः कर्त्तरि लट्। हे सखि, तव किमिव गोप्यते निगूह्यते, न किञ्चिदित्यर्थः। किन्तु कथ्यत एवेति कथयति। सहसा बलेन वर्त्तत इति साहसिकी। 'ओजः सहोम्भसा वर्त्तते' इति ठक्। सा न भवतीत्यसाहसिकी, अह-मिति शेषः। इदं साहसं विरोधं विरोधाचरणरूपं साहसकृत्यं कर्त्तुम्। 'शकधृष'—इत्यादिना तुमुन्। सहत इति सहा समर्था। पचाद्यच्। नास्मि। अत्रासाहसिकत्वस्य विशेषणगत्या साहसासहनहेतुत्वोक्तेः पदार्थ-हेतुकं काव्यलिङ्गमलङ्कारः ॥ ५९ ॥

तदुपेत्य मास्म तमुपालभथाः किल दोषमस्य न हि विद्म वयम्।
इति सम्प्रधार्य्य रमणाय वधूर्विहितागसेऽपि विससर्ज सखीम् ६०
ननु सन्दिशेति सुदृशोदितया त्रपया न किञ्चन किलाभिदधे।
निजमैक्षि मन्दमनिशं निशितैः कृशितं शरीरमशरीरशरैः ॥ ६१
ब्रुवते स्म दूत्य उपसृत्य नरान् नरवत् प्रगल्भमतिगर्भगिरः।
सुहृदर्थमीहितमजिह्मधियां प्रकृतेर्विराजति विरुद्धमपि ॥६२॥

तर्हि किमत्र कार्य्यमत आह—तदिति। तत्तस्मात्तं वल्लभमुपेत्य मास्मोपालभथाः नोपालभस्व, तद्दोषं न गणयेरित्यर्थः। 'स्मोत्तरे लङ् च' इति उपाङ्पूर्वाल्लभेर्लङ् 'न माङ्योगे' इत्यट्प्रतिषेधः। ननु सापराधः कथं नोपालभ्यस्तत्राह—वयमस्य दोषमपराधं न विद्म किल, अजानाना इव तिष्ठाम इत्यर्थः। कार्य्यार्थिनः कुतो गर्व इति भावः। 'विदो लटो वा' इति णलादेशः। इति सम्प्रधार्य्य निश्चित्य वधूर्नायिका विहितागसे कृतापराधायापि रमणाय प्रेयसे। क्रियाग्रहणाच्चतुर्थी। सखीं विससर्ज प्रजिघाय। विरहासहिष्णुतयेति भावः। एषा कलहान्तरिता प्रौढ़ा च ॥ ६० ॥

नन्विति। ननु सन्दिश सन्देशं ब्रूहि इत्युदितया दूत्या कथितया सुदृशया नायिकया कर्त्र्या त्रपया हेतुना किञ्चन नाभिदधे किल नाभिहितं खलु। किन्तु निशितैरशरीरशरैरनङ्गबाणैरनिशं कृशितं कृशीकृतम्। कृशशब्दात् 'तत्करोति' इति ण्यन्तात्कर्म्मणि क्तः। णाविष्टवद्भावे 'र ऋतो हलादेर्लघोः' इत्युकारस्य रेफादेशः। निजं शरीरं मन्दमैक्षि ईक्षितम्। एषापि कलहान्तरिता मध्यमा च। त्रपया निजहृदयानभिधानान्निजशरीरनिरीक्षणेन स्वावस्थानिवेदनाच्च तुल्यलज्जास्मरत्वावगमादिति। इयं च पञ्चमी कार्श्याख्या कामावस्था। 'दृङ्मनःसङ्गसङ्कल्पाज्जागरः कृशता रतिः। ह्रीत्यागोन्माद-मूर्च्छान्ता इत्यनङ्गदशा दश' इति ॥ ६१ ॥

इत्थं नायिकाभिरुपदिष्टा दूत्यः किमकुर्वन्नित्यत आह—ब्रुवत इति। प्रगल्भा धृष्टाः मतिगर्भाः प्रतिभासाराश्च गिरो यासां ता दूत्यो नरान् पुरुषानुपसृत्य नरवत् नरैः पुंभिस्तुल्यम्। 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः। ब्रुवते स्म न चैतावता वैजात्यं दूषणमित्यर्थान्तरन्यासेनाह—सुहृ-

मम रूपकीर्त्तिमहरद् भुवि यस्तदनुप्रविष्टहृदयेयमिति ।
त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः ६३
तव सा कथासु परिघट्टयति श्रवणं यदङ्गुलिमुखेन मुहुः ।
घनतां ध्रुवं नयति तेन भवद्गुणपूगपूरितमतृप्ततया ॥ ६४ ॥
उपताप्यमानमलघूष्मिभिः श्वसितैः सितेतरसरोजदृशः ।
द्रवतां न नेतुमधरं क्षमते नवनागवल्लिदलरागरसः ॥ ६५ ॥

दर्थमिति । तथाहि अजिह्मधियामकुटिलबुद्धीनां सम्बन्धि सुहृदे सुहृदर्थम् । अर्थेन सह नित्यसमासः, सर्वलिङ्गता चेति वक्तव्यम् । ईहितं चेष्टितं प्रकृतेविरुद्धमपि स्वभावविपरीतमपि विराजति शोभते । तस्मान्न धार्ष्ट्यं दोष इत्यर्थः ॥ ६२ ॥

अथ काचिद्दूती कञ्चित् प्रियं प्रति सप्तभिः प्रार्थयते – ममेत्यादि । यो भुवि मम रूपकीर्तिं सौन्दर्यं प्रथममहरत् इयं त्वत्प्रिया तदनुप्रविष्टहृदया तस्मिन्नासक्तचित्तेति अतो हेतोस्त्वयि मत्सरादिव मदनो निरस्तदयो निष्कृपः सन् तां त्वत्प्रियां सुतरां क्षिणोति क्षपयति खलु । एतेन कार्श्यावस्थोक्ता । अत्र साक्षात्प्रतिपक्षभूतनायकपीडासमर्थस्य मदनस्य तदीयनायिकापीडनोक्त्या प्रत्यनीकालङ्कारः । स च त्वयि मत्सरादिवेति हेतूत्प्रेक्षोत्थापित इति सङ्करः । 'बलिनः प्रतिपक्षस्य प्रतीकारे सुदुष्करे । यस्तदीयतिरस्कारः प्रत्यनीकं तदुच्यते ॥' इति लक्षणात् ॥ ६३ ॥

तवेति । सा त्वत्प्रिया तव कथासु गुणकीर्त्तनेषु मुहुरङ्गुलिमुखेनाङ्गुल्यग्रेण श्रवणं श्रोत्रविवरं परिघट्टयति स्फालयतीति यत्, यदृच्छयेति शेषः । तेन परिघट्टनेन भवद्गुणपूगपूरितं श्रवणं अतृप्तया तावद्गुणग्रहणेनासन्तुष्टतया घनतां नयति, बहुतण्डुलमानार्थं प्रस्थादिवद्भूयो गुणप्रवेशाय श्लेषयतीत्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् । अत्र कण्डूविनोदनार्थं श्रोत्रघट्टने घनतानयनमुत्प्रेक्ष्यते ॥ ६४ ॥

उपेति । अलघुरन्तः सन्तापोपाधिकः उष्मिमा उष्णत्वं येषां तैः श्वसितैर्निःश्वासैरुपताप्यमानं सितेतरसरोजदृशो नीलोत्पलाक्ष्या अधरं नवनागवल्लिदलानां ताम्बूलदलानां रागरसो रञ्जनद्रवो द्रवतामार्द्रतां नेतुं न

दधति स्फुटं रतिपतेरिषवः शिततां यदुत्पलपलाशदृशः ।
हृदयं निरन्तरबृहत्कठिनस्तनमण्डलावरणमप्यभिदन् ॥ ६६ ॥
कुसुमादपि स्मितदृशः सुतरां सुकुमारमङ्गमिति नापरथा ।
अनिशं निजैरकरुणः करुणं कुसुमेषुरुत्तपति यद्विशिखैः ॥६७॥
विषतां निषेवितमपक्रियया समुपैति सर्वमिति सत्यमदः ।
अमृतस्रुतोऽपि विरहाद्भवतो यदमूं दहन्ति हिमरश्मिरुचः॥६८॥

क्षमते न शक्नोति । एतेन ज्वरावस्थोक्ता । अत्र द्रवत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ६५ ॥

दधतीति । रतिपतेरिषवः शिततां नैशित्यं दधति । स्फुटमित्युत्प्रेक्षायाम् । यत् यस्मान्निरन्तरं नीरन्ध्रं बृहत् कठिनञ्च यत् स्तनमण्डलं तदेवावरणं वर्म यस्य तत् तदपि उत्पलपलाशदृश उत्पलदलाक्ष्याः हृदयमभिदन् भिन्दन्ति स्म । भिदेर्लुङि 'इरितो वा' इति च्लेरङादेशः । सावरणमपि भिन्नमिति विरोधोत्थापितेयं स्मरशरनैशित्योत्प्रेक्षा । तया च रन्ध्रान्वेषिणा कामेन निपीड्यमानायास्तस्यास्त्वद्विरहो जीवितसंशयमापादयतीति वस्तु द्योत्यते ॥ ६६

कुसुमादिति । स्मितदृशः स्मेराक्ष्या अङ्गं कुसुमादपि सुतरां सुकुमारं कोमलमिति इदमपरथा अन्यथा न, किन्तु सत्यमेवेत्यर्थः । यत् यस्मात् कुसुमेषुरकरुणो निष्कृपः सन् निजैर्विशिखैर्बाणैः । 'पृषत्कबाणविशिखाः' इत्यमरः । कुसुमैरेवेत्यर्थः । करुणं दीनं यथातथा अनिशं नित्यमुत्तपति, तापयतीत्यर्थः । तपतिरयं भौवादिकः सकर्मकः । कुसुमाधिकसौकुमार्याभावे कुसुमैः पीड्यत इति कुसुमाधिकसौकुमार्यगुणोत्प्रेक्षा नापरथेति व्यञ्जकप्रयोगाद्वाच्या ॥ ६७ ॥

विषतामिति । अपक्रियया विपरीतप्रयोगेण निषेवितमुपयुक्तं सर्वम्, अमृतमपीति भावः । विषतां विषवदहितत्वं समुपैति इत्यद इदं विषत्वं सत्यं ध्रुवम् । यत् यस्मादमृतस्रुतोऽपि । स्रवतेः क्विपि तुक् । हिमरश्मिरुचश्चन्द्रपादाः भवतो विरहाद्धेतोस्त्वया विना सेवनादित्यर्थः । अमूं त्वत्प्रियां दहन्ति । याः पूर्वं त्वया सह सेवनादाह्लादयन्निति भावः । एतेन विषयद्वेषरूपा रत्यवस्थोक्ता । अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ६८

उदितं प्रियां प्रति सहार्दमिति श्रद्धीयत प्रियतमेन वचः ।
विदितेङ्गिते हि पुर एव जने सपदीरिताः खलु लगन्ति गिरः ॥६९॥

इति कुलकम् ।

दयिताहृतस्य युवभिर्मनसः परिमूढतामिव गतैः प्रथमम् ।
उदिते ततः सपदि लब्धपदैः क्षणदाकरेऽनुपदिभिः प्रयये ॥७०॥

निपपात सम्भ्रमभृतः श्रवणादसितभ्रुवः प्रणदितालिकुलम् ।
दयितावलोकविकसन्नयनप्रसरप्रणुन्नमिव वारिरुहम् ॥ ७१ ॥

उदितमिति । प्रियां प्रति प्रियामुद्दिश्य हृदयस्येदं हार्दं प्रेम । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इत्यमरः । 'तस्येदम् इत्यण्प्रत्ययः । 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदयस्य हृदादेशः । सहार्दं सस्नेहमत्युदितम् । वदेः कर्मणि क्तः 'वचिस्वपि'—इत्यादिना सम्प्रसारणम् । वचो दूतीवाक्यं प्रियतमेन श्रद्धीयत विश्वसितम् । दधातेः कर्मणि लङ् । श्रदन्तरोरुपसर्गवचनाच्छ्रच्छब्दस्य प्राक्प्रयोगः । हि यस्मात्पुरः पूर्वमेव विदितेङ्गिते विदितपराभिप्राये जने । इङ्गितं हृद्गतो भावः । सज्जने समुदीरिता गिरः सपदि लगन्ति सज्जन्ति खलु । स्वयं प्रियाहृदयवेदित्वात् । स्वबुद्धेः संवादेन दूतीकथितं प्रियाविरहदुःखं विश्रब्धासेत्यर्थः । अर्थान्तरन्यासः । एषा कलहान्तरिता अत एव मानाख्यो विप्रलम्भः शृङ्गारः । पूर्वानुरागमानाख्यप्रवासकरुणात्मना । विप्रलम्भाभिधानोऽयं शृङ्गारः स्याच्चतुर्विधः' ॥ इति चतुर्थोऽयमुक्तः ॥ ६९ ॥

दयितेति । प्रथमं चन्द्रोदयात् प्राक् परिमूढतां निजमनोपहर्तृमार्गानभिज्ञतां गतैः ततः पश्चात् क्षणदाकरे चन्द्रे उदिते सति सपदि लब्धपदैः दृष्टगोचरपदचिह्नैः दयिताभिर्हृतस्याकृष्टस्यापहृतस्य च मनसोऽनुपदिभिरन्वेष्टृभिः अन्विष्यद्भिरिवेत्यर्थः । अत एव गम्योत्प्रेक्षा प्रागवलम्बितधैर्यत्यागनिमित्ता । 'अनुपद्यन्वेष्टा' इति निपातः । 'अन्वेष्टानुपदी प्रोक्ता' इति वैजयन्ती । युवभिः प्रयये प्रयातम् । यातेर्भावे लिट् । अत्रोक्तपदान्वेषणोत्प्रेक्षया यूनां चोरग्राहिरूपकं गम्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ७० ॥

अथ यूनां गृहप्राप्त्यनन्तरं वृत्तान्तं वर्णयति—निपपातेति । सम्भ्रमभृतः

उपनेतुमुन्नतिमतेव दिवं कुचयोर्युगेन तरसाकलिताम् ।
रभसोत्थितामुपगतः सहसा परिरभ्य कश्चन बधूमरुधत् ॥७२॥
अनुदेहमागतवतः प्रतिमां परिणायकस्य गुरुमुद्वहता ।
मुकुरेण वेपथुभृतोऽतिभरान् कथमप्यपाति न बधूकरतः ॥७३॥

प्रत्युत्थानसम्भ्रमिण्याः असितभ्रुवोऽङ्गनायाः प्रणदितालिकुलं गुञ्जदलिपुञ्जम् । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । वारिरुहं श्रवणोत्पलं दयितावलोकेन विकसतो विस्तारं गच्छतो नयनस्य प्रसरेण प्रसारेण प्रणुन्नमिव, पूर्ववण्णत्वम्, निपपात, तथा सम्भ्रान्तमित्यर्थः । अत्र सम्भ्रमहेतुकस्य कर्णोत्पलपातस्य नयनप्रसारहेतुकत्वमुत्प्रेक्ष्यते । एषा च हृष्टा ॥ ७१ ॥

उपनेतुमिति । सहसोपगतः हठादागतः कश्चन युवा अत एव रभसेनोत्थितामतएवोन्नतिमता कुचयोर्युगेन करणेन दिवमाकाशमुपनेतुमिव ऊर्द्ध्वमुत्क्षेप्तुमिवेति फलोत्प्रेक्षा उत्थाननिमित्तोन्नत्यगुणनिमित्ता । तरसा बलेनाकलितां व्याक्षिप्तां बधूं प्रियां परिरभ्य आश्लिष्य अरुधद्दृढवानुपवेशितवान् । ऊर्द्ध्वोत्क्षेपान्निवारितवानिति चार्थः । रुधेर्लुङि 'इरितो वा' इति विकल्पात् च्लेरङादेशः । एषा हृष्टा रोमाञ्चिताद्यनुभाववती च ॥ ७२ ॥

अनुदेहमिति । अनुदेहं देहस्य पश्चात् । 'अव्ययं विभक्ति'—इत्यादिना पश्चादर्थेऽव्ययीभावः । आगतवतः परिणायकस्य परिणेतुः, वोढुरित्यर्थः । नयतेर्ण्वुल् प्रत्ययः । उपसर्गादसमासेऽपीति णत्वम् । गुरुं पूज्यां भारवतीं च प्रतिमां प्रतिविम्बमुद्वहता पश्चात्स्थितस्यापि तदाभिमुख्यादिति भावः । मुकुरेण दर्पणेन कर्त्रा । 'दर्पणे मुकुरादर्शौ' इत्यमरः । वेपथुभृतो नवोढतया भयशृङ्गाराभ्यां कम्पमानात् अति अतिमात्रो भरो यस्य तस्मादतिभरात् । प्रतिविम्बगुरुमुकुरधारणादिति भावः । बध्वा नवोढायाः करतः पाणितलात्, पञ्चम्यास्तसिल्, कथमपि नापाति न पतितम् । महता प्रयत्नेन धारित इत्यर्थः । भावे लुङ्, एषा च मुग्धा, अत्र बधूकरस्य भारासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः । गुरुमिति श्लेषोत्थापितेति सङ्करः ॥७३॥

**अवनम्य वक्षसि निमग्नकुचद्वितयेन गाढमुपगूढवता ।**
**दयितेन तत्क्षणचलद्रशनाकलकिङ्किणीरवमुदासि वधूः ॥७४॥**
**कररुद्धनीवि दयितोपगतौ गलितं त्वराविरहितासनया ।**
**क्षणदृष्टहाटकशिलासदृशस्फुरदूरुभित्ति वसनं ववसे ॥ ७५ ॥**
**पिदधानमन्वगुपगम्य दृशौ ब्रुवते जनाय वद कोऽयमिति ।**
**अभिधातुमध्यवससौ न गिरा पुलकैः प्रियं नववधूर्न्यगदत् ॥७६**
**उदितोरुसादमतिवेपथुमत् सुदृशोऽभिभर्तृ विधुरं त्रपया ।**
**वपुरादरातिशयशंसि पुनः प्रतिपत्तिमूढमपि बाढमभूत् ॥७७॥**

अवनम्येति । अवनम्य गाढमुपगूढवता आश्लिष्टवा अत एव वक्षसि निमग्नकुचद्वितयेन दयितेन तत्क्षणे चलन्नुच्छ्रन् रशनायाः कलकिङ्किणीरवो यस्मिन् कर्म्मणि तद्यथा तथा वधूरङ्गना उदासि उत्क्षिप्ता । अस्यतेः कर्म्मणि लुङ्, एषा च हृष्टा रोमाञ्चाद्यनुभाववती च स्वभावालङ्कारः ॥ ७४ ॥

कररुद्धेति । दयितोपगतौ प्रियागमने सति अत एव त्वरया विरहितं त्यक्तमासनं यया तया, उत्थितयेत्यर्थः, कयाचिदिति शेषः । अत एव गलितं स्रस्तमत एव कररुद्धनीवि करगृहीतबन्धं वसनं क्षणं दृष्टा हाटकशिलासदृशौ हेमशिलाप्रतिमा स्फुरन्ती ऊरुभित्तिरूरुदेशो यस्मिन् कर्म्मणि तद्यथा तथा । 'हिरण्यं हेम हाटकम्' इत्यमरः । ववसे आच्छादितं वस्तेराच्छादनार्थात् कर्म्मणि लिट् । ऊरुभित्तिरिवेत्युपमितसमासः । अत्रोपमयोः संसृष्टिः ॥७५॥

पिदधानमिति । नववधूर्नवोढ़ा अन्वक् पश्चादुपगम्य दृशौ पिदधानं छादयन्तं प्रियं दृष्टिच्छादकः कः वद इति ब्रुवते पृच्छते जनाय गिरा वाचा अभिधातुं नाध्यवससौ नोत्सेहे, लज्जयेति भावः । अध्यवपूर्वात्स्यतेः कर्त्तरि लिट् । किन्तु पुलकैर्न्यगदत् । अत्र प्रियज्ञानस्यार्थस्य लज्जया असंलक्षितस्य पुलकैः प्रकाशनात् सूक्ष्मालङ्कारः । 'असंलक्षितसूक्ष्मार्थप्रकाशः सूक्ष्म उच्यते' इति लक्षणात् ॥ ७६ ॥

उदितेति । अभिभर्तृ भर्तृसमक्षम् । 'लक्षणेनाभिप्रती आभिमुख्ये'

परिमन्थराभिरलघूरुभरादधिवेश्म पत्युरुपचारविधौ ।
स्खलिताभिरप्यनुपदं प्रमदाः प्रणयातिभूमिमगमन् गतिभिः॥७८॥
मधुरोन्नतभ्रु ललितं च दृशोः सकरप्रयोगचतुरं च वचः ।
प्रकृतिस्थमेव निपुणागमितं स्फुटनृत्यलीलमभवत् सुतनोः॥७९॥
तदयुक्तमङ्ग तव विश्वसृजा न कृतं यदीक्षणसहस्रतयम् ।
प्रकटीकृता जगति येन खलु स्फुटमिन्द्रताद्य मयि गोत्रभिदा॥८०॥

इत्यव्ययीभावः । उदित उत्पन्न ऊरुसादः ऊर्वोर्निश्चेष्टता यस्य तत् अतिवेपथुमदतिकम्पवत् । एतेन विशेषणद्वयेन प्रत्युत्थानालिङ्गनविरोधिन स्तम्भवेपथू सात्त्विकावुक्तौ । त्रपया विधुरं विलक्षम् । एतेन लज्जासञ्चारिणा प्रियवाक्कुण्ठत्वमुक्तम् । एवं प्रतिपत्तिमूढमपि इतिकर्त्तव्यतामूढमपि सुदृशो वपुर्वाढं भृशमादरातिशयशंसि मुखरागादिलिङ्गैरादरविशेषव्यञ्जकमभूत् । सत्यादरे किमुपचारैरिति भावः ॥ ७७ ॥

परीति । प्रमदा अधिवेश्म निजवेश्मनि पत्युरुपचारविधौ प्रत्युत्थानादिकर्मणि अलघोर्महत ऊरुभरात् परिमन्थराभिरलसाभिः अनुपदं पदेपदे स्खलिताभिरपि गतिभिः प्रणयातिभूमिं प्रेमप्रकर्षमगमन्, परप्रेमास्पदीभूता इत्यर्थः । प्रत्युत्थानादपि स्खलितगमनमेव पत्युः प्रीतिकरमभूदिति भावः । स्त्रीणां स्खलनं पत्युः प्रीतिकरमिति विरोधाभासोऽलङ्कारः ॥ ७८ ॥

मधुरेति । मधुरं मनोहरं यथा तथोन्नते उच्चलिते भ्रुवौ यस्मिन् तन्मधुरोन्नतभ्रु । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम् । दृशोर्ललितं नयनचेष्टा च सकरप्रयोगं हस्ताभिनयसहितं तच्चतुरं च तद्वचश्च सुतनोः स्त्रियाः प्रकृतिस्थमेव स्वभावसिद्धमेव सदपि निपुणेन निपुणाचार्य्येणागमितमभ्यासितम् । अत एव स्फुटं प्रस्थितं यन्नृत्यं तस्य लीलेव लीला यस्य तत्तथोक्तमभवदिति निदर्शनालङ्कारः । तया नर्त्तक्युपमा गम्यते ॥ ७९ ॥

अथ कस्याश्चित्सपत्नीनामग्रहणाद्धताया: कान्तोपालम्भं विशेषकेणाह—

तदिति । अङ्गेत्यामन्त्रणे । विश्वसृजा विधात्रा तव ईक्षणसहस्रतयं नेत्रसहस्रसमूहः । 'संख्याया अवयवे तयप्' । न कृतं न सृष्टमिति यत् तदयुक्तम् । कुतः येन कारणेन मयि विषये स्फुटं प्रत्यक्षमेव गोत्रभिदा नाम-

**न विभावयत्यनिशमक्षिगतामपि मां भवानतिसमीपतया ।**
**हृदयस्थितामपि पुनः परितः कथमीक्षते बहिरभीष्टतमाम् ॥८१**
**इति गन्तुमिच्छुमभिधाय पुरः क्षणदृष्टिपातविकसद्वदनाम् ।**
**स्वकरावलम्बनविमुक्तगलत् कलकाञ्चि काञ्चिदरुणत्तरुणः ॥८२॥**
**अपयाति सरोषया निरस्ते कृतकं कामिनि चुक्षुवे मृगाक्ष्या ।**
**कलयन्नपि सव्यथोऽवतस्थेऽशकुनेन स्खलितः किलेतरोऽपि ॥८३॥**

भेदिनाद्रिभेदिना च । 'गोत्रं नाम्नि कुलेऽप्यद्रौ' इति यादवः । त्वयेति शेषः । अद्य इन्द्रता जगति प्रकटीकृता खलु । अत्र गोत्रभिदिति श्लेषानुप्राणितं सहस्राक्षत्वमुत्प्रेक्ष्यते ॥ ८० ॥

नेति । अनिशमक्षिगतां चक्षुःसन्निकृष्टामपि द्वेष्यामिति च गम्यते । 'द्वेष्ये त्वक्षिगतः' इत्यमरः । मामतिसमीपतया भवान्न विभावयति । 'शेषे प्रथमः' इति प्रथमपुरुषः । इन्द्रियसन्निकृष्टमपि न लक्ष्यत इति विरोधाभासनार्थोऽपिशब्दः । परमार्थस्तु द्वेष्यत्वादतिसामीप्याच्चाविभावनं न चित्रमिति भावः । अभीष्टतमां पुनर्हृदयस्थितां हृदयादनपेताम्, अन्तर्हितामिति च गम्यते । अत एव विरोधाभासकोऽपिशब्दः । बहिः पुरतः कथं भवानीक्षते इदं तु चित्रम् । अतिसामीप्यव्यवधानस्यापि दर्शनप्रतिबन्धकत्वादिति भावः । प्रेमास्पदं वस्तु परोक्षमप्यपरोक्षमीक्षते इतरदपरोक्षमपि परोक्षमेवेति तात्पर्य्यार्थः । विरोधाभासयोः सङ्करः ॥ ८१ ॥

इतीति । इत्यभिधाय पुरो गन्तुमिच्छुं क्षणं दृष्ट्योः पातेन विकसद्वदनां परस्परदृष्टिपातमात्रगतकोपामित्यर्थः । काञ्चिन्नायिकां तरुणो युवा स्वकरावलम्बनं प्रियकरेण ग्रहणं तेन विमुक्ता मुक्तबन्धना अत एव गलन्ती भ्रंशमाना कला मधुरा काञ्ची यस्मिन् कर्मणि तद्यथा तथा अरुणद्रुद्धवान् । रुधेर्लङि 'रुधादिभ्यः श्नम्' । एषा च कलहान्तरिता ॥ ८२ ॥

अपयातीति । सरोषया मृगाक्ष्या निरस्ते कामिनि भर्त्तर्य्यपयाति निर्य्याति सति कृतकं कृत्रिमं यथा तथा चुक्षुवे । तन्निर्गमनप्रतिबन्धार्थं क्षुतं कृतमित्यर्थः । 'क्षु शब्दे' भावे लिट् । इतरोऽपि नायकोऽपि कलयन्नपि कृतकोपमिति जानन्नपि अशकुनेन स्खलितः किल निरुद्ध इव सव्यथः सनिर्वेद

**आलोक्य प्रियतममंशुके विनीवौ यत्तस्थे नमितमुखेन्दु मानवत्या ।**
**तन्नूनं पदमवलोकयाम्बभूवे मानस्य द्रुतमपयानमास्थितस्य ॥८४॥**
**सुदृशः सरसव्यलीकतप्तस्तरसा श्लिष्टवतः सयौवनोष्मा ।**
**कथमप्यभवत् स्मरानलोष्णः स्तनभारो न नखम्पचः प्रियस्य ॥८५॥**
**दधतुरोजद्वयमुर्वशीतलं भुवो गतेव स्वयमुर्वशी तलम् ।**
**बभौ मुखेनाप्रतिमेन काचन श्रियाधिका तां प्रति मेनका च न॥८६॥**

इवावतस्थे स्थितः न गत इत्यर्थः । उभावपि समानानुरागाविति भावः। एषा च कलहान्तरिता ॥ ८३ ॥

आलोक्येति । मानवत्या कोपवत्या स्त्रिया, स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये । प्रियतममालोक्य, स्थित्यासमानकर्तृकत्वात् क्त्वा निर्देशः । अंशुके विनीवौ प्रियावलोकनाद्विगलितबन्धे सति भाषितपुंस्कत्वात् पुंवद्भावः । 'स्त्रीकटीवस्त्रबन्धेऽपि नीविः परिपणेऽपि च' इत्यमरः । नमितमुखेन्दु यथा तथा तस्थे स्थितमिति यत् तस्मात्तस्यमुखावस्थानात् द्रुतं शीघ्रम्, प्रियावलोकनक्षण एव इत्यर्थः । अपयानमास्थितस्य प्रयाणं गतस्य मानस्य कोपस्य पदं पदचिह्नमवलोकयाम्बभूवे, अन्वेषितमित्यर्थः । लज्जानिमित्ताया मुखनतेः अन्वेषणार्थत्वमुत्प्रेक्ष्यते, नूनमिति । मानगन्धोऽप्यस्तमित इति भावः ॥ ८४ ॥

सुदृश इति । सरसमार्द्रं, नूतनमिति यावत् । तेन व्यलीकेन प्रियकृतेनापराधेन तप्तः तथा यौवनोष्मणा सह वर्त्तत इति सयौवनोष्मा । किञ्च स्मरानलोष्णः कामाग्निसन्तप्तः एवं त्रिविधाग्नितप्तोऽपि सुदृशः स्तनभारस्तरसा वेगेन, अतिदारुणदशायामेवेत्यर्थः । आश्लिष्टवत आलिङ्गितवतः प्रियस्य कथमपि कथं वा, कुतो हेतोरित्यर्थः । नखं पचति क्वाथयतीति नखम्पचः । पचिरत्र तापवाची । 'मितनखे च' इति खश्प्रत्ययः 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । नाभवत्, तदौष्ण्यं ईषदुष्णोऽपि नाभूदित्यर्थः । प्रियासङ्गप्रतीकाराः खलु कामिनां सन्तापा इति भावः । तादृगौष्ण्यासम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ८५ ॥

दधतीति । उरु महदशीतलं स्मरयौवनोष्मभ्यामुष्णमुरोजद्वयं कुचद्वयं दधती भुवस्तलं गता स्वयं साक्षादुर्वशीव स्थितेत्युत्प्रेक्षा, काचन स्त्री अप्रति-

इत्थन्नारीर्घटयितुमलङ्गामिभिः काममासन्
प्रालेयांशोः सपदि रुचयः शान्तमानान्तरायाः ।
आचार्य्यत्वं रतिषु विलसन्मन्मथश्रीविलासा
ह्रीप्रत्यूहप्रशमकुशलाः शीधवश्चक्रुरासाम् ॥ ८७ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये प्रदोष-
वर्णनं नाम नवमः सर्गः ॥ ९ ॥

मेन मुखेन बभौ तां प्रति मेनका मेनकाख्याप्सरसश्च श्रिया सौन्दर्य्येणाधिका नेत्यतिशयोक्तिः । तयोर्यमकेन संसृष्टिः । वंशस्थं वृत्तम् ॥ ८६ ॥

इत्थमिति । इत्थमनेन प्रकारेण । 'इदमस्थमुः' इति थमुप्रत्ययः । सपदि शान्तः शमितो मानः कोप एवान्तरायो याभिस्ताः । 'वा दान्त'—इत्यादिना शमेर्ण्यन्ताच्छान्तेति निपातः । प्रालेयांशोश्चन्द्रस्य रुचयो नारीः कामिभिर्घटयितुम् । 'मितां ह्रस्वः' 'पर्य्याप्तिवचनेष्वलमर्थेषु' इति तुमुन्प्रत्ययः । कामं प्रकामं समर्था आसन्, दूत्य इवेति भावः । विलसन्तो मन्मथश्रीविलासा मणितशीत्कारादिमदनातिरेकविकारा याभिस्ताः ह्रीरेव प्रत्यूहो विघ्नस्तस्य प्रशमे निवारणे कुशलाः शेरते आभिरिति शीधवो मदिराः । 'शीङो धुक्' इत्यौणादिको धुक्प्रत्ययः । आसां रतिषु आचार्य्यत्वमुपदेशं चक्रुः, नर्म्मसख्य इवेति भावः । अत्र प्रथमार्द्धे प्रस्तुतचन्द्रभासां मानशमनकामिघटनपाटवविशेषणसाम्यादप्रस्तुतदूतीत्वप्रतीतेः समासोक्तिः, द्वितीयार्द्धे तु शीधुष्वारोपितस्याचार्य्यत्वस्य प्रकृतोपयोगात् परिणामः । तयोः सापेक्षत्वात् सङ्करः । तेन च दूतीनर्म्मसख्युपमाध्वनिः । उत्तरसर्गे मधुपानरतोत्सववर्णनायाश्चायमेव प्रस्तावः । मन्दाक्रान्ता वृत्तम् । 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ तो गुरू चेत्' इति लक्षणात् ॥ ८७ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपाल-
वधमहाकाव्यव्याख्याने सर्वङ्कषाख्ये नवमः सर्गः ॥ ९ ॥

———

# दशमः सर्गः ।

सज्जितानि सुरभीण्यथ यूनामुल्लसन्नयनवारिरुहाणि ।
आययुः सुघटितानि सुरायाः पात्रतां प्रियतमावदनानि ॥१॥
सोपचारमुपशान्तविचारं सानुतर्षमनुतर्षपदेन ।
ते मुहूर्त्तमथ मूर्त्तमपीप्यन् प्रेम मानमवधूय वधूः स्वाः ॥ २ ॥

आचार्य्यत्वं रतिषु शौधवस्यक्रुरित्युक्तं तत्प्रपञ्चनायास्मिन् सर्गे मधुपानं तावद्वर्णयति—सज्जितानीति । अथ पानगोष्ठीप्रस्तावानन्तरं सज्जितानि यावकक्षालनादिना संस्कृतानि सुरभीणि यथायोगं स्वभावसंस्काराभ्यां सुगन्धीनि नयानि वारिरुहाणीव, अन्यत्र नयनानीव वारिरुहाणि वासनार्थं चिप्तानि तान्युल्लसन्ति येषु तानि तथोक्तानि सुघटितानि सुष्टु सुखैर्योजितानि शोभनसंस्थानवत्तया निर्म्मितानि वा प्रियतमावदनानि यूनां कामिनां सुरायाः पात्रतां पानभाजनतां ययुः । प्रियामुखसम्पर्कजनितरसास्वादलोभात्तासां मुखसुरामेव पपुरिति भावः । अत्र वदनेष्वारोप्यमाणायाः पात्रतायास्तादात्म्येन तेषां पानसाधनतापादनेन कृतवदनोपयोगात् परिणामालङ्कारः । आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति लक्षणात् । तेन श्लेषसङ्कीर्णेनोपमा व्यज्यते । अस्मिन् सर्गे स्वागता वृत्तम्, 'स्वागतेति रनभा गुरुयुग्मम्' ॥ १ ॥

सोपचारमिति । अथ पात्रीकरणान्तरं ते युवानः सोपचारं सप्रार्थनमुपशान्तविचारं निवृत्तशङ्कम् । 'विवादम्' इति पाठे मानमवधूयेति पुनरुक्तिः । चारश्चारमित्यनुप्रासक्रमभङ्गश्च स्यात् । सानुतर्षं सतृष्णञ्च यथा तथा अनुतर्षत्यनेनेत्यनुतर्षो मद्यम् । 'मद्येऽनुतर्षं तत्पाने पात्रे तृष्णाभिलाषयोः' इत्युभयत्रापि विश्वः । तस्य पदेन छलेन मूर्तं मूर्त्तिमत् स्वाः स्वीया वधूर्मुहूर्त्तं स्वयं मानं कोपमवधूयापीप्यन् पाययन्ति स्म । पिबतेर्णौ चङि 'लोपः पिबतेरीच्चाभ्यासस्य' इति धात्वाकारलोपः ईकारोऽभ्यासस्य । न पादमीत्यादिना

क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ ।
स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥३॥
कापिशायनसुगन्धि विघूर्णन्नुन्मदोऽधिशयितुं समशेत ।
फुल्लदृष्टि वदनं प्रमदानामब्जचारु चषकञ्च षडङ्घ्रिः ॥ ४ ॥
बिम्बितं भृतपरिस्रुति जानन् भाजने जलजमित्यबलायाः ।
घ्रातुमक्षि पतति भ्रमरः स्म भ्रान्तिभाजि भवति क्व विवेकः॥५॥

निगरणार्थत्वात्परस्मैपदनिषेधेऽपि णिचश्चेत्यात्मनेपदविकल्पात्पाक्षिकं परस्मैपदम् । 'गतिबुद्धि'—इत्यादिना वधूरित्यणिकर्त्तुः कर्म्मत्वम् । अनुतर्षपदेत्यनुतर्षापङ्कवेन मूर्तप्रेमत्वोत्प्रेक्षणात् व्यञ्जकाप्रयोगाच्च प्रतीयमाना सापङ्कवोत्प्रेक्षा । २ ॥

क्रान्तेति । क्रान्तं सङ्क्रान्तं कान्तवदनप्रतिबिम्बं यस्मिन् तस्मिन् । नेत्रनिर्वृतिकर इत्यर्थः । भग्नाः क्षिप्ताः बालसहकाराश्चूतविशेषपल्लवाः । 'आम्रश्चूतो रसालश्च सहकारोऽतिसौरभः' इत्यमरः । तैः सुगन्धौ सुरभिणि । घ्राणतर्पण इत्यर्थः । 'तृतीयादिषु भाषितपुंस्कं पुंवद्भावस्य' इति पुंवद्भावः । स्वादुनि मधुरे, रसनाकर्षिणीत्यर्थः । प्रणदितालिनि गुञ्जन्मधुकरे, श्रुतिसुख इत्यर्थः । शीते, स्पर्शसुखे इत्यर्थः । एवं पञ्चविषयसमष्टौ मधुनि मद्ये इन्द्रियवर्गश्चक्षुरादिपञ्चकं निर्ववार निर्वृतमभूत् । अत्र रूपरसादिपदार्थानां मधुविशेषणभावेन निर्वृतिहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ ३ ॥

कापिशायनेति । उन्मद उद्रिक्तमदः अत एव विघूर्णन् भ्रमन् षडङ्घ्रिः षट्पदः कापिशायनेन सुगन्धि सुरभि । 'कश्यं कल्यं तथा मद्यं मैरेयं कापिशायनम्' इति वैजयन्ती । फुल्लदृष्टि विकसितनेत्रं प्रमदानां वनितानां वदनमधिवासनार्थेनाब्जेन चारु चषकं पानपात्रञ्च । 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । अधिशयितुमधिष्ठातुं समशेत । इदं भजामीदं भजामि वेत्युभयलोभाद्दोलायमानमानस आसीदित्यर्थः । अत्र प्रकृतयोरेव वदनचषकयोः षट्पदाभिलाषास्पदत्वरूपैकधर्म्मयोगादौपम्यस्य गम्यतायां तुल्ययोगिताभेदः ॥ ४ ॥

बिम्बितमिति । भृता परिस्रुत् वारुणी यस्मिन् तस्मिन् । 'परिस्रुद्वरुणा-

दत्तमिष्टतमया मधु पत्युर्बाढमाप पिबतो रसवत्ताम् ।
यत् सुवर्णमुकुटांशुभिरासीच्चेतनाविरहितैरपि पीतम् ॥ ६ ॥
स्वादनेन सुतनोरविचारादोष्ठतः समचरिष्ट रसोऽत्र ।
अन्यमन्यदिव यन्मधु यूनः स्वादमिष्टमतनिष्ट तदेव ॥ ७ ॥
बिभ्रतौ मधुरतामतिमात्रं रागिभिर्युगपदेव पपाते ।
आननैर्मधुरसो विकसद्भिर्नासिकाभिरसितोत्पलगन्धः ॥ ८ ॥

अब्जा' इत्यमरः । भाजने पानपात्रे विम्बितं प्रतिविम्बितमबलाया अक्षि जलजमिति जानन् । सादृश्यात् तथा भ्राम्यन्नित्यर्थः । भ्रमरः घ्रातुं पतति स्म । तथाहि भ्रान्तिर्भ्रमणं, विपरीतज्ञानञ्च तद्भाजि विवेको विचारः क्व भवति, न क्वापीत्यर्थः । अत्र भ्रमरस्याक्षिजलजभ्रान्तेर्भ्रान्तिमदलङ्कारः तत्समर्थकत्वाच्छ्लेषमूलातिशयोक्त्युत्थापितोऽर्थान्तरन्यासः । तेन सहाङ्गाङ्गिभावेन सङ्करः ॥ ५ ॥

दत्तमिति । इष्टतमया दत्तं मधु मद्यं कर्तृ पिबतः पत्युः रसवत्तां प्रेयसीकरस्पर्शादतिस्वादुतामाप । अतिशायने मतुप् । वाढं ध्रुवमित्युत्प्रेक्षा । कुतः यद्यस्माच्चेतनाविरहितैरचेतनैः सुवर्णमुकुटांशुभिरपि मूर्ध्नि प्रसृतैरिति भावः । पीतं पीतवर्णं पीतं चासीत् । अत्र पीतमिति श्लेषमूलातिशयोक्त्या पीतिम्नः क्रियाभेदाध्यवसायेनाचेतनांशुकर्तृकपानक्रियानिमित्ता प्रेयसीस्वहस्तदानाहितरसवत्तोत्प्रेक्षा, तथा च यदचेतनानामपि प्रियं तच्चेतनानां किं वक्तव्यमित्यर्थापत्तिध्वननादलङ्कारेणालङ्कारध्वनिः ॥ ६ ॥

स्वादनेनेति । सुतनोः कर्त्र्याः स्वादनेनास्वादनेन ओष्ठतः ओष्ठाद्रसः स्वादोऽत्र मधुनि अविचारादसंशयात् समचरिष्ट संक्रान्तः । सम्पूर्वाच्चरतेर्लुङ् । 'समस्तृतीयायुक्तात्' इत्यात्मनेपदम् । कुतः यद्यस्मात् तदेव पूर्वभुक्तमेव मधु अन्यदिवापूर्वमिवान्यमपूर्वमिष्टं प्रियं स्वादं रसं यूनोऽतनिष्ट । तनोतेर्लुङि तङ् । ओष्ठस्पर्शानन्तरमेव रसान्तरप्रादुर्भावादनन्तरन्यायात्तद्रससंक्रमणोत्प्रेक्षा, सा चाविचारादिति व्यञ्जकप्रयोगाद्वाच्या ॥ ७ ॥

बिभ्रताविति । रागिभिः कामिभिरतिमात्रं मधुरतां स्वादुतां प्रियत्वं वा बिभ्रती 'मधुरं रसवत् स्वादु प्रियेषु मधुरोऽन्यवत्' इति विश्वः । तस्य

**पीतवत्यभिमते मधुतुल्यस्वादमोष्ठरुचकं विददङ्क्षौ ।**
**लभ्यते स्म परिरक्ततयात्मा यावकेन वियतापि युवत्याः ॥९॥**
**कस्यचित्समदनं मदनीयप्रेयसीवदनपानपरस्य ।**
**स्वादितः सकृदिवासव एव प्रत्युत क्षणविदंशपदेऽभूत् ॥१०॥**

भावस्तां विकसद्भिर्विकसन्तीभिश्च विकसद्भिः तृष्णया विजृम्भमाणैः । 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकैकशेषः । आननैः मधुरसो मद्यरसः नासिकाभिर्घ्राणैरसितोत्पलगन्धश्च युगपदेव पपाते पीतौ । भिन्नेन्द्रियग्राह्यावपि गन्धरसौ युगपत् स्वेन्द्रियसम्बन्धात् युगपद्गृहीतावित्यर्थः । अत्र मनस आशुसञ्चारात् यौगपद्याभिमानः । शतपत्रशतव्यतिभेदवदित्यणुपरिमाणवादिनः । वास्तवमेव यौगपद्यमिति मध्यमपरिमाणवादिनः । सार्वपथीनास्तु कवय इत्यलमतिपल्लवेन । अत्र रसगन्धयोः प्रकृतयोरेकपानक्रियासम्बन्धात् तुल्ययोगिताभेदः ॥ ८ ॥

पीतवतीति । विददङ्क्षौ विदंष्टुमिच्छौ, उपदंशेच्छावतीत्यर्थः । दंशेः सन्नन्तादुप्रत्ययः । अभिमते वल्लभे मधुना तुल्यस्वादं तुल्यरसं, तुल्यत्वञ्च ह्रद्यतामात्रेण नान्यथा विलक्षणरसस्य अनुपदंशत्वात् ओष्ठो रुचकमाभरणमिवेत्युपमितसमासः । 'रोचनायान्तु रुचकमश्वाभरणमाल्ययोः' इति विश्वः । तम् ओष्ठरुचकमोष्ठश्रेष्ठं पीतवति सति वियता अपगच्छतापि । इणो लटः शत्रादेशे 'इणो यण्' इति यणादेशः । युवत्याः युवतेः । 'ङिति ह्रस्वश्च' इति वा नदीत्वादड़ागमः । यावकेनालक्तकेन परिरक्ततया दन्तनिष्पीडनकृतेन रागेण हेतुना आत्मा स्वरूपं लभ्यते स्म लब्धः, पुनरुद्भूतमित्यर्थः । अत्राधरपानादपगतस्यापि यावकस्य रागप्रादुर्भावनिमित्ता विरोधगर्भा पुनरुद्भवोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या च ॥ ९ ॥

कस्यचिदिति । समदनं यथा तथा मदयतीति मदनीयं मदकारि । 'कृत्यल्युटो बहुलम्' इति कर्त्तर्यनीयर्प्रत्ययः । तस्य प्रेयसीवदनस्य पानं परं प्रधानं यस्य तस्य कामुकत्वात् प्रियामुखपानासक्तस्य कस्यचित् कामिनः सकृदिव स्वादितोऽबाहुल्येन पीतः । इवशब्दो वाक्यालङ्कारे । आसव एव प्रत्युत वैपरीत्ये इति गणव्याख्याने । क्षण' विदंशपदे उपदंशस्थानेऽभूत् ।

पीतशीधुमधुरैर्मिथुनानामाननैः परिहृतं चषकान्तः ।
व्रीडया रुददिवालिविरावैर्नीलनीरजमगच्छदधस्तात् ॥ ११ ॥
प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः ।
गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः ॥ १२ ॥

अन्येषां मधुपानलोलुपानामधरस्वाद उपदंशः । अस्य त्वधरपानैकपरस्य मध्वेवोपदंश इत्यर्थः । अधरपानस्योपदंशत्वसम्बन्धेऽप्यसम्बन्धः आसवस्य तदसम्बन्धेऽपि सम्बन्ध इत्यतिशयोक्त्योरसापेक्षत्वात् संसृष्टिः ॥ १० ॥

पीतेति । पीतशीधूनि पीतमद्यानि अत एव मधुराणि मनोज्ञानि तैर्मिथुनानां स्त्रीपुंसानामाननैः चषकान्तः पानपात्राभ्यन्तरे । 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । परिहृतं त्यक्तं नीलनीरजं वासनार्थं निक्षिप्तं नीलोत्पलं व्रीडया परिहारलज्जया अलिविरावैः रुददिवाधस्तादगच्छत् । अत्र मद्यापगमनिमित्तस्य नीलनीरजाधोगमनस्य रोदनविशिष्टलज्जाहेतुकत्वोत्प्रेक्षा । सा चालिविरावैरिति व्यधिकरणकारिपरिणामोज्जीवितेति सङ्करः ॥ ११ ॥

प्रातिभमिति । त्रयाणां सरकाणां समाहारस्त्रिसरकं त्रिवारमधुपानम् । 'सरकं शीधुपात्रे स्याच्छीधुपाने च शीधुनि' इति विश्वः । 'तद्धितार्थ' इत्यादिना समाहारे द्विगुः पात्रादित्वान्नपुंसकत्वम् । तेन त्रिसरकेण त्रिपाणं मदातिभूमिरिति पानप्रसिद्धिः । प्रतिभैव प्रातिभं प्रतिभाविशेषः । प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः । यद्वा ज्ञानबीजभूतः संस्कारविशेषः प्रतिभा इति काव्यप्रकाशकारः । तत्र भवं प्रातिभं ज्ञानप्रभावविशेष एव । भवार्थेऽण्प्रत्ययः । तत्प्रातिभं गतानां त्रिवारमधुपानोत्कटमदोद्बुद्धसंस्कारप्रभावितप्रगल्भमतीनामित्यर्थः । सुभ्रुवां स्त्रीणां वक्रवाक्यरचनारमणीयः प्रतिकूलवाक्यप्रयोगरम्यः । गूढानि पूर्वं लज्जया संवृतानि सूचितानि सम्प्रति मदेन प्रकाशितानि रहस्यानि ग्राम्यावयवचेष्टाप्रलपितानि यस्मिन् स गूढसूचितरहस्यः स चासौ सहासश्चेति विशेषणसमासः वैवक्षिकविशेषणविशेष्यभावात् । 'हासो हास्यम्' इत्यमरः । परिहासो नर्मकेलिरूपहासक्रीडेति यावत् । 'द्रवकेलिपरीहासाः' इत्यमरः । प्रववृते प्रवृत्तः । इतः परं मदः सञ्चारी॥१२॥

हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः ।
चक्रिरे भृशमृजोरपि वध्वाः कामिनेव तरुणेन मदेन ॥ १३ ॥
अप्रसन्नमपराद्धरि पत्यौ कोपदीप्तमुररीकृतधैर्य्यम् ।
क्षालितन्नु शमितन्नु वधूनां द्रावितन्नु हृदयम्मधुवारैः ॥ १४ ॥
सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे ।
विभ्रमम्मधुमदः प्रमदानां धातुलीनमुपसर्ग इवार्थम् ॥ १५ ॥

हावेति । तरुणेनोत्कटेन यूना च मदेन कामिनेव ऋजोर्मुग्धाया अपि वध्वाः । किमुत प्रौढानामिति भावः । हावहारि विलासमनोहरं हसितं हासः वचनानां कौशलं प्रागल्भ्यं दृशि विकारविशेषाः विलासविशेषाः चक्रिरे कृतानि । पुंसेव मौग्ध्यं त्याजयित्वा प्रौढां नीतेत्यर्थः । अत्र हसित कौशलविकाराणां यौगपद्योक्त्या समुच्चयः । 'गुणक्रियायौगपद्यं समुच्चयः' इति लक्षणम् । तस्यौपम्ययोगेन सङ्करः तेन ऋजोरपि इत्यत्र किमुत प्रौढानामित्यर्थापत्तिर्व्यज्यते ॥ १३ ॥

अप्रसन्नमिति । अपराद्धरि आगस्कारिणि । राधेस्तृच्प्रत्ययः । पत्यौ विषये अप्रसन्नं कलुषम्, क्षुभितमित्यर्थः । कोपदीप्तं कोपेन ज्वलितमुररीकृतधैर्य्यमङ्गीकृतकाठिन्यम् । 'ऊरीकृतमुररीकृतम्' इत्यमरः । 'ऊर्य्यादिच्विडाचश्च' इति गतित्वात्, 'कुगतिप्रादयः' इति समासः । वधूनां हृदयं मधुवारैर्मद्यपर्यायैः । 'मधुवारा मधुक्रमाः' इत्यमरः । क्षालितं धौतं नु, शमितं निर्वापितं नु, द्रावितं द्रवीकृतं नु । अन्यथा कथं तादृगप्रसन्नतादीप्तताकठिनतानां हठान्निवृत्तिरिति भावः । अत्र क्षालितत्वादीनामेकत्राविरोधात् सादृश्याच्च न संशयालङ्कारः । सति सादृश्ये विरुद्धानेककोटिगोचरत्वात् तस्य किन्त्वप्रसन्नत्वादिनिरासनिमित्तकं क्षालितत्वद्युत्प्रेक्षात्रयं नुशब्दानुवृत्तेः तच्चाप्रसन्नत्वाद्युद्देशिनां क्षालित्वाद्यनुद्देशिभिर्यथासङ्ख्येनान्वयमपेक्षत इति यथासङ्ख्यालङ्कारेण सङ्कीर्य्यते ॥ १४ ॥

सन्तमिति । मधुमदः प्रमदानामङ्गे वपुषि अन्यत्र 'यस्मात् प्रत्ययविधिः' इत्युक्तलक्षणे प्रकृताख्ये शब्दरूपे । चिरं सर्व्वदा सन्तमेव । एकत्र स्वभावात्, अन्यत्र त्वनेकार्थत्वाद्धातूनामिति भावः । किन्त्वप्रकृतत्वादप्रस्तुतत्वात्,

**सावशेषपदमुक्तमुपेक्षा स्रस्तमाल्यवसनाभरणेषु ।**
**गन्तुमुत्थितमकारणतः स्म द्योतयन्ति मदविभ्रममासाम् ॥१६॥**
**मद्यमन्दविगलत्त्रपमीश-च्चक्षुरुन्मिषितपक्ष्म दधत्या ।**
**वीक्ष्यते स्म शनकैर्नवबध्वा कामिनो मुखमधोमुखयैव ॥ १७ ॥**
**या कथञ्चन सखीवचनेन प्रागभिप्रियतमम्प्रजगल्भे ।**
**व्रीड़जाड्यमभजन्मधुपा सा स्वां मदात् प्रकृतिमेति हि सर्वः॥१८**

अप्रसक्तत्वादिति भावः । अप्रकाशितमत्यञ्जितं विभ्रमं विलासं धातो भुवादिके लीनं गूढ़मर्थमभिधेयं उपसर्गः प्रादिरिवादिद्युतत् द्योतयति स्म । द्युतेः 'णौ चङ्युपधाया ह्रस्वः' । 'द्युतिस्वाप्योः सम्प्रसारणम्' इत्यभ्यासस्य सम्प्रसारणमिकारः । उपसर्गस्य धातुलीनार्थद्योतकत्वमादानमन्दानादावनुसन्धेयम् । उपमालङ्कारः ॥ १५ ॥

सावशेषमिति । सावशेषाण्यर्द्धोक्तानि पदानि यस्मिंस्तदुक्तमुक्तिर्वाक्यं स्रस्तेषु माल्यवसनाभरणेषूपेक्षानादरः अकारणतोऽकस्मादेव गन्तुमुत्थितमुत्थानञ्च आसां स्त्रीणां मदविभ्रमं मदविकारं द्योतयन्ति स्म, एतैरनुभावैरासां मदसञ्चारो ज्ञात इत्यर्थः । अत्रार्द्धोक्तादीनां खलेकपोतिकया मदद्योतने प्रवृत्तत्वात् कारणाख्यो द्वितीयसमुच्चयः । 'खलेकपोतन्यायेन बहूनां कार्य्यसाधने । कारणानां समुद्योगः स द्वितीयः समुच्चयः' ॥ इति लक्षणात् ॥१६॥

मद्येति । मद्येन मद्यपानेन मन्दमल्पं विगलन्ती त्रपा यस्य तत्, अत एवेषदुन्मिषितानि पक्ष्माणि लोमानि यस्य तच्चक्षुर्दधत्या नवबध्वा नवोढ़या कामिनः प्रियस्य मुखमधोमुखयैव नमितवदनयैव । 'स्वाङ्गाच्चोपसर्जनात्'—इति विकल्पादनीकारः । शनकैरसम्भ्रमेण वीक्ष्यते स्म, तिर्य्यगीक्षितमित्यर्थः । तत्रापि मदमानाभ्यां त्रपैव बलीयसीति मौग्ध्यातिशयोक्तिः । 'समुद्यद्यौवना मुग्धा लज्जापिहितमन्मथा' ॥ १७ ॥

येति । या स्त्री कथञ्चन कृच्छ्रेण सखीवचनेन सखीप्रेरणया प्राक्मदात् पूर्व्वमभिप्रियतमं प्रियतमसमक्षम् । आभिमुख्येऽव्ययीभावः । प्रजगल्भे प्रगल्भते स्म । सा स्त्री मधु पिबतीति मधुपा । 'आतोऽनुपसर्गे कः' । व्रीड़ं जाड्यं मौग्ध्यमभजत्, विहायागन्तुकं धर्म्मं स्वभावमभजन्मदादित्यर्थः ।

छादितः कथमपि त्रपयान्तर्यः प्रियं प्रति चिराय रमण्याः ।
वारुणीमदविशङ्कमथाविश्चक्षुषोऽभवदसाविव रागः ॥ १९ ॥
आगतानगणितप्रतियातान् वल्लभानभिसिसारयिषूणाम् ।
प्रापि चेतसि सविप्रतिसारे सुभ्रुवामवसरः सरकेण ॥ २० ॥
सा पुनस्तमभिसीसरमागस्कारिणं मदविमोहितचित्ता ।
योषिदित्यभिललाष न हालां दुस्त्यजः खलु सुखादपि मानः॥२१

तथाहि - सर्वो जनो मदाङ्कितोः स्वां स्वकीयां प्रकृतिमेति स्वभावं गच्छति । स्वाभाविकधर्मप्रकाशनं मदधर्मः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १८ ॥

छादित इति । रमण्या यः प्रियं प्रति रागो विषयाभिलाषः चिराय त्रपया व्रीड्यान्तश्छादितः संवृत असावयमेव रागोऽथास्मिन्नवसरे वारुणीमदविशङ्कं मद्यमदेन निःशङ्कं चक्षुषो नेत्रादाविरभवदिव आविर्भूतः किम् ? अत्र रतिरागमदरागयोरभिलाषपाटलिमरूपयोः श्लेषप्रतिभोत्थापिताभेदाध्यवसायमूलातिशयोक्तिमहिम्ना योऽन्तर्गतो रागः स एव चिरनिरुद्धः सम्प्रति मदोद्घाटितत्रपाकपाटा चक्षुर्द्वारा बहिरुद्गित इत्युत्प्रेक्ष्यते । आविर्भुवोर्थ्यवधानं कविस्वातन्त्र्यात् ॥ १९ ॥

आगतानिति । आगतान् स्वयं प्राप्तान् तथाप्यगणिताश्च ते प्रतियाताश्चेति । स्नातानुलिप्त इतिवत् पूर्वकाले समासः । तान् वल्लभानभिसिसारयिषूणां सम्प्रति चन्द्रोदये स्वयमेवाभिसारयितुमभिसर्तुमिच्छूनाम् । अभिसारयतेः स्वार्थण्यन्तात् सन्नन्तादुप्रत्ययः । सुभ्रुवां स्त्रीणां चेतसि सविप्रतिसारे कष्टमस्माभिरकार्य्यं कृतमिति पश्चात्तापयुक्ते सति, 'पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि' इत्यमरः । सरकेण मधुना मधुपानेन वा । 'सरकं शीधुपाने स्याच्छीधुपाने च शीधुनि' इति विश्वः । अवसरः प्रापि प्राप्तः । स्वयं गमनसौकर्य्याय मधुपानं चक्रुरित्यर्थः । अत्राभिसारणस्य पश्चात्तापकरणकस्य मदयोगात् सौकर्य्योक्तेः समाध्यलङ्कारः । 'समाधिः सुकरं कार्य्यं कारणान्तरयोगतः' इति काव्यप्रकाशे ॥ २० ॥

सा पुनरिति । मदेन विमोहितचिता भ्रमितचित्ता सती । अहमिति

ह्रीविमोहमहरद्दयितानामन्तिकं रतिसुखाय निनाय ।
सप्रसादमिव सेवितमासीत् सद्य एव फलदं मधु तासाम् ॥२२॥
दत्तमात्तमदनं दयितेन व्याप्तमातिशयिकेन रसेन ।
सस्वदे मुखसुरं प्रमदाभ्यो नाम रूढमपि च व्युदपादि ॥ २३ ॥

शेषः, आगस्कारिणमपराधकृतम् । 'अतः कृकमि' इत्यादिना विसर्जनीयस्य सत्वम् । तं पुनर्भूयो माभिसीसरं नाभिसारयाणि । सरतेः स्वार्थे 'णौ चङ्युपधाया ह्रस्वः' 'दीर्घो लघोः' इत्यभ्यासस्य दीर्घः । इति । इत्यालोच्येत्यर्थः । गम्यमानार्थत्वादप्रयोगः अन्यथा पौनरुक्त्यमित्यालङ्कारिकाः । योषित् काचित् स्त्री हालां सुराम् । 'सुरा हलिप्रिया हाला' इत्यमरः । नाभिललाष । तथाहि सुखादपि मानो दुस्त्यजः खलु । अतोऽल्पकारणादधिकार्थहानिरिति नाशङ्कनीयमित्यर्थान्तरन्यासः ॥ २१ ॥

ह्रीति । सप्रसादं मनःप्रसादपूर्व्वकम्, ममेदं श्रेयस्करमिति भावनापूर्व्वकमित्यर्थः । अन्यथा फलोदय एव न स्यात् । 'दैवज्ञे भेषजे गुरौ' इति वचनादिति भावः । सेवितमुपभुक्तमिति हेतोर्मधु तासां सद्य एव फलदमासीत् । कुतः ह्रीविमोहं व्रीड़ाजाड्यमहरत् रतिसुखाय सुरतसुखाय दयितानामन्तिकं निनाय । अत्र ह्रीहरणान्तिकनयनवाक्याभ्यां फलदानवाक्यार्थसमर्थनादनेकवाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २२ ॥

दत्तमिति । आत्तमदनमाहितमदनं यथा तथा दयितेन दत्तम् । अत एवातिशयिकेनातिशयप्रचुरेण । विनयादिभ्यष्ठक् । रसेन स्वादेन व्याप्तम्, स्वादुतरमित्यर्थः । मुखस्य सुरा मुखसुरं गण्डूषमद्यम् । 'विभाषा सेनासुराच्छायाशालानिशानाम्' इति नपुंसकत्वम् । प्रकृष्टो मदो यासां ताभ्यः प्रमदाभ्यः स्त्रीभ्यः । 'रुच्यर्थानां प्रीयमाणः' इति सम्प्रदानसंज्ञा । सस्वदे रुरुचे, प्रीतिकरमभूदित्यर्थः । कर्त्तरि लिट् । अत एव तदेव तासां मदकृञ्चासीदित्याह, नामेति, रूढं प्रागश्वकर्णादिवदव्युत्पन्नं नामापि प्रमदेति नामधेयं च व्युदपादि व्युत्पन्नं जातम् । यथा प्रकृष्टमदयोगात् प्रमदेत्यन्वर्थनामत्वं भवेत् तथा तास्तेनामाद्यन्नित्यर्थः । पद्यतेरण्यन्तात् कर्त्तरि लुङ् । 'चिण् ते पदः' इति चिण्प्रत्यये चिणो लुक् । 'प्रमदाभिः' इति

लब्धसौरभगुणो मदिराणामङ्गनास्यचषकस्य च गन्धः ।
मोदिताल्लिरितरेतरयोगादन्यतामभजतातिशयन्नु ॥ २४ ॥
मानभङ्गपटुना सुरतेच्छां तन्वता प्रथयता दृशि रागम् ।
लेभिरे सपदि भावयतान्तर्योषितः प्रणयिनेव मदेन ॥ २५ ॥
पानधौतनवयावकरागं सुभ्रुवो निभृतचुम्बनदक्षाः ।
प्रेयसामधररागरसेन स्वाङ्कितमधरमुपाल्लि ररञ्जुः ॥२६॥

पाठे सम्वदे, खदयाञ्चक्रे इत्यर्थः । 'खादनमशनं भक्षणमाहारो भोजनं स्वदनम्' इति हलायुधे । स्वदिखाद्योरेकार्थत्वाभिधानात् कर्म्मणि लिट् । अत पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्वात् काव्यलिङ्गम् ॥ २३ ॥

लब्धेति । लब्धसौरभगुणो मेलनात् प्राप्तसौरभोत्कर्षः अतएव मोदितालिरानन्दितभृङ्गः मदिराणां मद्यानां अङ्गनास्यमेव चषकं तस्य च गन्धो गन्धगुणः इतरेतरस्य योगान्मिश्रणादन्यतामपूर्वतामतिशयं तु तत्रैवोत्कर्षं वाभजत् । यत्तकर्दमादौ छतात्तकुङ्कुमादौ चोभयथा दर्शनादयं संशय इति भावः । अत एव संशयालङ्कारः ॥ २४ ॥

मानेति । मानभङ्गपटुना कोपशमनसमर्थेन सुरतेच्छां तन्वता मदनोद्दीपकेन दृशि रागमारुण्यं प्रीतिञ्च प्रथयता प्रकाशयता अन्तरन्तःकरणं भावयता रञ्जयता मदेन प्रणयिनेव योषितः स्त्रियो लेभिरे प्राप्ताः । रागमिति श्लेषमूलातिशयोक्तिसङ्कीर्णेयमुपमा ॥ २५ ॥

पानेति । उपालि आल्याः समीपे । समीपार्थेऽव्ययीभावः । 'आली सखी वयस्या च' इत्यमरः । अत एव निभृतचुम्बनदक्षाः गूढचुम्बनचतुराः सुभ्रुवः पानधौतनवयावकरागं मधुपानक्षालितलाक्षारागं स्वमधरं प्रेयसामधरेषु यो रागरसस्ताम्बूलरागद्रवस्तेन ररञ्जुः किल । अन्यगुणस्यान्यत्राधानमिह रञ्जेरर्थः । किलेत्यपरमार्थे तेन पानधौतरागेषु स्वाधरेषु प्रेयोऽधररागसंक्रमणनाटितकेन सखीसमक्षमेव प्रियांश्चुम्बनं कारयामासुरित्यर्थः । अत्रागन्तुना रञ्जनेन सहजचुम्बननिगूहनान्मीलनालङ्कारभेदः । 'मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम्' इति लक्षणात् ॥ २६ ॥

अर्पितं रसितवत्यपि नामग्राहमन्ययुवतेर्दयितेन ।
उज्झति स्म मदमप्यपिबन्ती वीक्ष्य मद्यमितरा तु ममाद ॥२७॥
अन्ययान्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या ।
पीतभूरिसुरयापि न मेदे निर्वृतिर्हि मनसो मदहेतुः ॥२८॥
कोपवत्यनुनयानगृहीत्वा प्रागथो मधुमदाहितमोहा ।
कोपितं विरहखेदितचित्ता कान्तमेव कलयन्त्यनुनिन्ये ॥ २९ ॥

अर्पितमिति । दयितेनान्ययुवतेः सपत्न्याः नामग्राहं नाम गृहीत्वा । 'नाम्न्या दिशिग्रहोः' इति णमुल् प्रत्ययः । अर्पितं दत्तं मद्यं रसितवती-आस्वादितवत्यपि ; रसतेरास्वादनार्थात् क्तवतौ 'उगितश्च' इति ङीप् । काचिदिति शेषः । मदनमुज्झति स्म, न ममादेत्यर्थः । इतरा तु सपत्नी तु मद्यमपिबन्त्यपि वीक्ष्य दृष्ट्वैव ममाद मत्ता । मनोनिर्वृतिरेव मदहेतुरिति भावः । अत्र पूर्वार्द्धे रसितवत्यपि न ममादेति विशेषोक्तिः । उत्तरार्द्धे तु अपिबन्त्यपि ममादेति विभावना । 'कारणेन विना कार्यस्योत्पत्तिः स्याद्विभावना । तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते ॥' तयोः सङ्करः ॥२७॥

अन्ययेति । चित्तनाथं भर्त्तारमन्यवनितागतचित्तं सपत्नीसंक्रान्तचेतसमभिशङ्कितवत्या तस्मिन्नविश्वसत्या अन्यया कयाचित् स्त्रिया पीतभूरिसुरयापि न मेदे न मत्तम् । माद्यतेर्भावे लिट् । तथाहि, मनसो निर्वृतिर्मदहेतुर्हि । सामान्येन विशेषसमर्थनादर्थान्तरन्यासः । एषा नवोढ़ा भीरुश्च, अन्यथा साशङ्कायाः पानाघटनादिति ॥ २८ ॥

कोपवतीति । प्राक् प्रथमं कोपवती सरोषा अतएवानुनयान् प्रियप्रार्थनान्यगृहीत्वा अनादृत्य । अथो सम्प्रति विरहखेदितचित्ता पश्चात् तापतप्ता काचिन्मधुमदेनाहितमोहा कृतचित्तविभ्रमा सती कान्तमेव कोपितमात्मना रोषितं कलयन्ती जानती अनुनिन्ये । सापराधाहं क्षमस्वेति प्रार्थितवती । मत्तेषु किं न सम्भावितमिति भावः । एषा कलहान्तरिता ॥ २९ ॥

**कुर्वता मुकुलिताक्षियुगानामङ्गसादमवसादितवाचाम् ।**
**ईर्ष्ययेव हरता ह्रियमासां तद्गुणः स्वयमकारि मदेन ॥ ३० ॥**
**गण्डभित्तिषु पुरा सदृशीषु व्याञ्जि नाञ्चितदृशाम् प्रतिमेन्दुः ।**
**पानपाटलितकान्तिषु पश्चाल्लोध्रचूर्णतिलकाकृतिरासीत् ॥ ३१ ॥**
**उद्धतैरिव परस्परसङ्गादीरितान्युभयतः कुचकुम्भैः ।**
**योषितामतिमदेन जुघूर्णुर्विभ्रमातिशयपुंषि वपूंषि ॥ ३२ ॥**

कुर्वतेति । मुकुलिताक्षियुगानामवसादितवाचां कुण्ठितगिरामासां स्त्रीणामङ्गसादम् अङ्गमादरूपशरीरनिश्चेष्टतां कुर्वता ह्रियं हरता मदेन ईर्ष्ययेवेत्युत्प्रेक्षा । तस्या ह्रियो गुणस्तद्गुणः अक्षिनिमीलनवाकसादाङ्गसादरूपः । स्वयमकारि कृतः । मदयोस्तुल्यानुभाविकत्वादिति भावः ॥ ३० ॥

गण्डेति । प्रतिमेन्दुः प्रतिबिम्बचन्द्रः सदृशीषु स्वसमानवर्णास्वञ्चितदृशां सुदृशां गण्डभित्तिषु पुरा सुरापानात् पूर्वं न व्याञ्जि नाभेदि । तदेकतापत्त्या तद्विविक्ततया न गृह्णीत इत्यर्थः, अतएव सामान्यालङ्कारः । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् । विपूर्वादञ्जेः कर्मणि लुङ् 'आडजादीनाम्' इत्याडागमः । पश्चात् पानानन्तरं पानेन पानमदेन पाटलिता पाटलीकृता कान्तिर्यासां तासु गण्डभित्तिषु लोध्रचूर्णस्य लोध्रपरागस्य तिलकश्चित्रकम् । 'तमालपत्रतिलकचित्रकाणि विशेषकाः । द्वितीयञ्च तुरीयञ्च न स्त्रियाम्' इत्यमरः । तस्याकृतिरिवाकृतिर्यस्य स आसीत्, वैवर्ण्याद्विविक्त एवासीदित्यर्थः । तिलकाकृतिरिति निदर्शना पूर्वोक्तसामान्यसंसृष्टा ॥ ३१ ॥

उद्धतैरिति । उद्धतैर्दृप्तैरिव कुचकुम्भैः परस्परसङ्गादन्योऽन्यसङ्घर्षादुभयत ईरितान्याकृष्टानि तथा विभ्रमातिशयं विलासविशेषं पुष्णन्ति तानि । 'नपुंसकस्य झलचः' इति नुमागमः । योषितां वपूंषि । पूर्ववन्नुमागमः । 'सान्तमहतः संयोगस्य' इति दीर्घः । इति विशेषः । अतिमदेन जुघूर्णुः भ्रेमुः । दृप्तसङ्घर्षस्तटस्थपीडाकरः । यथा वृषभकलहाद्वृक्षपादभङ्ग इति भावः ॥ ३२ ॥

चारुता वपुरभूषयदासां तामनूननवयौवनयोगः ।
तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसङ्गमभूषः ॥ ३३ ॥
क्षीबतामुपगतास्वनुवेलं तासु रोषपरितोषवतीषु ।
अग्रहीन्नु सशरं धनुरुज्झामास नूज्झितनिषङ्गमनङ्गः ॥३४ ॥
शङ्कयाऽन्ययुवतौ वनिताभिः प्रत्यभेदि दयितः स्फुटमेव ।
न क्षमं भवति तत्वविचारे मत्सरेण हतसंवृति चेतः ॥ ३५॥

चार्व्रिति । आसां योषितां वपुश्चारुता सौन्दर्यमभूषयत् । तां चारुता अनूननवयौवनयोगः सम्पूर्णयौवनसम्पत्तिरभूषयत् । तं पुनर्नवयौवनयोगं तु मकरकेतनलक्ष्मीर्मदनसम्पत्तिरभूषयत् तां मकरकेतनलक्ष्मीं दयितसङ्गम एव भूषा यस्य स मदोऽभूषयत्, तां मदः तं च दयितसङ्गम इत्यर्थः । प्रक्रमानुसारात्तां मदस्तमपि वल्लभसङ्ग इति प्रयोक्तव्ये विशेषणत्वेन प्रयोगो महाकवीनामनुषंगात् । यथा भारवेः प्रयोगः शुचि भूषयतीत्यादौ श्लोके 'स नयाङ्कः स च सिद्धिभूषणः' इति वक्तव्ये 'स नयापादितसिद्धिभूषणः' इति । अत्रोत्तरोत्तरस्य पूर्वपूर्वविशेषकत्वादेकावली । 'यत्रोत्तरोत्तरेषां स्यात्पूर्वपूर्वं प्रति क्रमात् । विशेषकत्वकथनमसावेकावली मता ॥' इति लक्षणात् ॥ ३३ ॥

क्षीबतामिति । क्षीबतां मत्तताम् । 'मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः । 'क्षीबृ मदे' इत्यस्माद्धातोः 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः' इति निष्ठान्तो निपातितः । उपगतासु प्राप्तासु । अतएवानुवेलं प्रतिक्षणं रोषपरितोषवतीषु तासु स्त्रीषु विषये अनङ्गः सशरं धनुरग्रहीन्नु उज्झितनिषङ्गं त्यक्ततूणीरं यथा तथोज्झामास नु तत्याज किम् । उज्झतेर्लिट् 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययः, रुष्टासु धनुर्ग्रहणं परितुष्टासु त्यागश्च रोषपरितोषाभ्यामुत्प्रेक्ष्यते । अन्यथा रोषानन्तरं परितोषः परितोषानन्तरं रोषश्च न स्यादिति भावः । रोषपरितोषयोर्धनुर्ग्रहणाभ्यां यथासंख्येनान्वयाद्यथासंख्यालङ्कारभेदः । तेनोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ॥ ३४ ॥

शङ्कयेति । वनिताभिरन्ययुवतौ सपत्न्यां शङ्कया तत्सङ्गशङ्कामात्रेण

**आननैर्विचकसे हृषिताभिर्वल्लभानभि तनूभिरभावि ।**
**आर्द्रतां हृदयमाप च रोषो लोलति स्म वचनेषु वधूनाम् ॥३६**

**रूपमप्रतिविधानमनोज्ञं प्रेम कार्य्यमनपेक्ष्य विकाशि ।**
**चाटु चाकृतकसम्भ्रममासां कार्म्मणत्वमगमन् रमणेषु ॥३७॥**

**लीलयैव सुतनोस्तुलयित्वा गौरवाढ्यमपि लावणिकेन ।**
**मानवञ्चनविदा वदनेन क्रीतमेव हृदयं दयितस्य ॥ ३८ ॥**

दयितः, स्फुटमेव निश्चितवदेव प्रत्यभेदि, सिद्धवत् कृत्वोद्घाटित इत्यर्थः । अनुचितोऽयमविमृश्यमिथ्याभियोग इति शङ्कां परिहरति—नेति । मत्सरेण वैरेण हृता संवृतिर्गोप्यगोपनं यस्य तच्चेतस्तत्त्वविचारे भूतार्थचिन्तायां क्षमं सहिष्णु न भवति । मत्सरग्रस्तचेतसामिष स्वभाव इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३५ ॥

आननैरिति । वल्लभानभि, वल्लभसमक्षमित्यर्थः । 'अभिरभागे' इति लक्षणार्थकर्म्मप्रवचनीयत्वाद्द्वितीया । बधूनामाननैर्विचकसे विकसितम् । भावे लिट् । तनूभिरङ्गैर्हृषिताभिः पुलकिताभिः । 'हृषेर्लोमसु' इतीडागमः । अभावि भूतम् । भावे लुङ् । हृदयञ्चार्द्रतामाप, काठिन्यं जहावित्यर्थः । वचनेषु रोषो लोलति चलति स्म । वचनगतो रोषो वक्रतापि निवृत्तेत्यर्थः । अत्र बधूष्वाननविकासाद्यनेकक्रियायौगपद्यात् समुच्चयालङ्कारः । गुणक्रिया-यौगपद्यं समुच्चय इति लक्षणात् ॥ ३६ ॥

रूपमिति । अप्रतिविधानमप्रतियत्नमेव मनोज्ञम्, स्वभावसुन्दरमित्यर्थः । रूपमाकृतिः । कार्य्यं प्रयोजनमनपेक्ष्य विकाशि वर्द्धमानम्, अनौपाधिक-मित्यर्थः । प्रेम अकृतकसम्भ्रममकृत्रिमसंरम्भं चाटु प्रियवचनं चासां स्त्रीणां रमणेषु विषये कार्म्मणत्वं वशीकरणकर्म्मत्वम् । 'वशक्रिया संवननं मूलकर्म्म तु कार्म्मणम्' इत्यमरः । तद्युक्तात् कर्म्मणोऽण्, अगमन् प्रापानि । गमेर्लुङ् च्लेरङादेशः । अत्र रूपादिष्वारोप्यमाणस्य कार्म्मणत्वस्य प्रकृतोपयोगात् परिणामालङ्कारः ॥ ३७ ॥

लीलयेति । लावण्यं कान्तिविशेषोऽस्यास्तीति लावणिकं लावण्यवत् । 'अत इनिठनौ' इति ठन्प्रत्यये 'ठस्येकः' 'यस्येति च' इत्यल्लोपे 'हलस्तद्धि-

स्पर्शभाजि विशदच्छविचारौ कल्पिते मृगदृशां सुरताय।
सन्नतिं दधति पेतुरजस्रं दृष्टयः प्रियतमे शयने च ॥ ३९ ॥
यूनि रागतरलैरपि तिर्य्यक्पातिभिः श्रुतिगुणेन युतस्य।
दीर्घदर्शिभिरकारि वधूनां लङ्घनन्न नयनैः श्रवणस्य ॥४०॥

तस्य' इति यकारलोपः। अन्यत्र तु लवणं पण्यमस्यास्तीति लावणिको लवणव्यवहारी। लवणाट्ठञ्प्रत्ययः। तेन लावणिकेन मानवञ्चनविदाहङ्कार-हरणदक्षेण, अन्यत्र परिमाणप्रतारणपटुना सुतनोः स्त्रियाः वदनेन कर्त्रा गौरवाढ्यं गाम्भीर्य्यसम्पन्नमपि, अन्यत्र गुरुत्वयुक्तमपि दयितस्य हृदयं लीलया विलासेनैव तुलयित्वा, अन्यत्रानायासेनैवोन्माय, गुर्वपि लघुतया मीत्वेत्यर्थः। क्रीतं वशीकृतमेव, अन्यत्र दानेन स्वीकृतमेव। अत्र विशेषणमहिम्नैव वदने लावणिकत्वस्य, हृदये पण्यत्वस्य च प्रतीतेः समासोक्तिरलङ्कारः। हृदयस्य प्रतीयमानपण्याभेदेन क्रीतत्वोक्तेरलौकिकहृदयावर्जने लौकिकक्रयव्यवहार-समारोपः ॥ ३८ ॥

एवं मदानुभावं वर्णयित्वा सम्प्रति सुरतकेलिवर्णनं प्रस्तौति। तत्र सुरतं द्विविधं बाह्यमाभ्यन्तरञ्चेति। बाह्यञ्च प्रेक्षणभाषणाश्लेषणचुम्बनाद्यनेकभेद-भिन्नम्। तत्र दृष्टिविशेषं तावदाह—स्पर्शेति। स्पर्शभाजि सुखस्पर्शे विशदा विमला शुभ्रा च या छविः कान्तिस्तया चारौ रम्ये सुरताय कल्पिते रति-सुखदानाय सृष्टे विहारयोग्यतया सज्जीकृते च सन्नतिमानुकूल्यं सर्व्वतः साम्यञ्च दधति दधाने प्रियतमे शयने च मृगदृशां दृष्टयोऽजस्रमविच्छिन्नं पेतुः पतिताः, युगपदुभयावलोकनादभिलाषं व्यञ्जयामासुरित्यर्थः। अत्र प्रियतमशयनयोः प्रकृतयोरेव धर्म्मसाम्यादौपम्यप्रतीतेः केवलप्रकृतगोचरा तुल्ययोगिता ॥ ३९ ॥

यूनीति। रागेण तरलैश्चपलैरपि, दर्शनोत्सुकैरपीत्यर्थः। यूनि प्रिये तिर्य्यक्पातिभिस्त्रपया साचि विप्रसारिभिः दीर्घदर्शिभिरायतान्तैः, आलोकनव्यापारपरैरित्यर्थः। अन्यत्र रागद्वेषचपलैः अत एव तिर्य्यक्-पातिभिः कुटिलवृत्तिभिरपि दीर्घदर्शिभिः, आगामिकार्य्यज्ञैरित्यर्थः। वधूनां नयनैः श्रुतिगुणेन शब्दग्रहणपाटवेन युतस्य। श्रूयतेऽनेनेति श्रवणं

**सङ्कथेच्छुरभिधातुमनीशा संमुखी न च बभूव दिदृक्षुः ।**
**स्पर्शनेन दयितस्य नतभ्रूरङ्गसङ्गचपलापि चकम्पे ॥ ४१ ॥**
**उत्तरीयविनयात्त्रपमाणा रुन्धती किल तदीक्षणमार्गम् ।**
**आवरिष्ट विकटेन विवोढुर्वक्षसैव कुचमण्डलमन्या ॥ ४२ ॥**
**अंशुकं हृतवता तनुबाहुस्वस्तिकापिहितमुग्धकुचाग्रा ।**
**भिन्नशङ्खवलयं परिणेत्रा पर्यरम्भि रभसादचिरोढा ॥ ४३ ॥**

श्रोत्रं तस्य लङ्घनमतिक्रमं नाकारि न चक्रे, कर्णान्ते विश्रान्तमित्यर्थः। अन्यत्र तु श्रुतिः श्रवणम्, अभ्यास इति यावत्, सैव गुणस्तेन युतस्य सूयत इति श्रवणं शास्त्रं तस्य लङ्घनं नाकारि, रागद्वेषग्रस्तोऽपि शास्त्रज्ञः कदाचिच्छास्त्रातिक्रमाद्बिभेतीति भावः। अयञ्च व्यवहारो नयनेषु रागतरलत्वैरित्यादिश्लिष्टविशेषणमहिम्ना गम्यत इति समासोक्तिभेदः। इयञ्च रागदृष्टिरौत्सुक्यस्यानुभावः ॥ ४० ॥

सङ्कथेति। नतभ्रूः स्त्री सङ्कथायां सम्भाषणे इच्छुरिच्छावत्यपि। 'बिन्दुरिच्छुः' इत्युप्रत्ययान्तो निपातः। अभिधातुं सम्भाषयितुमनीशा अक्षमा बभूव। अप्यर्थश्चशब्दः। दिदृक्षुर्द्रष्टुमिच्छुरपि। दृशेः सन्नन्तादुप्रत्ययः। सम्मुखी अभिमुखी न बभूव। अङ्गसङ्गचपला गात्रस्पर्शचपलापि दयितस्य स्पर्शनेन चकम्पे कम्पितवती। एते कम्पादयो लज्जासाध्वसानुभावाः। लज्जाविजितमन्मथेयं मुग्धा ॥ ४१ ॥

अथालिङ्गनं वर्णयति—उत्तरीयेति। अन्या स्त्री उत्तरीयविनयात् कुचांशुकाकर्षणात्। त्रपमाणा तदीक्षणमार्गं तस्य वोढुर्दृष्टिपथं रुन्धती किल आवृण्वतीव, न तु वस्तुत इति किलार्थः। विकटेन विशालेन। 'विशङ्कटं विशालं स्यात् करालं विकटं तथा' इति वैजयन्ती। 'संप्रोदश्च कटच्' इति चकाराद्वेः कटच्प्रत्ययः। विवोढुः परिणेतुः वक्षसैव कुचमण्डलं आवरिष्ट आवृतवती, कुचावरणव्याजेनालिङ्गितवती। वृञो लुङि तङ् इडागमः। अत्र कुचसंवरणेनालिङ्गनेच्छानिगूहनात्मीलनभेदः। एषा लज्जामन्मथमध्यस्था मध्यमा ॥ ४२ ॥

अंशुकमिति। अंशुकमुत्तरीयं हृतवता परिणेत्रा भर्त्रा तन्वोः कृशयोः

सञ्जहार सहसा परिरब्धप्रेयसीषु विरहस्य विरोधम् ।
संहितं रतिपतिः स्मितभिन्नक्रोधमाशु तरुणेषु महेषुम् ॥ ४४॥
स्वं समानमुपयन्तरि बध्वाः श्लिष्टवत्युपसपत्नि रसेन ।
आत्मनैव रुरुधे कृतिनेव स्वेदसङ्गि वसनञ्जघनेन ॥४५ ॥
पीड़िते पुर उरःप्रतिपेषं भर्त्तरि स्तनयुगेन युवत्याः ।
स्पष्टमेव दलतः प्रतिनार्य्यास्तन्मयत्वमभवद्धृदयस्य ॥ ४६ ॥

बाह्वोः स्वस्तिको बन्धविशेषः तेनापिहिते आच्छादिते मुग्धे सुन्दरे कुचाग्रे यस्याः सा तथोक्ता । अचिरोढ़ा नवोढ़ा भिन्नानि शङ्खस्य वलयानि यस्मिन् कर्म्मणि तद्यथा तथा रभसाद्बलात् पर्य्यरम्भि, गाढ़माश्लिष्टेत्यर्थः । रभेर्ण्यन्तात् कर्म्मणि लुङ् । 'रभेरशब्लिटोः' इति नुमागमः । एषा निरोहितमुग्धा ॥४३ ॥

संजहारेति । तरुणेषु युवसु विरोधं प्रणयकलहं विरहस्य विहाय । रहयतेः स्वार्थण्यन्तात् क्त्वा तस्य ल्यप् 'ल्यपि लघुपूर्व्वात्' इत्ययादेशः । सहसा परिरब्धाः प्रेयस्यो यैस्तेषु परिरब्धप्रेयसीषु आश्लिष्टवधूकेषु सत्सु । 'ईयसश्च' इति कपोऽभावः । 'ईयसो बहुव्रीहौ प्रतिषेधो वक्तव्यः' इत्युपसर्जनस्य ह्रस्वनिषेधः । रतिपतिः कामः संहितं प्रागारोपितं महेषुं महान्तं शरं स्मितभिन्नक्रोधं स्वयत्नसाफल्यात् स्मितेनोज्झितपूर्व्वरोषञ्च यथा तथा आशु संजहार । सिद्धेऽर्थे साधनानवकाशादित्यर्थः । परिरम्भान्तो यूनां विरह इति भावः ॥ ४४ ॥

स्वंसमानमिति । उपयन्तरि भर्त्तरि रसेन, रागान्धतयेत्यर्थः । उपसपत्नि सपत्नीसमीपे । समीपार्थेऽव्ययीभावे नपुंसकह्रस्वत्वम् । श्लिष्टवति आश्लिष्टवति सति स्वंसमानं स्पर्शसुखपारवश्याद्भ्रश्यमानं तथापि स्वेदसङ्गि स्वेदेन सात्त्विकेन सक्तं बध्वा वसनं कृतिना कुशलेन, स्वस्येदं लाघवमिति जानतेवेत्यर्थः । जघनेन कर्त्रा आत्मनैव स्वयमेव रुरुधे रुद्धम् । सा तु न वेत्तीति भावः । स्वेदहेतुकस्य वसनरोधस्य स्वलाघवज्ञानहेतुकत्वमुत्प्रेक्ष्यते॥४५

पीड़ित इति । युवत्याः युवतेः स्तनयुगेन भर्त्तरि प्रतिनार्य्याः पुरोऽग्रे समक्षमेव उरः प्रतिपिष्य उरः प्रतिपेषम् । 'परिक्लिश्यमाने च' इति णमुल् 'कृन्मेजन्तः' इत्यव्ययसंज्ञा, वक्षः प्रतिपीड्येत्यर्थः । पीड़िते सति दलतः

दीपितस्मरमुरस्युपपीड़ं वल्लभे घनमभिष्वजमाने ।
वक्रतान्न ययतुः कुचकुम्भौ सुभ्रुवः कठिनतातिशयेन ॥ ४७ ॥
सम्प्रवेष्टुमिव योषित ईषुः श्लिष्यतां हृदयमिष्टतमानाम् ।
आत्मनः सततमेव तदन्तर्वर्त्तिनो न खलु नूनमजानन् ॥ ४८ ॥
स्नेहनिर्भरमधत्त बधूनामार्द्रतां वपुरसंशयमन्तः ।
यूनि गाढ़परिरम्भिणि वस्त्रक्नोपमम्बु वहषि यदनेन ॥ ४९ ॥

ईर्ष्यया दीर्ष्यमाणस्य प्रतिनार्थ्याः सपत्नग्राः हृदयस्य तन्मयत्वं भर्त्तृतादात्म्यं स्पष्टमभवदेव । अन्यथा कथमन्यपीड़नादन्यदलनमिति भावः । अतएवेयमसङ्गत्यलङ्कारोपजीविनी तन्मयत्वोत्प्रेक्षेति सङ्करः । 'कार्य्यकारणयोर्भिन्नदेशत्वे स्यादसङ्गतिः' ॥ ४६ ॥

दीपितेति । वल्लभे दीपितस्मरमुद्दीपितकामं यथा तथा उरस्युपपीड़मुरस्युपपीड्य । 'सप्तम्यां चोपपीड़रुधकर्षः' इति णमुल् । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । घनं गाढ़मभिष्वजमाने परिरभमाणे सति । 'परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम्' इत्यमरः । सुभ्रुवः कुचकुम्भौ कठिनतातिशयेन वक्रतां परिमण्डलतां न ययतुर्न प्राप्तौ । अत्र गाढ़ालिङ्गनात् कुचकुम्भयोर्वक्रत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥ ४७ ॥

सम्प्रवेष्टुमिति । योषितः श्लिष्यतामालिङ्गतामिष्टतमानां हृदयं सम्प्रवेष्टुमीषुरिच्छन्ति स्मेव इति गाढ़ालिङ्गननिमित्ता क्रियास्वरूपोत्प्रेक्षा गुणस्वरूपोत्प्रेक्षा वा विवक्षाभेदात्, अतएवात्मनः स्वान् सततमेव तदन्तर्वर्त्तिनस्तेषामिष्टतमानां अन्तर्हृदयेष्वेव स्थितान्नाजानन्नूनम् । अन्यथा कथं पुनः प्रवेशेच्छेति भावः । इयमज्ञानोत्प्रेक्षया पूर्व्वोत्प्रेक्षासापेक्षेति सजातीयसङ्करः ॥ ४८ ॥

स्नेहेति । स्नेहनिर्भरं प्रेमरसपूर्णं तैलादिकद्रवद्रव्यपूर्णञ्च । 'स्नेहोऽस्त्री द्रवहार्दयोः' इति वैजयन्ती । अतएव बधूनां वपुरन्तरार्द्रतां द्रवत्वमधत्त । स्नेहद्रव्यसम्पूर्णमन्तरार्द्रं भवतीति भावः। असंशयं संशयस्याभावः । अर्थाभावेऽव्ययीभावः । कुतो यद्यस्मात् यूनि पुंसि गाढ़ं परिरभत इति परिरम्भिणि

न स्म माति वपुषः प्रमदानामन्तरिष्टतमसङ्गमजन्मा ।
यद्बहुर्बहिरवाप्य विकाशं व्यानशे तनुरुहाण्यपि हर्षः ॥ ५० ॥
यत् प्रियव्यतिकराद्वनितानामङ्गजेन पुलकेन बभूवे ।
प्रापि तेन भृशमुच्छ्वसिताभिर्नीविभिः सपदि बन्धनमोक्षः ॥ ५१ ॥
क्रीभराद्वनतं परिरम्भे रागवानवटुजेष्ववकृष्य ।
अर्पितोष्ठदलमाननपद्मं योषितो मुकुलिताक्षमधासीत् ॥ ५२ ॥

गाढाश्लेषिणि सति अनेन वपुषा कर्त्रा वस्त्रं क्नोपयित्वा परिषिच्य वस्त्र-क्नोपम् । क्नूयी धातोर्ण्यन्तात् 'अर्त्तिह्री'—इत्यादिना पुगागमे 'चेले क्नोपेः' इति णमुल् । अम्बु ववृषे । वृषेः कर्म्मणि लिट्, अन्तरार्द्रस्य निष्पीड़नाद्बहि-रम्बुस्रावसम्भवान्निमित्तेयमन्तरार्द्रत्वोत्प्रेक्षा प्रियाङ्गसङ्गात् ताः स्विन्ना इति सात्त्विकोदयोक्तिः ॥ ४९ ॥

न स्मेति । प्रमदानामिष्टतमसङ्गमेन जन्म यस्य सः । जन्माद्युत्तरपद-त्वात् अधिकरणबहुव्रीहिरिति वामनः, बहुर्विपुलः, 'विपुलानेकयोर्बहुः' इति वैजयन्ती । हर्षो वपुषोऽन्तर्न माति स्म । अत्युद्रेकान्नान्तः सम्मित इत्युत्प्रेक्षा । कुतः, यद्यस्माद्बहिर्वपुषो बहिर्विकासं वृद्धिमवाप्य तनुरुहाणि रोमाण्यपि व्यानशे व्याप । कर्त्तरि लिट । 'अश्नोतेश्च' इति नुड़ागमः । अत्र बहिर्विकासननिमित्तकान्तरमानोत्प्रेक्षा आनन्दरोमाञ्चयोः श्लेषमूलाभेदाध्य-वसायातिशयोक्त्यनुप्राणितेति सङ्करः ॥ ५० ॥

यदिति । वनितानां स्त्रीणां प्रियस्य भर्त्तुर्व्यतिकरात् सम्पर्कात् मङ्ग-माच्चाङ्गजेनाङ्गव्यापिना पुत्त्रेण च पुलकेन बभूवे भूतमिति यत्, भावे लिट्, तेन पुलकोदयेन पुत्त्रोदयेन च भृशमुच्छ्वसिताभिरुच्छिन्नाभिर्मोचाशया आश्वसिताभिश्च नीविभिः लक्षणया कटिवस्त्रैः अन्यथा बन्धनशब्देन पौन-रुक्त्यात् । सपदि बन्धनमोक्षो ग्रन्थिभेदो निगड़मोचनञ्च प्रापि प्राप्तः । कर्म्मणि लुङ् । अभ्युदयेषु राजानो बद्धान् मोचयन्तीति भावः । अत्र प्रकृतपुलकनी-विगताङ्गजत्वोच्छ्वसितत्वादिविशेषणसाम्याद्बन्धनमोचणसम्बन्धाच्च अप्रकृत-पुत्त्रकारागतिप्रतीतेः समासोक्तिरलङ्कारः ॥ ५१ ॥

अथ चुम्बनक्रीड़ां वर्णयति—क्रीति । परिरम्भे आलिङ्गने क्रीरेव भर-

पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे ।
पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥ ५३ ॥
केनचिन्मधुरमुल्बणरागं बाष्पतप्तमधिकं विरहेषु ।
ओष्ठपल्लवमपास्य मुहूर्त्तं सुभ्रुवः सरसमच्छि चुचुम्बे ॥ ५४ ॥
रेचितं परिजनेन महीयः केवलाभिरतदम्पति धाम ।
साम्यमाप कमलासखविष्वक्सेनसेवितयुगान्तपयोधेः ॥ ५५ ॥

स्तस्मादवनतम् । भाराक्रान्तं नमतीति भावः । अर्पितं स्वमुखे निहितमोष्ठ एव दलं पत्रं यस्य तद्योषित आननमेव पद्मं रागवान् रागी अवटुजेषु चरमशिरोरुहेषु । 'अवटुर्घाटा क्रकाटिका' इत्यमरः । अवकृष्य अवटुजाकर्षणेनोन्नमय्येत्यर्थः । मुकुलिताक्षं निमीलितनेत्रं यथा तथा । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इति षच् प्रत्ययः । अधासीत् पपौ । धेटो लुङ् 'आदेचः'—इत्यात्त्वम् । 'विभाषा घ्राधेट्'—इति सिचो वैकल्पिके लुगभावे । 'अस्तिसिचोऽपृक्ते' इतीडागमः । अत्राननोष्ठस्य पद्मदलत्वरूपणात् तत्रानुरागिणो मधुपत्वञ्च गम्यते इत्येकदेशविवर्त्ति रूपकम् ॥ ५२ ॥

पल्लवेति । पल्लवेनोपमित्या सादृश्येन यत् साम्यं तेन सपक्षं उभयोरपि पल्लवैकोपमानत्वसाधर्म्यात् सुहृद्भूतमधरो बिम्बमिव तदधरबिम्बमभीष्टे प्रियतमे दष्टवति सति, सह रुजा सरुक् । 'तेन सह'—इति बहुव्रीहिः, सहस्य सः । तेन सरुजेव सव्यथेनेव । 'स्त्री रुग्रुजा चोपतापः' इत्यमरः । ताराख्युच्चैः क्रोशन्ति, कुतः लोलानि चलानि वलयानि कङ्कणानि यस्य तेन तरुण्याः करेण पर्यकूजि परिकूजितम् । भावे लुङ्, सुहृद्दुःखाद्दुःखायन्ते सुहृद इति भावः । अत्र कङ्कणद्वारकस्य करकूजनस्य विधूननहेतुकस्य सरुजेवेति रुग्घेतुकत्वमुत्प्रेक्ष्यते ॥ ५३ ॥

केनचिदिति । केनचिद्रागिणा मधुरं रसवन्तमुल्बणरागमतिरक्तं तथापि विरहेष्वधिकं बाष्पेण विरहोष्मणा तप्तं सुभ्रुव ओष्ठपल्लवमपास्य सरसं सान्द्रशीतमच्छि चुचुम्बे चुम्बितम् । अत्र तप्तत्वरसवत्त्वयोर्विशेषणगत्याधरत्यागाक्षिचुम्बनहेतुकं काव्यलिङ्गद्वयं सापेक्षत्वात् सङ्कीर्य्यते ॥ ५४ ॥

एवं बाह्यसुरतमुक्त्वाभ्यन्तरसुरतवर्णनं प्रस्तौति—रेचितमित्यादि । परि-

**आवृतान्यपि निरन्तरमुच्चैर्योषितामुरसिजद्वितयेन ।**
**रागिणामिव इतो विमृशद्भिः पाणिभिर्जगृहिरे हृदयानि ॥ ५६**
**कामिनामसकलानि विभुग्नैः स्वेदवारिमृदुभिः करजाग्रैः ।**
**अक्रियन्त कठिनेषु कथञ्चित् कामिनीकुचतटेषु पदानि ॥५७॥**
**सोष्मणः स्तनशिलाशिखराग्रादात्तघर्मसलिलैस्तरुणानाम् ।**
**उच्छ्वसत्कमलचारुषु हस्तैर्निम्ननाभिसरसीषु निपेते ॥ ५८ ॥**

जनेन रेचितं रिक्तीकृतम् । अतएव केवलादेकाकिनावभिरतौ दम्पती जायापती यस्मिंस्तत् । 'दम्पती जम्पती जायापती भार्य्यापती च तौ' इत्यमरः । राजदन्तादिषु जायाशब्दस्य जम्भावो दम्भावश्च विकल्पान्निपातितः । महीयो महत्तरं धाम केलिगृहं कमलासखेन लक्ष्मीभर्त्रा विष्वक्सेनेन जनार्द्दनेन विष्णुना सेवितस्याधिष्ठितस्य युगान्तपयोधेः साम्यमापेत्युपमालङ्कारः । युगान्तविशेषणं विविक्तताद्योतनार्थम् । एतेनेच्छाविहारतोक्ता ॥ ५५ ॥

अथ विश्रम्भविहाराख्येवाह—आवृतानीति । उच्चैरुन्नतेनोरसिजद्वितयेन निरन्तरं नीरन्ध्रमावृतानि संवृतान्यपि योषितां हृदयानि वक्षांसि चेतांसि च इत इतो विमृशद्भिरितस्ततः परामृशद्भिः रागिणां पाणिभिर्जगृहीरे गृहीतानि । निगूढ़ं वस्तु हस्तपरामर्शाल्लभ्यत इति एकत्र भावः, अन्यत्र कृच्छ्रलब्धः प्रियकरस्पर्शस्तासां हृदयग्राह्योऽभूदिति भावः । नैरन्तर्य्येण प्रतिबध्नतोरपि कुचयोः कथञ्चिदन्तरं सम्पाद्य हृदयानि स्पृष्टान्येवेति वाक्यार्थः । अत्र द्वितयानामपि हृदयानां प्रकृतत्वात् केवलप्रकृतश्लेषः ॥ ५६ ॥

कामिनामिति । स्वेदवारिणा सात्त्विकेनाङ्गुलीस्वेदेन मृदुभिः कोमलतां गतैरत एव विभुग्नैर्विनम्रैः कामिनां करजाग्रैर्नखाग्रैः कठिनेषु कामिनिकुचतटेषु असकलान्यसमग्राणि पदानि क्षतानि कथञ्चिदक्रियन्त कृतानि । कठिनेषु मृदूनां पदलाभो दुःसम्पाद्य इति भावः । नखक्रिया प्रवृत्तेत्यर्थः । अत्र कुचानामीदृक्काठिन्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ५७ ॥

**सोष्मण इति । सोष्मणो यौवनोष्मयुक्तात् स्तनावेव शिलाशिखरे तयोरग्रादुपरिभागात् आत्तघर्म्मसलिलैरुपदेशविहारात् प्राप्तस्वेदैस्तरुणानां हस्तैरुच्छ्-**

**आमृशद्भिरभितो वलिवीचीर्लोलमानविततांगुलिहस्तैः ।**
**सुभ्रुवामनुभवात् प्रतिपेदे मुष्टिमेयमिति मध्यमभीष्टैः ॥ ५९ ॥**
**प्राप्य नाभिनदमज्जनमाशु प्रस्थितं निवसनग्रहणाय ।**
**औपनीविकमरुन्ध किल स्त्री वल्लभस्य करमात्मकराभ्याम् ॥६०**
**कामिनः कृतरतोत्सवकालक्षेपमाकुलवधूकरसङ्गि ।**
**मेखलागुणविलग्नमसूयां दीर्घसूत्रमकरोत् परिधानम् ॥ ६१ ॥**

सत्कमलवद्विकचकमलेश्च चारुषु निम्ननाभिष्वेव सरसीषु निपेते निपतितम् । ऊष्मखिन्नानां कुतश्चिदुन्नतात् पयसि पातो युक्त इति भावः । प्रथमं कुचौ स्पृष्ट्वा ततो नाभिदेशमस्पृशन्नित्यर्थः । अत्र कुचयोः शिलाशिखरत्वेन नाभीनां सरसीत्वेन च रूपणाद्धस्तानाम् आपातिपुरुषत्वरूपणं गम्यत इति एकदेश-विवर्त्ति रूपकम् ॥ ५८ ॥

आमृशद्भिरिति । वलयो वीचय इव वलिवीचीरभित आमृशद्भिः लोलमानाश्चलनशीलाः । 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति चानश्प्रत्ययः न तु शानच्, लोलतेः परस्मैपदित्वात् । अत एव लोलमानादयश्चानशीति वामनः । लोलमाना वितताः प्रसारिताश्चाङ्गुलयो येषां ते तथाविधा हस्ता येषां तैरभीष्टैः प्रियतमैः सुभ्रुवां मध्यं मुष्टिमेयमिति मुष्ट्या मातुं शक्यमिति अनुभवात् प्रत्यक्षेण मुष्ट्या मानं कृत्वेव प्रतिपेदे प्रतिबुद्धं ननु प्रसिद्धिमात्रा-दिति भावः । अमुष्टिमेयस्य मुष्टिमेयत्वोक्तेरतिशयोक्तिभेदोऽलङ्कारः ॥ ५९ ॥

प्राप्येति । नाभिरेव नदो ह्रद इति रूपकं तत्र मज्जनं प्राप्य आशु निव-सनग्रहणाय, वस्त्राकर्षणायेत्यर्थः । स्नातस्य वस्त्रग्रहणं युक्तमिति भावः । प्रस्थितं प्रवृत्तम् । उपनीवि नीविसमीपे प्रायेण तत्र भवमौपनीविकम्, तत्र व्यापृतमित्यर्थः । 'उपजानूपकर्णोपनीवेष्टक्' वल्लभस्य करं स्त्री आत्म-कराभ्यामरुन्ध किल, रोधं नाटितवतीत्यर्थः ॥ ६० ॥

कामिन इति । आकुले प्रियकरनिवारणव्यग्रे वधूकरे सङ्गि सक्तं मेखलैव गुणस्तत्र विलग्नं दीर्घसूत्रं आतततन्तुकम्, अत्यायतत्वाद्बहुधा वेष्टित-मित्यर्थः । चिरक्रियश्च । 'दीर्घसूत्रश्चिरक्रियः' इत्यमरः । एवं कृतो रतस्यै-वोत्सवस्य कालक्षेपः कालविलम्बो येन तत्परिधानमधोंऽशुकं कामिनोऽसूया-

अम्बरं विनयतः प्रियपाणेर्योषितश्च करयोः कलहस्य।
वारणामिव विधातुमभीक्ष्णं कक्ष्यया च वलयैश्च शिशिञ्जे ॥६२॥
ग्रन्थिमुद्ग्रथयितुं हृदयेशे वाससः स्पृशति मानधनायाः।
भ्रूयुगेण सपदि प्रतिपेदे रोमभिश्च सममेव विभेदः ॥ ६३ ॥
आशु लङ्घितवतीष्टकराग्रे नीविमर्द्धमुकुलीकृतदृष्ट्या।
रक्तवैणिकहताधरतन्त्रीमण्डलक्वणितचारु चुकूजे ॥ ६४ ॥

मकरोत्। इच्छाविघातादीर्ष्यां जनयामासेत्यर्थः। अत्र करसङ्गादिपदार्थानां विशेषणगत्यासूयाहेतुत्वादनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥६१॥

अम्बरमिति। अम्बरं विनयतोऽपसारयतः प्रियपाणेर्योषितः करयोश्च तस्मिन्, रोधकयोरिति भावः। कलहस्य वारणां विधातुं निरावरणं कर्त्तुमिवेति फलोत्प्रेक्षा। कक्ष्यया काञ्च्या। 'कक्ष्या कक्षे वरत्रायां काञ्च्यां गेहप्रकोष्ठयोः' इति वैजयन्ती। 'कक्षया' इति चान्तपाठे तु 'कक्षा ग्रहणिकाकाञ्चीप्रकोष्ठगजरज्जुषु' इति चान्तेषु विश्वः। वलयैः कङ्कणैश्चाभीक्ष्णं शिशिञ्जे चुकुशे। भावे लिट्। 'भूषणानान्तु शिञ्जितम्' इत्यमरः। द्वयोः कलहायमानयोः पार्श्वस्थाः साक्रोशं निवारयन्तीति भावः। शिञ्जतिरयं तालव्यादिर्न दन्त्यादिः। 'योषेव शिङ्क्ते' इति श्रुतेः ॥ ६२ ॥

ग्रन्थिमिति। हृदयेशे प्रिये वाससो ग्रन्थिमुद्ग्रथयितुं विस्रंसयितुम्। ग्रथयतेश्चौरादिकात् तुमुन्। स्पृशति सति मानधनाया मानवत्याः, कामिन्या इति शेषः। भ्रूयुगेण रोमभिश्च। 'कर्त्तरि तृतीया' इति तृतीया। सपदि समं युगपदेव विभेदो भङ्गो हर्षश्च प्रतिपेदे प्राप्तः। अत्र मानवत्त्वात् कामिनीत्वाच्च नीविस्पर्शे युगपदमर्षहर्षयोरुदयात् तदनुभावयोरपि युगपदाविर्भाव इति भावः। अत्र भ्रूभङ्गरोमाञ्चक्रिययोः समुच्चयात् समुच्चयभेदः, स च विभेद इति श्लेषप्रतिभोत्थापिताभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति सङ्करः ॥ ६३ ॥

आश्विति। इष्टस्य प्रियस्य कराग्रे नीविं वस्त्रग्रन्थिमाशु हठाल्लङ्घितवत्यतिक्रान्तवति, जघमूलं गते सतीत्यर्थः। अर्द्धमुकुलीकृतदृष्ट्या सुखपारवश्यादर्द्धनिमीलिताक्ष्या स्त्रिया रक्तो रक्तकण्ठः स्वयं गानकुशलः। वीणा

आयताङ्गुलिरभूदतिरिक्तः सुभ्रुवां कृशिमशालिनि मध्ये ।
श्रोणिषु प्रियकरः पृथुलासु स्पर्शमाप सकलेन तलेन ॥ ६५ ॥
चक्रुरेव ललनोरुषु राजीः स्पर्शलोभवशलोलकराणाम् ।
कामिनामनिभृतान्यपि रम्भास्तम्भकोमलतलेषु नखानि ॥ ६६ ॥
ऊरुमूलचपलेक्षणमघ्नन् यैर्वतंसकुसुमैः प्रियमेताः ।
चक्रिरे सपदि तानि यथार्थं मन्मथस्य कुसुमायुधनाम ॥ ६७ ॥

शिल्पमस्य वैणिको वीणावाद्यनिपुणः । शिल्पमिति ठक् । रक्तेन वैणिकेन यन्त्रगानकुशलेन हृतं वादितं यदधरं तन्त्रीणां मण्डलं समूहः बहुतन्त्रीकस्वरमण्डलादिभेदः तस्य क्वणितमिव चारु यथा तथा चुकूजे कूजितम् । भावे लिट् । अधरग्रहणं तन्त्रमाधुर्य्यातिशयात् । स्पर्शसुखातिरेकार्थं तन्त्रीकण्ठस्वरव्यतिकरमनोहरः कोऽपि रससर्व्वस्वभूतः कण्ठकूजितविशेषः, कृत इत्यर्थः । अत एव रक्तवैणिकहृतेति विशेषणम् । क्वणितचार्विव्युपमालङ्कारः ॥ ६४ ॥

आयतेति । आयता अङ्गुलयो यस्य स प्रियकरः । कृशस्य भावः कृशिमा कार्श्यम् । पृथ्वादिभ्य इमनिच् । 'र ऋतो हलादेर्लघोः' इति रेफादेशः । तेन शालते शोभते तस्मिन् सुभ्रुवां मध्येऽतिरिक्तोऽधिकोऽभूत् । मध्यस्यातिकार्श्यादस्पृष्टैकदेशोऽभूदित्यर्थः । पृथुलासु श्रोणिषु कटिषु । 'वह्निश्रिश्रुयुद्रुग्ला'—इति सूत्रेण श्रुधातोर्निप्रत्ययः । सकलेन कृत्स्नेन तलेन स्पर्शमाप । अन्तर्भागेन क्रमेण श्रोणिमस्पृशदित्यर्थः । अत एव मध्यातिरेकोक्तेरतिशयोक्तिः ॥ ६५ ॥

चक्रुरेवेति । स्पर्शलोभवशेनोरुस्पर्शतृष्णापारतन्त्र्येण लोलकराणां चपलपाणीनां कामिनामनिभृतानि अनर्पितान्यपि नखानि कररुहाः । 'पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः । रम्भास्तम्भकोमलतलेषु कदलीप्रकाण्डपेलवस्वरूपेषु ललनानामूरुषु राजीः रेखाश्चक्रुरेव । ऊरुपरामर्शनान्तरीयनखस्पर्शमात्रादेव रेखा जाता इत्यर्थः । अत्र कोमलतायाः विशेषणगत्या राजीकरणहेतुत्वात् काव्यलिङ्गभेदः ॥ ६६ ॥

ऊर्विति । एताः स्त्रियः ऊरुमूले चपलेक्षणं लोलचक्षुषं प्रियं यैर्वतंसकुसुमैः कर्णावतंसपुष्पैः। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः । अघ्नन्

धैर्य्यमुल्वणमनोभवभावा वामताञ्च वपुरर्पितवत्यः ।
व्रीड़ितं ललितसौरतधार्ष्ट्यास्तेनिरेऽभिरुचितेषु तरुण्यः ॥ ६८॥
पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः ।
कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितञ्च सुखेऽपि ॥६९॥

अताड़यन्। हन्तेर्लङ्। 'गमहन'—इत्यादिना उपधालोपः 'होहन्तेः'—इति कुत्वम्। तानि वतंसकुसुमानि। मनो मथ्नातीति मन्मथः। पृषोदरादित्वात् साधुः। तस्य मन्मथस्य कुसुममायुधं यस्येति कुसुमायुध इति यन्नाम तद्यथार्थं चक्रिरे चक्रुः। तदा तेषां तत्कार्य्यकारित्वादिति भावः। अत्र वतंसेष्वारोप्यमाणस्य मन्मथायुधत्वस्य प्रकृतोपयोगात् परिणामालङ्कारः ॥ ६७ ॥

धैर्य्यमिति। तरुण्यो रमण्यः उल्वण उद्रिक्तो मनोभवभावो रतिरागो यासां ता अपि अभिरुचितेषु प्रियेषु धैर्य्यमौदासीन्यं तेनिरे। वपुः स्वाङ्गमर्पितवत्यो यथेष्टकरणाय दत्तवत्योऽपि वामतां वक्रताञ्च तेनिरे, ललितं मनोहरं सौरतं सुरतसम्बन्धि धार्ष्ट्यं प्रागल्भ्यं यासां तास्तथापि व्रीड़ितं व्रीड़ां तेनिरे। इह स्त्रीणां रहसि रागाङ्गार्पणधार्ष्ट्यादिगुणा अप्यागन्तुकतया सहजधैर्य्यवक्रताव्रीड़ितैः पुनःपुनः प्रतिबध्यन्त एवेति भावः। अत्र रागादीनां धैर्य्यादिभिः सह समावेशविरोधस्य सहजागन्तुकाभ्यामाभासीकरणाद्विरोधाभासोऽलङ्कारः, धैर्य्यादिगुणसमुच्चयात् समुच्चयालङ्कारश्चेति सङ्करः ॥ ६८ ॥

पाणीति। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः। करभ इव ऊरुर्य्यस्याः सा करभोरूः स्त्री। 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्ययः। अविरोधितवाञ्छमनिवारितप्रियमनोरथं यथा तथा कामिनः पाणिरोधं नीवीमोक्षणे व्यापृतस्य प्रियपाणेर्निवारणं कुरुते स्म। तथा मधुरं मनोहरं स्मितं गर्भेऽन्तर्वर्त्ति यासु ता मन्दहासमिश्राः भर्त्सनास्तर्जनाश्च कुरुते स्म। तथा सुखेऽपि अधरपीड़नादौ सुखातिरेके सत्यपि हारि मनोहारि शुष्करुदितमनश्रुत्वादनार्द्रं कृत्रिमरोदनञ्च कुरुते स्म। स्त्रीणामेष स्वभावो यदिष्टमप्यनिष्टतया निवारयन्त्य एव, सुरतसुखमुपभुञ्जत इत्यर्थः। अत्र सुखेऽपि दुःखवदुपचारात् कुट्टिमिताख्योऽनुभावो द्रष्टव्यः। 'केशाधरादिग्रहणे मोदमानेऽपि मानसे। दुःखितेव बहिः कुप्येद्यत्र कुट्टिमितं हि तत्' ॥ इति लक्षणात् ॥ ६९ ॥

वारणार्थपदगद्गदवाचामीर्ष्यया मुहुरपत्रपया च ।
कुर्वते स्म सुदृशामनुकूलं प्रातिकूलिकतयैव युवानः ॥ ७० ॥
अन्यकालपरिहार्य्यमजस्रन्तद् द्वयेन विदधे द्वयमेव ।
धृष्टता रहसि भर्तृषु ताभिर्निर्दयत्वमितरैरबलासु ॥ ७१ ॥
बाहुपीड़नकचग्रहणाभ्यामाहतेन नखदन्तनिपातैः ।
बोधितस्तनुशयस्तरुणीनामुन्मिमील विशदं विषमेषुः ॥ ७२॥

वारणार्थेति । ईर्ष्यया अतिपीड़नासहिष्णुतया, अपत्रपया च रहस्य-प्रकाशनवैलक्ष्येण च मुहुर्व्वारणार्थपदेषु मा मित्यादिनिषेधवाचकशब्दप्रयोगेषु गद्गदवाचां स्खलद्गिरां सुदृशां प्रतिकूलं वर्त्तन्त इति प्रातिकूलिकाः प्रतिकूल-चारिणः । 'तत्प्रत्यनुपूर्व्वमीपलोमकूलम्' इति ठक् । तत्तया प्रातिकूलिकत-यैव प्रतिकूलाचरणेनैव युवानोऽनुकूलमिष्टं कुर्वते स्म । कृत्रिमनिवारणात् यत् प्रतिकूलमिवाचरितमधरपीड़नादिकं तत् तासामिष्टत्वादनुकूलमेवेति । प्रति-कूलाचरणमेवानुकूलं भवतीत्यर्थः । अत एव प्रतिकूलमप्यनुकूलमिति विरो-धाभासोऽलङ्कारः ॥ ७० ॥

अन्येति । अजस्रं नित्यमन्यकालपरिहार्य्यं सुरतेतरकाले तु अत्याज्यं तद्द्वयं कर्म्मद्वयेन कर्त्रा विदधे विहितमेव, धाञः कर्म्मणि लिट् । एतदेव व्यनक्ति । रहसि ताभिरबलाभिर्भर्त्तृषु विषये धृष्टता विदधे । इतरैर्भर्त्तृभिरबलासु स्त्रीषु निर्दयत्वञ्च विदधे । अन्यदा यथा पुंसां स्त्रीषु दया तासां तेष्वप्रागल्भ्य-मलङ्कारस्तद्वत् सुरतेषु तद्विरुद्धमेवालङ्कार इति भावः । अत्र स्त्रीपुंसधार्ष्ट्य-निर्द्दयत्वयोः प्रकृतयोर्विधानक्रियायौगपद्यं गम्यत इति तुल्ययोगिता-भेदः ॥ ७१ ॥

बाह्विति । तरुणीनां तनौ शेते इति तनुशयः तनुषु सुप्तः । 'अधिकरणे शेतेः' इत्यच्प्रत्ययः, विषमेषुः कामः बाहुपीड़नं निर्दयाश्लेषः, कचग्रहणं केशाकर्षणं ताभ्यामाहतेन मुष्टिघातेन । नपुंसके भावे क्तः । नखानां दन्तानाञ्च निपातैः क्षतैश्च बोधितः सन् विशदं निर्जाड्यं यथा तथा उन्मिमी-लोद्बुद्धः । सर्वमेतत्कामस्योद्दीपकमासीदित्यर्थः । अत्र प्रकृतविषमेषुविशेषण-

**कान्तया सपदि कोऽप्युपगूढः प्रौढपाणिरपनेतुमियेष।**
**संहतस्तनतिरस्कृतदृष्टिर्भ्रष्टमेव न दुकूलमपश्यत्॥ ७३॥**
**आहतं कुचतटेन तरुण्याः साधु सोढममुनेति पपात।**
**त्रुट्यतः प्रियतमोरसि हारात् पुष्पवृष्टिरिव मौक्तिकवृष्टिः॥७४॥**
**सीत्कृतानि मणितं करुणोक्तिः स्निग्धमुक्तमलमर्थवचांसि।**
**हासभूषणरवाश्च रमण्याः कामसूत्रपदतामुपजग्मुः॥ ७५॥**

सामर्थ्यादप्रस्तुतसुप्तप्रबुद्धपुरुषप्रतीतिः समासोक्तिरलङ्कारः। एवमेव प्रबोध्यते खलु। निद्रालुरित्यलौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपः॥ ७२॥

कान्तयेति। कान्तया सपदि वस्त्राकर्षणक्षण एवोपगूढ आश्लिष्टः कोऽपि युवा कामी प्रौढपाणिर्वाग्रहस्तः सन् अपनेतुं दुकूलमाक्रष्टुमियेष। संहताभ्यां निरन्तरश्लिष्टाभ्यां स्तनाभ्यां तिरस्कृतदृष्टिस्तिरोहिताक्षः सन् भ्रष्टमेव प्रागेव स्रस्तं दुकूलं नापश्यत्। अत्र दृष्टितिरस्कारस्य विशेषणगत्या अदर्शनहेतुकत्वात् पदार्थहेतुकं काव्यलिङ्गम्। तच्च दृष्टेः स्तनतिरस्कारासम्बन्धेऽपि सम्बन्धरूपातिशयोक्त्युत्थापितमिति सङ्करः। तेन च कुचयोर्लोकोत्तरसौन्दर्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः॥ ७३॥

आहतमिति। तरुण्याः सम्बन्धिना कुचतटेनाहतम् आहतिः अमुनोरसा साधु सोढमिति हेतोस्त्रुट्यतः शीर्य्यमाणात् हारान्मौक्तिकवृष्टिः पुष्पवृष्टिरिव प्रियतमोरसि पपातेत्युत्प्रेक्षा। विक्रान्तः पूज्यते पूज्यवृष्ट्येति प्रसिद्धिः॥ ७४॥

सीत्कृतानीति। तरुण्याः सीत्कृतानि सीत्काराः। दन्तनिष्पीडनायां सीरिति शब्दप्रयोगः। मणितं रतिकाले स्त्रीणां कण्ठकूजितविशेषः। 'मणितं रतिकूजितम्' इत्यभिधानात्। करुणोक्तिः त्रायस्वेत्यादिदीनोक्तिः। स्निग्धं स्नेहार्द्रमुक्तमुक्तिः। त्वं मे प्राणा इति प्रियवाद इत्यर्थः। अलमर्थानि निषेधार्थानि वचांसि। मा मेत्यादि निवारणवचनानि। हासानां भूषणानाञ्च रवाः स्वनाश्च कामसूत्रस्य वात्स्यायनादिकामतन्त्रप्रतिपादकशास्त्रस्य पदतां पद्यत इति पदमर्थः। प्रमेयलक्षणमिति यावत्। तत्तामुपजग्मुरिति गम्योत्प्रेक्षा। यद्वा कामिनेव कृतं सूत्रं तस्य पदानि सुप्तिङन्तशब्दरूपाणि तस्य शास्त्रस्यैतान्येव पदानि तत्तामुपजग्मुरित्युत्प्रेक्षैव॥ ७५॥

उद्धतैर्निभृतमेकमनेकैश्छेदवन्मृगदृशामविरामैः ।
श्रूयते स्म मणितङ्कलकाञ्चीनूपुरध्वनिभिरक्षतमेव ॥ ७६ ॥
ईदृशस्य भवतः कथमेतल्लाघवं मुहुरतीव रतेषु ।
क्षिप्तमायतमदर्शयदुर्व्यां काञ्चिदाम जघनस्य महत्त्वम् ॥ ७७॥
प्राप्यते स्म गतचित्रकचित्रैश्चित्रमार्द्रनखलक्ष्म कपोलैः ।
दध्रिरेऽथ रभसच्युतपुष्पाः स्वेदबिन्दुकुसुमान्यलकान्ताः ॥७८ ॥

उद्धतैरिति । निभृतमनुद्धतम्, सूक्ष्ममित्यर्थः । एकमेकाकि छेदवद्विच्छेदयुक्तम् । मृगदृशां मणितं रतिकूजितं उद्धतैः स्थूलैरनेकैर्बहुभिरविरामैरविच्छेदैः कलैरव्यक्तमधुरैः काञ्चीनां नूपुराणाञ्च ध्वनिभिरक्षतमतिरस्कृतमेव श्रूयते स्म श्रुतम् । मणितस्य तिरोधायकशब्दान्तरसद्भावेऽपि तादृूप्यानापत्तेरतद्गुणालङ्कारः । 'सति हेतावतद्रूपस्वीकारः स्यादतद्गुणः' इति लक्षणात् ॥ ७६ ॥

ईदृशस्येति । रतेषु उर्व्यां क्षिप्तं रतिसम्भ्रमात् पतितम् आयतं दीर्घभूतं काञ्चिदाम रसनागुणः कर्तृ ईदृशस्येति काञ्चिदाम्नः स्वायामदृष्टान्तेन जघनपरिमाणप्रदेशेनेत्थं महत्तरस्यातिमहतस्तव जघनस्य रतेषूपरिसुरतेषु मुहुः कथमेतल्लाघवं मुहुरुत्पतनपाटवं यस्येत्थमायतमहमपि । एकवेष्टनपर्याप्तमिति भावः । इति जघनस्य महत्त्वदर्शनादिव, इत्थं विस्मितस्येति शेषः । गम्यमानार्थत्वादप्रयोगः । अत्रोर्व्यामायतत्वनिमित्तकाञ्चीदामकर्तृकं विस्मयपूर्व्वकजघनमहत्त्वदर्शनमुत्प्रेक्ष्यते ॥ ७७ ॥

प्राप्यत इति । गतानि विमर्दात् प्रमृष्टानि चित्रकचित्राणि तमालपत्ररचनानि येषां तैः कपोलैरार्द्रं यन्नखलक्ष्म तदेव चित्रमिति रूपकम् । प्राप्यते स्म प्राप्तम् । किञ्च रभसेन रतिसम्भ्रमेण च्युतपुष्पा अलकान्ताश्चूर्णकुन्तलाग्राणि स्वेदबिन्दूनेव कुसुमानीति रूपकम् । दध्रिरे दधुः । धरतेर्भौवादिकाल्लिटि ञित्त्वादात्मनेपदम् । स्वेदोऽत्र श्रमानुभावः । 'श्रमः खेदोऽध्वरत्यादेः श्वासस्वेदातिभूमिकृत्' ॥ ७८ ॥

यद्यदेव रुरुचे रुचिरेभ्यः सुभ्रुवो रहसि तत्तदकुर्वन् ।
आनुकूलिकतया हि नराणामाक्षिपन्ति हृदयानि तरुण्यः ॥७९॥
प्राप्य मन्मथरसादतिभूमिं दुर्वहस्तनभराः सुरतस्य ।
शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः ॥ ८० ॥
सङ्गताभिरुचितैश्चलितापि प्रागमुच्यत चिरेण सखीव ।
भूय एव समगंस्त रतान्ते ह्रीर्वधूभिरसहा विरहस्य ॥ ८१ ॥

यद्यदेवेति । रुचिरेभ्यो रमणेभ्यो यद्यदेव चेष्टितं रुरुचे रोचते स्म, प्रियमभूदित्यर्थः । 'रुच दीप्तावभिप्रीतौ च' इति धातोर्लिट् । 'रुच्यर्थानां प्रीयमाणः' इति सम्प्रदानत्वम् । सुभ्रुवो रहसि तत्तदकुर्वन् । तथाहि—तरुण्यः अनुकूलं वर्त्तन्त इत्यानुकूलिकाः । 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' इति ठक् । तासां भावस्तत्ता तया आनुकूलिकतया अनुकूलवर्त्तितयैव नराणां पुंसां हृदयान्याक्षिपन्त्यावर्जयन्तीति अर्थान्तरन्यासः ॥ ७९ ॥

प्राप्येति । दुर्वहः स्तनभरो यासां ताः । एतेनोपरि सुरतं व्यज्यते । अन्यथा विशेषणवैयर्थ्यात् । असिता आयताश्च केशा यासां ता असितायतकेश्यः स्त्रियः । 'स्वाङ्गाच्च'—इत्यादिना ङीष् । मन्मथरसात् स्मररागात् सुरतस्यातिभूमिं परां काष्ठां प्राप्य, महान्तं सुरतं प्राप्येत्यर्थः । श्रमजलेन स्वेदाम्बुना आर्द्रे ललाटे श्लिष्टाः केशा यस्मिन् कर्म्मणि तद्यथा तथा शश्रमुरिति सानुभावस्य श्रमभावोक्तिः । भावनिबन्धनात् प्रेयोऽलङ्कारः ॥ ८० ॥

अथ सुरतावसानं वर्णयति—सङ्गताभिरिति । उचितैः परिचितैः प्रियतमैः सह सङ्गताभिर्वधूभिः प्राक् सुरतादौ चलिता गन्तुं प्रचलितापि ह्रीः सखीव चिरेणामुच्यत मुक्ता, न सहत इत्यसहा, पचाद्यजन्तेन नञ्समासः । विरहस्यासहा, विरहमसहमाना सतीत्यर्थः । 'कर्त्तृकर्म्मणोः कृति' इति कर्म्मणि षष्ठी । रतान्ते भूय एव वधूभिः समगंस्त सङ्गता सखीवेत्येव, सम्पूर्व्वाद्गमेर्लुङ् 'समो गम्यृच्छिभ्याम्'—इत्यात्मनेपदम् । 'वा गमः' इति सिचः पक्षे कित्त्वाभावात् 'अनुदात्तोपदेश'—इत्यादिनानुनासिकलोपो न । सुरतेतरकाले स्त्रीणां लज्जैव भूषणमिति भावः । उपमालङ्कारः ॥ ८१ ॥

**प्रेक्षणीयकमिव क्षणमासन् ह्रीविभङ्गुरविलोचनपाताः ।**
**सम्भ्रमद्रुतगृहीतदुकूलच्छाद्यमानवपुषः सुरतान्ताः ॥ ८२ ॥**
**अप्रभूतमतनीयसि तन्वी काञ्चिधाम्नि पिहितैकतरोरु ।**
**क्षौममाकुलकरा विचकर्ष क्रान्तपल्लवमभीष्टतमेन ॥ ८३ ॥**
**मृष्टचन्दनविशेषकभक्तिर्भ्रष्टभूषणकदर्थितमाल्यः ।**
**सापराध इव मण्डनमासीदात्मनैव सुदृशामुपभोगः ॥८४॥**

प्रेक्षणीयकमिति । ह्रिया विभङ्गुराः स्खलिता विलोचनपाता दृष्टिपाता येषु ते सम्भ्रमेण द्रुतं गृहीतेन दुकूलेन छाद्यमानानि वपूंषि अन्तरङ्गाणि येषु ते सुरतान्ताः सुरतावसानानि क्षणं प्रेक्षणीयकं दृश्यमिवासन्नित्युपमा । नाटकादिरूपकेष्वाहार्य्यकं वस्तु तद्दृश्यं प्रेक्षणीयकमिति चोच्यते । इहाविर्भावतिरोधानादिना तत्तुल्यत्वम् ॥ ८२ ॥

अप्रभूतमिति । तन्वी कृशाङ्गी अभीष्टतमेन प्रेयसा क्रान्तपल्लवं गृहीताञ्चलम् अतएवातनीयसि महीयसि काञ्चिधाम्नि जघने अप्रभूतं छादयितुमपर्य्याप्तम् । अतएव पिहितश्छादित एकतर एवोरुर्य्येन तत्क्षौमं दुकूलमाकुलकरा व्यग्रपाणिः सती विचकर्ष कृत्स्नापिधानार्थमाचकर्ष, लज्जानुभावोऽयम् । अत्र क्षौमविशेषणामाकर्षणहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ८३ ॥

मृष्टेति । मृष्टा प्रमृष्टा चन्दनानां विशेषकाणां तमालपत्राणाञ्च भक्ती रचना येन सः । 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः । भ्रष्टानि भूषणानि यस्मिन् स भ्रष्टभूषणः कुत्सितोऽर्थः कदर्थः । लोकतो विशेष्यलिङ्गत्वम् । 'कोः कत्तत्पुरुषेऽचि' इति कुशब्दस्य कदादेशः । कदर्थानि कृतानि कदर्थितानि दूषितानि माल्यानि येन सः । ततस्तयोर्वैवक्षिकविशेष्यविशेषणभावाद्विशेषणसमासः । एवम्भूत उपभोगः सापराध इव पूर्व्वमण्डनापहारात् कृतापराध इव सुदृशामात्मनैव स्वयमेव, प्रकृत्यादित्वात्तृतीया, मण्डनमासीत्, प्रतिनिधिकरणेन स्वापराधनिरासार्थमिवेत्युत्प्रेक्षा । स्त्रीणां सम्भोग एव मण्डनं तदभावे मण्डनान्तरस्याप्यमण्डनत्वादिति भावः ॥ ८४ ॥

योषितः पतितकाञ्चनकाञ्ची मोहनातिरभसेन नितम्बे ।
मेखलेव परितः स्म विचित्रा राजते नवनखक्षतलक्ष्मीः ॥८५॥
भातु नाम सुदृशां दशनाङ्कः पाटलो धवलगण्डतलेषु ।
दन्तवाससि समानगुणश्रीः सम्मुखोऽपि परभागमवाप ॥ ८६॥
सुभ्रुवामधिपयोधरपीठं पीडनैस्त्रुटितवत्यपि पत्युः ।
मुक्तमौक्तिकलघुर्गुणशेषा हारयष्टिरभवद् गुरुरेव ॥ ८७ ॥
विश्रमार्थमुपगूढमजस्रं यत् प्रियैः प्रथमरत्यवसाने ।
योषितामुदितमन्मथमादौ तद् द्वितीयसुरतस्य बभूव ॥ ८८ ॥

योषित इति । मोहनातिरभसेन सुरतसम्भ्रमेण पतिता काञ्चनी काञ्चनस्य विकारा काञ्चिर्यस्मात्तस्मिन्निर्मेखले योषितो नितम्बे परितः सर्व्वतो विचित्रा विविधरचना नवनखक्षतलक्ष्मीर्मेखलेव राजते स्म । उत्प्रेक्षालङ्कारः ॥ ८५ ॥

भात्विति । सुदृशां सम्बन्धी पाटलोऽरुणो दशनाङ्को दन्तक्षतं धवलगण्डतलेषु कपोलेषु भातु नाम वैवर्ण्योद्रेकेन प्रकाशताम् । नामेत्यङ्गीकारे, दन्तवाससि अधरे तु समानगुणश्रीस्तुल्यवर्णोऽपि तथा सम्मुखोऽपि सन् परभागं गुणोत्कर्षं तथा पश्चाद्भागञ्चावाप इति सावर्ण्यवैवर्ण्ययोः सम्मुखपराङ्मुखत्वयोश्च विरोधः । उपरिभागमवापेत्युभयत्र परिहाराद्विरोधाभासद्वयसंसृष्टिः । तत्राद्यः श्लेषभित्तिकाभेदाध्यवसायमूलस्तद्गुणोत्थापित इति सङ्करः ॥ ८६ ॥

सुभ्रुवामिति । सुभ्रुवां पयोधरपीठके कुचतटे अधिपयोधरपीठम् । विभक्त्यर्थेऽव्ययीभावः । पत्युः पीडनैः परिरम्भादिविमर्दैस्त्रुटितवती छेदं गतापि, अतएव मुक्तमौक्तिका सा च सा लघुश्च अतएव गुणशेषा सूत्रमात्रशेषापि हारयष्टिर्गुरुः श्लाघ्यैवाभवत् । लघुरपि गुरुरिति विरोधाभासोऽलङ्कारः ॥ ८७ ॥

विश्रमेति । योषितां प्रथमरत्यवसाने विश्रमार्थं श्रमापनोदार्थम् । श्राम्यतेर्घञ्प्रत्ययः । 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' इति वृद्ध्यभावः । अजस्रं प्रियैरुपगूढमुपगूहनम् । नपुंसके भावे क्तः । 'न लोका' इत्यादिना

आस्तृतेऽभिनवपल्लवपुष्पैरप्यनारतरताभिरताभ्यः ।
दीयते स्म शयितुं शयनीये न क्षणः क्षणदयापि वधूभ्यः ॥८९॥
योषितामतितरां नखलूनं गात्रमुज्ज्वलतया न खलूनम् ।
क्षोभमाशु हृदयं नयदूनां रागवृद्धिमकरोन्न यदूनाम् ॥९० ॥

षष्ठीप्रतिषेधः । उदितमन्मथमुत्पादितकामम् अत एव तदुपगूहनं द्वितीय सुरतस्यादौ बभूव। श्रमापनोदमन्मथोद्बोधाभ्यामुभयोपयोगादुभयार्थमभूत्, संयोगपृथक्त्वन्यायादित्यर्थः। अत्र मध्यवर्तिन उपगूढस्यैकस्य पूर्वोत्तर-सुरतशेषत्वेन विशेषणगत्या विश्रमार्थोदितमन्मथपदार्थयोर्हेतुत्वात्काव्यलिङ्ग-द्वयं तदङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ ८८ ॥

आस्तृत इति। अनारतमश्रान्तं रते सुरते अभिरताभ्य आसक्ताभ्यो वधूभ्यः क्षणमुत्सवसुखं ददातीति क्षणदा रात्रिस्तयाप्यभिनवैः पल्लवैः पुष्पैश्चा-स्तृते आच्छादितेऽपि, सुखशयनार्हेऽपीत्यर्थः। शेतेऽस्मिन्निति शयनीये तल्पे। 'कृत्यल्युटो बहुलम्' इत्यधिकरणेऽनीयर्। शयितुं शयनं कर्त्तुं क्षणोऽल्पकालोऽपि न दीयते स्म न दत्तः किन्त्वाप्रभातमरमयत्। क्षणदात्वा-देवेति भावः। क्षणदयापि क्षणो न दत्त इति विरोधस्योत्सवार्थत्वेन परि-हाराद्विरोधाभासोऽलङ्कारः। 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः ॥ ८९ ॥

योषितामिति। नखलूनं न खलु ऊनम्। नयत् ऊनां न यदूनां इति पदच्छेदः। अतितरामतिमात्रम्। अव्ययादामुप्रत्ययः। नखैर्लूनं क्षतं नखलूनम्। 'ल्वादिभ्यश्च' इति निष्ठानत्वम्। तथाप्युज्ज्वलतया औज्ज्वल्येन न ऊनं न न्यूनम्, किन्तु समग्रमेवेत्यर्थः। नखक्षतानां कामिनीगात्र-मण्डनत्वादिति भावः। अत एवाशु हृदयं प्रियचित्तं क्षोभं विकारं नयत्प्रा-पयत्। नयतेर्लटः शत्रादेशः। योषितां गात्रं यदूनां यादवानां रागवृद्धिमूनां न्यूनां नाकरोत् खलु, किन्तु भूयोऽपि समग्रमेवाकरोदित्यर्थः। अत्र यमकं शब्दालङ्कारः। औज्ज्वल्यस्य विशेषणगत्या रागवृद्धिहेतुत्वात्काव्यलिङ्गमर्था-लङ्कारः ॥ ९० ॥

इति मदमदनाभ्यां रागिणः स्पष्टरागा-
ननवरतरतश्रीसङ्गिनस्तानवेक्ष्य ।
अभजत परिवृत्तिं साथ पर्य्यस्तहस्ता
रजनिरवनतेन्दुर्लज्जयाधोमुखीव ॥९१॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये सुरतवर्णनं नाम दशमः सर्गः ॥ १० ॥

इतीति । इतीत्थं मदमदनाभ्यां स्पष्टरागान् सर्वदा रागित्वेऽपि तदा ताभ्यामपि व्यञ्जितरागानित्यर्थः । अनवरतरतश्रीसङ्गिनः अविच्छिन्नसुरतसम्पत्सम्पृक्तांस्तान् रागिणो रागिण्यश्च रागिणश्च तान् रागिणः 'पुमान् स्त्रिया' इत्येकशेषः । अवेक्ष्य अथावेक्षणानन्तरं पर्य्यस्तः परिवृत्तो हस्तो नक्षत्रविशेषः करश्च यस्याः सा । 'हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि' इत्युभयत्रापि विश्वः । अवनतेन्दुः अस्तचन्द्रा अतएव सा रजनिर्लज्जया । ग्राम्यचेष्टादर्शनजनितयेति भावः । अधोमुखी नम्रमुखीवेत्युत्प्रेक्षा । परिवृत्तिं निवृत्त्युन्मुखतामभजत, प्रभातप्रायाभूदित्यर्थः । स्त्रियो हि परकीयग्राम्यचेष्टादर्शने त्रपावनतमुख्यो हस्तेन दृष्टिमन्तर्धाय द्रागपसरन्तीति भावः । अत एवानन्तरसर्गे प्रभातवर्णनाय प्रस्तावः । मालिनीवृत्तमेतत् । लक्षणं तूक्तं वक्ष्यते चोत्तरसर्गादौ ॥ ९१ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवधमहाकाव्यव्याख्याने सर्वङ्कषाख्ये दशमः सर्गः ॥ १० ॥

———

## एकादशः सर्गः ।

श्रुतिसमधिकमुच्चैः पञ्चमम्पीडयन्तः
सततमृषभहीनम्भिन्नकीकृत्य षड्जम् ।
प्रणिजगदुरकाकुश्रावकस्निग्धकण्ठाः
परिणतिमिति रात्रेर्मागधा माधवाय ॥ १ ॥

अथ सुतं प्रभातवर्णनं प्रारभते—श्रुतीति । नास्ति काकुर्य्यस्येत्यकाकुर-विकृतध्वनिः । 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमरः । श्रावयतीति श्रावको दूरध्वनिः । स्निग्धो मधुरः कण्ठः स्वरो येषां ते अकाकु-श्रावकस्निग्धकण्ठाः, रक्तकण्ठा इत्यर्थः । मागधा वैतालिकाः । श्रुतयो नाम षड्जादिस्वरारम्भकावयवाः शब्दविशेषाः । तदुक्तम्—'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रिकः । सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणा ॥' इति । ताभिः श्रुतिभिः समधिकं बहुलं षड्जविशेषणं पञ्चमविशेषणं वा उभयोरपि तथात्वात् । तदुक्तम्—'चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः । द्वे द्वे निषाद-गान्धारौ त्रींस्त्रीनृषभधैवतौ ॥' इति षड्जो मयूरस्य कूजितानुकारी स्वर-विशेषः । 'षड्जं मयूरो वदति' इति लक्षणात् । तं षड्जो भिन्न एव भिन्न-कस्तं कृत्वा भिन्नकीकृत्य । तत्कालनिषिद्धस्वरासङ्कीर्णं कृत्वेत्यर्थः । पञ्चमो नाम कोकिलकूजितानुकारी स्वरविशेषः । 'पिकः कूजति पञ्चमम्' इति लक्षणात् । तं पञ्चमं पीडयन्तः । तत्कालनिषेधात्परित्यजन्त इत्यर्थः । सततं वीणादिवाद्ययुक्तम् । 'ततं वीणादिकं वाद्यम्' इत्यमरः । ऋषभोऽपि वृष-भनर्दितानुकारी स्वरभेद एव । 'षावस्त्वृषभभाषिणः' इति लक्षणात् । तेन हीनम् । तस्यापि तत्कालनिषिद्धत्वादित्यर्थः सततं ऋषभहीनं च यथा तथा रात्रेः परिणतिम्, परिवृत्तिमित्यर्थः । इति वक्ष्यमाणप्रकारेणोच्चैर्यथा तथा माधवाय कृष्णाय । क्रियाग्रहणात् सम्प्रदानत्वम् । प्रणिजगदुः गानेना-चख्युरित्यर्थः । 'नेर्गदनद' इत्यादिना णत्वम् । पञ्चमादिनिषेधे भरतः ।

रतिरभसविलासाभ्यासतान्तन्न याव-
न्नयनयुगममीलत्तावदेवाहतोऽसौ ।
रजनिविरतिशंसी कामिनीनां भविष्य-
द्विरहविहितनिद्राभङ्गमुच्चैर्मृदङ्गः ॥ २ ॥
स्फुटतरमुपरिष्टादल्पमूर्तेर्ध्रुवस्य
स्फुरति सुरमुनीनां मण्डलं व्यस्तमेतत् ।
शकटमिव महीयः शैशवे शार्ङ्गपाणे-
श्चपलचरणकाञ्चप्रेरणोत्तुङ्गिताग्रम् ॥ ३ ॥

'प्रभाते सुतरां निन्द्य ऋषभः पञ्चमोऽपि च । जनयेत् प्रथमं ह्युचा पञ्चमं पञ्चमोऽपि च । पञ्चमस्य विशेषोऽयं कथितः पूर्व्वसूरिभिः । प्रगे प्रगीतो जनयेद्गगनस्य विपर्य्ययम्' । इति । वृत्त्यनुप्रासोऽलङ्कारः । अस्मिन् सर्गे मालिनी वृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥१॥

अथ पूर्व्वश्लोके इतिशब्दपरामृष्टानपररात्रप्रभृत्युत्तरोत्तरक्रमभाविनः प्रभातवृत्तान्तानासर्गसमाप्ति वर्णयन्नाह—रतीति । रतिरभसविलासानां सुरतसम्भ्रमलीलानामभ्यासेनावर्त्तनेन, तान्तं क्लान्तं नयनयुगं कर्त्तृ, कामिनीनामिति शेषः । यावन्नामीलन्न मुकुलीभवति तावदेवासौ, रजनिविरतिशंसी निशावसानसूचक उच्चैर्मृदङ्गः, कामिनीनां भविष्यता उत्तरक्षणभाविना विरहेण, विहितः कृतो निद्राभङ्गो यस्मिन् कर्म्मणि तद्यथा तथा आहतस्ताडितः । अत्र विरहशब्देन सामर्थ्यात्तच्चिन्ता लक्ष्यते । अन्यथा असतः साम्प्रतिकनिद्राभङ्गहेतुत्वायोगादिति । अत्र रतितान्तत्वरजनिविरतिशंसनयोर्विशेषणगत्या, नेत्रनिमीलननिद्राभङ्गहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं ॥ २ ॥

स्फुटेति । अल्पमूर्त्तेर्दूरत्वात् सूक्ष्मविम्बस्य ध्रुवस्यौत्तानपादेः । 'ध्रुव औत्तानपादिः स्यात्' इत्यमरः । उपरिष्टात् स्फुटतरमुज्ज्वलतरं व्यस्तं पर्य्यस्तमेतत् सुरमुनीनां सप्तर्षीणां मण्डलं शार्ङ्गपाणेः केशवस्य कृष्णस्य तवेत्यर्थः । शैशवे प्रचलितस्य चपलस्य चरणकाञ्चस्याल्पचरणारविन्दस्य ।

प्रहरकमपनीय स्वं निदिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति ।
मुहुरविशदवर्णां निद्रया शून्यशून्यां
ददद्पि गिरमन्तर्बुध्यते नो मनुष्यः ॥ ४ ॥
विपुलतरनितम्बाभोगरुद्धे रमण्याः
शयितुमनधिगच्छन् जीवितेशोऽवकाशम् ।
रतिपरिचयनश्यन्नैद्रतन्द्रः कथञ्चिद्
गमयति शयनीये शर्वरी किङ्करोतु ॥ ५ ॥

'अल्पे' इत्यल्पार्थे कन् प्रत्ययः। प्रेरणया नोदनेनोत्तुङ्गितमुत्तुङ्गीकृतमग्रं यस्य तत्, विपर्य्यासिताग्रमित्यर्थः, महीयो महत्तरं शकटमिव शकटाकारं शकटासुरशरीरमिव स्फुरति दीप्यते। उपमालङ्कारः। पुरा किल बाल्ये कृष्णः शकटरूपधारिणं शकटासुरं पादघातेन पातयामासेति पौराणिकी कथात्रानुसन्धेया ॥ ३ ॥

प्रहरकमिति। स्वं स्वकीयम्, स्वपाल्यमित्यर्थः। प्रहर एव प्रहरको यामः। 'द्वौ यामप्रहरौ समौ' इत्यमरः। तमपनीय नीत्वा निदिद्रासता निद्रातुमिच्छता। निद्रातेः सन्नन्ताल्लटः शत्रादेशः। केनचिदतीतप्रहरपालेनेत्यर्थः। जागृहि प्रबुध्यस्वेति प्रतिपदं पदे पदे उच्चैरुपहूतो मनुष्योऽनन्तरयामिको मुहुर्निद्रया अविशदवर्णामस्पष्टाक्षरामत एव शून्यशून्यां शून्यप्रकाराम्, अनर्थप्रायामित्यर्थः। 'प्रकारे गुणवचनस्य' इति द्विर्भावः 'कर्म्मधारयवदुत्तरेषु' इति कर्म्मधारयवद्भावादवयवसुपो लुक्। गिरमयमहं जागर्मीति प्रतिवाचं दददपि प्रयच्छन्नपि। 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः। अन्तरन्तःकरणे नो बुध्यते न जागर्त्ति। बुध्यतेर्दैवादिकात् कर्त्तरि लट्। अत्राप्रबोधप्रतिवचनदानयोर्विरोधे अपिशब्दः। निद्राह्वानाभ्यां तत्समाधानाद्विरोधाभासोऽलङ्कारः ॥ ४ ॥

विपुलेति। रमण्या विपुलतरस्य नितम्बस्याभोगेन विस्तारेण रुद्धे

क्षणशयितविबुद्धाः कल्पयन्तः प्रयोगान्
उदधिमहति राज्ये काव्यवद्दुर्विगाहे ।
गहनमपररात्रप्राप्तबुद्धिप्रसादाः
कवय इव महीपाश्चिन्तयन्त्यर्थजातम् ॥ ६ ॥

आक्रान्ते शयनीये शयितुमवकाशमनधिगच्छन् अलभमानो जीवितेशः प्रेयान् रतिपरिचयेन पुनःपुनः सुरतावृत्त्या नश्यन्ती निवर्त्तमाना, निद्राया इयं नैद्री निद्राप्रयुक्ता तन्द्रा आलस्यं यस्य स तथाभूतः सन् शर्वरीं कथञ्चिद्गमयति कृच्छ्रेण नयति । किं करोतु किमन्यत् कुर्य्यात् । शयनानवकाशे सुरतमेव कालयापनोपाय इति तत्रैव प्रवृत्त इति भावः । अत्र शयनीयस्येदृग्रोधा-सम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः । तादृग्रोधस्य विशेषणगत्या शयनावकाशानधिगमहेतुत्वात् काव्यलिङ्गभेद इति सङ्करः ॥ ५ ॥

क्षणेति । क्षणं शयिताः सुरतश्रमापनोदाय विषुप्ता विबुद्धाः तदैव प्रबुद्धाः, यथाकालं प्रबुद्धत्वादिति भावः । क्षणशयितविबुद्धाः । स्नातानु-लिप्तवत् 'पूर्वकाल'—इति समासः । महीपाः कवय इव अपररात्रे, रात्रेः पश्चिमयाम इत्यर्थः । 'पूर्वापर'—इत्यादिना एकदेशिसमासे समासान्तोऽच् । 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम् । तत्र प्राप्तबुद्धिप्रसादा लब्धबुद्धिप्रकाशाः सन्तः उदधिमहति समुद्रगम्भीरे । एकत्र तुरगादिभिरपरत्र रसभावादिभि-श्चेति भावः । अत एव दुर्विगाहे दुष्प्रवेशे राज्ये काव्ये इव काव्यवत् । 'तत्र तस्येव' इति वतिप्रत्ययः । प्रयोगान् सामाद्युपायानुष्ठानानि, अन्यत्रार्थगुण-साधुशब्दगुम्फान् कल्पयन्तस्तर्कयन्तः । 'ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेदात्मनो हितम्' इति स्मरणादिति भावः । गहनं दुष्प्रापमन्यत्र दुर्दर्शमर्थजातं पुरु-षार्थजातम्, त्रिवर्गमित्यर्थः । अन्यत्र वाच्यलक्ष्यव्यङ्ग्यरूपमभिधेयजातं चिन्तयन्ति विचारयन्ति । इवशब्दस्योपलक्षणत्वात् काव्यवदिति वतिप्रत्यये-ऽप्यनेकशब्दार्थगता श्रौती पूर्णा वाक्यार्थोपमा काव्यवदिति तद्धितगता, कवय इति समासगता चेति सङ्कीर्णा ॥ ६ ॥

क्षितितटशयनान्तादुत्थितं दानपङ्क-
प्लुतबहुलशरीरं शाययत्येष भूयः ।
मृदुचलदपरान्तोदीरितान्दूनिनादं
गजपतिमधिरोहः पक्षकव्यत्ययेन ॥ ७ ॥
द्रुततरकरदक्षाः क्षिप्तवैशाखशैले
दधति दधनि धीरानारवान् वारिणीव ।
शशिनमिव सुरौघाः सारमुद्धर्त्तुमेते
कलशिमुदधिगुर्वीं वल्लवा लोडयन्ति ॥ ८ ॥

क्षितीति । क्षितितटं भूतलमेव शयनान्तः शयनस्थानं तस्मादुत्थितम्, सुप्तोत्थितमित्यर्थः । अत एव दानपङ्कप्लुतबहुलशरीरं मदकर्दमोक्षितमहाकायं गजपतिमेषोऽधिरोहतीत्यधिरोह आरोहणः । पचाद्यच् । मृदु मन्दं चलता अपरान्तेन पश्चिमपादेनोदीरित उत्पादितोऽन्दूनिनादः शृङ्खलारवो यस्मिन् कर्म्मणि तद्यथा तथा पक्ष एव पक्षकः पार्श्वः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती । तस्य व्यत्ययेन, पार्श्वान्तरेणेत्यर्थः । भूयः शाययति शयनं कारयति । 'गतिबुद्धि'—इत्यादिना अणि कर्त्तुः कर्म्मत्वम् । स्वभावोक्तिरलङ्कारः ॥ ७ ॥

द्रुतेति । द्रुततरकरा अतिलघुहस्तास्ते च ते दक्षाश्च वल्लवा गोपालाः । 'आभीरः स्यान्महाशूद्रो गोपालो वल्लवस्तथा' इति वैजयन्ती । विशाखा प्रयोजनमस्येति वैशाखो मन्थनदण्डः । 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डकें' इत्यमरः । 'विशाखाषाढादण् मन्थदण्डयोः' इत्यण्प्रत्ययः । वैशाखः शैल इवेत्युपमितसमासः । साहचर्य्यात्क्षिप्तो वैशाखशैलो यस्मिन् । धीरान् गम्भीरानारवान् दधति दधनि दध्नि । 'विभाषा ङिश्योः' इति विकल्पादल्लोपाभावः । वारिणीव सुरौघाः शशिनमिव सारं नवनीतमुद्धर्तुमुत्क्रष्टुमुदधिरिव गुर्वीम् । 'उपमानानि सामान्यवचनैः' इति समासः । तां कलशिं कुम्भीम् एते लोडयन्ति मथ्नन्ति । एषापि पूर्वतरवत् पूर्णा वाक्यार्थोपमा वाक्यसमाससङ्कीर्णा च ॥ ८ ॥

अनुनयमगृहीत्वा व्याजसुप्ता पराची
रुतमथ कृकवाकोस्तारमाकर्ण्य कल्ये ।
कथमपि परिवृत्ता निद्रयान्धा किल स्त्री
मुकुलितनयनैवाश्लिष्यति प्राणनाथम् ॥ ९ ॥

गतमनुगतवीणैरेकतां वेणुनादैः
कलमविकलतालं गायकैर्बोधहेतोः ।
असकृदनवगीतं गीतमाकर्णयन्तः
सुखमुकुलितनेत्रा यान्ति निद्रां नरेन्द्राः ॥१०॥

अनुनयमिति । अनुनयं प्रियप्रार्थनामगृहीत्वा नाङ्गीकृत्य पराची पराङ्मुखी व्याजेन कपटेन सुप्ता स्त्री । अथ कल्ये प्रभाते । 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्यमरः । कृकवाकोः कुक्कुटस्य । 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः' इत्यमरः । 'कृके वचः कुक्च' इत्युणप्रत्ययः । तारमुच्चैः रुतं कूजितमाकर्ण्य कथमपि गात्रजृम्भणादिव्याजेन परिवृत्ता सम्मुखीभूता निद्रयान्धा किल अजानतीव मुकुलितनयनैव मीलिताक्षी सत्येव प्राणनाथमाश्लिष्यति । एषा कलहान्तरिता ॥ ९ ॥

गतमिति । अनुगतवीणैरनु सृतवीणैर्वीणासम्वादिभिर्वेणुनादैर्वंशस्वरैः एकतामेकरूपतां गतं कलमव्यक्तमधुरं अविकलोऽविसम्वादी तालः कांस्यादितालो यस्य तत् बोध एव हेतुस्तस्य बोधहेतोः बोधकारणेन, बोधनार्थमित्यर्थः । फलस्यापि कारणत्वमिच्छाद्वारा स्वर्गादिवत् फलरागस्य तत्साधनप्रवृत्तिहेतुत्वात् षष्ठी । गायकैर्वैतालिकैरनवगीतमगर्हितम् । 'अवगीतं तु निर्वादे मुहुर्दृष्टेऽपि गर्हिते' इति विश्वः । गीतं गीयमानं वस्तु आवृत्तिर्वा । गीतशब्दस्य गीतं गानं समाकर्णयन्तो नरेन्द्राः सुखेन गानसुखेन मुकुलितनेत्रा निमीलिताक्षाः सन्तो निद्रां यान्ति भजन्ति । वृत्त्यनुप्रासोऽलङ्कारः ॥ १० ॥

परिशिथिलितकर्णग्रीवमामीलिताक्षः
क्षणमयमनुभूय स्वप्नमूर्द्धज्ञुरेव ।
रिरसयिषति भूयः शष्पमग्रे विकीर्णं
पटुतरचपलौष्ठः प्रस्फुरत्प्रोथमश्वः ॥ ११ ॥
उदयमुदितदीप्तिर्याति यः सङ्गतौ मे
पतति न वरमिन्दुः सोऽपरामेष गत्वा ।
स्मितरुचिरिव सद्यः साभ्यसूयं प्रभेति
स्फुरति विशदमेषा पूर्व्वकाष्ठाङ्गनायाः ॥१२॥

परीति । अयमश्वः परिशिथिलितं स्रस्तमुक्तं कर्णग्रीवं कर्णौ च ग्रीवा च यस्मिन् कर्म्मणि तद्यथा तथा आमीलिताक्षः ऊर्द्ध्वे जानुनी यस्य स ऊर्द्ध्वज्ञुः, ऊर्द्ध्वजानुस्तिष्ठन्नित्यर्थः । 'ऊर्द्ध्वज्ञुरूर्द्ध्वजानुः स्यात्' इत्यमरः । 'ऊर्द्ध्वाद्विभाषा' इति जानुशब्दस्य ज्ञुरादेशः । क्षणं स्वप्नं निद्रामनुभूय । उत्तमाश्वलक्षणमेतत् । भूयः पुनरपि पटुतरौ ग्रासग्रहणसमर्थौ चपलौ चञ्चलौ चोष्ठौ यस्य स सन् प्रस्फुरत् प्रोथं प्रस्फुरमाणघोणं यथा तथा । 'घोणा तु प्रोथमस्त्रियाम्' इत्यमरः । अग्रे विकीर्णं क्षिप्तं शष्पं घासम् । 'शष्पं बालतृणं घासः' इत्यमरः । रिरसयिषति रसयितुमास्वादयितुमिच्छति । रसयतेः सन्नन्ताल्लट् । स्वभावोक्तिरलङ्कारः । 'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' ॥ ११ ॥

उपदयमिति । य इन्दुः मे मम सङ्गतावुदितदीप्तिः प्रवृद्धद्युतिः सन् उदयमुदयाद्रिम्, अभ्युदयं च याति, स इन्दुरेषोऽपरां पश्चिमाशां पराङ्गनां च गत्वा पतत्यस्तमेति, पातित्यं च गच्छति, न वरमनर्हमित्यर्थः । इति सद्यः साभ्यसूयं यथा तथा पूर्वकाष्ठा प्राची सैवाङ्गना, पूर्वनायिका च गम्यते । तस्याः स्मितरुचिर्म्मन्दहासकान्तिरिवैषा प्रभा विशदं निर्म्मलं स्फुरति प्रकाशते, प्राच्यामीषद्विशदा प्रभा प्रादुरभूदित्यर्थः । अत्र प्राचीगतप्राभातिकप्रभायामिन्दोः पराङ्गनासङ्गपातित्यनिमित्ता चेतनधर्म्मस्मितरुचित्वोत्प्रेक्षा पूर्व्वकाष्ठाङ्गनाया इति रूढ़िव्यूढ़ेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ १२ ॥

चिररतिपरिखेदप्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्व्वमेव प्रबुद्धाः।
अपरिचलितगात्राः कुर्वते न प्रियाणा-
मशिथिलभुजचक्राश्लेषभेदं तरुण्यः॥१३॥
कृतधवलिमभेदैः कुङ्कुमेनेव किञ्चि-
न्मलयरुहरजोभिर्भूषयन् पश्चिमाशाम्।
हिमरुचिररुणिम्ना राजते रज्यमानै-
र्जरठकमलकन्दच्छेदगौरैर्मयूखैः॥ १४॥

चिरेति। चरममपि शयित्वा पश्चात् सुप्तापि पूर्व्वमेव प्रबुद्धाः। 'सुप्ते पश्चाच्च या शेते पूर्व्वमेव प्रबुध्यते। नान्यं कामयते चित्ते सा स्त्री ज्ञेया पतिव्रता'। इति स्मरणादिति भावः। तथापि तरुण्योऽपरिचलितगात्रा अस्पन्दवपुष्काः सत्यः चिररतिपरिखेदेन प्राप्तनिद्रासुखानां प्रियाणामशिथिलो गाढ़ो यो भुजचक्रेण परस्परभुजवलयेनाश्लेषस्तस्य भेदं विश्लेषं विस्रंसनं न कुर्व्वते किन्त्वाश्लिष्यैव स्थिताः, अन्यथा तन्निद्राभङ्गः स्यात्। शयानं न प्रबोधयेदिति निषेधास्कन्दनभयादिति भावः। रतिश्रमोऽत्र सञ्चारी तदनुभावो निद्रा॥ १३॥

कृतेति। हिमरुचिश्चन्द्रः अरुणिम्नास्तमयरागेण हेतुना रज्यमानैर्लोहितायमानैः। रञ्जेर्दैवादिकात् कर्त्तरि शानच् 'अनिदिताम्'—इति नलोपः। 'त्रीणि रज्यति राजति लोहितायति चात्मन' इति भट्टमल्लः। जरठस्य परिणतस्य कमलकन्दस्य छेदा इव गौराः शुभ्राः। छेदग्रहणं धावल्यार्थम्। 'गौरः पीते सितेऽरुणः' इति विश्वः। तैर्मयूखैः कुङ्कुमेन किञ्चित् कृतो धवलिमभेदो धावल्यभङ्गो येषां तैरीषद्रक्तस्वधावल्यैः मलयरुहरजोभिश्चन्दनरेणुभिरिव पश्चिमाशां प्रेयसीमिवेति भावः। भूषयन् राजते। उपमालङ्कारः॥ १४॥

दधदसकलमेकं खण्डितामानमद्भिः
श्रियमपरमपूर्णामुच्छ्वसद्भिः पलाशैः ।
कलरवमुपगीते षट्पदौघेन धत्तः
कुमुदकमलषण्डे तुल्यरूपामवस्थाम् ॥ १५ ॥
मदरुचिमरुणेनोद्गच्छता लम्भितस्य
त्यजत इव चिराय स्थायिनीमाशु लज्जाम् ।
वसनमिव मुखस्य स्रंसते सम्प्रतीदं
सितकरकरजालं वासवाशायुवत्याः ॥ १६ ॥

दधदिति । एकं कुमुदषण्डम् आनमद्भिर्मुकुलीभवद्भिः पलाशैर्दलैरसकलमर्धं खण्डिताम्, क्षीयमाणामित्यर्थः । श्रियं दधत् अपरं कमलषण्डमुच्छ्वसद्भिर्विकसद्भिः पलाशैरपूर्णां वर्धमानां श्रियं दधत् । षट्पदौघेन कलरवं यथा तथा उपगीते, उभे अपीत्यर्थः । कुमुदकमलषण्डे कुमुदानां कमलानाञ्च षण्डे कदम्बे । 'कदम्बे षण्डमस्त्रियाम्' इत्यमरः । तुल्यरूपामवस्थां धत्तः दधाते । अत्र क्षयवृद्ध्योरर्थप्रवृत्तेरैकरूप्ये कस्य क्षयः कस्य वा वृद्धिरिति दुर्ग्रहमिति भावः । अत्रोभयविशेषणानां तुल्यावस्थाधारणहेतुकत्वात् काव्यलिङ्गम् । तेन द्वयोः क्रमेणोपमानोपमेयभावरूपोपमेयोपमा व्यज्यते ॥ १५ ॥

मदेति । सम्प्रति सितकरस्येन्दोरिदं करजालं कर्तृ उद्गच्छता उद्यता अरुणेनानूरुणा मदरुचिं तत्तुल्यां रुचिम्, अरुणिमानमित्यर्थः । अतएव निदर्शनालङ्कारः । लम्भितस्य प्रापितस्य, लभेर्ण्यन्तात् कर्म्मणि क्तः । 'लभेश्चलिटोः' इति नुमागमः । अतएव चिराय स्थायिनीं लज्जामाशु त्यजत इव । मुखप्रकाशनादियमुत्प्रेक्षा । वासवाशा प्राची तस्या एव युवत्या मुखस्य प्राग्भागस्याननस्य च वसनमिवावगुण्ठनपट इव स्रंसते गलति । रक्ताः स्त्रियः पाटलमुखा निर्लज्जाः स्रस्तवस्त्राश्च भवन्तीति भावः । अत्र मुखस्येति प्राग्भागवदनयोरभेदाध्यवसायाच्छ्लेषमूलातिशयोक्तिः तया पूर्व्वोक्तनिदर्शनोत्प्रेक्षाभ्यां चानुगृहीता वसनमिवेत्युत्प्रेक्षेति सङ्करः ॥ १६ ॥

अविरतरतलीलायासजातश्रमाणा
मुपशममुपयान्तं निःसहेऽङ्गेऽङ्गनानाम् ।
पुनरुषसि विविक्तैर्मातरिश्वावचूर्णा
ज्वलयति मदनाग्निं मालतीनां रजोभिः ॥ १७ ॥
अनिमिषमविरामा रागिणां सर्वरात्रं
नवनिधुवनलीलाः कौतुकेनातिवीक्ष्य ।
इदमुदवसितानामस्फुटालोकसम्प-
न्नयनमिव सनिद्रं घूर्णते दैपमर्चिः ॥ १८ ॥

अविरतेति । अविरतरतलीलायासेन अविच्छिन्नसुरतक्रीड़ाप्रयासेन । जातश्रमाणामङ्गनानां सम्बन्धिनि निःसहत इति निःसहेऽक्षमे पचाद्यच् । अङ्गे उपशममुपयान्तं शाम्यन्तं मदन एवाग्निस्तं पुनरुषसि मातर्य्यन्तरीक्षे श्वयति वर्द्धत इति मातरिश्वा । 'श्वन्नुक्षन्'—इत्यादिना औणादिको निपातः । विविक्तैरमलैरनार्द्रैश्च मालतीनां जातीकुसुमानाम् । 'सुमना मालती जातिः' इत्यमरः । रजोभिः परागैः, करीषैरिवेति भावः । अवचूर्णावध्वस्य, संधुक्ष्येति भावः । ज्वलयत्युद्दीपयति । प्राभातिकमालती-वातस्पर्शात् पुनरुद्बुद्धो मदन इत्यर्थः ॥ १७ ॥

अनिमिषमिति । इदं पुरोवर्त्ति अस्फुटा सूर्य्यतेजोऽभिभवात् मन्दायमाना आलोकसम्पत् प्रकाशसम्पत्तिर्यस्य तत्, अन्यत्र निद्राभिभवादनुद्बुद्धविषयाव-धानशक्तिकं, दीपस्येदं दैपमर्च्चिर्ज्वाला । 'ज्वालाभासोर्नपुंस्यर्च्चिः' इत्यमरः । सर्व्वस्यां रात्राविति सर्वरात्रम् । 'पूर्व्वकाल'—इत्यादिना समासः । 'अहः सर्व्व'—इत्यादिना समासान्तः, 'रात्राह्नाहाः पुंसि' इति पुंलिङ्गता । अत्यन्त-संयोगे द्वितीया । अविरामा अविच्छिन्नाः रागिणां कामिनां, कामिनी-नाञ्च । 'पुमान् स्त्रिया' इत्येकशेषः । नवा निधुवनलीलाः सुरतविलासान् । 'व्यवायो ग्राम्यधर्म्मश्च रतं निधुवनञ्च सः' इत्यमरः । कौतुकेन न निमिष-तीत्यनिमिषं यथा तथा । पचाद्यच् कुटादित्वान्न गुणः । अतिवीक्ष्य अत एव सनिद्रमुदवसितानां गृहाणां सम्बन्धि । 'गृहं गेहोदवसितं वेश्म सद्म निकेतनम्' इत्यमरः । नयनमिवेत्युत्प्रेक्षा । घूर्णते भ्रमति ॥ १८ ॥

विकचकमलगन्धैरन्धयन् भृङ्गमालाः
सुरभितमकरन्दं मन्दमावाति वातः।
प्रमदमदनमाद्यद्यौवनोद्दामरामा
रमणरभसखेदस्वेदविच्छेददक्षः॥ १९॥

लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा
रजनय इव निद्राक्लान्तनीलोत्पलाक्ष्यः।
तिमिरमिव दधानाः स्रंसिनः केशपाशा-
नवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः॥ २०॥

विकचेति। प्रमदमदनाभ्यां हर्षमन्मथाभ्यां माद्यन्तीनां यौवनेनोद्दामानाञ्च रामाणां स्त्रीणां रमणरभसखेदेन सुरतसंरम्भश्रमेण यः स्वेदस्तस्य छेदे हरणे दक्षो वातः प्रभातमारुतः विकचकमलगन्धैर्भृङ्गमाला। अन्धयन्नन्धाः कुर्वन् मोहयन्। अन्धयतेः 'तत्करोति' इति ण्यन्ताल्लटः शत्रादेशः। सुरभितः सुरभीकृतो मकरन्दो यस्मिन् कर्म्मणि तद्यथा तथा मन्दमावाति प्रचलति। अत्र वृत्त्यनुप्रासोऽलङ्कारः। 'श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता। अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधयः॥' इति आचार्य्योक्ता दश गुणाः प्रायेणात्र सम्भवन्तीति निपुणैरूनेयाः॥ १९॥

लुलितेति। लुलितनयनताराः निद्राकलुषिताक्षिकनीनिकाः अन्यत्राप्रसन्नचन्द्राः। 'नक्षत्राक्षिमध्ययोस्तारा' इति विश्वः। वक्त्राणीन्दुबिम्बानीवेत्युपमितसमासः। तिमिरमिवेत्यादिलिङ्गात्, अन्यत्र वक्त्राणीवेन्दुबिम्बानि तानि क्षामाणि सुरतप्रभाताभ्यां म्लानानि यासां ताः निद्रया स्वप्नेन मुकुलीभावेन क्लान्तानि नीलोत्पलानि अक्षीणीव नीलोत्पलानीवाक्षीणि यासां ताः स्रंसिनः केशपाशांस्तिमिरमिवान्यत्र तु तानिव तिमिरं दधानाः अत एव रजनय इव स्थिताः, अमूर्वारवध्वो वेश्याः। 'वारस्त्री गणिका वेश्या' इत्यमरः। अवनिपतिगृहेभ्यो यान्ति निर्यान्ति। श्लिष्टविशेषणेयमुपमेत्येके। श्लेष एवायमुभयत्रिषयः। उपमा तु प्रतिभामात्रसारा इत्यन्ये॥ २०॥

शिशिरकिरणकान्तं वासरान्तेभिसार्य्य
श्वसनसुरभिगन्धिः साम्प्रतं सत्वरेव ।
व्रजति रजनिरेषा तन्मयूखाङ्गरागैः
परिमिलितमनिन्द्यैरम्बरान्तं वहन्ती ॥ २१ ॥

नवकुमुदवनश्रीहासकेलिप्रसङ्गा-
दधिकरुचिरशेषामप्युषाञ्जागरित्वा ।
अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः
शिशयिषुरिव पाण्डुं म्लानमात्मानमिन्दुः ॥ २२ ॥

शिशिरेति । एषा रजनिर्वासरान्ते रात्री शिशिरकिरणश्चन्द्रस्तमेव कान्तमभिसार्य्याभिसृत्य । स्वार्थे णिच् । साम्प्रतं श्वसनैस्तत्कालवातैर्निश्वासैश्च सुरभिगन्धिः सुगन्धिः अनिन्द्यैर्मनोहरैर्मयूखैरेवाङ्गरागैः परिमलितं व्याप्तं वासितं चाम्बरान्तं नभःप्रान्तं वस्त्रान्तञ्च वहन्ती भजन्ती सत्वरेव व्रजति । अत्रेन्दुतन्मयूखादीनां कान्तत्वाङ्गरागत्वादिरूपणावगमादेकदेशविवर्ति रूपकम् ॥२१॥

नवेति । अधिकरुचिः अयमिन्दुर्नवकुमुदवनश्रियो विकासः परिहासश्च स एव केलिस्तस्यां प्रसङ्गादासङ्गादशेषामप्युषां सकलामपि रात्रिम् । 'विभावरी नक्तमुषा शर्वरी' इति विश्वः । अत्यन्तसंयोगे द्वितीया । जागरित्वा जागरणं कृत्वा शिशयिषुः शयितुमिच्छुरिव । शेतेः सन्नन्तादुप्रत्ययः । स्रस्तो हस्तो नक्षत्रविशेषः, करश्च यस्य स सन् अपरदिशः पश्चिमदिशोऽङ्के समीपे, उत्सङ्गे च पाण्डुं पाण्डुवर्णं म्लानं क्लान्तमात्मानं स्वशरीरं मुञ्चति, दक्षिणनायकः कयाचित् सह विहृत्य श्रान्तः कस्याश्चिदङ्के शेते तद्वदिति भावः । अत्र प्रस्तुतेन्द्वादिविशेषणविशेषणसाम्यात् नायकत्वप्रतीतेः समासोक्तिरलङ्कारः । विशेषणसाम्यं तूपलक्षणमित्यलङ्कारसर्वस्वकारः । सा चोत्प्रेक्षासङ्कीर्णा ॥ २२ ॥

सरभसपरिरम्भारम्भसंरम्भभाजा
यदधिनिशमपास्तं वल्लभेनाङ्गनायाः ।
वसनमपि निशान्ते नेष्यते तत् प्रदातुं
रथचरणविशालश्रोणिलोलेक्षणेन ॥ २३ ॥
सपदि कुमुदिनीभिर्मीलितं हा क्षपापि
क्षयमगमदपेतास्तारकास्ताः समस्ताः ।
इति दयितकलत्रश्चिन्तयन्नङ्गमिन्दु-
र्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥ २४ ॥
व्रजति विषयमक्ष्णामंशुमाली न यावत्
तिमिरमखिलमस्तं तावदेवारुणेन ।
परपरिभवि तेजस्तन्वतामाशु कर्तुं
प्रभवति हि विपक्षोच्छेदमग्रेसरोऽपि ॥ २५ ॥

सरभसेति । अधिनिशं निशायाम्, विभक्त्यर्थेऽव्ययीभावः । सरभसः सत्वरः परिरम्भ एवारम्भो व्यापारस्तत्र संरम्भस्तद्भाजा वल्लभेनाङ्गनायाः सम्बन्धि यद्वसनमपास्तं तद्वसनं निशान्ते प्रभातेऽपि रथचरणं चक्रं तद्वद्विशालायां श्रोणौ लोलं सतृष्णमीक्षणं यस्य तेन वल्लभेन प्रदातुं नेष्यते । अत्र वसनाप्रतिदानस्य श्रोणीक्षणलौल्यहेतुकत्वात् काव्यलिङ्गम् ॥ २३ ॥

सपदीति । सपदि सद्यः कुमुदिनीभिर्मीलितम् । भावे क्तः । हा हन्त क्षपा रात्रिरपि क्षयमगमत् । ताः समस्तास्तारका अपेता इति शुचा शोकेन चिन्तयन्निव दयितकलत्रः प्रियभार्य्य इन्दुः कृशमशेषं निःशेषं यथा तथा भ्रष्टशोभं नष्टप्रभमङ्गं वहति । कलत्रप्रियस्य युगपत् सकलकलत्रनाशे महान् शोको भवतीति भावः । अत्रेन्दोः प्रभातप्रयुक्ताङ्गकार्श्यशोभाभ्रंशयोर्युगपत् कुमुदिन्यादिसकलकलत्रनाशनिमित्तहेतुकत्वमुत्प्रेक्ष्यते ॥ २४ ॥

व्रजतीति । अंशुमाली सूर्यः, व्रीह्यादित्वादिनिप्रत्ययः । यावदक्ष्णां विषयं भूमिं न व्रजति, न दृश्यत इत्यर्थः । तावदेवारुणेन अनूरुणा अखिलं

विगततिमिरपङ्कम्पश्यति व्योम यावत्
धुवति विरहखिन्नः पक्षती यावदेव ।
रथचरणसमाह्वस्तावदौत्सुक्यनुन्ना
सरिदपरतटान्तादागता चक्रवाकी ॥ २६ ॥
मुदितयुवमनस्कास्तुल्यमेव प्रदोषे
रुचमदधुरुभय्यः कल्पिता भूषिताश्च ।
परिमलरुचिराभिर्नाकृतास्तु प्रभाते
युवतिभिरुपभोगान्नीरुचः पुष्पमालाः ॥ २७ ॥

तिमिरमस्तमपास्तं परेषां परिभवि तिरस्कारकम् । जिदृक्षीत्यादिना इनिप्रत्ययः । तेजः प्रतापं तन्वतां प्रथयताम् अग्रे सरतीत्यग्रेसरः पुरःसरोऽपि । 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टप्रत्ययः । विपक्षस्य शत्रोरुच्छेदं कर्त्तुमाशु प्रभवति शक्नोति हि । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २५ ॥

विगतेति । विरहेण खिन्नः रथचरणेन चक्रेण समाह्वस्तुल्याख्यः, तस्यैव समाह्वा समाख्या यस्येति वा रथचरणसमाह्वः, चक्रवाक इत्यर्थः । 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' इत्यमरः । तिमिरं पङ्कमिवेत्युपमितसमासः । तद्विगतं यस्मात् तद्व्योम यावत् पश्यति, यावदेव पक्षती पक्षमूले, 'स्त्री पक्षतिः पक्षमूलम्' इत्यमरः । 'पक्षात्तिः' इति तिप्रत्ययः । धुवति उत्पतितुं धुनोति, 'धू विधूनने' इति धातोस्तौदादिकत्वादुवङादेशः । तावदेवोत्पतनात् प्रागेव चक्रवाकी चक्रवाकस्य स्त्री, 'जातेरस्त्रीविषयादयोपधात्' इति ङीप् । औत्सुक्येनोत्कण्ठया नुन्ना प्रेरिता सती सरितोऽपरतटान्तात् परभूमेः सकाशादागता । एतेनानयोरेकमनस्कता समश्चानुराग इत्युक्तम् । अत्र रागौत्सुक्ययोरसभावयोस्तिर्यग्गतत्वेनाभासयोर्निबन्धनादूर्जस्वीनामालङ्कारः । 'रसभावतदाभासप्रशमानां निबन्धने । रसवत् प्रेय ऊर्जस्विसमाहितानि' इति लक्षणात् ॥ २६ ॥

मुदितेति । प्रदोषे रात्रौ मुदितानि यूनां मनांसि याभिस्ताः मुदितयुवमनस्काः । 'उरःप्रभृतिभ्यः कप्' । कल्पिता उपभोगाय सम्पादिता भूषिता

विलुलितकमलौघः कीर्णवल्लीवितानः
प्रतिवनमवधूताशेषशाखिप्रसूनः ।
क्वचिदयमनवस्थः स्थास्नुतामेति वायु-
र्वधुकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु ॥ २८ ॥

नखपदवलिनाभीसन्धिभागेषु लक्ष्यः
क्षतिषु च दशनानामङ्गनायाः सशेषः ।
अपि रहसि कृतानां वाग्विहीनोऽपि जातः
सुरतविलसितानां वर्णको वर्णकोऽसौ ॥ २९ ॥

वलयवसनादिभिरुपस्कृताश्च उभय्य उभयविधा युवतयः पुष्पमालाश्च । 'उभादुदात्तो नित्यम्' इति उभस्यायजादेशः 'टिड्ढाणञ्' इत्यादिना ङीप् । तुल्यमेवाविशेषं यथा तथा रुचं शोभामदधुर्धृतवत्यः । धाञो लिट् । प्रभाते तूपभोगान्नीरुचो निष्प्रभाः पुष्पमालाः परिमलेन विमर्दगन्धेन रुचिराभिरुपभोगादधिसुरभिभिर्युवतिभिर्व्यक्तास्त्यक्ता अवधीरिताश्च । अत्र पुष्पमालाभ्यो युवतीनां साम्योक्तिपूर्व्वकविमर्दसहत्वेनाधिक्योक्तेर्व्यतिरेकः ॥ २७ ॥

विलुलितेति । वने वने प्रतिवनम् । याथार्थ्येऽव्ययीभावः । विलुलिता व्यालोलिताः कमलौघा येन सः कीर्णा विक्षिप्ता वल्लीनां मालत्यादीनां वितानाः विस्तारा येन सः अवधूतान्यशेषशाखिनां वकुलचम्पकादीनां प्रसूनानि येन सः तथापि क्वचित् पूर्वोक्तकमलवनादौ कुत्रापि नास्त्यवस्था स्थितिरस्येत्यनवस्थः स्थितिमप्राप्तोऽयं वायुर्वधूनां कुसुमानाञ्च विमर्देन सङ्घर्षेणोद्गन्धिषूद्गतगन्धेषु । गन्धस्येत्वम् । वेश्मान्तरेषु गृहान्तरेषु स्थास्नुतां स्थायित्वमेति । पूर्वोक्तसर्वोत्कृष्टसौरभलोभादिति भावः । 'ग्लाजिस्थश्च' इति गस्नुप्रत्ययः । वधुशब्दो ह्रस्वोकारान्तोऽप्यस्ति । यद्वा 'मधुकुसुम' इति पाठः । मधुयुक्तानि कुसुमानि तेषां विमर्देनेत्यर्थः । अत्र वायोरस्थायित्वेऽपि स्थायित्वसम्बन्धोक्तेरतिशयोक्तिः, तथा विमर्दगन्धस्य कमलादिगन्धादाधिक्यरूपव्यतिरेकप्रतीतेरलङ्कारेणालङ्कारध्वनिः ॥ २८ ॥

नखपदेति । नखपदेषु नखक्षतेषु वलिषु त्रिवलिषु नाभ्यां सन्धिभागेषु कूर्परादिदेहसन्धिस्थानेषु तथा दशनानां क्षतिषु दन्तव्रणेषु च सशेषः सावं-

प्रकटमलिनलक्ष्मा मुष्टपत्त्रावलीकै-
रधिगतरतिशोभैः प्रत्युषःप्रोषितश्रीः ।
उपहसित इवासौ चन्द्रमाः कामिनीनां
परिणतशरकाण्डापाण्डुभिर्गण्डभागैः ॥ ३० ॥
सकलमपि निकामं कामलोलान्यनारी-
रतिरभसविमर्दैर्भिन्नवत्यङ्गरागे ।
इदमतिमहदेवाश्चर्यमाश्चर्यधाम्न-
स्तव खलु मुखरागो यन्न भेदं प्रयातः ॥ ३१ ॥

शेषः किञ्चिद्दृश्यमानः अतएव लक्ष्यो दृश्योऽङ्गनायाः सम्बन्धी असौ वर्णयति वर्णं करोति रञ्जयतीति वर्णकोऽङ्गरागो वाग्विहीनो वागिन्द्रियरहितोऽपि सन् रहसि कृतानामपि सुरतविलसितानां सुरतचेष्टितानां वर्णयति वक्तीति वर्णको वक्ता, व्यञ्जक इत्यर्थः । वर्णयतेर्ण्वुल्प्रत्ययः । 'वर्णक्रियायां विस्तारे गुणोक्तौ वर्णने ऽप्यदः' इति भट्टमल्लः । जातनखक्षतादिष्वेव लक्ष्यमाणोऽङ्ग-रागोऽन्यत्र स्वविलोपाच्चेष्टाविशेषानुमापको जात इत्यर्थः । अत्र वाग्विहीनोऽपि रहस्यकृतानामपि वर्णको वक्तेति विरोधस्य व्यञ्जकत्वलक्षणया परिहाराद्विरोधाभासोऽलङ्कारः ॥ २९ ॥

प्रकटेति । उषसि प्रत्युषः, विभक्त्यर्थेऽव्ययीभावः । यद्वा प्रत्युषः प्रभातम् । 'उषः प्रत्युषसी अपि' इत्यमरः । तत्र प्रोषितश्रीर्भ्रष्टशोभः अतएव प्रकटमलिनलक्ष्मा स्पष्टदृष्टकलङ्कोऽसौ चन्द्रमाः मृष्टाः प्रमृष्टाः पत्त्रावल्यः पत्रभङ्गा येषां तैः । 'नद्युतश्च' इति कप्, तथाप्यधिगता रतिशोभा सम्भोगश्रीर्यैषां तैः परिणताः परिपक्काः शरकाण्डा बाणाख्यतृणकाण्डिकाः । 'शरो बाणे बाणतृणे' इति शब्दार्णवे, तद्वदापाण्डुभिः कामिनीनां गण्डभागैर्गण्डस्थलैरुपहसित इवेत्युत्प्रेक्षा । पाण्डिमगुणनिमित्ता निष्कलङ्काः सकलङ्कं समानमानिनमुपहसन्तीति भावः ॥ ३० ॥

अथ काचित् खण्डिता नायिका सागसं प्रेयांसं प्रातरागतं पञ्चभिरुपालभते—सकलमित्यादि । कामेन लोलाया अन्यनार्याः सपत्न्या रतिरभसेषु

प्रकटतरमिमं मा द्राक्षुरन्या रमण्यः
स्फुटमिति सविशङ्कं कान्तया तुल्यवर्णः ।
चरणतलसरोजाक्रान्तिसंक्रान्तयासौ
वपुषि नखविलेखो लाक्षया रक्षितस्ते ॥ ३२ ॥

तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद् दुकूलं दधानः ।
मदधिवसतिमागाः कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥ ३३ ॥

सुरतसम्भ्रमेषु विमर्दैः पीडनैः । रज्यतेऽनेनेति रागः अङ्गस्य रागोऽङ्गरागः विलेपनं, अङ्गविकाशश्च तस्मिन्नङ्गरागे सकलमपि निःशेषं यथा तथा निकामं भिन्नवति विश्लिष्टवति सति आश्चर्यधाम्नः सर्वाद्भुतनिधानस्य तव मुखरागो मुखविकाशो भेदं विश्लेषं न प्रयात इति यत् । इदमेवातिमहदाश्चर्यं खलु । मुखस्याप्यङ्गत्वेन तद्रागस्याप्यङ्गरागत्वादिति भावः । अत्र विलेपनविकाशाख्ययोरङ्गरागयोरेवात्वाध्यवसायेन विरोधः भेदाननुसन्धानत्वेनाविरोध इति श्लेषमूलातिशयोक्त्युत्थापितो विरोधाभासोऽलङ्कारः ॥ २१ ॥

प्रकटेति । किञ्च प्रकटतरमतिस्फुटम् इममेनं नखविलेखम् । अन्या रमण्यो निजसपत्न्यः स्फुटं मा द्राक्षुः न पश्यन्तु । दृशेर्लुङ् 'न दृशः' इति क्साभावपक्षे सिचि वृद्धिः । इति बुद्ध्या कान्तया सविशङ्कं यथा तथा तुल्यवर्णो लाक्षासमानवर्णः । विवर्णस्य दुरपह्नवत्वादिति भावः । असौ ते तव वपुषि नखविलेखो नखव्रणं चरणतलं सरोजमिवेत्युपमितसमासः । आक्रान्तिलिङ्गात् तस्याक्रान्त्या आघातेन संक्रान्तया लाक्षया रक्षितो गुप्तः, आच्छादित इत्यर्थः । हन्त सा तु पापीयसी लाक्षा स्वयमेव सर्वदुर्वृत्तपिशुनेति भावः । अत्र नखविलेखस्य लाक्षासावर्ण्यात् तदेकतापत्तेः सामान्यालङ्कारः । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् ॥ ३२ ॥

तदिति । किञ्च मम त्वमेव प्रियेति यदवादीरवोचः । वदेर्लुङि 'वदव्रज'—इत्यादिना वृद्धिः, तदवितथं सत्यम्, कुतः यद्यस्मात् प्रियजनेन

नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम् ॥ ३४ ॥
इति कृतवचनायाः कश्चिदभ्येत्य बिभ्य-
द्गलितनयनवारेर्याति पादावनामम् ।
करुणमपि समर्थं मानिनां मानभेदे
रुदितमुदितमस्त्रं योषितां विग्रहेषु ॥ ३५ ॥

कुलकम् ।

परिभुक्तं दुकूलम्, तदीयमित्यर्थः । दधानः, धारयन्नित्यर्थः । दधान इत्यत्र वसान इति पाठे वसान आच्छादयन् । वस आच्छादनार्थाल्लटः शानजादेशः । स त्वं मदधिवसतिं मम निवासमागाः प्राप्तः । इणो गा लुङि । युक्तञ्चैतदित्याह—कामिनां मण्डनश्रीर्व्रजभानां प्रेयसीनामालोकनेन सफलत्वं व्रजति हि । अप्रिया चेत् कथमीदृशी मे सम्भावनेति भावः । अर्थान्तरन्यासः ॥ ३३ ॥

नवेति । किञ्च, नवानि नखपदानि यस्मिन् तदङ्गं वपुरंशुकेन गोपयसि छादयसि । गुपेश्चौरादिकात् स्वार्थे णिच् । दन्तेन दष्टमोष्ठं पुनरोष्ठमपि पाणिना स्थगयसि छादयसि । स्थगिरपि चौरादिकः । दिशि दिशि प्रतिदिशम् । विभक्त्यर्थेऽव्ययीभावः । 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तष्टच्प्रत्ययः । विसर्पन् प्रसर्पन् अपरस्त्रीसङ्गशंसी स्त्र्यन्तरसङ्गसूचकः । अन्याप्रभवत्वात् तस्येति भावः । नवः परिमलाख्यो गन्धः परिमलगन्धः । 'विमर्दोत्थे परिमलः' इत्यमरः । केन केनोपायेन वरीतुमाच्छादयितुम् । 'वृतो वा' इतीटो दीर्घः । शक्यः, न केनापि शक्य इत्यर्थः । अत्र नखदन्तक्षतयोरङ्गौष्ठाच्छादने विसर्पणस्य गन्धानाच्छाद्यत्वे च विशेषणगत्या हेतुत्वात् काव्यलिङ्गद्वये सजातीयसङ्करः ॥ ३४ ॥

इतीति । इति पूर्वोक्तश्लोकचतुष्टयरीत्या कृतवचनायाः कृतोपालम्भायाः

मदमदनविकाशस्पष्टधाष्टर्योदयानां
रतिकलहविकीर्णैर्भूषणैरर्चितेषु ।
विदधति न गृहेषूत्फुल्लपुष्पोपहारं
विफलविनययत्ना कामिनीनां वयस्याः ॥ ३६ ॥

गलितनयनवारेरधैर्य्यात् मुक्ताश्रीः प्रेयस्या इति शेषः। कश्चिन्नायको बिभ्यत् त्रस्यन्। 'नाभ्यस्ताच्छतुः' इति नुमभावः। अभ्येत्यागत्य पादयोरवनाममवनतिं याति, प्रणामेन प्रसादयतीत्यर्थः। ननु कथमीदृश्यार्दवं तथा अहङ्कारिणस्तस्य रोदनमात्रेण तत्राह—करुणमिति। तथाहि विग्रहेषु प्रणयकलहेषु योषितां करुणं दीनमपि रुदितमश्रुमोचनं मानिनामहङ्कारिणां पुंसां मानभेदेऽहङ्कारनिरासे समर्थं शक्तमस्त्रं साधनमुदितमुक्तम्। वदेः कर्म्मणि क्तः, 'वचिस्वपि'—इत्यादिना सम्प्रसारणम्। दीने प्रणयिजने पुंसां कोऽहङ्कार इति भावः। अर्थान्तरन्यासः। एषा च खण्डिता नायिका, 'नीत्वान्यत्र निशां प्रातरागते प्राणवल्लभे। अन्यासम्भोगचिह्नैस्तु खण्डितेर्ष्याकषायिता'। इति लक्षणात्, नायकस्तु धृष्टः। 'व्यक्ताङ्गो निर्भयो धृष्टः' इति लक्षणात्। न चेह बिभ्यद्विशेषणविरोधः। आगमनकालेऽतिनिर्भीकताया एव लक्षणोपयोगात्। अन्यथा वैरं स्यादिति भावः। अयञ्च सहृदयः अन्यथा रसाभास इत्याहुः ॥ ३५ ॥

मदेति। मदमदनयोर्विकाशेन विजृम्भणेन स्पष्टो धार्ष्ट्यस्योदय आविर्भावो यासां तासां कामिनीनां रतिरेव कलहस्तस्मिन् विकीर्णैरितस्ततो विक्षिप्तैर्भूषणैरर्चितेषु गृहेषु वयस्याः स्निग्धपरिचारिकाः विनीयन्तेऽस्मिन्निति विनयोऽधिकारः तत्र यत्नो विफलो यासां ता विफलविनययत्नाः निष्फलस्वाधिकारोद्योगाः सत्यः उत्फुल्लैः पुष्पैरुपहारं पूजां न विदधति न कुर्व्वन्ति। अत्र समृद्धवस्तुवर्णनादुदात्तालङ्कारः। 'तदुदात्तं भवेदयत्र समृद्धं वस्तु वर्ण्यते' इति लक्षणात्। तेन तासां तेष्वाभरणेषु भुक्तवस्त्रमाल्यादिवन्निर्माल्यबुद्धिर्व्यज्यते ॥ ३६ ॥

करजदशनचिह्नं नैशमङ्गेऽन्यनारी-
जनितमिति सरोषामीर्ष्यया शङ्कमानाम् ।
स्मरसि न खलु दत्तं मत्तयैतत् त्वयैव
स्त्रियमनुनयतीत्थं व्रीडमानां विलासी ॥ ३७ ॥
कृतगुरुतरहारच्छेदमालिङ्ग्य पत्यौ
परिशिथिलितगात्रे गन्तुमापृच्छमाने ।
विगलितनवमुक्तास्थूलबाष्पाम्बुबिन्दु-
स्तनयुगमबलायास्तत्क्षणं रोदितीव ॥ ३८ ॥
बह्नु जगद पुरस्तात् तस्य मत्ता किलाहं
चकार च किल चाटु प्रौढयोषिद्वदस्य ।
विदितमिति सखीभ्यो रात्रिवृत्तं विचिन्त्य
व्यपगतमदयाह्नि व्रीडितं मुग्धवध्वा ॥ ३९ ॥

करजेति । विलसनशीलो विलासी । 'वौ कसलष—' इत्यादिना घिनुण्प्रत्ययः । अङ्गे निजाङ्गे निशायां भवं नैशम् । 'निशाप्रदोषाभ्यां च' इत्यण्प्रत्ययः । करजदशनचिह्नं नखदन्तक्षतमन्यनारीजनितं सपत्नीकृतमिति शङ्कमानां विश्वसतीमत एवेर्ष्यया अक्षमया सरोषां स्त्रियं निजवधूं मत्तया मदमूढया त्वयैवैतद्दत्तमेवं कृतं खलु न स्मरसि नाभिजानासि किमिति काकुः । इत्थमनेन प्रकारेण व्रीडमानां स्वकृतत्वप्रत्यभिज्ञानाल्लज्जितां सतीमनुनयति, अङ्गीकारयति स्वमौग्ध्यव्याघातो निर्वेदश्च लज्जया व्यज्यते ॥३७॥

कृतेति । कृतो गुरुतरस्य हारस्य छेदो यस्मिंस्तत् तथा आलिङ्ग्य परिशिथिलितगात्रे शिथिलीकृताङ्गे पत्यौ भर्तरि गन्तुमापृच्छमाने आमन्त्रयमाणे सति । आङ्नुप्रच्छ्योरुपसङ्ख्यानादात्मनेपदम् । कर्त्तरि लटः शानजादेशः । तत्क्षणं तस्मिन् क्षणे । अत्यन्तसंयोगे द्वितीया । अबलायाः स्तनयुगं कर्त्तृ विगलिता निःसृता नवमुक्ता नूतनमौक्तिकान्येव स्थूलबाष्पाम्बुबिन्दवो यस्मिन् कर्म्मणि तत् तथा रोदितीव विरहासहिष्णुतया रोदनं करोतीवेत्युत्प्रेक्षा रूपकसंकीर्णा । 'रुदादिभ्यः सार्वधातुके' इतीडागमः ॥ ३८ ॥

बह्विति । अह्नि दिवसे व्यपगतमदया मुग्धवध्वा सखीभ्यो विदितम् ।

अरुणजलजराजीमुग्धहस्ताग्रपादा
बहुलमधुपमालाकज्जलेन्दीवराक्षी ।
अनुपतति विरावैः पत्रिणां व्याहरन्ती
रजनिमचिरजाता पूर्वसन्ध्या सुतेव ॥ ४० ॥

प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः सामिधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्य्यै-
र्हुतमयमुपलीढे साधु सान्नाय्यमग्निः ॥ ४१ ॥

रात्रौ त्वयेत्थं कृतमिति सखीभिराख्यातमित्यर्थः। रात्रिवृत्तम्, रात्रौ कृतं स्वचेष्टितमित्यर्थः। मत्ता मदमूढ़ा अहं तस्य प्रियस्य पुरस्तादग्रे बहु अनेकं जगद किल गदानि स्म। किलेति ऐतिह्ये। अतएव परोक्षे लिट्, 'णलुत्तमो वा' इति पक्षे णित्त्वाभावाद्वृद्ध्यभावः। च पुनः प्रौढ़योषिता तुल्यं प्रौढ़योषिद्वदित्युपमा, 'तेन तुल्यम्—' इति वतिप्रत्ययः। अस्य प्रियस्य चाटु प्रियवचनं चकार किल अकार्षं किल। लिड़ादिपूर्व्ववद्गुणो विशेषः। इति विचिन्त्य विमृश्य व्रीड़ितं लज्जितम्। भावे क्तः। निजकार्य्यप्रकाशेन लज्जात्र सञ्चारी भावः। भावनिबन्धनात् प्रेयोऽलङ्कारः ॥ ३९ ॥

अरुणेति। अरुणजलजराज्येव रक्तकमलश्रेण्येव मुग्धं सुन्दरं हस्ताग्रपादं हस्तौ च अग्रपादौ च यस्याः सा बहुलं मधुपमाला कज्जलं कज्जलमिव मधुपमाला ययोस्ते अक्षिणी इन्दीवरे इव यस्याः सा बहुलमधुपमालाकज्जलेन्दीवराक्षी पत्रिणां पक्षिणां विरावैर्व्याहरन्ती आलपन्ती। 'व्याहार उक्तिर्लपितम्' इत्यमरः। अचिरजाता सद्योभवा बाला च पूर्व्वसन्ध्या प्रातःसन्ध्या सुतेव पुत्रीव रजनिमनुपतत्यनुधावति, जननीमिवेत्यर्थः। इह विरावैर्व्याहरन्तीति व्यधिकरणपरिणामः तत्सङ्कीर्णेयमुपमा ॥ ४० ॥

प्रतीति। अग्निराहितो यैस्तेषामग्न्याहितानाम्। 'वाहिताग्न्यादिषु—' इति निष्ठायाः परनिपातः। प्रतिशरणं प्रतिगृहं 'शरणं गृहरक्षित्रोः' इत्यमरः। अशीर्णज्योतिरक्षतार्चिरयमग्निराहवनीयः विधिना यज्ञकर्म्मण्यजपन्यजुःसामस्वित्यादिशास्त्रोक्तरीत्या विहिता यथायोगमुच्चारिता विरिब्धाः स्वरा एकश्रुत्या-

प्रकृतजपविधीनामास्यमुद्रस्मिदन्तं
मुहुरपिहितमोष्ठैरक्षरैर्लक्ष्यमन्यैः।
अनुकृतिमनुवेलं घट्टितोद्घट्टितस्य
व्रजति नियमभाजां मुग्धमुक्तापुटस्य॥ ४२॥

दयश्चत्वारो यैस्तैः। 'क्षुब्धस्वान्त'—इत्यादिना 'रेभृ शब्दे' इति धातोः स्वरे विरिब्धशब्दो निष्ठान्तोऽनिट्त्वेन निपातितः। अध्वर्य्युवर्य्यैः ऋत्विक्श्रेष्ठैः। ऋत्विग्विशेषवाचिनाध्वर्य्युशब्देन ऋत्विङ्मात्रलक्षणात्। यद्वा अध्वर्युर्वर्य्यो मुख्यो येषां तैरध्वर्य्युप्रमुखैः, चतुर्भिर्ऋत्विग्भिरित्यर्थः। तस्माद्दर्शपौर्णमासयोर्यज्ञक्रत्वोश्चत्वार ऋत्विज इति श्रवणात्। दर्शश्चायं सर्व्वत्रैव सान्नाय्यविधानादिति सामिधेनीः प्रवोवाजा इत्यादिका अग्निसमिन्धनीर्ऋचोऽधीत्य पठित्वा। 'ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने' इत्यमरः। सामिधेनीग्रहणं याज्यापुरोनुवाक्यादिमन्त्रान्तराणामप्युपलक्षणम्। क्रतो गुरुतरदुरितानामोघस्य ध्वंसो यस्मिन् कर्म्मणि तद्यथा तथा साधु सम्यग्धुतं देवतोद्देशेन त्यक्तं सन्नीयत इति सान्नाय्यं हविर्विशेषम्। ऐन्द्रं दधि अमावास्यायामैन्द्रं पयोऽमावास्यायामिति विहिते दधिपयसी इत्यर्थः। 'पाय्यसान्नाय्यनिकाय्य'—इत्यादिना हविर्विशेषे सम्पूर्व्वान्नयतेर्ण्यन्तादायादेशोपसर्गदीर्घनिपातः। उपलीढ़े आस्वादयति, 'लिह आस्वादने' इति धातोः स्वरितेत्वाल्लटि तङि टेरेत्वं ढत्वधत्वष्टुत्वढ़लोपदीर्घाः। अत्राग्नेः सान्नाय्योपलेहनस्योत्तरकालभावित्वेऽपि तदुपलक्षितस्य कर्म्मण उदिते आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमति प्रागुदयादमावास्याया इति शास्त्रात् तत्कालप्रक्रान्तस्य वर्त्तमानत्वात् तस्यापि वर्त्तमानताव्यपदेशः। एतच्चाहिताग्नित्वमात्रेण कालविशेषानादरेणोक्तमिति पूर्व्वोक्तचन्द्रोदयाद्यविरोधः। अथवा उदिते जुहोत्यनुदिते जुहोति प्रातर्जुहोत्यग्निहोत्रं तत्कालत्वात् सामिधेनीसान्नाय्यशब्दयोर्म्मन्त्रहविर्म्मात्रपरत्वमाश्रित्याग्निहोत्रपरत्वेन व्याख्येयम्। तस्मादग्निहोत्रस्य यज्ञक्रत्वोः एकऋत्विगित्येकाध्वर्युकत्वेत्यध्वर्युवर्य्यैरिति बहुवचनं यजमानबहुत्वादुपपद्यत इत्याहुरित्यलं छान्दसगोष्ठीव्यसनेन। वृत्त्यनुप्रासोऽलङ्कारः स्पष्ट एव॥ ४१॥

प्रकृतेति। प्रकृतजपविधीनां प्रक्रान्तजपकर्म्मणां नियमभाजां तप-

नवकनकपिशङ्गं वासराणां विधातुः
ककुभि कुलिशपाणेर्भाति भासां वितानम् ।
जनितभुवनदाहारम्भमम्भांसि दग्ध्वा
ज्वलितमिव महाब्धेरूर्द्ध्वमौर्वानलार्चिः ॥ ४३ ॥

विततपृथुवरत्रातुल्यरूपैर्मयूखैः
कलश इव गरीयान् दिग्भिराकृष्यमाणः ।
कृतचपलविहङ्गालापकोलाहलाभि-
र्जलनिधिजलमध्यादेष उत्तार्य्यतेऽर्कः ॥ ४४ ॥

स्विनां सम्बन्धे ओष्ठे भवैरोष्ठ्यैः 'शरीरावयवाच्च' इति यत्प्रत्ययः । अक्षरै-र्व्वर्णैः, उपूपध्मानीयैरित्यर्थः । 'उपूपध्मानीयानामोष्ठौ' इत्यनुशासनात् । मुहुरपिहितमावृतमन्यैरनोष्ठ्यैरक्षरैर्लक्ष्यं दर्शनीयं अतएवोद्रश्मय उन्नतांशवो दन्ता यस्य तदास्यं मुखमनुवेलं प्रतिक्षणं घट्टितोद्घट्टितस्य प्राणित्वात् मुहु-र्घटितविघटितस्य, विशेषणसमासः । मुग्धं सुन्दरं यन्मुक्तानां मुक्ताफलानां पुटं कोटिः । शुक्तिरिति यावत् । तस्यानुकृतिं साम्यं व्रजति । उपमालङ्कारः । एतेन श्लोकद्वयेन बहवः कर्म्मनिष्ठास्तपोनिष्ठाश्च ब्राह्मणा भगवन्तमनुयन्तीति कथितम् ॥ ४२ ॥

नवेति । कुलिशं पाणौ यस्य स कुलिशपाणिरिन्द्रः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति पाणेः परनिपातः । तदेवात्र व्यधिकरण-बहुव्रीहेश्च ज्ञापकम् । तस्य ककुभि प्राच्यां दिशि नवकनकवत्पिशङ्गं वास-राणां विधातुर्दिनकरस्य भासां वितानं करजालं महाब्धेरम्भांसि दग्ध्वा जनित-भुवनदाहारम्भं कृतजगद्दाहोद्योगं सदूर्द्ध्वमब्धेरुपरि ज्वलितमौर्वानलार्चिर्व-ड़वानलज्योतिरिव भातीत्युत्प्रेक्षा ॥ ४३ ॥

विततेति । विततामिः प्रसारिताभिः पृथुवरत्राभिर्महारज्जुभिस्तुल्य-रूपैस्तुल्याकारैर्मयूखैः किरणैर्गरीयान् कलश इवाकृष्यमाणः सन्नेषोऽर्कः कृत-श्चपलः सत्वरो विहङ्गालाप एव कोलाहलः कलकलो याभिस्ताभिः दिग्भि-र्जलनिधेः जलमध्यादुत्तार्य्यते उद्ध्रियते । तरतेर्ण्यन्तात् कर्म्मणि लट् । यथा

पयसि सलिलराशेर्नक्तमन्तर्निमग्नः
स्फुटमनिशमतापि ज्वालया वाड़वाग्नेः ।
यदयमिदमिदानीमङ्गमुद्यन् दधाति
ज्वलितखदिरकाष्ठाङ्गारगौरं विवस्वान् ॥ ४५ ॥

अतुहिनरुचिनासौ केवलं नोदयाद्रिः
क्षणमुपरिगतेन क्ष्माभृतः सर्व एव ।
नवकरनिकरेण स्पष्टबन्धूकसून-
स्तवकरचितमेते शेखरं बिभ्रतीव ॥ ४६ ॥




कुतश्चित् कूपात् कुम्भः पाशैराकृष्य सकलकलं बहुभिः स्त्रीभिरुद्ध्रियते तद्वदिति भावः । अत्र वरत्रातुल्यरूपैः कलश इवेति चोपमाभ्यां विहङ्गालापकोलाहलेति रूपकेण चोज्जीवितार्कस्य दिक्कर्तृकोत्तारणोत्प्रेक्षा व्यञ्जकाप्रयोगात् प्रतीयमानेति सङ्करः ॥ ४४ ॥

पयसीति । अयञ्च विवस्वान् नक्तं सलिलराशेः पयसि निमग्नोऽन्तर्वाड़वाग्नेर्ज्वालयानिशमतापि तप्तः, स्फुटमित्युत्प्रेक्षा । कुतः यदिदानीमुद्यन् इदं ज्वलितः प्रज्वलन् यः खदिरकाष्ठस्याङ्गारस्तद्वद्गौरमरुणमङ्गं दधाति । 'गौरोऽरुणे सिते पीते' इति विश्वः ॥ ४५ ॥

अतुहिनेति । क्षणमुपरिगतेन स्थितेनातुहिनरुचिनार्केण केवलमसावुदयाद्रिः पूर्वाद्रिर्न । 'उदयः पूर्वपर्वतः' इत्यमरः । किन्त्वेते सर्व एव क्ष्माभृतः सर्वेऽपि शैलाः क्षणमुपरिगतेनावस्थितेन नवकरनिकरेण स्पष्टैर्विकसितैर्बन्धूकसूनस्तबकैर्बन्धुजीवककुसुमगुच्छैर्विरचितम् । 'बन्धूको बन्धुजीवकः' इत्यमरः । शेखरं शिखामाल्यम् । 'शिखास्वापीड़शेखरौ' इत्यमरः । बिभ्रतीवेत्युत्प्रेक्षा । न केवलमर्केणोदयाद्रिरेव बन्धूकशेखरं बिभर्त्ति, किन्तु तत्करजालेन सर्वेऽपि पर्वतास्तथेत्यर्थः ॥ ४६ ॥

उदयशिखरिशृङ्गप्राङ्गणेष्वेष रिङ्गन्
सकमलमुखहासं वीक्षितः पद्मिनीभिः ।
विततमृदुकराग्रः शब्दयन्त्या वयोभिः
परिपतति दिवोऽङ्के हेलया बालसूर्य्यः ॥ ४७ ॥

क्षणमयमुपविष्टः क्ष्मातलन्यस्तपादः
प्रणतिपरमवेक्ष्य प्रीतमह्नाय लोकम् ।
भुवनतलमशेषं प्रत्यवेक्षिष्यमाणः
क्षितिधरतटपीठादुत्थितः सप्तसप्तिः ॥ ४८ ॥

उदयेति । एष बाल उदितमात्रः बालश्चासौ सूर्य्यश्च बालसूर्य्यः उदयशिखरिशृङ्गस्योदयाद्रिशिखरस्य प्राङ्गणेषु रिङ्गन् सञ्चरन् पद्मिनीभिर्नलिनीभिः स्त्रीविशेषैश्च । 'पद्मिनी स्त्रीविशेषेऽपि' इति विश्वः । कमलान्येव मुखानि तेषां हासेन विकासेन, हास्येन च सह यस्मिन् कर्म्मणि तद्यथा तथा वीक्षितः सन् वयोभिः पक्षिभिः । 'वयः पक्षिणि बाल्यादौ' इति विश्वः । शब्दयन्त्याः शब्दं कुर्वत्याः । आगच्छागच्छ वत्सेति व्याहरन्त्या इत्यर्थः । शब्दशब्दात् 'तत्करोति'—इति ण्यन्ताल्लटः शतरि ङीप् । दिवोऽन्तरीक्षस्य मातुश्चाङ्के समीपे, उत्सङ्गे च विततानि प्रसृतानि मृदूनि कराग्राणि किरणाग्राणि हस्ताग्रे च यस्य सन् हेलया लीलया परिपतति । श्लेषमूलातिशयोक्त्यनुगृहीतरूपकम् ॥ ४७ ॥

क्षणमिति । अयं सप्तसप्तिरर्कः क्षणमुपविष्टः क्षितिधरपीठमध्यासीनः क्ष्मातलन्यस्तपादः । प्रणामस्वीकाराय भूतलप्रसारिताङ्घ्रिरित्यर्थः । प्रणतिपरं नमस्कारं कुर्वाणं प्रीतं प्रणामस्वीकारात् सन्तुष्टं लोकं जनमह्नाय झटित्यवेक्ष्य । 'झटित्यञ्जसाह्नाय' इत्यमरः । रूपावलोकेन सम्भाव्याशेषं भुवनतलं लोकस्वरूपं प्रत्यवेक्षिष्यमाणोऽनुसन्धास्यमानः क्षितिधरस्य तटं पीठमिव सिंहासनमिव, अन्यत्र तटमिव पीठं तस्मादुत्थितः उदयाद्रिमतिक्रान्त इत्यर्थः । यथा कश्चिन्महाराजः सिंहासनोपविष्टः क्षणं प्रणतजनमादृत्य अथ सकलस्वराष्ट्रप्रत्यवेक्षणाय सहसोत्थाय गच्छति तद्वदित्यर्थः । अत्र प्रकृतार्कविशेषणवैभवात् प्रकृतमहाराजप्रतीतेः समासोक्तिः ॥ ४८ ॥

परिणतमदिराभं भास्करेणांशुबाणै-
स्तिमिरकरिघटायाः सर्व्वदिक्षु क्षतायाः।
रुधिरमिव वहन्त्यो भान्ति बालातपेन
छुरितमुभयरोधोवारितं वारि नद्यः॥ ४९॥
दधति परिपतन्त्यो जालवातायनेभ्य-
स्तरुणतपनभासो मन्दिराभ्यन्तरेषु।
प्रणयिषु वनितानां प्रातरिच्छत्सु गन्तुं
कुपितमदनमुक्तोत्तप्तनाराचलीलाम्॥ ५०॥
अधिरजनि बधूभिः पीतमैरेयरिक्तं
कनकचषकमेतद्रोचनालोहितेन।
उदयदहिमरोचिर्ज्योतिषाक्रान्तमन्त-
र्मधुन इव तथैवापूर्णमद्यापि भाति॥ ५१॥

परिणतेति। नद्यः बालातपेन छुरितं रूषितम् अत एव परिणतमदिराभं सुपक्वसुरासन्निभमुभाभ्यां रोधोभ्यां वारितमवरुद्धमुभयरोधोवारितम्। 'उभादुदात्तो नित्यम्' इत्यत्र नित्यग्रहणसामर्थ्याद्वृत्तिविषये उभशब्दस्य स्थाने उभयशब्दप्रयोग इत्युक्तं प्राक्। वारि जलं भास्करेण। कस्कादित्वात् सत्वम्। अंशुभिरेव बाणैः सर्व्वदिक्षु क्षतायाः प्रहृतायास्तिमिरमेव करिघटा गजसङ्घस्तस्या रुधिरमिवेत्युत्प्रेक्षा, वहन्त्यो भान्ति॥ ४९॥

दधतीति। जालवातायनेभ्यो गवाक्षविवरेभ्यः मन्दिरेषु परिपतन्त्यस्तरुणतपनभासो बालार्ककिरणा वनितानां प्रणयिषु प्रातर्गन्तुमिच्छत्सु कुपितेन मदनेन मुक्तानामुत्तप्तानामग्निज्वलिततेजसां नाराचानां बाणविशेषाणां लीलां शोभां दधति। अत्र लीलेव लीलेति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धान्निदर्शना॥ ५०॥

अधीति। अधिरजनि रजन्याम्। विभक्त्यर्थेऽव्ययीभावः। बधूभिः पीतं मैरेयं मद्यं यस्य तत् अत एव रिक्तं पीतमैरेयरिक्तम् एतत् कनकचषकं स्वर्णस्य पानपात्रम्। अवयवषष्ठ्या विकारार्थता। 'चषकोऽस्त्री पानपात्रम्'

सितरुचि शयनीये नक्तमेकान्तमुक्तं
दिनकरकरसङ्गव्यक्तकौसुम्भकान्ति।
निजमिति रतिबन्धोर्जानतीमुत्तरीयं
परिहसति सखी स्त्रीमाददानान्दिनादौ ॥ ५२ ॥
प्लुतमिव शिशिरांशोरंशुभिर्यन्निशासु
स्फटिकमयमराजद्राजताद्रिस्थलाभम्।
अरुणितमकठोरैर्वेश्म काश्मीरजाम्भः-
स्नपितमिव तदेतत् भानुभिर्भाति भानोः ॥ ५३ ॥

इत्यमरः। रोचनालोहितेन गोरोचनारुणेन उदयत उदीयमानस्याहिमरोचिषोऽर्कस्य ज्योतिषा तेजसा अन्तरभ्यन्तर आक्रान्तं व्याप्तं सत् अद्यापि इदानीमपि तथैव पूर्व्ववदेव मधुन आपूर्णमिव। सामान्यषष्ठ्या योग्यविशेषपर्य्यवसाननियमात्, 'षष्ठी शेषे' इति सम्बन्धसामान्ये षष्ठी करणस्यापि कारणत्वादिति। भाति शोभते। अत्रातपाक्रान्ते मधुपूर्णत्वोत्प्रेक्षया आतपे मधुभ्रमाद्भ्रान्तिमान् व्यज्यते ॥ ५१ ॥

सितेति। नक्तं रात्रौ शयनीये तल्पे, एकान्तमुक्तमत्यन्तत्यक्तं सितरुचि शुभ्रवर्णम्। किन्तु दिनादौ प्रभाते दिनकरकरसङ्गेनार्कांशुव्यतिकरेण व्यक्ता कौसुम्भी कुसुम्भस्य रागद्रव्यस्य सम्बन्धिनी कान्तिर्यस्य तत्तथा भासमानं रतिबन्धोः प्रियस्योत्तरीयं निजमात्मीयमिति जानतीम्। अतएवाददानां स्त्रीनायिकाम्। 'वाम्शसोः' इतीयङभावपक्षे 'अमि पूर्व्वः' इति पूर्व्वरूपम्। सखी परिहसति। अत्राकौसुम्भे कौसुम्भभ्रमात् सादृश्यनिबन्धनाद्भ्रान्तिमदलङ्कारः ॥ ५२ ॥

प्लुतमिति। राजताद्रिस्थलाभं सुधाधवलितत्वात् कैलासतटसन्निभं यद्वेश्म निशासु शिशिरांशोरिन्दोरंशुभिश्चन्द्रिकाभिः प्लुतं धौतं सत् स्फटिकमयं स्फटिकविकार इवाराजद्रेजे, तदेतद्वेश्म भानोः सूर्य्यस्याकठोरैः कोमलैर्भानुभिररुणितमरुणीकृतं सत् काश्मीरदेशे जातं काश्मीरजं कुङ्कुमं तस्याम्भसा स्नपितं सिक्तमिव भाति, उत्प्रेक्षयोः संसृष्टिः ॥ ५३ ॥

सरसनखपदान्तर्दष्टकेशप्रमोकं
प्रणयिनि विदधाने योषितामुल्लसन्त्यः ।
विदधति दशनानां सीत्कृताविष्कृताना-
मभिनवरविभासः पद्मरागानुकारम् ॥ ५४ ॥

अविरतदयिताङ्गासङ्गसञ्चारितेन
छुरितमभिनवासृक्कान्तिना कुङ्कुमेन ।
कनकनिकषरेखाकोमलं कामिनीनां
भवति वपुरवाप्तच्छायमेवातपेऽपि ॥ ५५ ॥

सरसेति । प्रणयिनि योषितां सरसनखपदानामार्द्रनखक्षतानामन्त-र्मध्ये दष्टानां लग्नानां केशानां शिरोरुहाणां प्रमोकं प्रमोचनं विदधाने सति सीत्कृतैर्व्यथाविर्भूतसीत्कारैराविष्कृतानां दशनानामुल्लसन्त्यो वैमल्याद्दन्तेषु प्रतिफलन्त्यः अभिनवरविभासः पद्मरागाणामनुकारमनुकरणं विदधति । उपमालङ्कारः । रविभासामारुण्यप्रतिपादकाभिनवविशेषणप्रसादलब्ध इति काव्यलिङ्गेन सङ्करः ॥ ५४ ॥

अविरतेति । अविरतेनाविच्छिन्नेन दयितानां प्रेयसामङ्गस्यासङ्गेन शरीरसम्पर्केण सञ्चारितेन सङ्क्रामितेनाभिनवस्यासृजो रक्तस्येव कान्तिर्यस्य तेन कुङ्कुमेन छुरितं कनकस्य या निकषे निकषोपले रेखा राजिस्तद्वत् कोमलं मनोहरमित्युपमा, कामिनीनां वपुरातपेऽप्यवाप्तच्छायं लब्धवर्णो-त्कर्षमेव भवति । स्वतः सुवर्णवर्णस्य ततः कुङ्कुमाङ्कितस्य कामिनीगात्रस्य पुनर्बालातपव्याप्तिरिति महती वर्णोत्कर्षसामग्रीति भावः । आतपे छाया नातप इति विरोधाभासे अपिशब्दः । 'छाया त्वनातपे कान्तौ' इत्यमरः । अत्र संक्रान्तकुङ्कुमच्छुरितत्वकनकनिकषरेखाकोमलत्वयोरुपमापेक्षया छाया-वाप्तिहेतुत्वादुपमासङ्कीर्णं काव्यलिङ्गं तदातपेऽप्यवाप्तच्छायमित्यत्र विरोधे-नैकवाचकानुप्रवेशेन सङ्कीर्यत इति ॥ ५५ ॥

सरसिजवनकान्तं बिभ्रदभ्रान्तवृत्तिः
करनयनसहस्रं हेतुमालोकशक्तेः ।
अखिलमतिमहिम्ना लोकमाक्रान्तवन्तं
हरिरिव हरिदश्वः साधु वृत्रं हिनस्ति ॥ ५६ ॥
अवतमसभिदायै भास्वताभ्युद्गतेन
प्रसभमुडुगणोऽसौ दर्शनीयोऽप्यपास्तः ।
निरसितुमरिमिच्छोर्ये तदीयाश्रयेण
श्रियमधिगतवन्तस्तेऽपि हन्तव्यपक्षे ॥ ५७ ॥

सरसीति । सरसि जातानि सरसिजानि, सप्तम्यां जनेर्डः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । तद्वनस्य कान्तं प्रियम्, अन्यत्र तद्वत् कान्तं रम्यं आलोकशक्तेर्लोकलोचनानां विषयग्रहणशक्तेर्हेतुं आलोकान्तरसहकृतत्तानामेव तेषां तत्सामर्थ्यात्, अन्यत्र आलोकशक्तेर्दर्शनव्यापारस्य हेतुम्, दर्शनसाधनमित्यर्थः । करा नयनानीव, अन्यत्र करा इव नयनानि तेषां सहस्रं करनयनसहस्रं बिभ्रत् । अभ्रान्ते नभोमध्ये वृत्तिर्यस्य सोऽभ्रान्तवृत्तिः । अन्यत्राभ्रान्ते मेघे वृत्तिर्यस्य सः, मेघवाहन इत्यर्थः । 'अभ्रं नभः खगबलाहकेषु' इति विश्वः । हरितोऽश्वाः यस्य स हरिदश्वोऽर्कः हरिरिन्द्र इवातिमहिम्नातिमहत्तया, स्ववृद्ध्येत्यर्थः । लोकमाक्रान्तवन्तं व्याप्तवन्तं एकत्र प्रत्यक्षादन्यत्र स इषुमात्रमिषुमात्रं विष्वग्वर्धते । 'स इमान् लोकानावृणोत्' इत्यागमादिति भावः । वृत्रं ध्वान्तं दानवञ्च त्वाष्ट्रं साधु हिनस्ति हन्ति, 'ध्वान्तारिदानवा वृत्राः' इत्यमरः । उपमा श्लेषो वा मतभेदात् ॥५६॥

अवतमसेति । अवतमसं तिमिरम्, 'अवसमन्धेभ्यस्तमसः' इति समासान्तः । यद्यपि 'क्षीणेऽवतमसं तमः' इत्युक्तं तथापीह विरोधाद्विशेषानादरेण सामान्यमेव ग्राह्यम् । तस्य भिदायै भेदाय, षिद्भिदादिभ्योऽङ्, अभ्युद्गतेनाभ्युदितेनोद्यतेन च भास्वता सूर्येण दर्शनीयोऽप्युडुगणोऽसौ प्रसभं बलादपास्तः । तथाहि, अरिं निरसितुमिच्छोर्ये तदीयेनाश्रयेणाश्रयणेन श्रियं सम्पदं, शोभाञ्च । 'शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरपि गद्यते' इति विश्वः ।

प्रतिफलति करौघे सम्मुखावस्थितायां
रजतकटकभित्तौ सान्द्रचन्द्रांशुगौर्य्याम् ।
बहिरभिहतमद्रेः संहतङ्कन्दरान्त-
र्गतमपि तिमिरौघङ्घर्मभानुर्भिनत्ति ॥ ५८ ॥
बहिरपि विलसन्त्यः काममानिन्यिरे यद्
द्युमकररुचोऽन्तं ध्वान्तमन्तर्गृहेषु ।
नियतविषयवृत्तेरप्यनल्पप्रताप-
क्षतसकलविपक्षस्तेजसः स स्वभावः ॥ ५९ ॥

अधिगतवन्तः प्राप्तवन्तस्तेऽपि हन्तव्यपक्षे वध्यकोटावेव । अरिवदरिपक्षा अपि वध्या एवेत्यर्थः । उडुगणोऽपि तमसि शोभते अतस्तत्पक्ष इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५७ ॥

प्रतीति । घर्म्मभानुरुष्णांशुः सम्मुखावस्थितायां सान्द्रचन्द्रांशुवद्गौर्य्यां धवलायामित्युपमा । 'षिद्गौरादिभ्यश्च' इति ङीप् । रजतकटकमेव भित्तिस्तस्यां करौघे स्वकिरणजाले प्रतिफलति सति अद्रेर्बहिरभिहतं कन्दराणां दरीणामन्तर्गतं संहतं तिमिरौघमपि भिनत्ति । पुरोगतरजतभित्तिप्रतिहतस्य निजतेजसः कन्दरान्तःप्रवेशादिति भावः । अत्र करौघस्यान्तःसम्बन्धाभावेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ५८ ॥

बहिरिति । बहिर्विलसन्त्योऽपि दिवसकररुचोऽर्कभासः अन्तर्गृहेषु गर्भागारेषु कामं यथेष्टं ध्वान्तमन्तं नाशमानिन्यिरे प्रापयामासुरिति यत् । नयतेर्द्विकर्म्मकात् कर्त्तरि लिट् । सोऽन्तर्गृहध्वान्तनिरासो नियतविषये नियतस्थाने वृत्तिर्यस्य तस्य, नियतदेशवर्त्तिनोऽपीत्यर्थः । 'तृतीयादिषु' इति पुंवद्भावः । तेजसोऽनल्पेन प्रतापेन स्वप्रकाशेन, स्वप्रभावेणैवेत्यर्थः । 'प्रतापौ पौरुषातपौ' इति वैजयन्ती । क्षतसकलविपक्षो निरस्तसमस्तप्रतिपक्षः । स्वभावः तेजस्विनामेव स्वभावो यत्प्रतापेनैव परोच्छेदनमतो युक्तमर्कभासामप्यन्तर्ध्वान्तहरणमित्यर्थः । अत्र समर्थ्यसमर्थकयोः सामान्यविशेषभावादर्थान्तरन्यासः ॥ ५९ ॥

चिरमतिरसलौल्याद् बन्धनं लम्भितानां
पुनरयमुदयाय प्राप्य धाम स्वमेव ।
दलितदलकपाटः षट्पदानां सरोजे
सरभस इव गुप्तिस्फोटमर्कः करोति ॥ ६०

युगपदयुगसप्तिस्तुल्यसङ्ख्यैर्मयूखै-
र्दशशतदलभेदं कौतुकेनाशु कृत्वा ।
श्रियमलिकुलगीतैर्लालितां पङ्कजान्त-
र्भवनमधिशयानामादरात्पश्यतीव ॥ ६१ ॥

उदयमिव कराग्रैरेष निष्पीड्य सद्यः
शशधरमहरादौ रागवानुष्णरश्मिः ।
अवकिरति नितान्तं कान्तिनिर्यासमच्छ-
स्नुतनवजलपाण्डुं पुण्डरीकोदरेषु ॥ ६२ ॥

चिरमिति । अयमर्कः पुनर्भूयोऽप्युदयाय स्वद्वृद्धये स्वं स्वकीयमेव धाम स्थानं तेजो वा प्राप्य अतिरसलौल्यादतिमात्राद्रसेषु मकरन्देषु विषयेषु च लौल्यादासक्तेः सरोजे चिरं बन्धनं लम्भितानां प्रापितानां षट्पदानां सरभसः सत्वरो दलितं विघट्टितं दलमेव कपाटं येन स सन् गुप्तिस्फोटं बन्धनमोक्षं करोतीवेत्युत्प्रेक्षा । यथा कश्चित् पदभ्रष्टः पुनर्लब्धपदः पूर्ववदात्मबन्धूनागत्य स्वयमेव काराकपाटमुद्घाट्य मोचयति तद्वदिति भावः ॥ ६० ॥

युगपदिति । अयुगा विषमाः सप्तयोऽश्वा यस्य सोऽयुगसप्तिः सप्ताश्वोऽर्कः । युगशब्दस्य युग्मशब्दस्य च विशेष्यलिङ्गतावगन्तव्या । युगपदेकदैव तुल्यसङ्ख्यैः, सहस्रसङ्ख्यैरित्यर्थः । मयूखैः करैः दश शतानि येषां तानि दशशतानि, सहस्रमित्यर्थः । तेषां दलानां भेदं विघटनं कौतुकेनाशु कृत्वा अलिकुलस्य गीतैर्लालितां सत्कृतां पङ्कजमेवान्तर्भवनं गर्भगृहमधिशयानाम् । 'अधिशीङ्स्थासां कर्म्म' इति कर्म्मत्वम् । श्रियमादरात् पश्यतीवेत्युत्प्रेक्षा । कश्चित्कान्तः कान्तामिवैकान्तगतामिति भावः ॥ ६१ ॥

उदयमिति । अहरादौ प्रभाते रागवानुदयरागवान् पुण्डरीकस्नेहवांश्चैष

प्रविकसति चिराय द्योतिताशेषलोके
दशशतकरमूर्त्तावक्षिणीव द्वितीये ।
सितकरवपुषासौ लक्ष्यते सम्प्रति द्यौ-
र्विगलितकिरणेन व्यङ्गितैकेक्षणेव ॥ ६३ ॥
कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विपाकः ॥६४॥

उष्णरश्मिरर्कः । शशधरं चन्द्रं कराग्रैः रश्म्यग्रैः, हस्ताग्रैश्चादयं निर्दयं सद्यो निष्पीड्य अब्दात् मेघात् स्रुतं स्रस्तं नवजलमिव पाण्डुं शुभ्रं कान्तिनिर्य्यासं लावण्यसारं पुण्डरीकाणां सिताब्जानामुदरेष्वभ्यन्तरेषु नितान्तमवकिरतीव विक्षिपतीव । अत्र सूर्य्योदये चन्द्रस्य कान्तिक्षयात् पुण्डरीकाणां तत्प्रादुर्भावाच्च सूर्य्यश्चान्द्रीमेव कान्तिं पुण्डरीकस्नेहात् परेषु सिञ्चतीत्युत्प्रेक्षा । यथा द्विषन्तं प्रपीड्य तदीयं वसुसारं सुहृदे प्रयच्छति तद्वदिति भावः ॥ ६२ ॥

प्रविकसतीति । द्योतितः प्रकाशितोऽशेषलोको येन तस्मिन् दश शतानि येषां ते दशशतास्ते करा यस्याः सा दशशतकरा सहस्रकरा मूर्त्तिर्यस्य तस्मिन् दशशतकरमूर्त्तौ सूर्य्ये द्वितीयेऽक्षिणि चक्षुषीव चिराय प्रविकसति सति सम्प्रत्यसौ द्यौराकाशं स्त्री च गम्यते । विगलितकिरणेन निष्प्रकाशेन सितकरं शुभ्रकिरणं वपुर्यस्य तेन सितकरवपुषा चन्द्रेण व्यङ्गितं विकलीकृतमेकेक्षणमेकनेत्रं यस्याः सा व्यङ्गितैकेक्षणा काणेव लक्ष्यते । अत्र दिवः काणत्वमुत्प्रेक्ष्यते । तच्च काणत्वमक्षित्वेनाध्यवसितेन निष्काशितेन चन्द्रेणेति, 'तच्च येनाङ्गविकारः' इति तृतीया ॥ ६३ ॥

कुमुदेति । कुमुदवनं अपगता श्रीर्यस्य तदपश्रि विगतशोभम् । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम् । अम्भोजषण्डं श्रीमच्छोभायुक्तम् उलूकः पेचको मुदं त्यजति । तस्य दिवाभीतत्वादिति भावः । चक्रवाकः प्रीतिमान् । रजनी विरहाभावत्वात् तस्येति भावः । अहिमरश्मिरुष्णांशुरुदयं याति,

क्षणमतुहिनधाम्नि प्रोष्य भूयः पुरस्ता-
दुपगतवति पाणिग्राहवद्दिग्वधूनाम् ।
द्रुततरमुपयाति स्रंसमानांशुकोऽसा-
वुपपतिरिव नीचैः पश्चिमान्तेन चन्द्रः ॥ ६५ ॥

प्रलयमखिलतारालोकमह्नाय नीत्वा
श्रियमनतिशयश्रीः सानुरागां दधानः ।
गगनसलिलराशिं रात्रिकल्पावसाने
मधुरिपुरिव भास्वानेष एकोऽधिशेते ॥ ६६ ॥

हिमांशुरिन्दुरस्तमदर्शनं याति । अस्तमित्यव्ययम् । कथमेतद्वैषम्यं तत्राह— हृतेति । हतविधिलसितानां दुष्टदैवचेष्टितानां विपाकः परिपाकः । तत्त-त्प्राणिकर्मानुरूपफलदानप्रकार इति यावत् । विचित्रो विविधः । न त्वेकविध इत्यर्थः । हीति विस्मये । 'अहो ही च विस्मये' इत्यमरः । विधिविपाक-वैचित्र्याज्जगद्वैचित्र्यं युज्यत इति कारणेन कार्यसमर्थनरूपोऽर्थान्तर-न्यासः ॥ ६४ ॥

क्षणमिति । अतुहिनधाम्नि उष्णांशौ । दिशो वध्व इवेत्युपमित-समासः । तासां दिग्वधूनां पाणिं गृह्णातीति पाणिग्राहो निजभर्ता तस्मि-न्निव पाणिग्राहवत् । 'तत्र तस्येव' इति तत्रार्थे वतिः । क्षणं प्रोष्य प्रवासं कृत्वा, प्रपूर्वाद्वसधातोः क्त्वा । तस्य समासे नञ्पूर्वे क्त्वो ल्यप् । 'वचिस्वपि' इत्यादिना सम्प्रसारणम् । भूयः पुनरपि पुरस्तात् पूर्वस्यां दिशि मार्गे चोप-गतवत्यागतवति सति असौ चन्द्र उपपतिर्जार इव । जारस्तूपपतिः समौ' इत्यमरः । स्रंसमानांशुको गलद्रश्मिकः । शैषिकः कप्प्रत्ययः । स्रस्तवस्त्रश्च नीचैर्नम्रः सन् पश्चिमान्तेन पश्चिमदिक्कोणेन केनचिदपरद्वारेण द्रुततरमपया-त्यपसरति । यथा पूर्वद्वारेण निजपतावागते पश्चान्मार्गेणोपपतिरपसरति तद्व-दित्यर्थः । उपमालङ्कारः ॥ ६५ ॥

प्रलयमिति । अखिलस्तारालोको लोक इव तारानक्षत्रं तमखिलं तारालोकमह्नाय द्राक् प्रलयं क्षयं नीत्वा अतएव यतो नास्त्यतिशयं सान-तिशया सर्वातिशायिनी श्रीर्महिमा यस्य सोऽनतिशयश्रीः सानुरागामुदय-

कृतसकलजगद्विबोधोऽवधूतान्धकारोदयः
क्षयितकुमुदतारकश्रीर्वियोगं नयन् कामिनः ।
बहुतरगुणदर्शनादभ्युपेताल्पदोषः कृती
तव वरद करोतु सुप्रातमह्नामयन्नायकः ॥ ६७ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये प्रत्यूष-
वर्णनं नाम एकादशः सर्गः ॥ ११ ॥

रागवतीं श्रियं शोभामन्यत्र सानुरागामनुरागवतीं श्रियं रमाञ्च दधान एव भास्वानिको मधुरिपुर्विष्णुरिव रात्रिः कल्पावसानं कल्पान्त इव तस्मिन् रात्रिकल्पावसाने गगनं सलिलराशिरिव तं गगनसलिलराशिमधिशेतेऽधितिष्ठति । अत्र मधुरिपुरिवेति वाक्यगतोपमैव समासगतोपमानां प्रमाधिकेति सर्वत्रोपमितसमासाश्रयणमेवोचितम् ॥ ६६ ॥

कृतेति । कृतसकलजगद्विबोधः कृताखिलजगत्प्रबोधः अवधूतो विक्षिप्तोऽन्धकारस्योदय उज्जृम्भणं येन सोऽवधूतान्धकारोदय इति महागुणोक्तिः । दोषमाह—क्षयिता नाशिता कुमुदानां तारकाणाञ्च श्रीर्येन सः कामिनः स्त्रीपुंसान्वियोगं नयन् प्रापयंस्तथापि बहुतरगुणस्य पूर्वोक्तमहातुणस्य दर्शनादभ्युपेतो लोकैरङ्गीकृतोऽल्पदोषः पूर्वोक्त एव यस्य सः । 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति न्यायादिति भावः । अतएव कृती कृतार्थोऽयमह्नां नायकः प्रभुः सूर्यः, हे वरद कामद ! तव सुप्रातं सुप्रभातं करोतु । 'आशिषि लिङ्लोटौ' इत्याशीरर्थे लोट् । शोभनं प्रातर्यस्येति सुप्रातः शोभनप्रातर्वानुच्यते । 'सुप्रातसुश्व' इत्यादिना बहुव्रीहावच्प्रत्ययान्तो निपातितः । अत्र भावप्रधानो निर्देशः । तव सुप्रातं सुप्रभातत्वं करोत्वित्यर्थः । महामालिनीवृत्तमेतत् । 'यदिह न युगलं ततो वेद रेफैर्महामालिनी' इति लक्षणात् ॥ ६७ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपाल-
वधमहाकाव्यव्याख्याने सर्वङ्कषाख्ये एकादशः सर्गः ॥ ११ ॥

———

# द्वादशः सर्गः ।

इत्थं रथाश्वेभनिषादिनां प्रगे गणो नृपाणामथ तोरणाद्बहिः ।
प्रस्थानकालक्षमवेषकल्पनाकृतक्षणक्षेपमुदैक्षताच्युतम् ॥१॥
स्वक्षं सुपक्षं कनकोज्ज्वलद्युतिञ्जवेन नागान् जितवन्तमुच्चकैः ।
आरुह्य तार्क्ष्यं नभसीव भूतले ययावनुद्घातसुखेन सोऽध्वना ॥२

एवं प्रभातं वर्णयित्वा भगवतः प्राभातिकप्रस्थानवर्णनाय प्रक्रमते— इत्थमिति ॥ इत्थं भूते, पूर्वसर्गोक्तविधे इत्यर्थः । प्रगे प्रातःकाले । 'सायं साये प्रगे प्रातः' इत्यव्ययेष्वमरः । अथ सूर्योदयानन्तरं रथाश्वेभे निषीदन्तीति रथाश्वेभनिषादिनां, रथेषु अश्वेषु इभेषु च स्थितानामित्यर्थः । नृपाणां गणः तोरणाद्भगवतः बाह्यद्वाराद्बहिः । 'अपपरिबहिरञ्चवः पञ्चम्या' इति पञ्चमीसमासविधानाज्ज्ञापकात्पञ्चमी । 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः । प्रस्थानकाले प्रयाणकाले क्षम उचितो वेष आकल्पः । 'आकल्पवेषौ नेपथ्यम्' इत्यमरः । तस्य कल्पनया सम्पादनेन कृतः क्षणक्षेपः क्षणविलम्बो येन तमच्युतं हरिमुदैक्षत, प्रतीक्षितवानित्यर्थः । अत्राच्युतविलम्बस्य विशेषणगत्या प्रतीक्षणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । अस्मिन् सर्गे विषमपादयोर्जागतमिन्द्रवंशा वृत्तम् । 'स्यादिन्द्रवंशा ततजैरसंयुतैः' इति लक्षणात् । समपादयोस्तु जागतमेव वंशस्थं वृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् । तदेवमुभयमेलनादुपजातिभेदोऽयम् । अत एव त्रिष्टुबिन्द्रवज्रोपेन्द्रवज्रालक्षणानन्तरम् 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इत्युक्त्वोक्तम् । 'इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम' इति ॥ १ ॥

स्वक्षमिति ॥ स हरिः शोभनोऽक्षश्चक्रधारणदारुभेदो यस्य तं स्वक्षम् । 'स्यादक्षश्चक्रधारणः' इति वैजयन्ती । अन्यत्र शोभनेन्द्रियम् । 'हृषीकमक्षमिन्द्रियम्' इत्यमरः । सुपक्षं शोभनं पक्षं वाहनं यस्य तम्, स्वश्वमित्यर्थः ।

हस्तस्थिताखण्डितचक्रशालिनं द्विजेन्द्रकान्तं श्रितवक्षसं श्रिया ।
सत्यानुरक्तं नरकस्य जिष्णवो गुणैर्नृपाः शार्ङ्गिणमन्वयासिषुः ॥३॥
शुक्लैः सतारैर्मुकुलीकृतैः स्थुलैः कुमुद्वतीनां कुमुदाकरैरिव ।
व्युष्टं प्रयाणञ्च वियोगवेदनाविदूननारीकमभूत् समं तदा ॥४॥

अन्यत्र सुपक्षम् । 'पक्षं वाहनपक्षयोः' इत्यमरः । कनकोज्ज्वलद्युतिं कनकरचनावन्तम् । अन्यत्र कनकवदुज्ज्वलद्युतिं कनकवर्णम् । जवेन नागान् गजान् तुरगांश्च जितवन्तम्, ततोऽधिकवेगमित्यर्थः अन्यत्र नागान्तकमित्यर्थः । उच्चकैरुन्नतं तार्क्ष्यं रथं गरुड़ञ्च । 'तार्क्ष्यः स्यादश्वकर्णाख्यद्रुमे च रथतुरङ्गयोः । तार्क्ष्यं रसाञ्जने तार्क्ष्यो गरुड़े गरुड़ाग्रजे ॥' इति विश्वः । आरुह्य नभसीव भूतले अनुद्घातिनाप्रतिघातिन सुखः सुगमस्तेनाध्वना ययौ गरुड़मारुह्य नभसीव रथमारुह्य भूतलेऽप्यप्रतिहतं ययौ, गरुड़वदेव तद्रथस्यापि सर्वत्राप्रतिहतगतित्वादित्यर्थः । नायं श्लेषः प्रकृताप्रकृतवादेऽपि तार्क्ष्यमिति विशेष्यश्लेषायोगादन्यत्राप्रसङ्गाच्च श्लेषसङ्कीर्णेयमुपमा ॥ २ ॥

हस्तेति । अत्र नृपविशेषणानि शार्ङ्गिण्यपि विभक्तिविपरिणामेन योज्यानि । हस्तस्थितैरखण्डितैश्चक्रैश्चक्ररेखाभिः शालन्त इति तथोक्ताः, अन्यत्र चक्रं सुदर्शनं तच्छालिनम् । द्विजेन्द्रकान्ता ब्राह्मणोत्तमप्रियाः, अन्यत्र द्विजेन्द्रश्चन्द्रः, 'तस्मात् सोमराजानो ब्राह्मणाः' इति श्रुतेः । अत एव 'द्विजराजः शशधरः' इत्यमरः । तद्वत् कान्तं सुन्दरं श्रिया शोभया श्रितवक्षसो व्यापोरस्काः, अन्यत्र रमयाधिष्ठितोरस्कम् । सत्ये सत्यवचनेऽनुरक्ताः, अन्यत्र सत्यायां सत्यभामायामनुरक्तम् । नरकस्य जिष्णवः, अन्यत्र नरकासुरस्य जेतारम् । 'ग्लाजिस्थश्च' इति ग्स्नुः । 'नरको निरये दैत्ये' इति विश्वः । एवम्भूता नृपा एवम्भूतं शार्ङ्गिणं गुणैर्विनयादिभिर्हेतुना अन्वयासिषुरनुजग्मुः, गुणैः पूर्वोक्तैरन्वकार्षुश्च । यातेर्लुङि च्लेः सिच् । 'यमरम'—इति सगागमः, सिच इड़ागमश्च । 'सिजभ्यस्त'—इति झेर्जुस् । अत्र शार्ङ्गिणो नृपाणाञ्च प्रकृतत्वाच्छब्दमात्रसाधर्म्याच्च केवलः प्रकृतिविषयः शब्दश्लेषः ॥ ३॥

शुक्लैरिति । शुक्लैः शुभ्रैः सतारैः सरज्जकैः सकर्णिकैश्च, मुकुलीकृतै-

**उत्क्षिप्तगात्रः स्म विडम्बयन्नभः समुत्पतिष्यन्तमगेन्द्रमुच्चकैः ।**
**आकुञ्चितप्रोहनिरूपितक्रमं करेणुरारोहयते निषादिनम् ॥५॥**

वेष्टनसौकर्य्याय सङ्कोचितैः, अन्यत्र रात्रिविकासित्वान्मुकुलतां नीतैः प्राप्तैः स्थूलैर्दीर्घैः । पटमण्डपैरिति यावत् । कुमुदाकरैः कुमुदकन्दैरिवोपलक्षितम् । अन्यत्र स्थूलैरिव कुमुदाकरैरुपलक्षितं वियोगवेदनया विरहव्यथया विदूनाः परितप्ताः । 'श्वादिभ्यः' इति निष्ठानत्वम् । ता नार्यो यस्मिंस्तत् तथोक्तम्, द्वयोरपि वियोगकालत्वादिति भावः । 'नद्यृतश्च' इति कप् । कुमुदान्यासु सन्तीति कुमुद्वत्यः कुमुदप्राया भूमयः । 'कुमुद्वान् कुमुदप्राये' इत्यमरः । कैरविण्यो वा । 'कुमुद्वती कैरविण्याम्' इति विश्वः । 'कुमुदनड्वेतसेभ्यो ड्मतुप्' इति मतुप्प्रत्ययः, 'मादुपधायाः'—इति मकारस्य वत्वम् । तासां कुमुद्वतीनां सम्बन्धि व्युष्टं प्रभातम् । 'व्युष्टं प्रभातं प्रत्यूषम्' इत्यभिधानचिन्तामणिः । तत्र किञ्चित्करत्वात् तत्सम्बन्धित्वं प्रयाणञ्च सेनानामिति शेषः । तदा तस्मिन् काले सममुक्तरीत्या अन्योऽन्यसदृशमभूत् । व्युष्टप्रयाणयोर्द्वित्वेऽपि समुदायविवक्षायामभूदित्येकवचनम् । व्युष्टं प्रयाणञ्च द्वयमपि सममभूदित्यर्थः । अत्र वर्ण्यत्वेन प्रकृतस्य प्रयाणस्य प्रकृतव्युष्टसाम्योक्तेरुपमा श्लेषसङ्कीर्णा ॥ ४ ॥

उत्क्षिप्तेति । उत्क्षिप्तगात्र उन्नमितपूर्व्वकायः अतएव नभः खं प्रति समुत्पतिष्यन्तमुत्पतनोद्युक्तमगेन्द्रं महाद्रिं विडम्बयन्ननुकुर्व्वन्नित्युत्प्रेक्षा । अभूतोपमेति केचित् । उच्चकैरुन्नतः करेणुरिभः । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । आकुञ्चितो नमितः प्रोहो गजाङ्घ्रिः । 'गजाङ्घ्रिः प्रोहः' इति विश्वः । तत्र निरूपितक्रमं कृतपादन्यासं निषादिनं यन्तारं आरोहयते स्म, स्वयमेव स्वात्मन्यारोपयतीत्यर्थः । रोहेर्गत्यर्थत्वात् 'गतिबुद्धि'—इत्यादिना अणि कर्त्तुर्निषादिनः कर्म्मत्वम् । अत्र कर्त्रभिप्राये 'णिचश्च' इत्यात्मनेपदे सिद्धेऽपि प्रयोगवैचित्र्यस्याप्यलङ्कारत्वादकर्त्रभिप्रायेऽपि 'णेरणौ यत् कर्म्म णौ चेत् स कर्त्तानाध्याने' इत्यात्मनेपदं वदन्ति । अणि कर्म्मणः करेणोरेवात्र ण्यन्ते कर्त्तृत्वात् तस्यैव चार्थात् कर्म्मत्वादिति । ननु यत् सग्रहणमनन्यकर्म्मार्थमित्युक्तं, तेन कर्म्ममात्रनिषेधात् कथं निषादिनि कर्म्मण्यात्मनेपदम् ? सत्यम्, अन्येषां मतम् । भाष्यकारस्य तु दर्शयते भृत्यान् राजेत्युदाहरणा-

स्वैरं कृतास्फालनलालितान् पुर: स्फुरत्तनून् दर्शितलाघवक्रिया:।
वङ्काविलग्नैकसवल्गपाणयस्तुरङ्गमानारुरुहुस्तुरङ्गिण: ॥ ६ ॥
अह्नाय यावन्न चकार भूयसे निषेदिवानासनबन्धमध्वने ।
तीव्रोत्थितास्तावदसह्यरंहसो विशृङ्खलं शृङ्खलका: प्रतस्थिरे ॥७॥
गण्डोज्ज्वलामुज्ज्वलनाभिचक्रया विराजमानां नवयोदरश्रिया ।
कश्चित् सुखं प्राप्तुमना: सुसारथीरथीं युयोजाविधुरां वधूमिव॥८

दर्शि कर्तृकर्मव्यतिरिक्तकर्मण एव निषेधो विवक्षित इति कैयट: । तदेतत् सम्यग्विवेचितमस्माभि: किरातार्जुनीयटीकायां घण्टापथे—'स सन्ततं दर्शयते गतस्मय:' इत्यत्र । स्वभावोक्ति: ॥ ५ ॥

स्वैरमिति । तुरङ्गिणोऽश्वारोहा: पुर: पूर्व्वं स्वैरमन्दं कृतं यदास्फालनं पाणितलेनाङ्गसङ्घट्टनं तेन लालितानुपालितान्, त्याजितोद्वेगानित्यर्थ: । अतएव स्फुरत्तनून् कम्पितदेहांस्तुरङ्गमानश्वान् दर्शितं लाघवं शैघ्र्यं यासु ता: क्रिया: उत्पननकर्म्माणि येषां ते वङ्क: पल्याणकोटि: । 'वङ्क: पल्याणभागे स्यात्' इति विश्व: । तत्रावलग्न: सक्त एकैक: सवल्गो मुखरज्जुसहित: पाणिर्येषां ते तथोक्ता: सन्त: आरुरुहुरारूढा: । स्वभावोक्ति: ॥ ६ ॥

अह्नायेति । निषेदिवानुपर्य्युपविष्ट:, निषादीति शेष: । 'भाषायां सद-वसश्रुव:' इति क्वसुप्रत्यय: । भूयसे दवीयसे अध्वने, भूयांसमध्वानं गन्तु-मित्यर्थ: । 'क्रियार्थोपपदस्य'—इति चतुर्थी । अह्नाय झटिति । 'द्राक् झटि-त्यञ्जसाह्नाय' इत्यमर: । यावदासनबन्धं दूराध्वगमनौपयिकमासनविशेषं न चकार तावत् तीव्रं तीक्ष्णमुत्थिता असह्यरंहसो दु:सहवेगा: शृङ्खलका: करभा उष्ट्रभेदा: । 'करभा: स्यु: शृङ्खलका दारवै: पादबन्धनै:' इत्यमर: । विशृङ्खलमनर्गलं प्रतस्थिरे प्रस्थिता: । 'समवप्रविभ्य: स्थ:' इत्यात्मनेपदम् । एषापि स्वभावोक्ति: ॥ ७ ॥

गण्डेति । सुखमक्लिष्टं यथा तथा प्राप्तुं गन्तुं मनो यस्य स प्राप्तुमना:, अन्यत्र सुखमानन्दं लब्धुकाम: । 'तुं काममनसोरपि' इति मकारलोप: । शोभन: सारथिर्यस्य स सुसारथि:, अन्यत्र सुसहायवान्, कश्चित् कोऽपि रथी,

उत्थातुमिच्छन् विधृतः पुरो बलान्निधीयमाने भरभाजि यन्त्रके ।
अर्द्धोज्झितोद्गारविझर्झरस्वरः स्वनाम निन्ये रवणः स्फुटार्थताम् ९
नस्यागृहीतोऽपि धुवन् विषाणयोर्युगं ससूत्कारविवर्त्तितत्रिकः ।
गोणीज्जनेन स्म निधातुमुद्धृतामनुच्चणन्नोच्चतरः प्रतीच्छति ॥१०

कामी च । गण्डैश्चिह्नैरुज्ज्वलां, अन्यत्र कपोलोज्ज्वलाम् । 'गण्डः कपोले चिह्ने च' इति विश्वः । उज्ज्वलो नाभिर्बिलमध्यं ययोस्ते चक्रे रथाङ्गे यस्यास्तया उज्ज्वलनाभिचक्रया, अन्यत्रोज्ज्वलं नाभिचक्रं नाभिमण्डलं यस्यास्तया, 'नाभि प्राण्यङ्गके चैत्रे चक्राङ्गचक्रवर्त्तिनोः' इति विश्वः । नवया प्रत्यग्रया उदुत्रता अरायक्रशलाकाः । 'अरः शीघ्रे च चक्राङ्गे' इति विश्वः । तेषां श्रिया, अन्यत्र उदरस्य मध्यस्य श्रिया शोभया विराजमानां विगता धूरग्रं यस्याः सा विधुरा, 'धूः स्त्री क्लीबे यानमुखम्' इत्यमरः । 'ऋक्पूः'—इत्यादिना समासान्तः । सा न भवतीत्यविधुरा ताम्, सधुरामित्यर्थः । अन्यत्राविधुरामविकलां रथीं शकटीम् । 'बह्वादिभ्यश्च' इति विकल्पेन ङीष् । बधूमिव युयोज योजयामास । अत्र शब्दमात्रसाधर्म्यात् सभङ्गाभङ्गपदमिश्रणादुभयगोचरत्वाच्च प्रकृताप्रकृतगोचरः शब्दार्थश्लेषः ॥ ८ ॥

उत्थातुमिति । रौतीति वरण उष्ट्रः । 'रु शब्दे' इति धातोश्चलनशब्दार्थादकर्म्मकाद्युजिति युच्प्रत्ययः । भारारोपणाय यन्त्ररूपेण निर्म्मिते भरभाजि भारयुक्ते यन्त्रके गोण्यादौ निधीयमाने सति बलादुत्थातुमिच्छन्नुत्थाय गन्तुमिच्छन् अतएव पुरो मुखभागे विधृतो गृहीतः एवं स्वैरचारव्याघाततः अर्द्धोज्झितेनोद्गारेण स्वजग्धपिचुमर्दादिपत्ररसनेन विझर्झरो विषमः स्वरो यस्य स रवणः उष्ट्रः स्वनाम स्फुटार्थतां निन्ये । रौतीति रवण इति व्युत्पन्नं स्वनाम यथार्थमकरोदित्यर्थः ॥ ९ ॥

नस्येति । नस्या । नासिकाया नसादेशः । नासिकाभवा नस्या । दिगादित्वाद्यत् । तस्यां नासिकाप्रोतरज्जौ गृहीतोऽपि विषाणयोर्युगं धुवन् विधुन्वन् शृङ्गद्वयं कम्पयन् । ससूत्कारेति । सूत्कार इति शब्दानुकरणम् । अमर्षजः सशब्दनिश्वासो वा ससूत्कारं यथा तथा विवर्त्तितं त्रिकं पृष्ठवंशाधरसन्धिर्येन । 'पृष्ठवंशाधरे त्रिकम्' इत्यमरः । उच्चतरो महोच्चः पृष्ठे निधातुं

नानाविधाविष्कृतसामजस्वरः सहस्रवर्त्मा चपलैर्दुरध्ययः ।
गान्धर्वभूयिष्ठतया समानतां स सामवेदस्य दधौ बलोदधिः ॥ ११

प्रत्यन्यनागञ्चलितस्त्वरावता निरस्य कुण्ठं दधताऽन्यमङ्कुशम् ।
मूर्द्धानमूर्द्धायतदन्तमण्डलं धुवन्नरोधि द्विरदो निषादिना ॥ १२ ॥

सम्मूर्च्छदुच्छृङ्खलशङ्खनिःस्वनः स्वनः प्रयाते पटहस्य शार्ङ्गिणि ।
सत्त्वानि निन्ये नितरां महान्त्यपि व्यथां द्वयेषामपि मेदिनीभृतां १३

जनेनानुत्तममुद्गतां गोर्णीं न प्रतीच्छति स्म न स्वीकृतवान्। निधातुमवसरं न दत्तवानित्यर्थः ॥ १० ॥

नानेति। सामजा गजाः। 'सामजौ गजसामोत्थौ' इति शाश्वतः। नानाविधमाविष्कृताः सामजानां स्वरा ध्वनयो बृंहितानि यस्मिन् सः सहस्रवर्त्मा बहुभिर्मार्गैर्गच्छन्। गन्धर्वा एव गान्धर्वा अश्वाः। 'वाजिवाहार्व्वगन्धर्व' इत्यमरः। तैर्भूयिष्ठतया चपलैरस्थिरैः दुरध्ययो दुष्प्रापः। 'इण् गतौ' इत्यस्मात् कृच्छ्रार्थे खल्। ईदृशः स बलोदधिः सेनासमुद्रः सामवेदस्य समानतां दधौ। तत्समोऽभूदित्यर्थः। सामवेदोऽपि बहुधाविष्कृतबृहद्रथन्तरादिसामोत्थितस्वरः। सहस्रशाखत्वात् सहस्रवर्त्मा। गान्धर्व्वगानबहुत्वाच्चपलमतिभिरध्येतुमशक्य इत्यर्थः। 'इङ् अध्ययने' इत्यस्माद्धातोः खलि दुरध्यय इत्येवं रूपम् ॥ ११ ॥

प्रत्यन्येति। अन्यनागं प्रति चलित ऊर्द्धायतदन्तमण्डलं मूर्द्धानं धुवन् कम्पयन् द्विरदः कुण्ठमतीक्ष्णमङ्कुशं निरस्यान्यमकुण्ठमङ्कुशं दधता त्वरावता निषादिना अरोधि रुद्धः ॥ १२ ॥

संमूर्च्छदिति। 'मूर्च्छा मोहसमुच्छाययोः' इति धातुः। संमूर्च्छन् मुच्छ्रायं गच्छन् प्रचुरीभवन्नुच्छृङ्खलोऽनर्गलः सर्व्वव्यापी शङ्खस्य निःस्वनो यस्मिन् सः शार्ङ्गिणि प्रयाते यातुमुपक्रान्ते पटहस्य स्वनः द्वयेषामुभयेषामपि मेदिनीभृतां राज्ञां, पर्व्वतानाञ्च महान्त्यपि सत्त्वानि बलानि भूतानि च नितरां व्यथां निन्ये। कृष्णस्य पटहश्रवणाद्राज्ञां बलान्यभिभवशङ्कया व्यथितान्यासन् तथा गिरिस्थिताः सिंहादयो जन्तवश्च किमिदमिति ससाध्वसा आसन्नित्यर्थः।

कालीयकक्षोदविलेपनश्रियं दिशद्दिशामुल्लसदंशुमद्द्युति ।
खातं खुरैर्मुद्गभुजां विपप्रथे गिरेरधः काञ्चनभूमिजं रजः ॥१४॥
मन्द्रैर्गजानां रथमण्डलस्वनैर्निजुह्नुवे तादृशमेव बृंहितम् ।
तारैर्बभूवे परभागलाभतः परिस्फुटैस्तेषु तुरङ्गहेषितैः ॥ १५ ॥
अन्वेतुकामोऽवमताङ्कुशग्रहस्तिरोगतं साङ्कुशमुद्वहन् शिरः ।
स्थूलोच्चयेनागमदन्तिकागतां गजोऽग्रयाताग्रकरः करेणुकाम्॥१६

'व्यवसाये स्वभावे च पिशाचादौ गुणे बले । द्रव्यात्मभावयोश्चैव सत्त्वं प्राणिषु जन्तुषु ॥' इति शाश्वतः ॥ १३ ॥

कालीयेति । कालीयं कुङ्कुमम् । 'काश्मीरजन्म घुसृणं कालीयं कुङ्कुमं विदुः' इति शाश्वतः । कालीयकक्षोदैः कुङ्कुमचूर्णैः कृतानुलेपनश्रियं दिशां दिशद्ददत् । उल्लसदिति । उद्यदादित्यसमा द्युतिर्यस्य तत् मुद्गभुजामश्वानां खुरैः खातं विदारितं काञ्चनभूमिजं रजो गिरेरधो गुरुत्वाद्गिरेरधस्तादेव विपप्रथे विस्तीर्णमभवत् ॥ १४ ॥

मन्द्रैरिति । मन्द्रैर्गम्भीरैः । 'मन्द्रस्तु गम्भीरे' इत्यमरः । रथमण्डलस्वनैः तादृशं तद्रूपमेव गजानां बृंहितं निजुह्नुवे तिरस्कृतम् । गजध्वनिरेकरूपत्वेन रथशब्दान्न पृथगश्रावीत्यर्थः । तारैरुच्चैस्तरैर्मन्द्रस्वरविलक्षणैस्तुरङ्गहेषितैः परभागलाभतस्तेषु तादृशध्वनिगुणभेदलाभात् तेषु गजादिस्वनेषु परिस्फुटैर्बभूवे । तुरङ्गहेषाः सुव्यक्ता एव शुश्रुविर इत्यर्थः । 'बृंहितं करिणां शब्दो हेषा ह्रेषा च वाजिनाम्' । बभूवे इति भावे लिट् । निजुह्नुव इति कर्मणि लिट् ॥१५॥

अन्वेत्विति । अन्तिकागतां करेणुकां करिणीमन्वेतुकामोऽनुगन्तुकामः अङ्कुशं गृह्णातीत्यङ्कुशग्रहो निषादी सोऽवमतो येन सः निषादिना साङ्कुशं तिरोगतम् । अङ्कुशाकर्षणेन तिर्यग्भूतं शिरो मस्तकम् उद्वहन् गजः अग्रयाताग्रकरः करिणीग्रहणाय प्रसारितकराग्रो भूत्वा स्थूलोच्चयेन गतिविशेषेणागमत् जगाम । गजमध्यगतौ स्थूलोच्चयः साकल्यपुञ्जयोरिति रत्नप्रकाशः ॥ १६ ॥

यान्तोऽस्पृशन्तश्चरणैरिवावनिं जवात् प्रकीर्णैरभितः प्रकीर्णकैः ।
अद्यापि सेनातुरगाः सविस्मयैरलूनपक्षा इव मेनिरे जनैः ॥१७॥
ऋज्वीर्दधानैरवतत्य कन्धराश्चलावचूडाः कलघर्घरारवैः ।
भूमिर्महत्यप्यविलम्बितक्रमं क्रमेलकैस्तत् क्षणमेव चिच्छिदे ॥१८॥
तूर्णं प्रणेत्रा कृतनादमुच्चकैः प्रणोदितं वेसरयुग्ममध्वनि ।
आत्मीयनेमिक्षतसान्द्रमेदिनीरजश्चयाक्रान्तिभयादिवाद्रवत् ॥१९
व्यावृत्तवक्त्रैरखिलैश्चमूचरैर्व्रजद्भिरेव क्षणमीक्षिताननाः ।
वल्गद्गरीयःस्तनकम्प्रकञ्चुकं ययुस्तुरङ्गाधिरुहोऽवरोधिकाः ॥२०

यान्त इति । जवाद्वेगाच्चरणैरवनिमस्पृशन्त इव यान्तः सेनातुरगाः अभितः प्रकीर्णैरुभयतः प्रसृतैः प्रकीर्णकैश्चामरैः । 'चामरन्तु प्रकीर्णकम्' इत्यमरः । कण्ठभूषणचामरैर्हेतुभिरद्यापि अलूनपक्षा इवेति सविस्मयैर्जनैर्मेनिरे । पूर्वं तुरगाणामपि पक्षा आसन् पश्चात् केनचित् कारणेन देवैः पक्षच्छेदः कारित इति प्रसिद्धिः ॥ १७ ॥

ऋज्वीरिति । ऋज्वीरवक्राश्चलावचूडाश्चलितकण्ठभूषणाः । 'शिरःशिखाभूषणेषु चूडा' इति यादवः । चलितशिरस इति वा । कन्धरा शिरोधरा अवतत्य वितत्य दधानैः। 'कलघर्घरारवैः । 'घर्घरा क्षुद्रघण्टी स्यात्' इति कोशः। अथवा घर्घरारव इति शब्दानुकरणम् । क्रमेलकैरुष्ट्रैरविलम्बितक्रमम् । क्रमः पदक्षेपः । द्रुतपादक्षेपं यथा तथा महत्यपि भूमिस्तत् क्षणमेव चिच्छिदेऽतिक्रान्ता, स्वभावोक्तिः ॥ १८ ॥

तूर्णमिति । प्रणेत्रा सारथिना प्रणोदितं गमनाय प्रेरितम् । अतएव उच्चकैरुच्चैस्तरां कृतनादं यथा तथा वेसरयुग्मम् । सङ्कराश्वो वेसरः । वेसराभ्यां युग्यं शकटमात्मीयनेमिः स्वचक्रधारा तया क्षतस्य सान्द्रस्य मेदिनीरजसश्चयेन समूहेन या आक्रान्ति यदाक्रमणं तद्भयादिव तूर्णमध्वन्यद्रवत् । आत्मीयनेमिसमुद्भूतधूलिजालेनास्पृष्टं सत् द्रुतमगमदित्यर्थः ॥ १९ ॥

व्यावृत्तेति । व्यावृत्तवक्त्रैर्विवृत्तमुखैर्व्रजद्भिरेवाखिलैश्चमूचरैः क्षणमीक्षिताननाः तुरङ्गाधिरुहः । तुरङ्गानधिरुहन्तीति क्विप् । तुरङ्गाधिरूढाः अवरोधिका अवरोधस्त्रियो वल्गद्भिश्चलद्भिर्गरीयोभिर्गुरुतरैः स्तनैः कम्पः

पादैः पुरः कूवरिणां विदारिताः प्रकाममाक्रान्ततलास्ततो गजैः।
भग्नोन्नतानन्तरपूरितान्तरा बभुर्भुवः कृष्टसमीकृता इव ॥ २१॥

दुर्दान्तमुत्प्लुत्य निरस्तसादिनं सहासहाकारमलोकयज्जनः ।
पर्य्याणतः स्रस्तमुरोविलम्बिनस्तुरङ्गमं प्रद्रुतमेकया दिशा ॥२२॥

भूभृद्भिरप्यस्खलिताः स्खलून्नतैरपह्नुवाना सरितः पृथूरपि ।
अन्वर्थसंज्ञैव परं त्रिमार्गगा ययावसङ्ख्यैः पथिभिश्चमूरसौ ॥२३॥

कम्पनशीलः कम्प्रः कूर्पासो यस्मिन् कर्मणि तद्यथा तथा ययुः । 'नमिकम्पि'—इत्यादिना रप्रत्ययः ॥ २० ॥

पादैरिति । कूवरिणां रथानाम् । 'कूवरस्तु युगन्धरः' इत्यमरः । स एषामस्तीति ते रथास्तेषां पादैश्चक्रैः पुरः पूर्वं विदारिताः ततो गजैः प्रकाममाक्रान्ततलाः भग्नैरुक्तप्रकारेण पूर्वं भग्नत्वादुन्नतैरनन्तरैरुभयभागैः पूरितान्तराः समीकृतनिम्नप्रदेशाः । यद्वा पूर्वं रथचक्रविदारितत्वाद्भग्नोन्नता अनन्तरं गजपतिपरिक्रमणेन पूरितानतप्रदेशाः भुवः कृष्टसमीकृताः पूर्वं हलैः कृष्टा अनन्तरं बीजवपनार्थं समीकृता इव बभुः शुशुभिरे ॥ २१ ॥

दुर्दान्तमिति । उरोविलम्बिनः पर्य्याणतः पल्ययनतः स्रस्तमतएवोत्प्लुत्य निरस्तसादिनं स्वपृष्ठात् पातितावरोहमेकया दिशा द्रुतं पलायितं दुर्दान्तं दुर्विनीतं तुरङ्गमं हासकृतेन हाकारेण सह यथा तथा जनोऽवलोकयदवलोकितवान् ॥ २२ ॥

भूभृद्भिरिति । उन्नतैरपि भूभृद्भिः भूधरैर्भूपैश्चास्खलिता अप्रतिहताः पृथूर्महतीरपि सरितो यमुनाप्रभृतीर्नदीरपह्नुवाना स्वमहिम्नाच्छादयन्ती त्रिभिर्मार्गैर्गच्छन्तीति त्रिमार्गगा गङ्गा परमत्यन्तमन्वर्था अनुगतार्था संज्ञा त्रिमार्गगेति नामधेयं यस्याः सैव खलु त्रिभिरेव मार्गैर्ययौ न चतुर्थेनेत्यर्थः । असौ चमूस्त्वसङ्ख्यैः पथिभिर्ययौ, अतो गङ्गाया अप्यधिका चमूरिति भावः । अतएव व्यतिरेकालङ्कारः । 'भेदप्राधान्यसाधर्म्यमुपमानोपमेययोः । अधिकाल्पत्वकथनात् व्यतिरेकः स उच्यते ।' इति लक्षणात् ॥ २३ ॥

त्रस्तौ समासन्नकरेणुसूत्कृतान्नियन्तरि व्याकुलमुक्तरज्जुके।
क्षिप्तावरोधाङ्गनमुत्पथेन गां विलङ्घ्य लघ्वीं करभौ बभञ्जतुः॥२४
स्रस्ताङ्गसन्धौ विगताक्षपाटवे रुजा निकामं विकलीकृते रथे।
आप्तेन तक्ष्णा भिषजेव तत् क्षणं प्रचक्रमे लङ्घनपूर्वकः क्रमः॥२५
धूर्भङ्गसङ्क्षोभविदारितोष्ट्रिकागलन्मधुप्लावितदूरवर्त्मनि।
स्थाणौ निषङ्गिण्यनसि क्षणं पुरः शुशोच लाभाय कृतक्रयो वणिक्॥२६

त्रस्ताविति। समासन्नस्य प्रत्यासन्नस्य करेणोरिभस्य सूत्कृतात् सूत्कारात् त्रस्तौ करभौ वेसरौ, 'करभो वेसरेऽप्युष्ट्रे' इति सज्जनः। नियन्तरि सारथौ व्याकुलं व्यग्रं यथा तथा मुक्तरज्जुके त्यक्तप्रग्रहे सति क्षिप्ताः पतिता अवरोधाङ्गना यस्मिन् कर्मणि तद्यथा तथा उत्पथेनापथेन। 'ऋक्पूः'—इत्यादिना समासान्तः। गां भूमिं विलङ्घ्य दूरमतीत्य लघ्वीं रथविशेषम्। 'लघ्वी लाघवयुक्तायां प्रभेदे स्यन्दनस्य च' इति हैमः। बभञ्जतुर्भग्नवन्तौ। अत्र त्रासस्य विशेषणगत्या भञ्जनहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं स्वभावोक्त्या सङ्कीर्य्यते॥ २४॥

स्रस्तेति। स्रस्ता विश्लिष्टा अङ्गयो रथाङ्गयोरङ्गानां करचरणादीनाञ्च सन्धयः सन्धिभागा यस्य तस्मिन् विगतमक्षस्य चक्रधारकाष्ठस्याक्षाणामिन्द्रियाणाञ्च पाटवं सामर्थ्यं यस्य तस्मिन् रथे स्यन्दने, शरीरे च। 'रथः स्यात् स्यन्दने काये' इति विश्वः। रुजा भङ्गेन, रोगेण च निकामं विकलीकृते सति आप्तेन हितेन तक्ष्णा वर्द्धकिना, आप्तेन भिषजा वैद्येनेव। 'तक्षा तु वर्द्धकिस्त्वष्टा' इत्यमरः। तत् क्षणं तस्मिन्नेव क्षणे, अत्यन्तसंयोगे द्वितीया, लङ्घनं पादेनाक्रमणं, उपवासश्च। 'लङ्घनन्तूपवासे स्याद्गमने प्लवनेऽपि च' इति विश्वः। तत्पूर्व्वकः क्रमो विधिः प्रचक्रमे प्रक्रान्तः। प्रायेण ज्वरादिचिकित्सायां लङ्घनपूर्व्वकत्वादिति भावः। श्लेषालङ्कारः॥ २५॥

धूर्भङ्गेति। स्थाणौ कीले। 'स्थाणुः कीले स्थिरे हरे' इति विश्वः। निषङ्गिणि सक्ते अनसि शकटे। 'क्लीबेऽनः शकटोऽस्त्री स्यात्' इत्यमरः। धुरोऽक्षस्य भङ्गेन यः संक्षोभो विपर्य्यासः तेन विदारिता भिन्ना या उष्ट्रिका मृन्मयं मद्यभाण्डम्। 'उष्ट्रिका मृत्तिकाभाण्डभेदे करभयोषिति' इति

भेरीभिराक्रुष्टमहागुहामुखो ध्वजांशुकैस्तर्जितकन्दलीवनः ।
उत्तुङ्गमातङ्गजितालघूपलो बलैः स पश्चात् क्रियते स्म भूधरः॥२७

वन्येभदानानिलगन्धदुर्धराः क्षणं तरुच्छेदविनोदितक्रुधः ।
व्यालद्विपा यन्तृभिरुन्मदिष्णवः कथञ्चिदारादपथेन निन्यिरे॥२८

विस्रः । ततो गलता स्रवता मधुना मद्येन प्लावितं सिक्तं दूरवर्त्म दीर्घाध्वा येन तस्मिन्, तथा सति पुरः पूर्वं लाभाय कृतः क्रयः क्रयणं येन स वणिक् क्षणं शुशोच । अत्र मधुस्रावधनव्यययोर्विशेषणगत्या शोकहेतुत्वात् काव्यलिङ्गभेदः ॥ २६ ॥

भेरीभिरिति । भेरीभिराक्रुष्टानि निन्दितानि महान्ति गुहामुखानि येन सः । भेरीभाङ्कारभर्त्सितनितान्तवाल्यामुखरमहागुहाद्वार इत्यर्थः । ध्वजांशुकैस्तर्जितानि भर्त्सितानि कन्दलीदलानि गुल्मपत्त्राणि येन सः । उत्तुङ्गैर्मातङ्गैर्जिताः अलघूपलाः स्थूलपाषाणा येन स भूधरो रैवतकाद्रिर्बलैः सैन्यैः पश्चात् क्रियते स्म पश्चात् कृतः । स्वयं दूरगमनेन पृष्ठतः कृत इत्यर्थः । उक्तविशेषणमहिम्ना अधरीकृत इति च प्रतीयते । लट् स्म इति भूतार्थे लट् । आक्रुष्टेति क्रोशतेः कर्मणि क्तः, प्रश्वादित्वात् षत्वे ष्टुत्वम् । अत्र पश्चात्करणस्याक्रुष्टादिपदार्थहेतुकत्वात् काव्यलिङ्गम् तच्चोक्तप्रतीयमानाभेदाध्यवसायादिति श्लेषमूलातिशयोक्तिसङ्कीर्णम् । तेन बलानां भूधरौपम्यं गम्यत इत्यर्थालङ्कारेणालङ्कारध्वनिः ॥ २७॥

वन्येभेति । वन्यभदानानिलगन्धेन वनगजमदमारुतगन्धाघ्राणेन दुर्धराः क्रोधान्धाः दुर्ग्रहाः अतएव क्षणं तरुच्छेदेन विनोदितक्रुधः प्रतिगजसान्निध्ये वृक्षाणां भङ्गेनापनीतक्रोधाः उन्मदिष्णवोऽत्यन्तमदशीलाः । 'अलङ्कृञ्' इत्यादिना इष्णुच् । व्यालद्विपा दुष्टगजा यन्तृभिराधोरणैः कथञ्चिदाराद्दूरादपथेनामार्गेण । 'पथो विभाषा' इति निषेधविकल्पात् 'ऋक्पूः' इत्यादिना समासान्तः । 'अपथं नपुंसकम्' इति नपुंसकत्वम् । निन्यिरे नीताः । अत्रापि द्विपविशेषणानां तदुपमेयहेतुकत्वात् काव्यलिङ्गं सत् स्वभावोक्त्या सङ्कीर्यते ॥ २८ ॥

तैर्वैजयन्तीवनराजिराजिभिर्गिरिप्रतिच्छन्दमहामतङ्गजैः ।
बह्व्यः प्रसर्पज्जनतानदीशतैर्भुवो बलैरन्तरयाम्बभूविरे ॥ २९ ॥
तस्थे मुहूर्त्तं हरिणीविलोचनैः सदृंशि दृष्ट्वा नयनानि योषिताम्
मत्वाथ सत्रासमनेकविभ्रमक्रियाविकाराणि मृगैः पलाय्यत ॥३०
निम्नानि दुःखादवतीर्य्य सादिभिः सयत्नमाकृष्टकशाः शनैः शनैः
उत्तेरुरुत्तालखुरारवं द्रुताः श्लथीकृतप्रग्रहमर्वतां व्रजाः ॥३१॥ ।

तैरिति । वैजयन्त्यः पताकास्ता वनराजय इव ताभी राजन्तीति तथोक्तैः गिरीणां प्रतिच्छन्दाः प्रतिनिधयः, तत्सदृशा इत्यर्थः । एतस्मादेव स्पष्टोपमालिङ्गादन्यत्राप्युपमितसमासाश्रयणम् । ते महामतङ्गजा येषु तैः । जनता जनसमूहस्ता नद्य इव तासां शतानि प्रसर्पन्ति प्रवहन्ति येषु तैर्बलैस्तथोक्तैः सैन्यैः । बह्व्यो बहवः । 'बह्वादिभ्यश्च' इति विकल्पादीकारः । भुवो भूमयः अन्तरयाम्बभूविरे अन्तरा दूराः कृता इति, अतिक्रान्ता इत्यर्थः । केवलं रैवतकाद्रिरेवेति भावः । बलैर्वैपुल्यादाच्छादिता इत्यर्थः । उक्तविशेषणावगतसादृश्यादगृहीतभेदाः कृता इति च गम्यते । एतेनाभेदाध्यवसायादेव अस्याक्रमणरूपान्तरीकरणस्य बलविशेषणावगतसादृश्यस्य हेतुत्वात् तदङ्गभूतोपमासङ्कीर्णं पदार्थहेतुकं काव्यलिङ्गं श्लेषमूलाभेदातिशयोक्त्युत्थापितमिति सङ्करः । अन्तरशब्दात् 'तत्करोति' इति ण्यन्तात् कर्म्मणि लिट् । आम्प्रत्यये भुवोऽनुप्रयोगः ॥ २९ ॥

तस्थ इति । हरिणीविलोचनैः सदृंशि सदृशानि । 'नपुंसकस्य झलचः' इति नुम् । योषितां नयनानि दृष्ट्वा मृगैः कृष्णसारैः कर्त्तृभिर्मुहूर्त्तमल्पकालम् । 'मुहूर्त्तमल्पकाले स्याद्घटिकाद्वितयेऽपि च' इति विश्वः । तस्थे स्थितम् । हरिणीविलोचनशङ्कयेति भावः । अथानन्तरमनेकविभ्रमक्रिया विलासक्रिया एव विकारा येषां तानि मत्वा, सविलासानि ज्ञात्वेत्यर्थः । सत्रासं सभयं यथा तथा पलाय्यत पलायितम् । हरिणीदुर्लभैर्विलासैर्योषिद्विश्वयादिति भावः । अतएव निश्चयान्तः संशयालङ्कारः । परापूर्व्वादयतेर्भावे लङ् । 'उपसर्गस्यायतौ' इति लत्वम् ॥ ३० ॥

निम्नानीति । अर्वतामश्वानाम् । 'वाजिवाहार्वगन्धर्व्वहयसैन्धवसप्तयः'

अध्यध्वमारूढवतैव केनचित् प्रतीक्षमाणेन जनं मुहुर्धृतः ।
दाक्ष्यं हि सद्यः फलदं यदग्रतश्च खाद दासेरयुवा वनावलीः ॥३२

शौरेः प्रतापोपनतैरितस्ततः समागतैः प्रश्रयनम्रमूर्त्तिभिः ।
एकातपत्रा पृथिवीभृतां गणैरभूद् बहुच्छत्रतया पताकिनी ॥३३

इत्यमरः । 'अर्वणस्त्वसावनञः' इति चादेशः । व्रजाः समूहाः । सादिभिरश्वारूढैः सयत्नमाकृष्टकशा दृढगृहीतवल्गाः सन्तः । यद्यपि 'अश्वादेस्ताड़िनी कशा' इत्यमरः । तथाप्यत्र 'ताड़िनीवल्गयोः कशा' इति दर्शनादविरोधः । शनैःशनैर्दुःखात् कृच्छ्रान्निम्नानि निम्नभूप्रदेशानवतीर्य्य उत्तालखुरारवमुच्चतरशफशब्दं श्लथीकृतप्रग्रहं शिथिलितवल्गञ्च यथा तथा द्रुताः सत्वराः सन्त उत्तेरुरुत्पुप्लुविरे । निम्नेषु शनैरवतीर्य्य दीर्घं धावन्तीत्यश्वानां स्वभाव इति भावः । अतएव स्वभावोक्तिः ॥ ३१ ॥

अध्यध्वमिति । दक्षस्य भावो दाक्ष्यं कौशलं सद्यः फलदम् । कुतः, यद्यस्मादध्यध्वमध्वनि, विभक्त्यर्थेऽव्ययीभावः 'अनश्च' इति समासान्तोऽच्प्रत्ययः 'नस्तद्धिते' इति टिलोपः । आरूढवतैवारुह्यैव स्थितेन । निष्ठेति कर्त्तरि क्तवतुप्रत्ययः । जनं शनैः पश्चादागच्छन्तं स्वजनं प्रतीक्षमाणेन, केनचित् पुंसेति शेषः । मुहुर्धृतः स्थापितोऽपि दासेरयुवा तरुणोष्ट्रः । विशेषणसमासः । अग्रतो वनावलीश्चखाद, पुरः पिचुमर्दादिकं भक्षयन्नास्त इत्यर्थः । नहि कुशलो वृथा कालं यापयतीति भावः । अत्र दाक्ष्यसाफल्यस्य सामान्यस्य तद्विशेषेण दासेरकौशलेन समर्थनाद्विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३२ ॥

शौरेरिति । शौरेः कृष्णस्य पताकिनी सेना । व्रीह्यादित्वादिनिः । प्रतापेन हरितेजसा उपनतैर्नम्रैः, विधेयैरित्यर्थः । अतएवेतस्ततः समागतैः पार्श्वदेशादागतैः प्रश्रयनम्रमूर्त्तिभिर्हरिसन्निधौ विनयनम्रविग्रहैः पृथिवीभृतां राज्ञां गणैर्हेतुना बहुच्छत्रतया असङ्ख्यातपत्रवत्तया निमित्तेन एकानि केवलान्यातपत्राणि यस्याः सा एकातपत्रा केवलातपत्रमय्यभूत् । आतपत्रातिरिक्तं न किञ्चिदलक्ष्यतेत्यर्थः । 'एके मुख्यान्यकेवलाः' इत्यमरः । बहुच्छत्राप्येकच्छत्रेति विरोधभासनाद्विरोधाभासोऽलङ्कारः ॥ ३३ ॥

आगच्छतोऽनूचि गजस्य घण्टयोः स्वनं समाकर्ण्य समाकुलाङ्गनाः
दूरादपावर्त्तितभारवाहणाः पथोऽपसस्रुस्त्वरितं चमूचराः ॥ ३४

ओजस्विवर्णोत्पलवृत्तशालिनः
प्रसादिनोऽनुज्झितगोत्रसंविदः ।
श्लोकानुपेन्द्रस्य पुरः स्म भूयसो
गुणान् समुद्दिश्य पठन्ति वन्दिनः ॥ ३५ ॥

आगच्छत इति । अन्वञ्चतीत्यन्वङ् तस्मिन्ननूचि पृष्ठदेशे । 'ऋत्विग्'—इत्यादिनाञ्चेः क्विन् प्रत्ययः । आगच्छतो गजस्य घण्टयोः स्वनं समाकर्ण्य समाकुलाङ्गनाः सम्भ्रान्तवधूकाश्चमूचराः दूरादेवापावर्त्तिता अपसारिता भारस्यान्नादेर्वाहना भारवाहणा भारवाहिन उष्ट्रादयो यैस्ते तथा सन्तः । 'वाहनमाहितात्' इति णत्वम् । वहेर्ण्यन्तात् कर्त्तरि ल्युट् । त्वरितं शीघ्रं पथो मार्गादपसस्रुरपजग्मुः । स्वभावोक्तिः ॥ ३४ ॥

ओजस्वीति । वन्दिनः स्तुतिपाठकाः । 'वन्दिनः स्तुतिपाठकाः' इत्यमरः । ओजस्विवर्णस्य तेजस्विवर्णस्य क्षत्रजातेर्यदुज्ज्वलं वृत्तमुदग्रव्यापारः विजयाख्यं तेन शालत इति ओजस्विवर्णोज्ज्वलवृत्तशाली तस्य, अन्यत्र ओजस्विवर्णैः समासभूयिष्ठाक्षरैरुज्ज्वलास्ते च ते वृत्तशालिनो वसन्ततिलकादिच्छन्दोविशेषशालिनश्च । 'वृत्तं चरित्रच्छन्दसोरपि' इति विश्वः । तान् प्रसादोऽस्यास्तीति प्रसादी तस्य प्रसादिनोऽनुग्रहशीलस्य, अन्यत्र प्रसादगुणयुक्तान् । 'प्रसिद्धार्थपदत्वं यत् स प्रसादो निगद्यते' इति । अनुज्झितौ गोत्रसंविदौ कुलाचारौ येन तस्य यादववंशोत्पन्नस्येत्यर्थः । अन्यत्र कुलनामनी यैस्तान्, वंशनामाङ्कितानित्यर्थः । 'संविद्युद्धे प्रतिज्ञायां सङ्केताचारनामसु' इति वैजयन्ती । एवम्भूतस्योपेन्द्रस्य हरेर्गुणान् समुद्दिश्याधिकृत्य भूयसो बहुलान् श्लोकान् स्तुतिपद्यानि पुरोऽग्रे पठन्ति स्म । अत्रोपेन्द्रस्य तच्छ्लोकानाञ्च वर्ण्यत्वेन प्रकृतानां श्लेषसाधर्म्यादौपम्यगम्यतायां श्लेषप्रतिभोत्थापिता केवलप्रकृतगोचरा तुल्ययोगिता । श्लेषश्च प्रकृतिषु प्रत्ययेषु नेति ॥ ३५ ॥

निःशेषमाक्रान्तमहीतलो जलै-
श्चलन् समुद्रोऽपि समुज्झति स्थितिम् ।
ग्रामेषु सैन्यैरकरोदवारितैः
किमव्यवस्थाञ्चलितोऽपि केशवः ॥ ३६ ॥

कोशातकीपुष्पगुलुच्छकान्तिभिर्मुखैर्विनिद्रोल्बणबाणचक्षुषः ।
ग्रामीणवध्वस्तमलक्षिता जनैश्चिरं वृतीनामुपरि व्यलोकयन् ॥३७

गोष्ठेषु गोष्ठीकृतमण्डलासनां सनादमुत्थाय मुहुः स वल्गतः ।
ग्राम्यानपश्यत् कपिशम्पिपासतः स्वगोत्रसङ्कीर्त्तनभावितात्मनः ३८

निःशेषमिति । चलन् कल्पान्ते क्षुभितः समुद्रोऽपि जलैर्निःशेषमाक्रान्तमहीतलः सन् स्थितिं मर्य्यादां वेलालङ्घनलक्षणां समुज्झति त्यजति । केशवस्तु चलितोऽपि प्रस्थितोऽप्यवारितैरपरिमितैः सैन्यैर्निःशेषमाक्रान्तमहीतलः सन् ग्रामेषु अव्यवस्थाममर्य्यादां किमकरोत्, नाकरोदेवेत्यर्थः । अत्रोपमानात् समुद्रादुपमेयस्य केशवस्य मर्य्यादानतिक्रमेणाधिक्यकथनाद्व्यतिरेकालङ्कारः । लक्षणमुक्तम् ॥ ३६ ॥

कोशातकीति । कोशातकीपुष्पगुलुच्छकान्तिभिः पटोलीप्रसूनगुच्छसच्छायैः, स्मरपाण्डुरैरित्यर्थः । 'कोशातकी पटोली स्यात्' इति हलायुधः । मुखैरुपलक्षिताः विनिद्रं विकसितमत एवोल्बणं विपुलं बाणं नीलसैरेयपुष्पमिव चक्षुर्यासां ताः । 'नीली झिण्टी द्वयोर्बाणा' इत्यमरः । ग्रामेषु भवा ग्रामीणाः । 'ग्रामाद्यखञौ' इति खञ्प्रत्ययः । ताश्च वध्वः स्त्रियस्तं कृष्णम्, ग्रामान्तर्गामिनमिति भावः । जनैश्चमूचरैरलक्षिता, वृतिभिस्तिरोहिता इत्यर्थः । चिरं वृतीनां कण्टकशाखावरणानामुपर्य्युपरितनावकाशे व्यलोकयन् । उपमास्वभावोक्त्योः सङ्करः ॥ ३७ ॥

गोष्ठेष्विति । स कृष्णो गावस्तिष्ठन्त्येष्विति गोष्ठानि गोस्थानानि । 'गोष्ठं गोस्थानकम्' इत्यमरः । 'सुपि स्थः' इति कप्रत्ययः 'अम्बाम्बगोभूमि'—इत्यादिना षत्वम् । गोष्ठीषु वार्त्तासु । 'गोष्ठी सभायामालापे' इति विश्वः । कृतानि मण्डलासनानि मण्डलाकारेणोपवेशनानि यैस्तान् मुहुः

करयुग्मपद्ममुकुलापवर्जितैः
प्रतिवेश्म लाजकुसुमैरवाकिरन् ।
अवदीर्णशुक्तिपुटमुक्तमौक्तिक-
प्रकरैरिव प्रियरथाङ्गमङ्गनाः ॥ ३७ ॥

हिममुक्तचन्द्ररुचिरः सपद्मको
मदयन् द्विजान् जनितमीनकेतनः ।
अभवत् प्रसादितसुरो महोत्सवः
प्रमदाजनस्य स चिराय माधवः ॥३८॥

पताकया वैजयन्त्या विहितोपशोभं कृतशोभमिवालङ्कृतमिवेत्युत्प्रेक्षा । व्यरोचत व्यराजत । कृत्स्नस्यापि नगरस्य स्वयं पताकेव बभावित्युत्प्रेक्षा । तस्याः सकलधीराङ्गनातिशायि लावण्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । अत्रापि प्रासादारोहणं पूर्ववत् कुतूहलमेव ॥ ३६ ॥

करेति । प्रतिवेश्म वेश्मनि, विभक्त्यर्थेऽव्ययीभावः । अङ्गनाः पुरन्ध्रः । करयुग्मान्यञ्जलयस्तानि पद्ममुकुलानीवेत्युपमितसमासः । तैरपवर्जितैरत एवावदीर्णैर्विभिन्नैः शुक्तिपुटैः शुक्तिकोशैर्मुक्ता उत्सृष्टा ये मौक्तिकप्रकरा मुक्तानिकरास्तैरिव स्थितैरित्युत्प्रेक्षा । लाजाः कुसुमानीव तैर्लाजकुसुमैः आचारलाजैरित्यर्थः । प्रियं रथाङ्गं चक्रं यस्य तं प्रियरथाङ्गं चक्रिणं, हरिमित्यर्थः । अवाकिरन् छादयामासुः ॥ ३७ ॥

हिमेति । हिममुक्तः शिशिरापगमाद्धिमान्निर्मुक्तो यश्चन्द्रः स इव । रुचिरः, अन्यत्र तेन रुचिरः । पद्मेन, पद्मया च सह वर्त्तत इति सपद्मः स एव सपद्मकः । पद्महस्तः, सश्रीकश्च । शैषिकः स्वार्थिको वा कप् प्रत्ययः । अन्यच्च सपङ्कजः । शैषिकः कप्रत्ययः । द्विजान् ब्राह्मणान्, अन्यत्र पक्षिगणान् कोकिलादीन् मदयन् हर्षयन् जनितमीनकेतनः प्रद्युम्नजनकः,अन्यत्र मदनोद्दीपकः । प्रसादिता अनुगृहीताः सुरा देवा येन, अन्यच्च प्रसादिता निर्म्मलीकृता सुरा मदिरा यस्मिन् स माधवो हरिर्वसन्तश्च । 'माधवस्तु वसन्ते स्याद्वैशाखे गरुड़ध्वजे' इति विश्वः । प्रमदैव जनस्तस्य प्रमदाजनस्य । जातावेकवचनम् ।

धरणीधरेन्द्रदुहितुर्भयादसौ
विषमेक्षणः स्फुटममूर्न पश्यति ।
मदनेन वीतभयमित्यधिष्ठिताः
क्षणमीक्षते स्म स पुरो विलासिनीः ॥३९॥

विपुलेन सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः
स पुरस्त्रियैकतमयैकया दृशा ॥४०॥

चिराय महोत्सवोऽभवत्, तद्वदानन्दकरोऽभूदित्यर्थः । इष्टानन्दकरत्वसाम्येन माधवे महोत्सवरूपणाद्रूपकसिद्धिः । श्लेषस्तु हरिवसन्तयोरिह नास्त्येव । प्रकृताप्रकृतश्लेषे विशेष्यश्लेषायोगात् । किन्तु शब्दशक्तिमूलो ध्वनिरेव ॥ ३८ ॥

धरणीति । असौ स्वदाहको विषमेक्षणस्त्र्यक्षः धरणीधरेन्द्रदुहितुः पार्वत्याः । सपत्नीशङ्किन्या इति भावः । 'भीत्रार्थानां भयहेतुः' इति पञ्चमी । भयात् स्फुटं अमूः पौरयोषितः न पश्यतीति हेतोरिति विश्वासादित्यर्थः । अतएव गम्योत्प्रेक्षा । मदनेन वीतभयमधिष्ठिता आक्रान्ता, अत्यारूढमदना इत्यर्थः । पुरोविलासिनीः स हरिः क्षणमीक्षते स्म । सविस्मयमिति भावः ॥ ३९ ॥

विपुलेति ॥ युगक्षये कल्पान्ते । सागरे शेते इति सागरशयस्य । 'अधिकरणे शेतेः' इत्यच्प्रत्ययः । 'शयवासवासिष्वकालात्' इति विकल्पादलुगभावः । यस्य हरेर्विपुलेन कुक्षिणा भुवनानि पपिरे पीतानि । पिबतेः कर्मणि लिट् । स हरिरेकतमया पुरस्त्रिया पुनः कयाचित् पौराङ्गनया मदविभ्रमेण मदविकारेणासकलया असमग्रया एकया दृशा पपे पीतः, सतृष्णं दृष्ट इत्यर्थः । कुक्षिकोणनिविष्टनिखिलविष्टपस्य हरेर्महत आधेयस्यात्यल्पतरैककान्ताकटाक्षकोणाधारत्वोक्त्या चमत्कारादधिकालङ्कारः । 'आधाराधेययोरानुरूप्याभावोऽधिको मतः' इति लक्षणात् । अयञ्च तात्कालिकविकारात्मा विलासाख्यो भावो यत्कटाक्षवीक्षणम् । 'तात्कालिकविकारः स्याद्विलासोऽङ्गक्रियादिषु' इति दशरूपकात् ॥ ४० ॥

अधिकोन्नमद्घनपयोधरा मुहुः
प्रचलत्कलापिकलशङ्खकस्वना ।
अभिकृष्णमङ्गुलिमुखेन काचन
द्रुतमेककर्णविवरं व्यघट्टयत् ॥४१॥

परिपाटलाब्जदलचारुणाऽसकृ-
त्स्खलिताङ्गुलीकिशलयेन पाणिना ।
सशिरःप्रकम्पमपरा रिपुं मधो-
रनुदीर्णवर्णनिभृतार्थमाह्वयत् ॥४२॥

नलिनान्तिकोपहितपल्लवश्रिया
व्यवधाय चारु मुखमेकपाणिना ।
स्फुरदङ्गुलीविवरनिःसृतोल्लस-
द्दशनप्रभाङ्कुरमजृम्भतापरा ॥४३॥

अधिकेति । काचन कान्ता अभिकृष्णं कृष्णाभिमुखम् । आभिमुख्येऽव्ययीभावः । अधिकं भुजोन्नमनाद्भूयमुन्नमन् घनः कठिनः पयोधरः स्तनो यस्याः सा मुहुः प्रचलतो नृत्यतः कलापिनो बर्हिण इव कलो मधुरः शङ्खकस्वनो वलयध्वनिर्यस्याः सा सती । 'शङ्खकं वलये कम्बौ' इति विश्वः । अङ्गुलिमुखेनाङ्गुल्यग्रेणैकस्य कर्णस्य विवरं रन्ध्रं द्रुतं शीघ्रं व्यघट्टयत्, कण्डूविनोदार्थमिवाताडयत् । वस्तुतस्तु भावाविष्करणार्थमेवेति भावः । अयञ्च पूर्ववद्विलास एव । कलापिकलेत्युपमा ॥ ४१ ॥

परीति । अपरा स्त्री । परिपाटलाब्जदलचारुणा रक्ताब्जपत्त्ररुचिरेण असकृन्मुहुस्स्खलितान्यङ्गुल्यः किसलयानीवाङ्गुलीकिसलयानि यस्य तेन पाणिना सशिरःप्रकम्पं शिरःकम्पयुक्तं यथा तथा मधोः रिपुं हरिमनुदीर्णवर्णमनुच्चारिताक्षरम् अतएव निभृतार्थं परेषामविदितार्थं यत्तदनुदीर्णवर्णनिभृतार्थं यथा तथा आह्वयत् । परप्रकाशनभयादव्याहरन्ती, चेष्टयैवाह्वानं कृतवतीत्यर्थः । अत्रापि पूर्ववद्विलासोपमे भावालङ्कारौ ॥ ४२ ॥

नलिनेति । अपरा स्त्री नलिनान्तिके उपहितस्य पल्लवस्य श्रीरिव

वलयार्पितासितमहोपलप्रभा-
बहुलीकृतप्रतनुरोमराजिना ।
हरिवीक्षणाक्षणिकचक्षुषान्यया
करपल्लवेन गलदम्बरं दधे ॥४४॥

निजसौरभभ्रमितभृङ्गपक्षति-
व्यजनानिलक्षयितघर्मवारिणा ।
अभिशौरि काचिदनिमेषदृष्टिना
पुरदेवतेव वपुषा व्यभाव्यत ॥४५॥

ग्रोर्यस्य तेन । मुखसन्निधानादिति भावः । एकपाणिना चारु निसर्गसुन्दरं मुखं व्यवधाय तिरोधाय स्फुरदङ्गुलीविवरनिःसृता उज्ज्वलाङ्गुल्यन्तरालनिर्गता अतएवोल्लसन्त उत्सर्पन्तो दशनप्रभा एकाङ्कुरा यस्मिन् कर्मणि तद्यथा तथा अजृम्भत जृम्भणमास्यविवरणं तच्चेष्टवस्तुसाक्षात्कारकृतजाड्यानुभावः । अत्र नलिनपल्लवयोरसम्बन्धयोः सम्भावनया सम्बन्धाभिधानातिशयोक्तिः ॥४३॥

वलयेति । हरिवीक्षणेऽक्षणिकचक्षुषा स्थिरदृष्ट्या, विस्मयादराभ्यां स्तिमितनेत्रयेत्यर्थः । अन्यया स्त्रिया गलत्सुखपारवश्यात् स्रंसमानमम्बरं वलयेष्वर्पिताः खचिता ये असितमहोपला नीलमहामणयः । 'उपलौ मणि-पाषाणौ' इति विश्वः । तेषां प्रभाभिर्बहुलीकृता प्रतनुः सूक्ष्मा रोमराजि-र्यस्य तेन करपल्लवेन दधे धृतम् । अयञ्च तात्कालिकविहारलक्षणविलासः । अत्रेन्द्रनीलप्रभाणां रोमावलीबहुलीकरणोक्त्या प्रभास्वपि रोमराजित्वप्रतीते-र्भ्रान्तिमदलङ्कारो व्यज्यते इति वस्तुनालङ्कारध्वनिः ॥ ४४ ॥

निजेति । काचित् स्त्री निजेनात्मीयेन सौरभेण सौगन्ध्येन भ्रमितानां भ्रमणं कारितानां भृङ्गाणां पक्षतयः पक्षमूलानि । 'स्त्री पक्षतिः पक्षमू-लम्' इत्यमरः । 'पक्षात्तिः' इति तिप्रत्ययः । ता एव व्यजनानि इति रूपकं स्वेदहरणलिङ्गात् । तासामनिलेन क्षयितं नाशितं घर्मवारि स्वेदो यस्य तेन अभिशौरि शौरेरभिमुखम् । आभिमुख्येऽव्ययीभावः । अनिमेषा दृष्टिर्यस्य तेन वपुषा निमित्तेन पुरदेवतेव इन्द्रप्रस्थाधिदेवतेव व्यभाव्यत विभा-

अभियाति नः सतृष एष चक्षुषो
हरिरित्यखिद्यत नितम्बिनीजनः ।
न विवेद यः सततमेनमीक्षते
न वितृष्णतां व्रजति खल्वसावपि ॥४६॥

अकृतस्वसद्मगमनादरः क्षणं
लिपिकर्म्मनिर्म्मित इव व्यतिष्ठत ।
गतमच्युतेन सह शून्यतां गतः
प्रतिपालयन् मन इवाङ्गनाजनः ॥४७॥

विता, तर्कितेति यावत् । अनिमेषत्वं चेष्टदर्शनजन्यजाड्यसञ्चार्यनुभावः । 'अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः । अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र ॥' इति लक्षणात् । इहाङ्गसौरभानिमेषत्वाभ्यां पुराधिवासाच्च पुराधिदेवतात्वमुत्प्रेक्ष्यते इत्युपात्तगुणनिमित्ता जातिस्वरूपोत्प्रेक्षा । तया चास्या जात्याः पद्मिनीत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । निजसौरभेत्यनेन 'कमलमुकुलमृद्वी फुल्लराजीवगन्धिः सुरतवयसि यस्याः सौरभं दिव्यमङ्गम्' इत्यादिपद्मिनीलक्षणोपलक्षणादिति । विपुलेनेत्यादिश्लोकोक्ताः षडपि नायिकाः प्रौढाः साधारण्यश्च तत्र चासामसम्भवात् । अन्यथासां कृतचेष्टावर्णनानौचित्याच्चेत्यलमतिप्रपञ्चेन ॥ ४५ ॥

अभियातीति । असौ नितम्बिनीजनः स्त्रीजनो नोऽस्माकं चक्षुषः सतृषः सतृष्णस्यैव सतश्चक्षुषि सतृष्णे सत्येव । अनादृत्यैवेत्यर्थः । 'षष्ठी चानादरे' इति षष्ठी । एष हरिरभियात्यभिगच्छतीत्यखिद्यत खेदं गतः । खिदेर्दैवादिकात् कर्तरि लङ् । अत्रोत्प्रेक्ष्यते —नेति । यो जन एनं हरिं सततमीक्षते असावपि खलु वितृष्णतां न व्रजतीति न विवेद । नित्यदर्शनेऽप्यपूर्ववदेव भवतीति नाबुध्यतेत्यर्थः । वेद चेन्नाखिद्यतेति भावः । अत्राखिद्यतेति स्त्रीणां प्रारब्धहरिवीक्षणसुखविच्छेदकृतविषादाख्यसञ्चारिभावनिबन्धनात् प्रेयोऽलङ्कारः । तदुत्थापिता चेममुक्तावेदनोत्प्रेक्षेति सङ्करः । 'प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसंक्षयः' इति दशरूपके । सत्त्वसंक्षयश्चित्तभङ्गः ॥४६॥

अकृतेति । अङ्गनाजनः अच्युतेन सह गतं मनः प्रतिपालयन् प्रतीक्ष-

अलसैर्मदेन सुदृशः शरीरकैः
स्वगृहान् प्रति प्रतिययुः शनैः शनैः ।
अलघुप्रसारितविलोचनाञ्जलि-
द्रुतपीतमाधवरसौघनिर्भरैः ॥४८॥
नवगन्धवारिविरजीकृताः पुरो
घनधूपधूमकृतरेणुविभ्रमाः ।
प्रचुरोद्धतध्वजविलम्बिवाससः
पुरवीथयोऽथ हरिणातिपेतिरे ॥४९॥

माण इवेत्युत्प्रेक्षा । शून्यतां निरोजस्कतां गतः । अकृतस्वसद्मगमनादरः निवृत्तनिजगृहप्राप्त्यपेक्षः सन् लिपिकर्मनिर्मितः चित्रलिखित इवेत्युत्प्रेक्षा । क्षणं व्यतिष्ठत विस्पन्दमास्तेत्यर्थः । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । अतः शून्यतानुभावाच्चिन्तावगम्यते । 'ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्' इति दशरूपके । अत्रोत्प्रेक्षयोः सापेक्षत्वात् सङ्करः ॥ ४७ ॥

अलसैरिति । अलघु अधिकं प्रसारितैर्विलोचनैरेवाञ्जलिभिर्द्रुतं सत्वरम् । 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । पीतो यो माधवो हरिरेव रसोऽमृतम्, अन्यत्र मधु मद्यं तत्सम्बन्धि रसो माधुर्यं माधवरसः । 'रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे । रेतस्यास्वादने हेम्नि निर्यासेऽमृतशब्दयोः ॥' इति वैजयन्ती । तस्यौघः समूहस्तेन निर्भरैर्दुर्भरैः, गुरुभिरिति यावत् । अत एव मदेनालसैर्मन्थरैः शरीरकाणि । अल्पशरीराणीत्यर्थः । 'अल्पे' इति परिमाणे कन्प्रत्ययः । तैरुपलक्षिताः सुदृशः शनैःशनैः स्वगृहान् प्रतिययुः प्रतिनिर्गताः । स्वयं लघून्यपि द्रव्याणि रसद्रवभरणाद्गुरु भवन्तीति भावः । अत्र माधवरसौघनिर्भरत्वविशेषणगत्या शनैःशनैः प्रतियानहेतुत्वात् कार्यहेतुकं काव्यलिङ्गं तच्च माधवरसेनेति श्लेषमूलातिशयोक्त्युत्थापितमिति सङ्करः ॥ ४८ ॥

नवेति । अथ पुरप्रवेशानन्तरं हरिणा पुरः पूर्वं नवगन्धवारिभिर्गन्धवासितोदकैर्विरजीकृता अविरजसो विरजसः सम्पद्यमानाः कृताः । 'अरु-

उपनीय विन्दुसरसो मयेन या
मणिदारु चारु किल वार्षपर्वणम्।
विदधेऽवधूतसुरसद्मसम्पदं
समुपासदत् सपदि संसदं स ताम् ॥५०॥
अधिरात्रि यत्र निपतन्नभोलिहां
कलधौतधौतशिलवेश्मनां रुचौ।
पुनरप्यवापदिव दुग्धवारिधि-
क्षणगर्भवासमनिदाघदीधितिः ॥५१॥

मनश्चक्षुश्चेतोरहोरजसां लोपश्च' इत्यभूततद्भावे च्विप्रत्यये सलोपः, 'अस्य च्वौ' इतीकारः। घनैः सान्द्रैर्धूपानामगुरुधूपानां धूमैः कृतो रेणुविभ्रमो रजोभ्रमो याभिस्ताः प्रचुरं बहुलमुन्नतेषूच्छ्रितेषु ध्वजेषु ध्वजस्तम्भेषु विलम्बीनि विलम्बमानानि वासांसि पताका यासु ताः पुरवीथयोऽतिपेतिरेऽतिपातिताः, अतिक्रान्ता इत्यर्थः। पतेः कर्म्मणि लिट् एत्वाभ्यासलोपौ। अत्र सादृश्याद्धूमे रेणुभ्रान्त्या भ्रान्तिमदलङ्कारः। रेणुविभ्रमशब्देन रजोविलासस्यापि प्रतीतेस्तस्य विरजीकरणेन विरोधाद्विरोधाभासश्चेत्यनयोरेकवाचकानुप्रवेशलक्षणः सङ्करः ॥ ४८ ॥

उपनीयेति। मयेनासुरशिल्पिना वृषपर्वा नाम कश्चिदसुरेश्वरः वृषपर्वण इदं वार्षपर्वणम्। 'तस्येदम्' इत्यण्। चारु मनोहरं मणिरेव दारु काष्ठम्, मणिमयं स्तम्भादिकलापमित्यर्थः। तद्बिन्दुसरसो हैमवतात् सरोविशेषादुपनीय समीपमानीय किलेत्यैतिह्ये। या संसद्विदधे निर्मिता। अवधूताधरीकृता सुरसद्मसम्पदिन्द्रभवनलक्ष्मीर्यया सा तां संसदं सभाम्। 'सभासमितिसंसदः। आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः' इत्यमरः। स हरिः सपदि समुपासदत् प्राप्त्। सदेर्लुङि 'पुषादि'—इति च्लेरङादेशः। पुरा किल खाण्डवदाहे पाण्डवेनाग्निदाहान्मोचितेन मयेन प्रत्युपकारार्थं पूर्वमात्मनैव बिन्दुसरसि गुप्तेन वृषपर्वगृहनिर्माणावशिष्टेन मणिशिलाकलापेन काञ्चनसभा धर्म्मराजाय निर्मितेति भारते। सभावर्णनाङ्गत्वेनार्जुनमयचरितवर्णनादुदात्तालङ्कारः। प्रभूतमहापुरुषचिन्तनं चेति सूत्रम् ॥५०॥

अथ दशभिः सभां वर्णयति—अधीत्यादि। अधिरात्रि रात्रिषु। विभ-

लयनेषु लोहितकनिर्मिता भुवः
शितिरत्नरश्मिहरितीकृतान्तराः ।
जमदग्निसूनुपितृतर्पणीरपो
वहति स्म या विरलशैवला इव ॥५२॥

विशदाश्मकूटघटिताः क्षपाकृतः
क्षणदासु यत्र च रुचैकताङ्गताः ।
गृहपङ्क्तयश्चिरमतीयिरे जनै-
स्तमसीव हस्तपरिमर्शसूचिताः ॥५३॥

स्यर्थेऽव्ययीभावः । यत्र सभायां नभोलिहामभ्रंलिहाम् । क्विप् । कलधौतं रौप्यम् । 'कलधौतं रूप्यहेम्नोः' इत्यमरः । तद्वद्धौता धवलाः शिला येषां तानि वेश्मानि, स्फटिकभवनानीत्यर्थः । तेषां रुचौ प्रभायां निपतन् प्रविशन् । अनिदाघदीधितिरनुष्णरश्मिर्हिमांशुः । पुनरपि दुग्धवारिधौ क्षीराब्धौ क्षणं गर्भवासम् । न तु मथनात् प्रागिव चिरगर्भवासमिति भावः । अवापत् प्रापदिवेत्युत्प्रेक्षा । तया वेश्मनां चन्द्रमण्डलातिक्रमो व्यज्यते ॥५१॥

लयनेष्विति । लीयते एष्विति लयनानि तेषु गृहेषु शितिरत्नानां नील-मणीनां रश्मिभिर्हरितीकृतानि हरितवर्णीकृतानि अन्तराणि मध्यानि यासां ताः लोहितमणयो लोहितकाः पद्मरागाः । 'लोहितान्मणौ' इति कन्-प्रत्ययः । तैर्निर्मिता भुवो भूमीर्विरलाः शैवला यासु ताः जमदग्निसूनोः परशुरामस्य पितॄणां तर्पणीस्तृप्तिकरीरप इवेत्युपमा । या सभा वहति स्म । जामदग्न्यः क्षत्रियास्रैः पञ्चशो ह्रदानुत्पाद्य ताभिरद्भिः पितॄनतर्पयत्, ताश्च रुधिरप्रकृतिकत्वाद्रक्तवर्णा एवेति पुराणम् ॥ ५२ ॥

विशदेति । किञ्चेति चार्थः । यत्र सभायां विशदाश्मकूटघटिताः स्फटिकशिलासङ्घातनिर्मिता अतएव क्षणदासु क्षपाकृतो निशाकरस्य रुचा चन्द्रिकयैकतां सावर्ण्यात् अभेदं गताः अतएव तमसीव हस्तपरिमर्शसूचिताः, पाणिस्पर्शैकगम्या इत्यर्थः । गृहपङ्क्तयो जनैश्चिरमतीयिरेऽतिक्रान्ताः । पुरोगतान्यपि स्फटिकभवनानि चन्द्रिकाभ्रमादतीत्य गत्वा पश्चात् करपरा-

निलयेषु नक्तमसिताश्मनाञ्चयै-
र्विसिनीबधूपरिभवस्फुटागसः ।
मुहुरत्नसङ्गिरपि यत्र गौरवा-
च्छशलाञ्छनांशव उपांशु जघ्निरे ॥५४॥
सुखिनः पुरोऽभिमुखतामुपागतैः
प्रतिमासु यत्र गृहरत्नभित्तिषु ।
नवसङ्गमैरबिभरुः प्रियाजनैः
प्रमदं त्रपाभरपराङ्मुखैरपि ॥५५॥

मर्शैः कथञ्चित् प्राप्यन्त इत्यर्थः । अत्र प्रकृतानां स्फटिकवेश्मनां गुणसाम्यादप्रस्तुतचन्द्रिकैक्योक्त्या सामान्यालङ्कारः । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् ॥ ५३ ॥

निलयेष्विति । यत्र सभायां निलयेषु नक्तं रात्रौ विसिन्यो दीर्घिकाः पद्मिन्यस्ता एव बध्वस्तासां परिभवेन निमीलितेन दूषणेन च स्फुटागसः स्पष्टापराधाः शशलाञ्छनांशवश्चन्द्रपादाः । अत्रसङ्गिरत्रस्यद्भिरपि निर्दोषैरपि इति चार्थः । 'त्रासो भीमणिदोषयोः' इति विश्वः । 'वा भ्राश'—इत्यादिना श्यनभावपक्षे शतृप्रत्ययः । असिताश्मनामिन्द्रनीलमणीनां चयैः समूहैः गौरवात् स्वयम्प्रभूतत्वात्, सम्भावितत्वाच्च उपांशु अंशुसमीपे, रहश्च । 'रहश्चोपांशु चालिङ्गे' इत्यमरः । मुहुर्जघ्निरे तिरोहिता, मारिताश्च । हन्तेः कर्मणि लिट् । समीपगताश्चन्द्रांशवः प्रभूतैरिन्द्रनीलांशुभिस्तिरस्कृता इत्यर्थः । अन्यत्रान्तःपुरद्रोहिणो निर्भीकैरपि सम्भावितैर्दुष्कीर्त्तिभयाद्गूढं हन्यन्त इति भावः । अत्र विसिनीनां वधूत्वरूपणात्तत्परिभाविनां चन्द्रांशूनां धूर्त्तकामुकत्वरूपणप्रतीतेरेकदेशविवर्त्तिरूपकं तच्च गौरवादुपांशु जघ्निर इति च श्लेषेणात्रसद्भिरपीति विरोधेन च सङ्कीर्य्यते ॥ ५४ ॥

सुखिन इति । यत्र सभायां नवः सङ्गमो येषां तैर्नवसङ्गमैरतएव त्रपाभरेण पराङ्मुखैर्विमुखैरपि गृहाणां रत्नभित्तिषु प्रतिमासु तत्सङ्क्रान्तप्रतिबिम्बेषु पुरोऽग्रेऽभिमुखतां उपागतैः प्रियाजनैः कान्ताजनैः सुखिनो

तृणवाञ्छया मुहुरवाञ्चिताननान्
निचयेषु यत्र हरिताश्मवेश्मनाम्।
रसनाग्रलग्नकिरणाङ्कुरान् जनो
हरिणान् गृहीतकवलानिवैक्षत ॥५६॥

विपुलालवालभृतवारिदर्पण-
प्रतिमागतैरभिविरेजुरात्मभिः।
यदुपान्तिकेषु दधतो महीरुहः
सपलाशराशिमिव मूलसंहतिम् ॥५७॥

भोगिनः प्रमदं हर्षं अविभरुर्बिभ्रति स्म। भृञो लिङि 'श्लौ' इति द्विर्भावे 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशः। स्त्रीणां वैमुख्येऽपि तत्प्रतिबिम्बाभिमुख्यात् पुंसां सुखमेव, स्त्रीणान्तु उभयथापि क्लिष्टमित्यर्थः। अत्र वैमुख्येऽप्याभिमुख्यमिति विरोधस्य प्रतिमास्विति निरासाद्विरोधाभासोऽलङ्कारः ॥ ५५ ॥

तृणेति। यत्र सभायां हरिताश्मनां मरकतमणीनां गृहाणाम्। 'गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः' इत्यमरः। निचयेषु सङ्घेषु तृणवाञ्छया तृणाशया मुहुरवाञ्चिताननान् नमितमुखान् अतएव रसनाग्रेषु लग्नाः किरणा अङ्कुरा इव येषां ते तान्। अतएव गृहीतकवलानुपात्ततृणग्रासानिव स्थितान् हरिणान् जन ऐक्षत ईक्षितवान्। ईक्षतेर्लङि 'आड़जादीनाम्' इत्याट् 'आटश्च' इति वृद्धिः। अत्र तृणवाञ्छयेति हरिणानां मरकतेषु तृणभ्रान्तेर्भ्रान्तिमदलङ्कारः। तन्मूला चेयं गृहीतकवलत्वोत्प्रेक्षेति सङ्करः ॥५६॥

विपुलेति। यदुपान्तिकेषु यस्याः सभाया उपान्तिकेषु समीपेषु महीरुहो वृक्षाः विपुलेष्वालवालेषु मूलजलाधारेषु। 'स्यादालवालमावालम्' इत्यमरः। भृतानि सम्भृतानि वारीण्येव दर्पणास्तेषु प्रतिमां प्रतिबिम्बतां गतैः, प्रतिबिम्बितैरित्यर्थः। आत्मभिः, स्वमूर्त्तिभिरित्यर्थः। सपलाशराशिं सपत्रसन्ततिं मूलसंहतिं दधत इव दधाना इव अभिविरेजुः। स्वालवालेषु स्वप्रतिबिम्बितैरधोमुखैः मूलेष्वपि सपत्रा इव रेजुरित्युत्प्रेक्षा ॥ ५७ ॥

उरगेन्द्रमूर्द्धरुहरत्नसन्निधे-
र्मुहुरुन्नतस्य रसितैः पयोमुचः ।
अभवन् यदङ्गनभुवः समुच्छ्वस-
न्नवबालवायजमणिस्थलाङ्कुराः ॥५८॥

नलिनी निगूढ़सलिला च यत्र सा
स्थलमित्यधः पतति या सुयोधने ।
अनिलात्मजप्रहसनाकुलाखिल-
क्षितिपक्षयागमनिमित्ततां ययौ ॥५९॥

उरगेन्द्रेति । उरगेन्द्राणां मूर्द्धसु रुहाणि रूढ़ानि । इगुपधलक्षणः कः । तेषां रत्नानां सन्निधेः सन्निधानान्मुहुरुन्नतस्य । यदायदा तत्सन्निधिस्त-दातदोदितस्येत्यर्थः । पयोमुचो मेघस्य रसितैः स्तनितैर्यदङ्गणभुवो यस्याः प्राङ्गणप्रदेशाः समुच्छ्वसन्तः प्रादुर्भवन्तो नवाः प्रत्यग्रा वालवायजमणिस्थला-ङ्कुरा वैदूर्य्यभूप्ररोहा यासु तास्तथोक्ता अभवन् । 'वैदूर्य्यं वालवायजम्' इत्य-मरः । वालवायो नाम वैदूर्य्यप्रभवो देशविशेषः । उरगेन्द्रमूर्द्धन्यरत्नाङ्कुरैः सह्योदितमेघध्वनेर्विदूरभूमिरुद्भिन्नाङ्कुरा भवतीति प्रसिद्धिः । तदुक्तम्—'उर-गमूर्द्धन्यरत्नसन्निधानादकालेऽपि मेघा गर्जन्तीति वार्त्ता, केचित्तु यत्रैवोरगरत्नं मेघरसितञ्च तत्रैव वैदूर्य्यभूमिः । अत्र समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारभेदः । 'तदुदात्तं भवेद्यत्र समृद्धं वस्तु वर्ण्यते' इति लक्षणात् ॥ ५८ ॥

नलिनीति । यत्र सभायां निगूढ़सलिला दलच्छन्नत्वात् अदृश्यसलिला नलिनी, वर्त्तत इति शेषः । या नलिनी सुष्टु युध्यत इति सुयोधने दुर्य्यो-धने । 'भाषायां शासियुधिदृशिधृषिमृषिभ्यो युच् वक्तव्यः' । स्थलमिति भ्रान्त्या अधः पतति सति अनिलात्मजस्य भीमसेनस्य प्रहसनेनाट्टहासेनाकुलानां क्षुभितानामखिलक्षितिपानां क्षयागमे नाशप्राप्तौ निमित्ततां ययौ । नलिनी-दलच्छन्नत्वात् सुयोधनस्य जले स्थलभ्रान्तिः—तया तस्य पातस्तेन भीमसेन-प्रहासस्तेन राज्ञां क्षोभस्ततस्तेषां मारणे रणः प्रवृत्तः इति परम्परया तत् क्षयकारणत्वं गतेत्यर्थः । अत्र सभावर्णनाङ्गतया भीमसेनादिचरितवर्णना-दुदात्तालङ्कारभेदः । लक्षणोक्तम् ॥ ५९ ॥

हसितुं परेण परितः परिस्फुर-
त्करवालकोमलरुचावुपेक्षितैः ।
उदकर्षि यत्र जलशङ्कया जनै-
र्मुहुरिन्द्रनीलभुवि दूरमम्बरम् ॥६०॥
अभितः सदोऽथ हरिपाण्डवौ रथा-
दमलांशुमण्डलसमुल्लसत्तनू ।
अवतेरतुर्नयननन्दनौ नभः
शशिभार्गवावुदयपर्वतादिव ॥ ६१॥
तदलक्ष्यरत्नमयकुड्यमादरा-
दभिधातरीत इत इत्यथो नृपे ।
धवलाश्मरश्मिपटलाविभावित-
प्रतिहारमाविशदसौ सदः शनैः ॥६२॥

हसितुमिति । यत्र सभायां परितः परिस्फुरन्ती करवालकोमला असि-श्यामा रुचिर्यस्यास्तस्यामिन्द्रनीलभुवि हसितुं परेण जानतान्येन जनोपेक्षितैः स्थलमेतत्, न जलमित्युपदिष्टैर्जनैरज्ञैः आगन्तुकजनैर्जलशङ्कया जलभ्रान्त्या मुहुर्दूरं अम्बरं वस्त्रं उदकर्षि नितम्बादुद्धृतम् । अत्रेन्द्रनीलस्थल-सादृश्यात् सलिलभ्रान्तेर्भ्रान्तिमदलङ्कारः ॥ ६० ॥

अभित इति । अथामलांशुमण्डलेन तेजःपुञ्जेन समुल्लसन्त्यौ भासमाने तनू मूर्त्ती ययोस्तौ नयननन्दनौ नेत्रानन्दकरौ हरिपाण्डवौ सदोऽभितः सभा-भिमुखम् । 'अभितः परितः'—इति द्वितीया । रथात् शशिभार्गवौ अमले-त्यादिविशेषणविशिष्टौ चन्द्रशुक्रौ नभोऽभिमुखमुदयाख्यात् पर्व्वतात् उदया-चलात् इवावतेरतुरवतीर्णवन्तौ । तरतेर्लिट् 'तॄफलभजत्रपश्च' इत्येत्वाभ्यास-लोपौ । उपमा ॥ ६१ ॥

तदिति । अथो रथावतरणानन्तरं असौ हरिर्नृपे युधिष्ठिरे आदरादित इत इत्यभिधातरि सति । इत इत आगम्यतामित्यभिदधाने सतीत्यर्थः । तत् पूर्वोक्तमलक्ष्यरत्नमयकुड्यं अदृश्यरत्नभित्तिकम् । धवलेन शुभ्रेण रश्मिपटलेन

नवहाटकेष्टकचितं ददर्श सः
क्षितिपस्य पस्त्यमथ तत्र संसदि ।
गगनस्पृशां मणिरुचां चयेन यत्
सदनान्युदस्मयत नाकिनामपि ॥ ६३ ॥
उदयाद्रिमूर्ध्नि युगपच्चकासतो-
र्दिननाथपूर्णशशिनोरसम्भवाम् ।
रुचिमासने रुचिरधाम्नि बिभ्रता-
वलघुन्यथ न्यषदतां नृपाच्युतौ ॥ ६४ ॥

मणिप्रभापुञ्जेनाविभावितप्रतिहारं अलक्ष्यद्वारम् । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । सदः सभां शनैराविशत् प्रविष्टवान् । अत्र कुड्यप्रतीहारयोरलक्ष्यत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ६२ ॥

नवेति । अथ प्रवेशानन्तरं स हरिस्तत्र संसदि सभायां नवभिर्हाटकेष्टकाभिः हिरण्येष्टकाभिश्चितम् । 'हिरण्यं हेम हाटकम्' इत्यमरः । 'इष्टकेशीकामालानां चिततूलभारिषु' इति ह्रस्वः । पक्वमृत्तिकाविशेषवाचकस्य इष्टकाशब्दस्य तादृशि सुवर्णविकारे सुवर्णघटवदुपचारात् प्रयोगः । क्षितिपस्य युधिष्ठिरस्य पस्त्यं सदनम् । 'निशान्तपस्त्यसदनम्' इत्यमरः । ददर्श । यत् सदनं गगनस्पृशामुच्चैस्तराणां मणिरुचां चयेन समूहेन नाकिनां देवानामपि सदनान्युदस्मयताहसत् । स्मयतेरुत्पूर्वात् कर्त्तरि लङ् । अत्रापि नृपसदनस्य सुरसदनादाधिक्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ६३ ॥

उदयाद्रीति । अथ नृपसदनदर्शनानन्तरं उदयाद्रेर्मूर्ध्नि शिखरे युगपच्चकासतोः प्रकाशमानयोः । 'चकासृ दीप्तौ' इति धातोर्लटः शत्रादेशः । दिननाथपूर्णशशिनोः सूर्य्यापूर्णचन्द्रमसोरसम्भवां सम्भवरहिताम् । तयोस्तथाभूतयोर्यौगपद्यायोगादभूतपूर्वामित्यर्थः । रुचिं शोभां बिभ्रतौ नृपाच्युतौ रुचिरधाम्नुरुज्ज्वलतेजसि । अलघुनि विपुले आसने सिंहासने न्यषदतामुपविष्टौ । सदेर्लुङि 'पुषादि'—इति च्लेरङादेशः, 'सदिरप्रतेः' इति षत्वम् । अत्र सम्भावनया अर्कपूर्णेन्दुशोभासम्बन्धोक्तेरसम्बन्धरूपातिशयोक्तिः ॥ ६४ ॥

सुतरां सुखेन सकलक्लमच्छिदा
सनिदाघमङ्गमिव मातरिश्वना ।
यदुनन्दनेन तदुदन्वतः पयः
शशिनेव राजकुलमाप नन्दथुम् ॥६५॥

अनवद्यवाद्यलयगामि कोमलं
नवगीतमप्यनवगीततां दधत् ।
स्फुटसात्त्विकाङ्गिकमनृत्यदुज्ज्वलं
सविलासलासिकविलासिनीजनः ॥६६॥

सुतरामिति । तद्राजकुलं कुरुकुलम् । सकलक्लमच्छिदा सकलदुःखच्छारिणा यदुनन्दनेन कृष्णेन सनिदाघं ससन्तापमङ्गं मातरिश्वा वायुस्तेन उदकान्यस्य सन्तीत्युदन्वान् उदधिः । 'उदन्वानुदधौ च' इति निपातः । तस्य पयो जलं शशिनेव सुतरामत्यन्तम् । 'अव्ययादाम्वद्रव्य'—इत्यामुप्रत्ययः । सुखेनाक्लेशेन नन्दथुमानन्दमाप । 'स्यादानन्दथुरानन्दः' इत्यमरः । 'ट्वितोऽथुच्' इत्यथुच्प्रत्ययः । मालोपमा ॥ ६५ ॥

अनवद्येति । सविलासो विलासयुक्तो लासिकविलासिनीजनो नर्त्तकस्त्रीजनः सविलासलासिकविलासिनीजनः । 'नृर्त्तकीलासिके समे' इत्यमरः । अनवद्यमगर्ह्यं वाद्यं वंशादि तस्य लयः साम्यं गीतस्य समकालत्वं तद्गामि ; द्रुतविलम्बादिमानानुवर्त्तीत्यर्थः । 'तालः कालक्रियामानं लयः साम्यम्' इत्यमरः । नवं गीतं यस्य तन्नवगीतं तथाप्यनवगीततां दधदिति विरोधेऽपिशब्दः । अगर्ह्यितत्वं दधत् इत्यविरोधाद्विरोधाभासः । 'अवगीतन्तु निर्वादे मुहुर्गीते च गर्ह्यिते' इति विश्वः । सत्त्वमन्तःकरणं तेन निर्वृत्तं नृत्यं सात्त्विकम् । अङ्गं हस्तादि तेन निर्वृत्तमाङ्गिकम् । 'निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके' इत्यमरः । ते स्फुटे यस्मिंस्तत् तथोक्तम् । वाचिकस्याप्युपलक्षणमेतत् । यथाह भगवान् भरतः—'पदार्थाभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः' इति । अत एव कालिदासोऽपि 'अङ्गसत्त्ववचनाश्रयं मिथः स्त्रीषु नृत्यमुपधाय दर्शयन्' इति । कोमलं मधुरन्नृत्यमुज्ज्वलमुद्धतं चानृ-

सकले च तत्र गृहमागते हरौ
नगरेऽप्यकालमहमादिदेश सः।
सततोत्सवन्तदिति नूनमुन्मुदो
रभसेन विस्मृतमभून्महीभृतः ॥६७॥
हरिराकुमारमखिलाभिधानवित्
स्वजनस्य वार्त्तमयमन्वयुङ्क्त च।
महतीमपि श्रियमवाप्य विस्मयः
सुजनो न विस्मरति जातु किञ्चन ॥६८॥

त्यत्। तथोक्तं दशरूपके—'भावाश्रयन्तु नृत्यं स्यान्नृत्यं ताललयाश्रयम्। आद्यं पदार्थाभिनयो मार्गोदेशी तथापरः॥ मधुरोद्धतभेदेन तद्द्वयं द्विविधं पुनः। लास्यताण्डवरूपेण नाटकाद्युपचारकम्॥' इति ॥ ६६ ॥

सकल इति। किञ्चेति चार्थः। स राजा हरौ कृष्णे गृहमागते सकले तत्र नगरे इन्द्रप्रस्थे। अकाले प्रसिद्धवसन्तादतिरिक्ते काले। महमुत्सवम्। 'मह उद्धव उत्सवः' इत्यमरः। आदिदेशाज्ञापयामास। नूनमित्युत्प्रेक्ष्यते। उन्मुदः कृष्णागमनादुत्कटानन्दस्य महीभृतो धर्म्मनन्दनस्य तन्नगरं सततमुत्सवा यस्मिंस्तत् सततोत्सवमिति इत्येतद्रभसेन त्वरया विस्मृतमभूत्। अन्यथा कथं कृतकरणोपदेश इति भावः॥ ६७॥

हरिरिति। किञ्चेति चार्थः। अखिलान्यभिधानानि नामानि वेत्तीत्यखिलाभिधानवित् सकलनामप्रपञ्चाभिज्ञः। 'नामरूपे व्याकरवाणि' इति श्रुतेरिति भावः। 'आख्याह्वे चाभिधानञ्च नामधेयञ्च नाम च' इत्यमरः। अयं हरिः कृष्णः कुमारमारभ्येत्याकुमारम्। 'आङ्मर्यादाभिविध्योः' इत्यभिधानादव्ययीभावः। स्वजनस्य बन्धुजनस्य। 'बन्धुस्वस्वजनाः समाः' इत्यमरः। वार्त्तमनामयम्, आरोग्यमित्यर्थः। 'वार्त्तं फल्गुन्यरोगे च' इत्यमरः। 'ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्' इति मनुस्मरणात्। अन्वयुङ्क्तापृच्छत्। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः। युजेः कर्त्तरि लङ्। तथा हि महतीं श्रियं सम्पदमवाप्यापि विस्मयो निरहङ्कारः सुजनः अत एव

मर्त्यलोकदुरवापमवाप्तरसोदयं
नूतनत्वमतिरिक्ततयानुपदं दधत् ।
श्रीपतिः पतिरसाववनेश्च परस्परं
सङ्कथामृतमनेकमसिस्वदतामुभौ ॥६९॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये श्रीकृष्ण-
समागमो नाम त्रयोदशः सर्गः ॥ १३ ॥

जातु कदाचिदपि किञ्चन किमपि न विस्मरति । सुजनः सम्पन्नोऽप्यहङ्कारं न करोतीति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६८ ॥

मर्त्येति । उभौ श्रीपतिः कृष्णः असाववनेः पतिर्धर्म्मसुतश्च परस्परं मर्त्यलोकैर्मनुष्यलोकैर्दुरवापं दुर्लभमवाप्तरसोदयं प्राप्तरसोत्कर्षम्, स्वादूभवदित्यर्थः । अतिरिक्ततयातिस्निग्धतया अनुपदमनुक्षणं प्रतिवाक्यञ्च नूतनत्वमपूर्व्वतां दधत् अनेकं बहुलं सङ्कथां सम्भाषणञ्चेदिराजजरासन्धादिकार्य्याचिन्तारूपं तदेवामृतं तदसिस्वदतां स्वादितवन्तौ । 'आकरः स्वपरभूरिकथानां प्रायशो हि सुहृदोः सहवासः' इति भावः । स्वदतेर्णौ चङ्युपधाया ह्रस्वः । सङ्कथामृतमिति रूपकालङ्कारः स्वादनलिङ्गात् ॥ ७९ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपाल-
वधमहाकाव्यव्याख्याने सर्वङ्कषाख्ये त्रयोदशः सर्गः ॥ १३ ॥

---

## चतुर्दशः सर्गः ।

---

तं जगाद गिरमुद्गिरन्निव स्नेहमाहितविकाशया दृशा ।
यज्ञकर्म्मणि मनः समादधद्वाग्विदां वरमकद्वदो नृपः ॥
लज्जते न गदितः प्रियं परो वक्तुरेव भवति त्रपाधिका ।
व्रीडमेति न तव प्रियं वदन् ह्रीमतात्रभवतैव भूयते ॥२॥

तमिति। वदतीति वदः। पचाद्यच्। कुत्सितस्य वदः कद्वदः गर्ह्यवाक्। 'गर्ह्यवादी तु कद्वदः' इत्यमरः। 'रथवदयोश्च' इति कोः कदादेशः। स न भवतीत्यकद्वदः साधुवादी नृपो युधिष्ठिरो यज्ञकर्म्मणि यज्ञानुष्ठाने मनः समादधत् सम्यगादधत्, तदेव हृदि निधायेत्यर्थः। आहितविकाशया कृतप्रसादया दृशा दृष्ट्या स्नेहमुद्गिरन् उद्वमन्निवेत्युत्प्रेक्षा, दृष्टिविकासात् प्रकटितस्नेहः सन्नित्यर्थः। वाचो विन्दन्ति वक्तुं विवेकञ्च जानन्तीति वाग्विदो, वाक्यकोविदाः। 'सत्सूद्विष'—इत्यादिना क्विप्। तेषां वरं श्रेष्ठं तं हरिं गिरं जगाद। ब्रुतेरर्थग्रहणात् दुह्याजित्यादिना गदेर्द्विकर्म्मकत्वम्। अत्रोत्प्रेक्षावृत्त्यनुप्रासयोः संसृष्टिः। अस्मिन् सर्गे रथोद्धता वृत्तम्। 'रान्नराविह रथोद्धता लगौ' इति लक्षणात्॥ १ ॥

गिरं जगादेत्युक्तं तामेव गिरं दशभिः प्रपञ्चयति—लज्जत इत्यादिभिः। परोऽन्यः कश्चित् पुमान् प्रियं गदितः, प्रियवाक्यमुक्तः सन्नित्यर्थः। गदेर्दुहादित्वादप्रधाने कर्म्मणि क्तः। अप्रधाने दुहादीनामिति वचनात्। न लज्जते। तस्योत्सुकत्वादिति भावः। किन्तु वक्तुः श्रोतुरेवाधिका त्रपा भवति। भयादिना मिथ्यावाचकत्वादिति भावः। प्रकृते तु नैवमित्याह—तव प्रियं वदन्, त्वां स्तुवन्नित्यर्थः। व्रीडां नैति। अनन्तगुणाधारे त्वयि बह्वोरपि प्रियस्यामिथ्यात्वादिति भावः। किन्तु स्तवनेनात्रभवता पूज्येनैव ह्रीमता भूयते प्रत्युत त्वमेवात्र जिह्रेषीत्यर्थः। महतामनुत्सुकत्वादिति

तोषमेति वितथैः स्तवैः परस्ते च तस्य सुलभाः शरीरिभिः ।
अस्ति न स्तुतिवचोऽनृतं तव स्तोत्रयोग्य न च तेन तुष्यसि ॥३॥
यद्यपि प्रियमयं तव ब्रुवन् न व्रजत्यनृतवादितां जनः ।
सम्भवन्ति यददोषदूषिते सार्व्व सर्व्वगुणसम्पदस्त्वयि ॥४॥
सा विभूतिरनुभावसम्पदां भूयसी तव यदायतायति ।
एतदूढगुरुभार ! भारतं वर्षमद्य मम वर्त्तते वशे ॥ ५ ॥

भावः । 'पूज्यस्तत्रभवान्' इति सज्जनः । 'इतराभ्योऽपि'—इति सार्व्वविभक्तिके तसिल्प्रत्यये 'सुप्सुपा' इति समासः ॥ २ ॥

तोषमिति । परस्त्वदन्यः वितथैरसत्यभूतैः स्तवैः स्तोत्रैः । 'स्तवः स्तोत्रं नुतिः स्तुतिः' इत्यमरः । तोषं उत्सुकतामेति ते च तस्य परस्य ते मिथ्यास्तवाः शरीरिभिः प्राणिभिः सुलभाः । असम्बद्धप्रलापानामनिरर्गलत्वादिति भावः । त्वयि तु नैवमित्याह—अस्तीति । हे स्तोत्रयोग्य ! गुणाकरादिति भावः । अतएव तव सम्बन्धि स्तुतिवचोऽनृतं नास्ति न भवति, तेन स्तुतिवचसा न तुष्यसि न प्रसीदसि । गम्भीरत्वादिति भावः । अत्र श्लोकद्वये पुरुषान्तरादुपमानभूतादाधिक्यकथनाद् व्यतिरेकालङ्कारः ॥ ३ ॥

यद्यपीति । अयं जनः स्वयमित्यर्थः परामृश्यते । यद्यपि तव प्रियं ब्रुवन् सन् अनृतवादितां मिथ्यावादित्वं न व्रजति न गच्छति । यद्यस्मात् हे सार्व्व,—सर्व्वहितत्वात् सार्व्वः तत्सम्बोधने । 'सर्वपुरुषाभ्यां णढञौ' इति णप्रत्ययः । दोषदूषितो न भवतीत्यदोषदूषिते सर्व्वगुणवर्जिते त्वयि सर्व्वगुणसम्पदः सम्भवन्ति । अनारोपितगुणवादो भूयानपि न विपर्य्येतीति भावः । अत्रोत्तरवाक्यार्थेन पूर्ववाक्यार्थस्य समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ४ ॥

सेति । हे ऊढगुरुभार ! विश्वम्भरत्वादिति भावः । एतत् भरतस्य राज्ञ इदं भारतं भारतनामाख्यं वर्षम् । वर्षोऽस्त्री भारतादौ चेति हैमः । लोकोऽयं भारतं वर्षमित्यमरः । अद्य इदानीमायतायति बहुतरकालस्थिरं यथा तथेत्यर्थः, उत्तरः कालः आयतिरित्यमरः । मम वशे आयत्ततायां

सप्ततन्तुमधिगन्तुमिच्छतः कुर्व्वनुग्रहमनुज्ञया मम ।
मूलतामुपगते खलु त्वयि प्रापि धर्म्ममयवृक्षता मया ॥ ६ ॥
सम्भृतोपकरणेन निर्म्मलां कर्त्तुमिष्टिमभिवाञ्छता मया ।
त्वं समीरण इव प्रतीक्षितः कर्षकेण वलजान् पुपूषता ॥७॥

वर्त्तत इति यावत्। वश आयत्ततायाञ्चेति विश्वः। सा तद्वशवर्त्तनं विधेयप्राधान्यात् स्त्रीलिङ्गता। तवानुभावसम्पदां सामर्थ्यातिशयानां भूयसी महती विभूतिर्म्महिमा कार्य्यमिति यावत्। त्वत्प्रसादलब्धमिदमैश्वर्य्यमित्यर्थः। अत्र निजैश्वर्य्यस्य भगवदनुभावसम्पदं विना सम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ ५ ॥

तदेवं स्तुत्वा हरिमभिमुखीकृत्य कृत्यांशमावेदयति—सप्तेति। सप्त तन्तवः संस्था यस्य तं सप्ततन्तुं क्रतुम्। 'सप्ततन्तुर्मखः क्रतुः' इत्यमरः। अधिगन्तुं प्राप्तुमिच्छतो मम अनुज्ञयानुज्ञादानेन अनुग्रहं प्रसादं कुरु, साहाय्यं कुर्वित्यर्थः। स्वतः समर्थस्य किं मदनुग्रहेणेत्याह—हे प्रभो, त्वयि मूलतां मुख्यकारणतामङ्घ्रित्वं चोपगते सति मया धर्म्ममयवृक्षता धर्म्मात्मकवृक्षता प्रापि प्राप्ता। प्राप्नोतेः कर्म्मणि लुङ्। प्रागपि त्वदनुग्रहादेव धर्म्ममर्जयन् धर्म्मराजोऽहमस्मीति भावः। अत्र नृपस्य धर्म्मवृक्षत्वेन हरेस्तन्मूलत्वेन रूपणात् सावयवरूपकम्। तेन त्वदनुग्रहः सर्वथा प्रार्थनीयो मया धर्मार्थिनेति तात्पर्य्यं व्यज्यते ॥ ६ ॥

सम्भृतेति। निर्म्मलां निर्दोषामिष्टिं यागम्। यजेः स्त्रियां क्तिन् 'वचिस्वपि'—इत्यादिना सम्प्रसारणम्। कर्त्तुमभिवाञ्छता अत एव सम्भृतोपकरणेन सम्पादितसाधनेन मया वलजान् धान्यराशीन्। 'वलजो धान्यराशिः स्यात्' इति वैजयन्ती। पुपूषता पवितुं साधयितुं निर्बुसीकर्त्तुमिच्छता। पुनातेः सन्नन्तात्शतृ: शत्रादेशः' 'सनि ग्रहगुहोश्च' इति चकारादिटः प्रतिषेधः। कर्षकेण कृषीवलेन समीरणो वायुरिव प्रतीक्षितः। प्रवाते शूर्पादिना धान्यस्योत्क्षेपः पवनम्। तद्वातं विनेव त्वां विना समाहृतसम्भारेणापि मया यागो दुष्कर इति भावः ॥ ७ ॥

वीतविघ्नमनघेन भाविता सन्निधेस्तव मखेन मेऽधुना ।
को विहन्तुमलमास्थितोदये वासरश्रियमशीतदीधितौ ॥ ८ ॥
स्वापतेयमधिगम्य धर्म्मतः पर्य्यपालयमवीवृधच्च यत् ।
तीर्थगामि करवै विधानतस्तज्जुषस्व जुहवानि चानले ॥ ९ ॥
पूर्व्वमङ्ग जुहुधि त्वमेव वा स्नातवत्यवभृथे ततस्त्वयि ।
सोमपायिनि भविष्यते मया वाञ्छितोत्तमवितानयाजिना ॥ १० ॥

वीतविघ्नमिति । अधुना तव सन्निधेर्हेतोर्मे मखेन क्रतुना कर्त्रा वीतविघ्नमविघ्नं अनघेन निर्दोषेण भाविता, भविष्यत इत्यर्थः । भावे लुट् 'स्यसिच्सीयुट्'—इत्यादिना लुटि चिण्वद्भावाद्वृद्धिः । तथाहि, अशीतदीधितावुष्णांशावास्थितोदये प्राप्तोदये सति को वासरश्रियं दिनशोभां विहन्तुमलं शक्तः, न कोऽपीत्यर्थः । अत्र हरिमरीचिमालिनोर्वाक्यभेदाद्बिम्बप्रतिबिम्बतया सन्निहितद्योतितया समानधर्म्मतया निर्दोषो दृष्टान्तालङ्कारः । 'यत्र वाक्यद्वये बिम्बप्रतिबिम्बतयोच्यते । सामान्यधर्म्मवाक्योक्तः स दृष्टान्तो निगद्यते ॥' इति लक्षणात् ॥ ८ ॥

स्वापतेयमिति । यत् स्वपतौ स्वामिनि साधु स्वापतेयं वित्तम् । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' । 'द्रव्यं वित्तं स्वापतेयम्' इत्यमरः । धर्म्मतः क्षत्रियस्य विजितमिति शास्त्रोक्तप्रकारादित्यर्थः । अधिगम्य लब्ध्वा यत्नेन पर्य्यपालयं पालितवान्, अवीवृधं वृद्धिञ्च प्रापितवान् । तत्तीर्थगामि विप्राधीनं करवै करिष्यामि । विधानतः पालितं वर्द्धयेन्नीत्या वृद्धं पात्रेषु निर्वपेदिति स्मरणात् । तच्च पात्रं त्वमेवेत्याह—तत्सर्वं जुषस्व सेवस्व । सदैव भुङ्क्ष्वेवेत्यर्थः । 'जुषी प्रीतिसेवनयोः' इति धातोर्लोट् । अनले जुहवानि च जुहुयाम् । तन्मुखेनापि तवैव भोक्तृत्वादिति भावः । जुहोतेः सम्प्रश्नलोटि मेर्निरादेशः ॥ ९ ॥

पूर्वमिति । वेति पक्षान्तरे, अथवेत्यर्थः । अङ्ग हे कृष्ण, 'अथ सम्बोधनार्थकाः । स्युः [ प्याट्पाड ] ङ्ग हे है भोः' इत्यमरः । पूर्वं त्वमेव जुहुधि, यजस्वेत्यर्थः । 'हुझल्भ्यो हेर्धिः' इति हेर्धिरादेशः । सोमपायिनि त्वयि अवभृथे यज्ञे । 'दीक्षान्तोऽवभृथो यज्ञे' इत्यमरः । स्नातवति सति

किं विधेयमनया विधीयतां त्वत्प्रसादजितयार्थसम्पदा ।
शाधि शासक जगत्त्रयस्य मामाश्रवोऽस्मि भवतः सहानुजः ॥११
तं वदन्तमिति विष्टरश्रवाः श्रावयन्नथ समस्तभूभृतः ।
व्याजहार दशनांशुमण्डलव्याजहारशबलं दधद् वपुः ॥ १२ ॥
सादिताखिलनृपं महन्महः सम्प्रति स्वनयसम्पदेव ते ।
किं परस्य स गुणः समश्नुते पथ्यवृत्तिरपि यदरोगिताम् ॥१३॥

ततोऽनन्तरं मया वाञ्छित उत्तमो वितानो राजसूयाख्यः । 'क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके' इत्यमरः । तेन तथा याजिना भविष्यते । भावे लट् । त्वयि दृष्टवति पश्चादहं यक्ष्य इत्यर्थः । अत्र श्लोकद्वयेन हरेर्यागासम्बन्धे तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ १० ॥

किमिति । अथवा त्वत्प्रसादेन त्वदनुग्रहेण जितया जयलब्धयानयार्थसम्पदा धनसम्पदा किं विधेयं किमनुष्ठेयं विधीयतां त्वयैव क्रियताम् । अहं तु अस्वतन्त्र इत्याह—हे जगत्त्रयस्य शासक ! न तु ममैवेति भावः । मां शाधि, शिक्षयेत्यर्थः । शासेर्लोटि 'हुझल्भ्यो हेर्धिः' इति धिरादेशः । 'झलो' इति सकारलोपः । सहानुजः सन् । सानुजः 'वोपसर्जनस्य' इति सहशब्दस्य सभावविकल्पः । भवतस्तवाश्रवो विधेयोऽस्मि । 'विधेयो विनयग्राही वचने स्थित आश्रवः' इत्यमरः । अत्रानाश्रवस्याश्रवत्वसम्बन्धोक्तेरतिशयोक्तिरिति । दशश्लोक्यामाचार्यमतेऽतिप्रियतराख्यानात् प्रेयोऽलङ्कारः । 'प्रेयः प्रियतराख्यानम्' इति लक्षणात् । आधुनिकास्तु भावनिबन्धने प्रेयोऽलङ्कार इति लक्षयन्ति स चोन्नीतस्तत्रतत्रोन्नेष्यते च ॥ ११ ॥

तमिति । अथानन्तरं विष्टराविव श्रवसी यस्य स विष्टरश्रवाः । 'विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः' इत्यमरः । इति एतादृशं तं वदन्तं नृपम् । समस्तभूभृतः सर्वान् नृपान् श्रावयन् दशनांशुमण्डलमिति व्याजोऽपदेशो यस्य तेन हारेण मुक्ताहारेण शबलं शारं वपुर्दधद्व्याजहार व्याहृतवान् । अत्र दशनांशुमण्डलस्य व्याजशब्देनासत्यत्वप्रतिपादनादपह्नवभेदः ॥१२॥

यदुक्तं 'सा विभूतिः' इत्यादि, तत्रोत्तरमाह—सादितेति । सम्प्रति ते तव महन्महस्तेजः स्वनयसम्पदेव निजनीतिमहिम्नैव सादिताखिलनृपं विजित-

तत् मुरारिभ भवति स्थिते पुरः कः क्रतुं यजतु राजलक्षणम्।
उद्धृतौ भवति कस्य वा भुवः श्रीवराहमपहाय योग्यता ॥ १४॥
शासनेऽपि गुरुणि व्यवस्थितं कृत्यवस्तुषु नियुङ्क्ष्व कामतः।
त्वत्प्रयोजनधनं धनञ्जयादन्य एष इति माञ्च मावगाः॥ १५॥

समस्तराजकं न तु मदनुभावादिति भावः। तथा हि पथ्या हिता इत्ति-रन्नपानादिक्रिया यस्य सोऽप्यरोगितामारोग्यं समश्नुते यदि प्राप्नोतीति चेत्, सोऽपि तदारोग्यमित्यर्थः। विधेयप्राधान्यात् पुंलिङ्गता। परस्य भिषजः स गुणः किं नेत्यर्थः। पथ्यवृत्तेरारोग्यमौषधसाध्यत्वाद्भिषजो गुणोऽस्तु, हितमेध्याशिनो न तथेत्यर्थः। स्वयमसमर्थः पराधीनसिद्धिरित्युपचार इति भावः। दृष्टान्तालङ्कारः सुगमः॥ १३॥

यदुक्तं—'पूर्वमङ्ग जुहुधि त्वमेव वा' इति तत्राप्याह—तदिति। तत् तस्मादुक्तरीत्या। तवैवाधिकारित्वादित्यर्थः। मुरारिभ विजयप्रजारक्षणादिगुणयोगाच्छ्रेष्ठक्षत्रिये। 'न पूजनात्' इति समासान्तप्रतिषेधः। भवति त्वयि पुरः स्थिते सति कः त्वदन्यः क इत्यर्थः। राज्ञः क्षत्रियस्य लक्षणं चिह्नं असाधारणं यस्य तं क्रतुम् राजसूयमित्यर्थः। यजतु, न कोऽपीत्यर्थः। 'राजा राजसूयेन यजेत' इति राजाधिकारताश्रवणाद्राजा त्वमेवेति भावः। सम्भावनायां लोट्। अत्र दृष्टान्तमाह—भुव उद्धृतौ भुव उद्धरणे श्रीवराहमादिवराहमपहाय कस्य पुनर्योग्यता सामर्थ्यं भवति, न कस्यापीत्यर्थः। योगाय प्रभवतीति योग्यः। 'योगाद्यच्च' इति यत्प्रत्ययः। अत्र राजवराहयोर्वाक्यभेदेन प्रतिबिम्बकरणाद्दृष्टान्तालङ्कारः॥ १४॥

यच्चोक्तम्—'सम्भृतोपकरणेन' इत्यादिना तत्राह—शासन इति। गुरुण्यतिदुष्करेऽपि शासने नियोगे व्यवस्थितम्, त्वदाज्ञाकरमित्यर्थः। मां कृत्यवस्तुषु कर्त्तव्यार्थेषु कामतो यथेच्छं नियुङ्क्ष्व प्रेषय। अनुचितमेतन्नियन्तरीति सङ्कोचं वारयन्नाह—त्वदिति। त्वत्प्रयोजनमेव धनं यस्य तम्। त्वदर्थैकनिष्ठमित्यर्थः। मां धनानि जयतीति धनञ्जयोऽर्जुनः। 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' इति खच्प्रत्यये मुमागमः। तस्मादेषोऽन्यः कृष्ण इति मां मावगाः मावेहि च। नियोगसमुच्चयार्थश्चकारः। अवपूर्वादिणो

यस्त्विह सवने न भूपतिः कर्म कर्मकरवत् करिष्यति ।
तस्य नेष्यति वपुः कबन्धतां बन्धुरेष जगतां सुदर्शनः ॥ १६ ॥
इत्युदीरितगिरं नृपस्त्वयि श्रेयसि स्थितवति स्थिरा मम ।
सर्वसम्पदिति शौरिमुक्तवानुद्वहन्मुदमुदस्थित क्रतौ ॥ १७ ॥
आननेन शशिनः कलां दधत् दर्शनक्षयितकामविग्रहः ।
आप्लुतः स विमलैर्जलैरभूदष्टमूर्त्तिधरमूर्त्तिरष्टमी ॥ १८ ॥

माङि लुङ्, 'इणो गा लुङि' इति गादेशः, 'न माङ्योगे' इत्यट्प्रतिषेधः । उभयोस्तत्कार्य्यनिबन्धनान्नारायणात्मत्वाच्च नावयोर्भेदप्रतिपत्तिः कार्य्येत्यर्थः । तथा च तद्वदेव नियोगेऽप्यसङ्कोच उचित इति भावः । अतएवानयोर्वाक्यार्थयोर्हेतुहेतुमद्भावाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । स च कृष्णयोर्भेदाभेदरूपातिशयोक्तिमूल इत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ १५ ॥

यच्चोक्तम्—'वीतविघ्नम्' इत्यादि तत्राभयदानं प्रतिजानीते—य इति । यो भूपतिः त्विहास्मिन् सवने यज्ञे । 'सवनं यजने स्नाने सोमे निर्दलनेऽपि च' इति विश्वः । कर्म्मकरवद्भृत्यवत् कर्म्म न करिष्यति तस्य भूपतेर्वपुः जगतां बन्धुः, क्षेमङ्करत्वादिति भावः । एष सुदर्शनो मच्चक्रम् । 'शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनम्' इत्यमरः । कबन्धतां शिरःशून्यतां नेष्यति प्रापयिष्यति । छेत्स्यामि चक्रेणास्य शिर इत्यर्थः । 'कबन्धं सलिले प्रोक्तमपमूर्द्धकलेवरे' इति विश्वः । अतो विघ्नशङ्का न कार्य्येति भावः । अत्र सुदर्शने बन्धुत्वरूपणाद्रूपकालङ्कारः ॥ १६ ॥

इतीति । इतीत्थमुदीरितगिरमुपन्यस्तवाचं शौरिं नृपो युधिष्ठिरः त्वयि श्रेयस्यभ्युदये विषये स्थितवति, त्वयि क्षेमङ्करे सतीत्यर्थः । मम सर्वसम्पत् स्थिरेत्युक्तवान् । मुदमुद्वहन् सहायसम्पत्त्या सन्तुष्यन् सन् । क्रतावुदस्थितः, क्रतुं कर्त्तुमुद्युक्तवानित्यर्थः । तिष्ठतेर्लुङि 'उदोऽनूर्द्ध्वकर्म्मणि' इत्यादिनात्मनेपदं, 'स्थाघ्वोरिच्च' इति सिचः कित्त्वादिकारः । ह्रस्वादङ्गादिति सकारलोपः ॥ १७ ॥

अथ पञ्चविंशच्छ्लोकैरनेकधा क्रतुं वर्णयति—आननेनेत्यादि । आननेन शशिनः कलामिव कलां कान्तिं दधत् । निदर्शनालङ्कारः । शशिमुख

तस्य साङ्ख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्व्वतः क्रियाः ।
कर्त्तृता तदुपलम्भतोऽभवद्‌वृत्तिभाजि करणे यथर्त्विजि ॥ १९ ॥
शब्दितामनपशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया ।
याज्यया यजनकर्मिणोऽत्यजन् द्रव्यजातमपदिश्य देवताम्॥२०॥

इत्यर्थः। अन्यत्र शशिखण्डधरेत्यर्थः। दर्शनेन क्षयितौ नाशितौ कामविग्रहौ कामक्रोधौ येन सः, अन्यत्र दृष्टिदग्धस्मरशरीरः। विमलैर्जलैराप्लुतः स्नातः। नद्यां स्नातीति दीक्षायां स्नानविधानादिति भावः। अन्यत्र गङ्गोदकसिक्ता। गङ्गाधरीत्यर्थः। स नृपः। अष्टानां पूरणी अष्टमी। 'तस्य पूरणे डट्' इति डट्प्रत्ययः। 'नान्तादसङ्ख्यादेर्मट्' इति मडागमः, 'टिड्ढाणञ्'—इत्यादिना ङीप्। अष्टानां मूर्त्तीनां समाहारोऽष्टमूर्त्तिः। 'तद्धितार्थ'—इत्यादिना समाहारे द्विगुरेकवचनं नपुंसकञ्च। तस्य धरो धारयिताऽष्टमूर्त्तिधरः शिवः तस्याष्टमी मूर्त्तिरभूत्, सोमदीक्षितोऽभूदित्यर्थः। तस्याप्यागमे शिवमूर्त्तित्वप्रसिद्धेः। अत्र प्रकृताप्रकृतयोर्नृपशिवयोः शिवशब्दमात्रसाधर्म्याच्छ्लेषालङ्कारः॥ १८ ॥

तस्येति। क्रिया कर्म्माणि होमादीनि, अन्यच्च पुण्यपापकर्म्माणि। स्वयमकुर्व्वतोऽननुतिष्ठतः, अन्यच्च उदासीनस्य। अतएव साङ्ख्यपुरुषेण साङ्ख्यशास्त्रोक्तेनात्मना तुल्यतां बिभ्रतस्तस्य राज्ञः करणेऽन्तःकरणे यथा, बुद्धाविवेत्यर्थः। ऋतौ यजतीति ऋत्विग्याजकः। 'ऋत्विजो याजकाश्च ते' इत्यमरः। 'ऋत्विग्दधृग्' इति निपातः। तस्मिन् वृत्तिभाजि। होमादिव्यापारं कुर्व्वतीत्यर्थः। अन्यच्च पुण्यपापकारिणि सति तदुपलम्भतः तस्य ऋत्विग्वृत्तेरुपलम्भान् ममेदमित्यनुसन्धानादेव कर्त्तृता क्रियानुष्ठातृत्वमभवत्। तथैव विधिसामर्थ्यादिति भावः। अतएवाह भगवान् जैमिनिः— 'अन्या वा स्यात् परिक्रिया स्नानात्मत्यप्यात्मनेपदे' इति, अन्यच्च तदुपलम्भतस्तस्या बुद्धिवृत्तेरुपलम्भात् साक्षित्वेनानुसन्धानादेव कर्त्तृत्वमभवत्। स्वयं क्रियाभोगरहितोऽप्यात्मा बुद्धेः सन्निधानाद्रक्तस्फटिकवत् तथा भवतीत्यर्थः। उपमालङ्कारः॥ १९ ॥

शब्दितामिति। वाक्यलक्षणविदो मीमांसाशास्त्रज्ञाः। यजनकर्म्मिणो

सप्तभेदकरकल्पितस्वरं साम सामविदसङ्गमुज्जगौ ।
तत्र सूनृतगिरश्च सूरयः पुण्यमृग्यजुषमध्यगीषत ॥ २१ ॥

यजनव्यापारवन्तः ऋत्विजः । व्रीह्यादित्वादिनिप्रत्ययः । अनूच्यत इत्यनुवाक्या तयानुवाक्यया । 'अनूच्यया याज्यया जुहोति' इति श्रुतेः । सा च प्रशास्तृपाठ्या । तदभावे होतृपाठ्या, देवताह्वानी ऋक् । वचेः 'ऋहलोर्ण्यत्' 'चजोः कुघिण्ण्यतोः' इति कुत्वम् । शब्दसंज्ञात्वात् 'वचोऽशब्दसंज्ञायाम्' इति न प्रतिषेधः । उच्चकैः अनपशब्दं यथा तथा शब्दिताम्, मन्त्रवर्णेनोच्चैः प्रकाशितामित्यर्थः । उच्चैः ऋचा क्रियत इति विधानात् । 'शब्द संशब्दने' इति धातोश्चौरादिकात् कर्मणि क्तः । देवतामिन्द्रादिकामपदिश्य द्रव्यजातं पशुपुरोडाशादिहविःसमूहं इज्यतेऽनयेति याज्या सा च होतृपाठ्या यागाङ्गसाधनमृक् 'याज्यया जुहोति' इति श्रुतेः । पूर्ववत् 'ऋहलोर्ण्यत्' इति करणे ण्यत् । 'यजयाचरुचप्रवचर्चश्च' इति कुत्वप्रतिषेधः । तया अत्यजन्, अयजन्नित्यर्थः । देवतोद्देशेन द्रव्यत्यागो याग इति लक्षणात् । स च त्यागसामान्यत आहवनीये जुहोतीति तदाहवनीय इति सामान्यन्यायाद्विधानादन्यत्रेति ध्येयम् । द्रव्यत्यागस्याध्वर्युमात्रकर्तृत्वेऽपि याज्यापुरोनुवाक्यद्वारा होतृप्रशास्त्रोरपि साहित्यादत्यजन्निति बहुत्वव्यपदेशः । तथाच मैत्रावरुणेन परोऽनुवाक्यायामनूक्तायां तत् प्रकाशितदेवतोद्देशेनाध्वर्युर्होतृपठितयाज्यान्ते वषट्कारेण सोमादिकं हविरग्नावत्याक्षीदित्यर्थः । स्वभावोक्तिरलङ्कारः ॥ २० ॥

सप्तेति । तत्र क्रतौ, सामानि वेत्तीति सामविदुद्गाता सप्तभेदं सप्तप्रकारं यथा तथा करेण हस्तेन कल्पिताः सम्पादिताः स्वरा निषादादयो यस्य तत्, करविन्यासभेदादिभिर्व्यञ्जितसप्तस्वरमित्यर्थः । 'निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त' इत्यमरः । यद्वा स्वराः क्रुष्टादयः । क्रुष्टः प्रथमो द्वितीयो मन्द्रो नीच इत्यादयः । साम बृहद्रथन्तरादिकमसङ्गमस्खलितमुज्जगावुदगायत् । किञ्च सूनृतगिरः प्रियसत्यवाचः । 'प्रियं सत्यञ्च सूनृतम्' इत्यमरः । सूरयो विद्वांसो होत्राध्वर्य्वादयः पुण्यं श्रेयस्करम् । ऋचश्च यजूंषि च तत् ऋग्यजुषमग्निमीळे इषे इत्यादिकम् । द्वन्द्वैकवद्भावः

बद्धदर्भमयकाञ्चिदामया वीक्षितानि यजमानजायया।
शुष्मणि प्रणयनादिसंस्कृते तैर्हवींषि जुहवाम्बभूविरे ॥ २२ ॥
नाञ्जसा निगदितुं विभक्तिभिर्व्यक्तिभिश्च निखिलाभिरागमे।
तत्र कर्मणि विपर्य्यणीनमन् मन्त्रमूहकुशलाः प्रयोगिणः ॥ २३॥

'अचतुर' इत्यादिना द्वन्द्वे समासान्तनिपातः। अध्यगीषत, इङो लुङि 'विभाषा लुङ्लृङोः' इति गाङादेशपक्षे 'गाङ् कुटादि'—इति सिचः कित्त्वे 'घुमा'—इत्यादिना ईत्वम्। अत्र सामसामेत्यादौ वृत्त्यनुप्रासभेदो द्रष्टव्यः ॥ २१ ॥

बद्धेति। बद्धं दर्भमयं दर्भविकारं काञ्चिदाम रशनागुणो यस्यास्तया। आम्नोभसन्नद्धयेत्यर्थः। 'आशासना सौमनसाम्' इत्युत्तरेण 'गार्हपत्यमूर्द्धं-र्जुमासीनां पत्नीं सन्नह्य तिष्ठन्तीं वाचयतीत्येके, मौञ्जेन दाम्नान्यतरतः पाशेन योक्त्रेण च' इत्यापस्तम्बवचनात्। दामेति 'डाबुभाभ्यामन्यतरस्याम्' इति डाप्प्रत्ययः। यजमानो यष्टा। 'पूङ्यजोः शानन्' इति यजेः शानन् प्रत्ययः। तस्य जायया पत्न्या वीक्षितानि दृष्टानि हवींष्याज्यादीनि 'पत्न्यवेक्षते' इत्या-म्नायस्य पत्न्यवेक्षणसंस्कारविधानादर्थप्रधानत्वात् सर्वेषामाज्यादीनां प्राणभृन्न्या-येन वीक्षितत्वव्यपदेशः। प्रणयनं नाम गार्हपत्यादुद्धृत्य मन्त्रेणायन्ते साद-नम्। आदिशब्दात्परिस्तरणपरिधानसंमार्गादिसंस्कारसंग्रहः। तैः प्रणय-नादिभिः संस्कृते आहितातिशये शुष्मण्यग्नौ। 'बर्हिः शुष्मा कृष्णवर्त्मा' इत्यमरः। अत्राप्याहवनीये जुहोतीति हूयमानेऽध्वर्युः कर्ता। जुहूपात्र-व्यापृतया स्रुवाहवनीयं प्रधानमिति न्यायवचनात्। तैः ऋत्विग्भिः जुहवा-म्बभूविरे। जुहोतेः कर्मणि टिट् 'भीह्रीभृहुवाम्'—इति विकल्पादाम्प्र-त्ययः। अत्र विषयस्य योक्त्रस्यानुपादानेन विषयिणः काञ्चीगुणस्यैव तदभे-देन निर्देशाद्भेदेऽभेदरूपातिशयोक्तेरनुप्रासेन सङ्करः ॥ २२ ॥

नेति। तत्र तस्मिन् कर्मणि यज्ञकर्मणि। अन्यथा श्रुतस्य शब्दस्यान्य-थालिङ्गवचनादिभेदेन विपरिणमनमूहः। तत्र कुशलाः। प्रयोग एषाम् स्तीति प्रयोगिणः प्रयोक्तारः ऋत्विजः आगमे आम्नाये निखिलाभिर्विभ-

**संशयाय दधतोः सरूपतां दूरभिन्नफलयोः क्रियां प्रति।**
**शब्दशासनविदः समासयोर्विग्रहं व्यवससुः स्वरेण ते ॥ २४ ॥**

क्तिभिः प्रथमादिभिः सुब्विभक्तिभिस्तिङ्विभक्तिभिश्च। विभक्तिग्रहणं वचनोपलक्षणम्। व्यक्तिभिर्लिङ्गैश्चाञ्जसा सुखेन निगदितुं पठितुं न भवत्यशक्यत्वादिति नाञ्जसा निगदितुम्। 'अञ्जस उपसङ्ख्यानम्' इति अलुक्। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। अथवा अञ्जसेति तृतीयान्तप्रतिरूपकमव्ययं तत्त्वार्थे। 'अञ्जसा तत्त्वतूर्णयोः' इति विश्वः। अञ्जसा तत्त्वत इत्यर्थः। अस्मिन् पक्षे नैकपद्यनियमः। तं मन्त्रं कर्माङ्गदेवतारूपवाक्यं विपर्यणीनमन् विपरिणमन्ति स्म, विपरिणमितवन्त इत्यर्थः। विपरिपूर्वकाण्यन्तात् णमधातोर्लुङ्। सन्वद्भावे 'सन्यतः' इत्यभ्यासस्येत्वम्। 'दीर्घो लघोः' इति दीर्घः। 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम्। नाञ्जसेति पाठविशेषणगत्या मन्त्रविपरिणमनहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ २३ ॥

संशयायेति। संशयाय सन्देहोत्पादनाय सरूपतां सादृश्यं दधतोः। उभयत्र रूपसाम्यादयं समासोऽयं वेति संशयं कुर्व्वतोरित्यर्थः। यथेन्द्रशत्रुरित्यत्रेन्द्रस्य शत्रुः शातयिता हन्तेति षष्ठीतत्पुरुषः। उतेन्द्रः शत्रुर्यस्येति बहुव्रीहिरिति सारूप्यसंशयः। तत्रानियमे दोषमाह—क्रिया प्रकृतं कर्म्म तां प्रति, तामुद्दिश्येत्यर्थः। दूरभिन्नमत्यन्तविलक्षणं फलं ययोर्दूरभिन्नफलयोस्तयोरर्थभेदात् कर्म्मणः फलभेदं प्रतिपादयतोरित्यर्थः। यथेन्द्रशत्रुरित्यत्रैव षष्ठीसमासस्येष्टत्वे वृत्रस्येन्द्रहन्तृत्वम्। बहुव्रीहौ तु तस्येन्द्रेण वध्यत्वमिति फलभेद इति भावः। समासयोरेवं विधयोः प्रसक्तयोः सतोरित्यर्थः। भावलक्षणे सप्तमी। शब्दशासनविदः शब्दशास्त्रज्ञाः। अन्येषामनधिकारादिति भावः। ते प्रकृता ऋत्विजः स्वरेण तत्तत्समासविहितस्वरवशेन विग्रहं वाक्येन समर्थाभिधानं व्यवससुर्निश्चिक्युः। अस्मिन् स्वरेऽयं समासः तत्रायं विग्रह इति अन्यतरपक्षावधारणं चक्रुः। यथेन्द्रशत्रुरित्यत्रैव पूर्व्वपदे उदात्तत्वेन बहुव्रीहिस्वरेण बहुव्रीहिसमासनिश्चयः। इन्द्रः शत्रुर्यस्येति विग्रहावधारणमित्यर्थः। व्यवपूर्व्वस्य स्यतेर्लिटि 'आदेच—' इत्यात्वे द्विर्वचनादिकार्य्ये षत्वसादेशः। अत्र संशयजनकत्वफलभेदप्रतिपादकपदार्थयोर्विशेषणगत्या

लोलहेतिरसनाशतप्रभामण्डलेन लसता हसन्निव ।
प्राज्यमाज्यमसकृद्वषट्कृतं निर्मलीमसमलीढ पावकः ॥ २५ ॥
तत्र मन्त्रपवितं हविः क्रतावश्नतो न वपुरेव केवलम् ।
वर्णसम्पदमतिस्फुटां दधन्नाम चोज्ज्वलमभूद्धविर्भुजः ॥ २६ ॥
स्पर्शमुष्णमुचितं दधच्छिखी यद्ददाह हविरद्भुतं न तत् ।
गन्धतोऽपि हुतहव्यसम्भवाद् देहिनामदहदोघमंहसाम् ॥२७॥

सन्दिग्धे न्यायः प्रवर्त्तत इति न्यायेन विग्रहस्य व्यवसायहेतुकत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २४ ॥

लोलेति । लसता प्रकाशमानेन लोलाश्चला हेतयो ज्वाला एव रसना रसज्ञाः । 'वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्' इति, 'रसज्ञा रसना जिह्वा' इति चामरः । तासां शतानि तेषां प्रभामण्डलेन हसन्निवेति रूपकसङ्कीर्णोत्प्रेक्षा । पावको वह्निः वषट्कृतं वषट्कारेण त्यक्तम् । हुतमित्यर्थः । 'हुतं त्रिषु वषट्कृतम्' इत्यमरः । निर्मलीमसममलिनं, शुद्धमित्यर्थः । 'मलीमसन्तु मलिनम्' इत्यमरः । 'ज्योत्स्नातमिस्रा—' इत्यादिना मलिनशब्दान्मत्वर्थे ईमसच्प्रत्ययान्तो निपातः । प्राज्यं प्रभूतमाज्यमसकृदलीढ आस्वादयत्, लिहेः स्वरितेत्त्वात्तङि कृते 'हो ढः' इति ढत्वं 'झषस्तथोर्धोऽधः' इति धत्वे ष्टुत्वे ढलोपदीर्घौ ॥ २५ ॥

तत्रेति । तत्र क्रतौ । मन्त्रैरुत्पवनादिमन्त्रैः पवितं पवित्रितम्, शोधितमित्यर्थः । पूङश्चेति विकल्पादिडागमः । हविराज्यादिकमश्नतो भुञ्जानस्य । अग्नेर्भोजनार्थाल्लटः शत्रादेशः । हवींषि भुङ्क्ते इति हविर्भुजोऽग्नेः सम्बन्धि । अतिस्फुटामतिविकसितां वर्णसम्पदं रूपसमृद्धिं दधत् केवलमेकम् । 'केवलं त्वेककृत्स्नयोः' इति शाश्वतः । वपुरेवोज्ज्वलमोजिष्ठं नाभूत् । किन्तु अतिस्फुटामतिव्यक्तां वर्णसम्पदमक्षरसमुदायं दधत् । 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णस्तु चाक्षरे' इत्यमरः । नाम हविर्भुगिति नामधेयं चोज्ज्वलं रूढमभूत् । निरन्तरं हविर्भोजनाद्वपुः पुष्टिमाप, नाम चार्थवदासीदित्यर्थः । अत्र भोजनस्याश्नत इति विशेषणगत्या हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥२६॥

स्पर्शमिति । स्वचितं स्वाभाविकमुष्णाख्यं स्पर्शं स्पर्शनेन्द्रियमात्रग्राह्यं

**उन्नमन् सपदि धूम्रयन् दिशः सान्द्रतां दधदधःकृताम्बुदः ।**
**द्यामियाय दहनस्य केतनः कीर्त्तयन्निव दिवौकसां प्रियम् ॥२८॥**
**निर्जिताखिलमहार्णवौषधिस्यन्दसारममृतं ववल्गिरे ।**
**नाकिनः कथमपि प्रतीक्षितं हूयमानमनले विषेहिरे ॥ २९ ॥**

गुणविशेषं दधद्दधानः शिखी शिखावानग्निः । व्रीह्यादित्वादिनिः । हविराज्यादिकं ददाह भस्मीचकारेति यत् तदद्भुतं न । उष्णस्पर्शसहकृतस्याग्नेः पार्थिवद्रव्यदहनशक्तेः स्वाभाविकत्वादिति भावः । कुतः हुतहव्यसम्भवाद्धुतहवनीयहविर्जन्याद्गन्धतो गन्धादपि, संक्रामिकगुणादपीत्यर्थः । देहिनां गन्धं जिघ्रतां प्राणिनामित्यर्थः । अंहसां पापानामोघमपीति भावः । अदहद्भस्मीकृतवान्, नाशितवानित्यर्थः । अदाह्यदहनन्त्वाश्चर्यमिति भावः । अत्रोष्णस्पर्शधारणस्य शिखिविशेषणभावेनास्य हविर्दाहहेतुत्वात् पदार्थहेतुकं तावदेकं काव्यलिङ्गम् । उत्तरार्द्धे त्वंहसां भस्मीकरणाभावलक्षणदाहविरोधस्य नाशलक्षणया समाधानाद्विरोधाभासे लक्ष्यस्य वाच्याभेदाध्यवसायमूलातिशयोक्तिप्रतिभोत्थापितः स एवादाह्यदाहकत्वरूपो वाक्यार्थभूतपूर्वोक्तपदार्थहेतुककाव्यलिङ्गसहकृतो हविर्दहनाद्भुतत्वहेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमन्यैः प्राधान्येन सङ्कीर्त्यते ॥ २७ ॥

उन्नमन्निति । सपदि होमक्षणमेवोन्नमन्नुद्गच्छन् दिशो धूम्रयन् धूम्रवर्णाः कुर्वन् सान्द्रतां नीरन्ध्रतां दधत् अत एवाधःकृताम्बुदः शोभयावधीरितमेघो मेघोपरि गतश्च दहनस्याग्नेः केतनः केतुः, धूम इत्यर्थः । द्यौरोको येषां तेषां दिवौकसां देवानाम् । पृषोदरादित्वात् साधुः । अथवा दिवमोको येषामिति विग्रहः । 'दिवं स्वर्गान्तरीक्षयोः' इति शिश्वः । तेषां प्रियमिष्टं कीर्त्तयन् कथयन्निव कीर्तनहेतोरिव, कीर्तनार्थमिवेत्यर्थः । अत एव फलोत्प्रेक्षा । कीर्तयन्निति 'लक्षणहेत्वोः क्रियायाः' इति हेत्वर्थे लटः शत्रादेशः । द्यामन्तरीक्षमियाय प्राप । इणो लिट् ॥ २८ ॥

निर्जितेति । नाकः स्वर्ग एषामस्तीति नाकिनो देवाः अखिलानां महार्णवौषधीनां महार्णवमन्थनसमये उत्थितानां दिव्यौषधिलतानां स्यन्दो मन्थनात्स्रुतो रसस्तस्य सारो श्रेष्ठांशः । अमृतमिति यावत् । स

**तत्र नित्यविहितापह्नतिषु प्रोषितेषु पतिषु द्युयोषिताम् ।**
**गुम्फिताः शिरसि वेणयोऽभवन् न प्रफुल्लसुरपादपस्रजः ॥३०॥**
**प्राशुराशु हवनीयमत्र यत् तेन दीर्घममरत्वमध्यगुः ।**
**उद्धतानधिकमेधितौजसो दानवांश्च विबुधा विजिग्यिरे ॥३१॥**

निर्जितो येन तत्। अमृतादपि स्वादित्यर्थः। अमृतं हविराख्यातम्। 'अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते' इति मेदिनी। ववल्गिरेऽभ्यवजह्रुः। 'वल्ग भोजने' कर्तरि लिट्। 'वल्गश्चाभ्यवाहरे प्रत्यवसानञ्च जेमनं जग्धिः' इति हलायुधः। तस्यामृताधिक्यं व्यनक्ति। अनले हूयमानं दीयमानामृतमिति भावः। प्रतीच्छितुं कथमपि विषेहिरे सोढवन्तः। होमविलम्बं कथञ्चिदसहन्तेत्यर्थः तृष्णा तु प्रागेव जिघ्रतीति रसातिशयोक्तिः। अत्र हविषोऽमृतमित्यभेदोक्त्या भेदरूपातिशयोक्तिस्तद्विशेषणपदार्थस्य वल्गनहेतुत्वात् काव्यलिङ्गभेदस्तया सङ्कीर्य्यते। 'परिनिविभ्यः सेवसितसयसिवुसह'—इत्यादिना सहेः षत्वम् ॥ २९ ॥

तत्रेति। तत्र क्रतौ नित्यं विहितोपह्नतिषु कृताह्वानेषु पतिषु भर्तृषु इन्द्रादिषु प्रोषितेषु प्रवासं गतेषु। वसेः कर्तरि क्तः, 'वसतिक्षुधोः'—इतीडागमः। द्युयोषितां स्वर्गस्त्रीणामिन्द्राण्यादीनां शिरसि वेणयो जटा एव गुम्फिता ग्रथिता अभवन्। प्रफुल्ला विकसिताः सुरपादपस्रजो मन्दारमाला न गुम्फिता अभवन्। अत्र सुरयोषितां वेण्यसम्बन्धेऽप्यसम्बन्धोक्तेश्च सम्बन्धेऽसम्बन्धरूपा असम्बन्धे सम्बन्धरूपा चातिशयोक्तिः, ताभ्याञ्च क्रतोरजस्रत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ३० ॥

प्राशुरिति। विबुधाः सुरा अत्र क्रतौ आशु क्षिप्रं हूयत इति हवनीयं हविर्यत् प्राशुः प्राशितवन्तः। 'अश भोजने' लिट् द्विर्वचनादिकार्य्ये 'अत आदेः' इत्यभ्यासदीर्घः। तेन हविःप्राशनेन दीर्घं चिरभोग्यममरत्वं देवत्वमध्यगुः प्रापुः। 'इणो गा लुङि' इति गादेशः। किञ्च, अधिकमत्यन्तमेधितौजसो वर्द्धितबलाः सन्तः उद्धतानुद्दृप्तान्दानवान्, असुरांश्च विजिग्यिरे जितवन्तः। विपूर्व्वाज्जयतेः कर्त्तरि लिट्। 'विपराभ्यां जेः' इत्यात्मनेपदम्। अत्र विबुधानां दीर्घामरत्वासुरविजयित्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः।

**नापचारमगमन् क्वचित् क्रियाः सर्व्वमत्र समपादि साधनम्।**
**अत्यशेरत परस्परं धियः सत्त्रिणां नरपतेश्च सम्पदः॥ ३२॥**
**दक्षिणीयमधिगम्य पङ्क्तिशः पङ्क्तिपावनमथ द्विजव्रजम्।**
**दक्षिणः क्षितिपतिर्व्यशिश्रणद् दक्षिणाः सदसि राजसूयकीः॥३३**

एधितौजस्त्वस्य विशेषणगत्या विजयहेतुत्वात् काव्यलिङ्गं तदुत्थापितश्चामरत्वासुरविजयक्रियासमुच्चय इति सङ्करः। गुणक्रियायौगपद्यं समुच्चयः॥ ३१॥

नापचारमिति। अत्र क्रतौ क्वचित् कुत्रापि क्रियाः कर्म्माण्यपचारं लोपविषयविपर्य्यासादिदोषं नागमन्। गमेर्लुङि 'पुषादि'—इति च्लेरङादेशः। अनपचारे हेतुमाह—अत्र सर्व्वं साधनं समपादि सम्पन्नम्। पद्यतेः कर्त्तरि लुङ्, 'चिण् ते पदः' इति चिण् प्रत्ययः कर्म्मणि वा। सम्पादितमित्यर्थः। 'चिण् भावकर्म्मणोः' इति चिण्प्रत्ययः। साधनसम्पत्तिमेव व्यनक्ति—अतीति। सत्त्रं यज्ञतन्त्वं येषामस्तीति सत्त्रिणामृत्विजाम्। 'सत्त्रमाच्छादनं यज्ञम्' इत्यमरः। धिय उत्तरोत्तरप्रयोगविज्ञानानि तदुक्तम्—आचतुर्थात् कर्म्मणोऽन्ते समीक्ष्यैतदं करिष्यामीति। तथा नरपतेः राज्ञः सम्पदः पदार्थसमृद्धयश्च परस्परमत्यशेरतातिशयितवत्यः। उभयेऽप्यतिसमग्रा इत्यर्थः। ज्ञानद्रव्ये हि क्रियासाधने तत्सम्पन्नस्य कुतः क्रियापचार इति भावः। अत्रानपचारवाक्यार्थस्य साधनसम्पत्तिवाक्यार्थहेतुकत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम्। तस्य परस्परातिशयक्रियारूपधर्म्मसाम्यगम्यौपम्यकेवलप्रकृतधीसम्पद्गोचरया तुल्ययोगितयोज्जीवितत्वेनयोरङ्गाङ्गिभावेन सङ्करः॥ ३२॥

दक्षिणीयमिति। अथानन्तरं दक्षिण औदार्य्यवान्। 'दक्षिणः सरलोदारौ' इत्यमरः। क्षितिपती राजा, दक्षिणामर्हतीति दक्षिणीयः। 'दक्षिणीयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि' इत्यमरः। 'कडङ्करदक्षिणाच्छ च' इति छप्रत्ययः। तं पङ्क्तेः स्वाधिष्ठितायाः पावनं पावयितारं पङ्क्तिपावनम्। पावयतेः कर्त्तरि ल्युट्। द्विजव्रजं ऋत्विग्वर्गमित्यर्थः। पङ्क्तिशः पङ्क्त्यनुसारेणाधिगम्य प्राप्य सदसि राजसूयकीः। राजसूयकाण्डोक्ता इत्यर्थः। दक्षिणाशब्दः स्फुटार्थः। राजसूयेत्यत्र दक्षिणार्थ एव ढको विधानात्, व्यशिश्रणद्विश्राणयति स्म। वितीर्णवानित्यर्थः। 'विश्राणनं वित-

वारिपूर्व्वमखिलासु सत्क्रियालब्धशुद्धिषु धनानि वीजवत् ।
भावि बिभ्रति फलं महद्‌द्विजक्षेत्रभूमिषु नराधिपोऽवपत् ॥३४
किं नु चित्रमधिवेदि भूपतिर्दक्षयन् द्विजगणानपूयत ।
राजतः पुपुविरे निरेनसः प्राप्य तेऽपि विमलं प्रतिग्रहम् ॥३५॥

रणम्' इत्यमरः। 'श्रण दाने' इति धातोर्लुङ्, 'णौ चङ्युपधाया ह्रस्वः'। वृत्त्यनुप्रासोऽलङ्कारः ॥ ३३ ॥

वारीति। नराधिपो राजा सत्क्रियाभिरभिषेकसंस्कारैर्लब्धा शुद्धिर्निर्दोषता याभिस्तास्वखिलासु। द्विजा एव क्षेत्रभूमयः केदारभूमयस्तासु। 'क्षेत्रं गृहे पुरे देहे केदारे योनिभार्य्ययोः' इति वैजयन्ती। भावि भविष्यन्महत् फलं स्वर्गादिकं धान्यादिकञ्च बिभ्रति। बिभ्राणानीत्यर्थः। वा नपुंसकस्येति विकल्पान्नुमागमप्रतिषेधः। धनानि वीजवत् वीजैस्तुल्यं वारिपूर्व्वमुदकदानपूर्व्वकमवपत् उप्तवान् दत्तवानित्यर्थः। अत्र वीजवत् इत्युपमानम्। 'तेन तुल्यम्'—इति तुल्यार्थे वतेर्विधानात् तथापि वापक्रियायोगात् द्विजक्षेत्रेति रूपकसमासो नोपमितसमासः, किन्तु रूपकस्याङ्गमुपमा तदुत्थापितत्वादिति सङ्करः ॥ ३४ ॥

किमिति। भूपतिरधिवेदि वेद्याम्, मखवेद्यामित्यर्थः। अत्र विभक्त्यर्थेऽव्ययीभावः। द्विजगणानृत्विग्गणान् दक्षयन् हर्षयन् दक्षिणाप्रतिग्रहेण सदक्षिणान् कुर्व्वन्, प्रतिग्राहयन्नित्यर्थः। 'तत्क्षणे दक्षिणां प्रतिगृह्य' इति श्रुतिदर्शनात्। 'दक्ष नैपुण्ये' इति धातोर्ण्यन्ताल्लटः शत्रादेशः। अत एव 'निष्णाते दक्षिणे वापि नैपुण्ये निपुणेऽपि च' इति भट्टः। अपूयत पूतोऽभवदिति कर्म्मकर्तरि लङ्। किं चित्रं दाता पूत इति, न चित्रमित्यर्थः। किन्तु प्रतिग्रहीतापि पूत इति चित्रमाह। ते द्विजगणा अपि निरेनसो निष्पापात् राजतो राज्ञः। पञ्चम्यास्तसिल्। विमलं शुद्धं प्रतिग्रहं प्राप्य पुपुविरे पूता बभूवुः। विशुद्धाच्च प्रतिग्रह इत्यभिज्ञानादिति भावः। पत्रापूञः कर्म्मकर्त्तरि लिट्। प्रतिग्रहीतापि शुद्ध इति विरोधः। स एव वाक्यार्थभूतक्षिप्तत्वनिषेधहेतुरिति विरोधवाक्यार्थहेतुककाव्यलिङ्गयोरङ्गाङ्गिभावेन सङ्करः ॥ ३५ ॥

स स्वहस्तकृतचिह्नशासनः पाकशासनसमानशासनः ।
आशशाङ्कतपनार्णवस्थितेर्विप्रसादकृत भूयसीर्भुवः ॥ ३६ ॥
शुद्धमश्रुतिविरोधि बिभ्रतं शास्त्रमुज्ज्वलमवर्णसङ्करैः ।
पुस्तकैः सममसौ गणं मुहुर्वाच्यमानमशृणोद् द्विजन्मनाम् ॥३७

स इति । पाको नाम कोऽपि राक्षसस्तस्य शासनः शासको हन्ता पाकशासनः इन्द्रस्तेन समानं शासनं तुल्याज्ञा यस्य स इत्यर्थः । स राजा स्वहस्तेन कृतं लिखितं चिह्नं स्वनामलेखनादिलाञ्छनं येषु तानि शासनाः नियमपत्राणि यस्य सः, दत्तस्वहस्तलेखाङ्कितशासनः सन्नित्यर्थः । आशशाङ्कतपनार्णवस्थितेः शशाङ्कतपनार्णवानभिव्याप्य, आकल्पमित्यर्थः । अभिविधावाङ् । 'आङ्मर्यादाभिविध्योः' इति विकल्पादसमासः । भूयसीर्भुवो देयभूमीः विप्रसाद्विप्राधीनाः । 'देये त्रा च' इति चकारात् सातिप्रत्ययः । अकृत कृतवान्, दत्तवानित्यर्थः । कृञो लुङि तङ्, 'उश्च' इति सिचः कित्त्वात् 'ह्रस्वादङ्गात्' इति सकारलोपो गुणाभावश्च । पाकशासनसमानशासन इत्युपमानुप्रासयोः संसृष्टिः ॥ ३६ ॥

शुद्धमिति । असौ नृपः शुद्धमाचारपूतम् । अन्यत्र विभक्तिविपरिणामेन शुद्धैरकलङ्कैः । श्रुतिविरोधि वेदविरुद्धं न भवतीत्यश्रुतिविरोधि शास्त्रं बिभ्रतमात्मनि धारयन्तम्, सकलवैदिकशास्त्राभिज्ञमित्यर्थः । 'नाभ्यस्ताच्छतुः' इति नुम्प्रतिषेधः । अन्यत्र श्रुत्यविरोधिभिः पुराणादिभिः । वाच्यमानमन्वयगुणादिक्रमेण प्रस्तूयमानम्, अन्यत्र वाच्यमानैर्द्विजगणेन व्याख्यायमानैरित्यर्थः । वचेर्ण्यन्तादिकात् कर्म्मणि लटः शानजादेशः । द्विजन्मनां ब्राह्मणानां गणं अवर्णसङ्करैरसङ्कीर्णाक्षरैः, अन्यत्र जातिसङ्कररहितमिति विपरिणामः । पुस्तकैः समं पुस्तकाक्षरैर्वाक्यैः सह अशृणोत् । दानकाले प्रत्येकं ब्राह्मणानां गुणान् गोष्ठीश्च श्रुतवानित्यर्थः । मुखस्थविद्यानामपि पुस्तकधारणविलक्षणत्वेनोक्तमित्यदोषः । अन्यत्र पुस्तकैः समं द्विजगुणमशृणोदिति सम्बन्धिभेदे भिन्नयोः श्रवणयोरभेदाध्यवसायभेदेऽभेदरूपातिशयोक्तिचमत्कारिणी द्विजानां प्रकृतत्वात् पुस्तकानीव द्विजानिति वैवक्षिकोपमानोपमेयभावपर्य्यवसायिनी श्लेषसङ्कीर्णसहोक्तिरलङ्कारः । 'सहार्थेनान्वयो

तत् प्रणीतमनसामुपेयुषां द्रष्टुमाहवनमग्रजन्मनाम् ।
आतिथेयमनिवारितातिथिः कर्त्तुमाश्रमगुरुः स नाश्रमत् ॥३८॥
मृग्यमाणमपि यद्‌ दुरासदं भूरिसारमुपनीय तत् स्वयम् ।
आसतावसरकाङ्क्षिणो वहिस्तस्य रत्नमुपदीकृतं नृपाः ॥३९॥
एक एव वसु यद्ददौ नृपस्तत् समापकमतर्क्यत क्रतोः ।
त्यागशालिनि तपःसुते ययुः सर्व्वपार्थिवधनान्यपि त्त्रयम् ॥४०॥

यत्र भवेदतिशयोक्तितः । कल्पितौपम्यपर्य्यन्ता सा सहोक्तिरिहेष्यते ॥' इति लक्षणात् । केचित् पुस्तकैः समं वाच्यमानमिति योजयित्वा पुस्तकेषु द्विजगणान् । लेख्येष्वायतमानानिति व्याचक्षते तैः पुस्तकेषु शास्त्रभरणासम्भवाद्वर्णसङ्करेति श्लिष्टविशेषणावगतप्रकृतश्लेषभङ्गः । पुस्तकानां वाचनकरणत्वात् समादिशब्दवैयर्थ्यमुक्तसहोक्त्यलङ्कारभ्रंशश्चेत्येवमादयो दोषा दुस्तरा इत्यलं विस्तरेण ॥ ३७ ॥

तदिति । अनिवारिता अप्रत्याख्याता अतिथयो येन स आश्रमाणां ब्रह्मचर्य्यादीनां गुरुर्नियन्ता स राजा । आ समन्ताज्जुहोत्यस्मिन्नित्याहवनं यागम् । जुहोतेर्ल्युट् । द्रष्टुमुपेयुषामागतानाम् । अत एव प्रणीतमनसां सत्कर्मदर्शनाहृष्टचित्तानामग्रजन्मनाम् । अतिथिषु साध्वातिथेयमतिथिसत्कारम् । 'पथ्यतिथि—' इत्यादिना ढञ्प्रत्ययः । कर्त्तुं नाश्रमत्र श्रान्तः । श्राम्यतेः पुषादित्वाल्लुङि च्लेरङादेशः । अत्रानिवारितातिथित्वस्य विशेषणगत्या श्रमनिषेधहेतुत्वात् काव्यलिङ्गं तदनुप्रासेन संसृज्यते ॥ ३८ ॥

मृग्यमाणमिति । यद्रत्नं मृग्यमाणमन्विष्यमाणमपि दुरासदं दुर्लभम् । भूरिसारं महासारमुपदीकृतमुपायनीकृतम्, मनसा यथासङ्कल्पितमित्यर्थः । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । तद्रत्नं श्रेष्ठवस्तु । 'रत्नं श्रेष्ठे मणावपि' इति विश्वः । नृपाः स्वयमुपनीय तस्य राज्ञोऽवसरकाङ्क्षिणः सेवावसरं प्रतीक्षमाणाः वहिरासत स्थिता इत्यैश्वर्य्यातिशयोक्तिः । अत्र रत्ने उपदात्वस्यारोप्यमाणस्य प्रकृतोपयोगात् परिणामालङ्कारः ॥ ३९ ॥

एक इति । एक एव नृपो यद्वसु धनं ददौ, उपयनमिति भावः । तदनमेव क्रतोः समापकं सम्पूरकमतर्क्यत । दक्षिणादानादिसर्वक्रतुव्ययपर्य्याप्त-

प्रीतिरस्य ददतोऽभवत् तथा येन तत्प्रियचिकीर्षवो नृपाः ।
स्पर्शितैरधिकमागमन् मुदं नाधिवेश्म निहितैरुपायनैः ॥४१॥
यं लघुन्यपि लघूकृताहितः शिष्यभूतमशिषत् स कर्म्मणि ।
सस्पृहं नृपतिभिर्नृपोऽपरैर्गौरवेण ददृशेतरामसौ ॥ ४२ ॥

तया तर्कितमित्यर्थः । तपःसुते धर्म्मपुत्रे त्यागशालिनि सति सर्व्वपार्थिवधनान्यपि क्षयं व्ययं ययुः । अनेकपार्थिवधनस्य क्रतुसमापकत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः । तयोश्च सापेक्षत्वात् सजातीयसङ्करः ॥ ४० ॥

प्रीतिरिति । ददतो दानं कुर्वतोऽस्य राज्ञस्तथा तेनैव प्रकारेण राजोपायनानामर्थिसात् करणेनैव प्रीतिरभवदासीत्, न तु कोशगृहार्पणेनेत्यर्थः । कुतः, येन प्रकारेण तस्य राज्ञः प्रियं चिकीर्षवः प्रियं कर्त्तुमिच्छवः । मधुपिपासुप्रभृतित्वाद्द्वितीयासमासः । नृपाः स्पर्शितैः प्रतिपादितैः । 'स्पर्शनं प्रतिपादनम्' इत्यमरः । उपायनैरुपहारैरधिकं यथा तथा मुदमागमन् प्रापाः । तथैव प्रभुप्रीतिसिद्धेः सोपायनानां सिद्धिनियोगलाभाच्चेति भावः । अधिवेश्म वेश्मनि निहितैरुपायनैर्मुदं नागमन् । तथोक्तप्रयोजनासिद्धेरिति भावः । येनैव राज्ञां मोदः स्वस्य च महान् धर्म्मलाभः तेनोपायनानामर्थिसात् करणादेव राज्ञः प्रीतिरासीत्, न कोशगृहार्पणादित्यर्थः । अतएव दानसंग्रहयोः प्रकृतयोः प्रीतेः संग्रहपरिहारेण दान एव नियमनात् परिसङ्ख्यालङ्कारः । एकस्यानेकत्र प्राप्तावेकत्र नियमनं परिसङ्ख्येति लक्षणात् । एतेन सर्व्वस्वदानं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ४१ ॥

यमिति । लघूकृता अल्पीकृता अहिताः शत्रवो येन सः । राजा शिष्येण तुल्यं शिष्यभूतम् । 'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः' इति विश्वः । सुप्सुपेति नित्यसमासः । यं नृपं लघुन्यप्यल्पेऽपि यज्ञीयपशुरक्षणादिकर्म्मण्यशिषदाज्ञापितवान् । 'सर्त्तिशास्त्यर्त्तिभ्यश्च' इति लुङि च्ले रङादेशः, 'शास इदङ्हलोः' इतीकारः । असौ कर्म्मकरो नृपः अपरैस्ततोऽन्यैर्नृपतिभिः सस्पृहं अहो सम्मान इति साभिलाषं गौरवेण ददृशेतरामतिशयेन दृष्टः । दृशेः कर्म्मणि लिट्, 'तिङश्च' इति तरप् प्रत्यये 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यामुप्रत्ययः, 'तद्धितश्चासर्व्वविभक्तिः' इत्यव्ययसंज्ञा । अत्र कर्म्मकर-

आद्यकोलतुलितां प्रकम्पनैः कम्पितां मुहुरनीदृगात्मनि ।
वाचि रोपितवतामुना महीं राजकाय विषया विभेजिरे ॥४३॥
आगताद्व्यवसितेन चेतसा सत्त्वसम्पदविकारिमानसः ।
तत्र नाभवदसौ महाहवे शात्रवादिव पराङ्मुखोऽर्थिनः ॥४४॥

नृपस्येतरनृपकर्तृकविशिष्टदर्शनकर्मत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः तया राज्ञो निरङ्कुशाज्ञत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥४२॥

आद्येति। आद्यकोल आदिवराहः। 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः। तेन तुलितां कल्पादौ उद्धृताम्। तथापि प्रकम्पनैः प्रक्षोभकैर्हिरण्याक्षप्रमुखैः कम्पितां क्षोभितां महीम्। अनीदृगात्मन्यनेवंरूपायां केनाप्यकम्पितायामस्खलितायां वाचि रोपितवता स्थापितवता, स्थिरेण रोपणेन स्थिरीकुर्वतेत्यर्थः। अमुना राज्ञा राजकाय राज्ञां समूहाय। 'गोत्रोक्ष—' इत्यादिना वुञ्प्रत्ययः। विषया देशाः। 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः। विभेजिरे अस्यायमिति विभक्ताः। प्राक् विजयोद्धृतान् राज्ञः पुनः पदेषु स्थापयामासेत्यर्थः। अत्रादिवराहो महीमुद्धृतवानेव वाचैवासौ तु निरातङ्कं स्थापितवांश्चेत्युपमानादुपमेयस्याधिक्यकथनाद्व्यतिरेकालङ्कारः ॥ ४३ ॥

आगतादिति। सत्त्वसम्पदा गुणाधिक्येन अविकारिमानसो लोभाभिभवाभ्याम्, अनुपप्लुतचित्त इत्यर्थः। 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः' इति विश्वः। असौ राजा तत्र तस्मिन्नासमन्ताज्जुह्वत्यस्मिन्नित्याहवो यागः। 'ऋदोरप्' इति जुहोतेरप्प्रत्यये गुणावादेशौ। आहूयन्ते शत्रवो यस्मिन्नित्याहवो युद्धम्। 'आङि युद्धे' ह्वयतेराङ्पूर्वादप्प्रत्ययः सम्प्रसारणम्। 'आहवो यागयुद्धयोः' इति विश्वः। महांश्चासौ स च महाहवस्तस्मिन् महाहवे व्यवसितेन निश्चितेन धनलाभं निश्चितवता। अन्यत्र शत्रोर्मृत्युरेवेति निश्चितवतेत्यर्थः। व्यवपूर्वात् स्यतेः सकर्मकत्वादप्यविवक्षिते कर्मकर्त्तरि क्तः। 'प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' इति वचनात्। चेतसा आगतात्, चेतसा स्वयं निश्चित्यागतादित्यर्थः। अर्थिनो याचकात्। शत्रुरेव शात्रवः। स्वार्थेऽण्प्रत्ययो राक्षसवत्। तस्मादिव पराङ्मुखो नाभवत्। 'आहवेष्वनि-

नैच्छतार्थिनमवज्ञया मुहुर्याचितस्तु न च कालमाक्षिपत्।
नादितात्यमथ न व्यकत्थयद् दत्तमिष्टमपि नान्वशेत सः ॥४५॥
निर्गुणोऽपि विमुखो न भूपतेर्दानशौण्डमनसः पुरोऽभवत्।
वर्षुकस्य किमपः कृतोन्नतेरम्बुदस्य परिहार्य्यमूषरम् ॥ ४६॥

वर्त्तित्वं प्रजानाञ्चैव पालनम्। शुश्रूषा ब्राह्मणानाञ्च राज्ञां श्रेयस्करं परम् ॥' इति मनुस्मरणादिति भावः। श्लेषसङ्कीर्णेयमुपमा ॥ ४४ ॥

नैच्छतेति। स राजा अर्थिनं याचकं मुहुरवज्ञयानादरेण नैच्छत। तर्हि विलम्बितं किं नेत्याह—याचितस्तु प्रार्थित एव कालं नाक्षिपन्न यापयामास। याचकबहुत्वात् तस्याल्पदाता नेत्याह—अल्पमपि नादित न ददौ। किन्तु यथार्थिकाममिति भावः। ददातेर्लुङि ताङि 'स्थाघ्वोरिच्च' इतीकारः 'ह्रस्वादङ्गात्' इति सलोपः। तर्हि विकत्थनः किं नेत्याह—न व्यकत्थयदात्मश्लाघां न चकार। 'कत्थ श्लाघायाम्'। किञ्च इष्टं प्रियमपि दत्तं वस्तु नान्वशेत नानुतप्तवान्। दत्तानुतापस्यातिप्रत्यवायहेतुत्वादिति भावः। अत्रार्थिसन्दोहयाञ्चादिबाहुल्यरूपकारणसामग्र्येऽपि विलम्बादिकार्य्यानुत्पत्तेर्विशेषोक्तिरलङ्कारः। 'तत्सामग्र्यादनुत्पत्तिर्विशेषोक्तिर्निगद्यते' इति लक्षणात्। तथा दातुः सात्त्विकं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ४५ ॥

निर्गुण इति। दानशौण्डमनसो दानशूरचित्तस्य, बहुप्रदस्येत्यर्थः। 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे। मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः। भूपतेः पुरोऽग्रे निर्गुणस्तपोविद्यादिगुणहीनोऽपि विमुखो निष्फलो नाभवत्, किन्तु पूर्णकाम एवाभवत्। भूरिदाने सर्व्वस्यापि पात्रत्वादिति भावः। अतएव तेनापात्रवर्षदोषोऽपि न कृतः, कारुण्यप्रवृत्तेरित्याशयेन दृष्टान्तमाह—वर्षुकस्येति। अपो जलानि, 'न लोक'—इत्यादिना षष्ठीप्रतिषेधः। वर्षुकस्य वर्षणशीलस्य। 'लषपत'—इत्यादिना उकञ्प्रत्यये लघूपधगुणः। कृतोन्नतेः कृतोदयस्याम्बुदस्य, अम्बुदेनेत्यर्थः। 'कृत्यानां कर्त्तरि वा' इति षष्ठी। 'स्यादूषः क्षारमृत्तिका' इत्यमरः। तद्वत् क्षेत्रमूषरम्। 'ऊषवानूषरो द्वावप्यन्यलिङ्गौ स्थलं स्थली' इत्यमरः। 'ऊषशुषिमुष्कमधुभ्यो रः'

प्रेम तस्य न गुणेषु नाधिकं न स्म वेद न गुणान्तरञ्च सः ।
दित्सया तदपि पार्थिवोऽर्थिनं गुण्यगुण्य इति न व्यजीगणत् ॥४७
दर्शनानुपदमेव कामतः स्वं वनीयकजनेऽधिगच्छति ।
प्रार्थनार्थरहितं तदाभवद् दीयतामिति वचोऽतिसर्जने ॥४८॥

इति रप्रत्ययः। परिहार्य्यं त्याज्यं किम् ? नेत्यर्थः। अत्र पर्जन्यभूपालयोर्वाक्यभेदेन विम्बप्रतिविम्बतया समानधर्म्माभिधानाद्दृष्टान्तालङ्कारः ॥ ४६ ॥

प्रेमेति। तस्य राज्ञो गुणेष्वधिकं प्रेम नेति न, किन्त्वस्त्येवेत्यर्थः। राजा गुणान्तरं गुणविशेषं न वेद न वेत्ति स्मेति न च, किन्तु वेदैवेत्यर्थः। 'लट् स्मे' इति भूतार्थे लट्, 'विदो लटो वा' इति णलादेः। 'सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ' इति वामनः। सम्भावितयोरविमर्शादेवागुणप्रीतिज्ञानयोर्निषेध इति भावः। तदपि तथापि, पृथिव्या ईश्वरः पार्थिवः। 'सर्व्वभूमिपृथिवीभ्यामणञौ' इत्यञ्प्रत्ययः। दित्सया दातुमिच्छया, सर्व्वपात्रदानकौतुकेनेत्यर्थः। 'सनि मीमा'—इत्यादिना इसादेशः। 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः। अर्थिनं याचकं गुणी गुणवान् अगुण्यो नायं गुणवानिति न व्यजीगणन्न गणयति स्म। गुणप्रियोऽपि गुणज्ञोऽपि दानशौण्डोऽर्थितया गुण्यगुणौ न गणयामासेत्यर्थः। गणेर्णौ चङि 'ई च गणः' इत्यभ्यासस्य विकल्पादीकारः। अत्र गुणप्रियत्वगुणज्ञत्वरूपकारणसामग्र्येऽपि गुणागुणविमर्शरूपकार्य्यानुत्पत्तेः दित्सयेत्युक्तनिमित्ता विशेषोक्तिरुक्तलक्षणात् ॥ ४७ ॥

दर्शनेति। वनीयकजनेऽर्थिजने। दर्शनानुपदं राजविलोकनानन्तरमेव, प्रार्थनामकृत्वेत्यर्थः। 'वनीयको याचनको मार्गणो याचकार्थिनौ' इत्यमरः। कामतो यथेच्छं स्वं धनमधिगच्छति लभमाने सति। तदा दीयतामिति वचो दीयतामित्येतत् पदं प्रार्थना याच्ञा सैवार्थस्तेन रहितं शून्यं सत् तदा अतिसर्जने त्यागेऽभवदवर्त्तत, मह्यं दीयतामित्यर्थिवाक्याभावादस्मै दीयतामिति दातृवाक्यमेवान्वर्थमभूदित्यर्थः। अर्थिनामागमनमेव याचनमिति विवेकिनां किं याञ्चादैन्यदर्शनचापलेनेति भावः। अत्र दीयता-

नानवाप्तवसुनार्थकाम्यता नाचिकित्सितगदेन रोगिणा ।
दुःक्षुताशितुमनाशुषा न च प्रत्यगामि तदुपेयुषा सदः ॥ ४९॥
स्वादयन् रसमनेकसंस्कृतप्राकृतैरकृतपात्रसङ्करैः ।
भावशुद्धिसहितैर्मुदञ्जनो नाटकैरिव बभार भोजनैः ॥ ५० ॥

मिति वचः सम्प्रार्थनार्थवर्जनेन, तेनातिसर्जनार्थताकथनादेकस्यानेकत्व-प्रसक्तावेकत्र नियमनाख्या परिसङ्ख्या ॥ ४८ ॥

नेति । अर्थकाम्यता अर्थमात्मन इच्छता धनार्थिना । 'काम्यच्च' इति काम्यच्प्रत्यये सनाद्यन्तत्वेन धातुत्वाल्लटि शत्रादेशः । तत् सद उपेयुषा प्राप्तवता पुरुषेणानवाप्तवसुनालब्धधनेन न प्रत्यगामि न प्रत्यावर्त्ति । रोगिणोपेयुषा अचिकित्सितगदेनाशमितरोगेण । 'रोगव्याधिगदामयाः' इत्यमरः । न प्रत्यगामि, अशितुं भोक्तुं इच्छता उपेयुषा अनाशुषा च अनशितेन । अभुक्तवतेत्यर्थः । 'उपेयिवाननाश्वाननूचानश्च' इति क्वसुप्रत्ययान्तो निपातितः, न प्रत्यगामि किन्तु सर्व्वेणापि पूर्णकामेनैव प्रत्यगामीत्यर्थः । गमेर्भावे लुङ् । अत्रार्थिरोगिक्षुधितानां प्रकृतानामेव पूर्णकामत्वसाम्यादृश्यौपम्यत्वात् केवलप्रकृतविषया तुल्ययोगिता, तथा च यो यत्काम आगतः स तत् सर्व्वमेवास्मादलभतेति व्यज्यते ॥ ४९ ॥

स्वादयन्निति । अनेकानि बहूनि संस्कृतानि हिङ्गुमरीचादिना कृतसंस्काराणि प्राकृतानि प्रकृतिसिद्धानि संस्कारं विना स्वादूनि कृतानि फलादीनि च येषु तैः । अन्यत्रानेकविचित्रसंस्कृतप्राकृतौ भाषाविशेषौ येषु तैः । अकृतः पात्राणां भाजनानाम्, अन्यत्र भूमिकानाञ्च सङ्करो व्यतिकरो येषु तैः । भावशुद्धिः पदार्थानां मृष्टता, अथवा भावशुद्धिः गर्हाविरहः तत्सहितैः । अन्यत्र भावाः स्थायिनो रत्यादयस्तेषां शुद्धिः सजातीयविजातीयातिरस्कृतरूपकम् । 'सजातीयैर्विजातीयैरतिरस्कृतमूर्त्तिमान् । यावद्रसं वर्त्तमानः स्थायीभाव उदाहृतः' । इति लक्षणात् । तत्सहितैर्भोजनैरभ्यवहारैर्नाटकै रूपकविशेषैरिव रसं मधुरादिकं शृङ्गारादिकञ्च स्वादयन्ननुभवन् जनो भोक्तृजनः सामाजिकजनश्च मुदमानन्दं बभार । श्लेषसङ्कीर्णेयमुपमा ॥ ५० ॥

रक्षितारमिति तत्र कर्मणि न्यस्य दुष्टदमनक्षमं हरिम् ।
अक्षतानि निरवर्त्तयत् तदा दानहोमयजनानि भूपतिः ॥५१॥
एक एव सुसखैष सुन्वतां शौरिरित्यभिनयादिवोच्चकैः ।
यूपरूपकमनोनमद्भुजं भूश्चषालतुलिताङ्गुलीयकम् ॥५२॥
इत्थमत्र विततक्रमे क्रतौ वीक्ष्य धर्ममथ धर्मजन्मना ।
अर्घ्यदानमनु चोदितो वचः सभ्यमभ्यधित शन्तनोः सुतः ॥५३॥

रक्षितारमिति। इतीत्थं भूपतिर्युधिष्ठिरः तत्र कर्मणि राजसूयाध्वरे दुष्टानां दमने मर्दने क्षमं समर्थं हरिं रक्षितारं विघ्नेभ्यस्त्रातारं न्यस्य निधाय अक्षतान्यविहितानि दानहोमयजनानि निरवर्तयदन्वतिष्ठित्। स्वकीयस्य द्रव्यस्य स्वस्वत्वनिवृत्तिपरस्वत्वोत्पादनं दानम्। देवतोद्देशेनाग्नौ हविषः प्रक्षेपो होमः। हुतस्य देवतोद्देशेन वाङ्मनसाभ्यां न ममेति त्यागो यागः। अत्र दुष्टदमनक्षमत्वस्य विशेषणगत्या हरे रक्षाधिकारहेतुन्यासहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ ५१ ॥

एक इति। सुन्वतां सोमाभिषवं कुर्वताम्, सोमयाजिनामित्यर्थः। सुनोतेर्लटः शत्रादेशः। सुसखा सत्सहायः। 'न पूजनात्' समासान्तप्रतिषेधः। एष शौरिरेक एवेत्यभिनयादिव तद्व्यञ्जकचेष्टां कृत्वेवेत्युत्प्रेक्षा। 'व्यञ्जकाभिनयौ समौ' इत्यमरः। भूर्देवयजनभूमिः। चषालेन यूपकटकेन। 'चषालो यूपकटकः' इत्यमरः। तेन तुलितम्, समीकृतमित्यर्थः। तुलयतेः 'तत्करोति'—इति ण्यन्तात् कर्मणि क्तः, तदङ्गुलीयकमूर्मिका यस्य तम्, अङ्गुलीयकोपमानचषालमित्यर्थः। 'अङ्गुलीयकमूर्मिका' इत्यमरः। 'जिह्वामूलाङ्गुलेश्छः' इति भावे छप्रत्ययः। उच्चकैरुन्नतं यूपं पशुबन्धनदारुविशेषो रूपकं स्वरूपं यस्य तं भुजम् अनीनमदुन्नमितवती। नमेर्णौ चङि सन्वद्भावाद्यर्थम्। अत्र सापेक्षत्वादुपमोत्प्रेक्षयोः सङ्करः ॥ ५२ ॥

इत्थमिति। इत्थमत्र क्रतौ विततक्रमे विस्तृतानुष्ठाने सति अथानन्तरं धर्माज्जन्म यस्य तेन धर्मजन्मना धर्मात्मजेन। जन्माद्युत्तरपदो बहुव्रीहिर्व्यधिकरण इति वामनः। धर्मं वीक्ष्य। धर्मशास्त्रमनुस्मृत्येत्यर्थः। अर्घ्यदानं पूजादानमनु, सदस्यपूजामुद्दिश्येत्यर्थः। 'मूल्ये पूजाविधावर्घ' इत्य-

आत्मनैव गुणदोषकोविदः किं न वेत्सि करणीयवस्तुषु ।
यत् तथापि न गुरून् न पृच्छसि त्वं क्रमोऽयमिति तत्र कारणम् ५४
स्नातकं गुरुमभीष्टमृत्विजं संयुजा च सह मेदिनीपतिम् ।
अर्घभाज इति कीर्त्तयन्ति षट् ते च ते युगपदागताः सदः॥५५

मरः । चोदितः कस्मै देयमिदमिति पृष्टः शन्तनोः सुतो भीष्मः । सभ्यं सभायां साधु । 'सभाया यः' इति यप्रत्ययः । वचो वाक्यमभ्यधित अभिहितवान् । दधातेर्लुङि तङि 'स्थाघ्वोरिच्च' इति किच्चे 'ह्रस्वादङ्गात्' इति सकारलोपः । वृत्त्यनुप्रासः ॥ ५३ ॥

अथासर्गसमाप्तेः भीष्मवचःप्रपञ्चमेव सफलं दर्शयति—आत्मनेति । तत्रात्मनो बहुमानकरणात् प्रीतस्तत्रभवान् भीष्मो राजानं तावदुत्साहार्थमेकेनोपश्लोकयति—वेत्तीति विदो ज्ञाता । इगुपधलक्षणः कप्रत्ययः । कस्तो विद्यास्थानस्य विदः कोविदः । गुणदोषयोः कोविदो विवेक्ता । करणीयवस्तुषु कर्तव्यार्थेष्वात्मनैव स्वयमेव । परोपदेशानपेक्षयैवेत्यर्थः । प्रकृत्यादित्वात् तृतीया । किं न वेत्सि ? सर्वं जानासीत्यर्थः । अथापि त्वं ज्ञातापि गुरून्न पृच्छसीति न, किन्तु पृच्छस्येवेति यत् । ज्ञानप्रसक्तं न पृच्छसीति वारणाय नञ्द्वयम् । तत्र गुर्वनुयोगे अयं क्रम इति न्यायः सदाचारपरिपाटीत्येतदेव कारणं न त्वज्ञानमित्यर्थः । अत्र कर्तव्यार्थप्रश्नस्याज्ञानहेतुकत्ववारणेनापरहेतुकत्वे नियमनात् पूर्वोक्तलक्षणपरिसङ्ख्यानम् ॥ ५४ ॥

एवं राजानमुपश्लोक्य प्रश्नस्योत्तरमाह—स्नातकमिति । स्नातको गृहस्थविशेषस्तम् । गुरुं पित्रादिकम्, अभीष्टमिष्टबन्धुम्' ऋत्विजं याजकम्, संयुज्यत इति संयुक् सम्बन्धी जामाता तेन सह मेदिनीपतिं राजानञ्च । तञ्च मेदिनीपतिञ्चेत्यर्थः । षट् षडेतानर्घभाजः पूजार्हा इति । इतिशब्देनाभिहितत्वान्न कर्म्मणि द्वितीया । यथाह वामनः—'निपातेनाप्यभिहिते कर्म्मणि न कर्म्मविभक्तिः परिगणनस्य प्रायिकत्वात्' इति । कीर्तयन्ति कथयन्ति । वृद्धा इति शेषः । न च ते दूरा इत्याह—ते च षडपि ते तव सदः सभां युगपदागताः प्राप्ताः । अत्र स्नातकादीनां प्रकृतानामेवार्घभाक्त्वसाधर्म्यादौपम्यावगमात् तुल्ययोगिताभेदः ॥ ५५ ॥

शोभयन्ति परितः प्रतापिनो मन्त्रशक्तिविनिवारितापदः ।
त्वन्मखं मुखभुवः स्वयम्भुवो भूभुजश्च परलोकजिष्णवः ॥ ५६ ॥
आभजन्ति गुणिनः पृथक् पृथक् पार्थ सत्कृतिमकृत्रिमाममी ।
एक एव गुणवत्तमोऽथवा पूज्य इत्ययमपीष्यते विधिः ॥ ५७ ॥
अत्र चैष सकलेऽपि भाति मां प्रत्यशेषगुणबन्धुरर्हति ।
भूमिदेवनरदेवसङ्गमे पूर्व्वदेवरिपुरर्हणां हरिः ॥ ५८ ॥

शोभयन्तीति । किञ्च प्रतापयितुं शीलं येषां ते प्रतापिनः शत्रुतापकाः । ताच्छील्ये णिनिः । अन्यत्र तेजस्विनः । 'स प्रतापः प्रभावश्च यत् तेजः कोशदण्डजम्' इत्यमरः । 'अत इनिठनौ' इति इनप्रत्ययः । मन्त्रशक्त्या वेदमहिम्ना, अन्यत्र विचारसामर्थ्येन विनिवारिता आपदो दैवमानुषविपत्तयो यैस्ते, 'वेदवादे गुप्तमन्त्रे मन्त्रः' इत्यमरः । परलोकस्य लोकान्तरस्य, शत्रुजनस्य च जिष्णवो जयशीलाः । स्वयम्भुवो ब्रह्मणो मुखस्य भुवो मुखजाता ब्राह्मणाः । 'ब्राह्मणोऽस्य मुखमासीत्' इति श्रुतेः । भूभुजो राजानश्च । त्वन्मखं तव क्रतुं परितः शोभयन्ति परिष्कुर्व्वन्ति । सर्वेऽप्यागत्य वसन्तीत्यर्थः । अत्र राज्ञां ब्राह्मणानाञ्च प्रकृतानामेव प्रतापादिसाधर्म्येणोपमानात् तुल्ययोगिताभेदः । साधर्म्यञ्च श्लेषनिबन्धनमिति सङ्करः ॥ ५६ ॥

आभजन्तीति । हे पार्थ पृथापुत्र, 'तस्येदम्' इत्यण् । सामान्यस्य योग्यविशेषपर्य्यवसाननियमादपत्यार्थलाभः । अन्यथा 'स्त्रीभ्यो ढक्' इति ढक् स्यात्, गुणिनो गुणाढ्या अमी पूर्व्वश्लोकद्वयोक्ताः स्नातकादयः पृथक् पृथक् प्रत्येकमकृत्रिमामकपटां सत् कृतिं सत्कारमाभजन्ति अर्हन्ति, सममेषां प्रत्येकं पूजा कार्य्येत्यर्थः । अथ स्वाभिमतं पक्षान्तरमाह—अथवेति । अथवा गुणवत्तमोऽतिगुणवानेक एव पूज्य इत्ययमपि विधिः शास्त्रमनुष्ठानं वेष्यते, वृद्धैरिति शेषः । अत्र स्नातकादीनां पूज्यत्वे गुणो विशेषणगत्या हेतुरिति काव्यलिङ्गभेदः । तदपेक्षया गुणवत्तमत्वमेकस्यैव पूज्यत्वे तथैव हेतुरिति काव्यलिङ्गान्तरमिति सजातीयसङ्करः ॥ ५७ ॥

अथ कस्तथा सर्वोत्तरः पुमानस्तीत्याकाङ्क्षायां कोऽन्यो हरिं विनेत्याह—अत्रेति ।' अत्रास्मिन् कालेऽपि भूमिदेवा ब्राह्मणाः नरदेवा राजानस्तेषां

स त्वंमावमवदीधरञ्चवान् मैनमानमितदैत्यदानवम्।
अंश एव जनतातिवर्त्तिनो वेधसः प्रतिजनं कृतस्थितेः॥ ५९॥
ध्येयमेकमपथे स्थितं धियः स्तुत्यमुत्तममतीतवाक्पथम्।
आमनन्ति यमुपास्यमादराद् दूरवर्त्तिनमतीव योगिनः॥६०॥

सङ्गमे, ब्राह्मणक्षत्रियसमवाय इत्यर्थः। अशेषगुणानां बन्धुः सुहृत्। सर्व्वगुणाढ्य इत्यर्थः। असाधारणगुणानाह—पूर्व्वेति। पूर्व्वदेवाः सुरद्विषस्तेषां रिपुर्हन्ता एष हरिः कृष्णः अर्हणां पूजामर्हति प्राप्नोतीति मामधिकृत्य भाति। मम प्रति भातीत्यर्थः। अन्ये तु नार्हन्तीत्यपि सिद्धमिति भावः। अत्र तत्रान्येषु च प्रसक्तायां पूजायां हरावेव नियमात् परिसङ्ख्यालङ्कारः। 'एकस्य वस्तुनः प्राप्तावनेकत्रैकधा यदा। एकत्र नियमः सा हि परिसङ्ख्या निगद्यते' इति लक्षणात्॥ ५८॥

ननु तस्मिन् ब्राह्मणक्षत्रियसमूहे कथमस्यैव पूज्यत्वम्? इत्याशङ्क्य सर्वोत्तमत्वादित्याशयेनासर्गसमाप्तेरेनं स्तौति—मर्त्येत्यादि। आनमिताः प्रह्वीकृता दैत्या दितिसुताः, दानवा दनुसुताश्च येन तमेनं हरिं भवान् मर्त्यमात्रं मनुष्यमात्रं मावदीधरत्र जानीयात्। 'शेषे प्रथमः' इति प्रथमपुरुषः। कुतः एष कृष्णो जनतातिवर्त्तिनः सर्व्वलोकातीतस्य प्रतिजनं कृतस्थितेश्च। सर्व्वभूतान्तर्यामिण इत्यर्थः। वेधसः परमात्मनोऽंशः कला, अतो न मर्त्यमात्रमित्यर्थः। अतएव वाक्यहेतुकं काव्यलिङ्गम्॥ ५९॥

पुनरप्यमानुषत्वमेव व्यनक्ति—ध्येयमिति। योगिनो नारदादयः एकमद्वितीयमुत्तमं सर्वोत्तमं यमेनं ध्येयं ध्यातव्यम्। एकार्थगोचरात्मधारणं ध्यानं तदर्हमित्यर्थः। तथापि धियो ज्ञानस्यापथेऽमार्गे स्थितम्। तदगोचरमितार्थः। 'पथो विभाषा' इति समासान्तः। 'अपथं नपुंसकम्' इति नपुंसकत्वम्। आमनन्ति कथयन्ति। 'पाघ्रा'—इत्यादिना म्नाधातोर्मनादेशः। स्तुत्यं स्तोतुमर्हम्। तथापि अतीतो वाक्पथो येन तम्, अवाङ्मनसगोचरमित्यर्थः। 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुतेः। आमनन्ति आदरादास्थयोपास्यं सेव्यम्। तथापि अतीवात्यन्तम्। अतीवेति निपातसमुदायोऽत्यन्तार्थेऽव्ययम्। दूरवर्त्तिनमामनन्ति यमेनमचिन्त्य-

पद्मभूरिति सृजन् जगद्रजः सत्त्वमच्युत इति स्थितिं नयन् ।
संहरन् हर इति श्रितस्तमस्त्रैधमेष भजति त्रिभिर्गुणैः ॥ ६१ ॥
सर्व्ववेदिनमनादिमास्थितं देहिनामनुजिघृक्षया वपुः ।
क्लेशकर्म्मफलभोगवर्जितं पुंविशेषममुमीश्वरं विदुः ॥ ६२ ॥

रूपमामनन्ति तमिनं मर्त्त्यमात्रं मावधारयेदेति पूर्वेणान्वयः । अवाङ्मनसगोचरत्वदूरवर्त्तित्वानां ध्येयत्वस्तुत्यत्वोपास्यत्वैः सह विरोधस्य हरेरचिन्त्यमहिमत्वेन समाधानाद्विरोधाभासोऽलङ्कारः ॥ ६० ॥

ननु हरिहरहिरण्यगर्भास्त्रयो देवाः सर्वोत्तरमहिमानः सन्ति, एवं न जानीम इत्यत आह—पद्मभूरिति । एष हरिः रजः रजोगुणं श्रितो जगत् सृजन् पद्मभूर्ब्रह्मेति । सत्त्वं सत्त्वगुणं श्रितः जगत् स्थितिं नयन् स्थापयन्नच्युतो विष्णुरिति । तमस्तमोगुणं श्रितो जगत् संहरन् हर इति त्रिभिर्गुणैः सत्त्वरजस्तमोभिस्त्रैधं त्रैविध्यं भजति । 'द्वित्र्योश्च धमुञ्' इति विधार्थे धमुञ्प्रत्ययः । अस्यैव गुणभिन्नास्तास्तिस्रोऽपि मूर्त्तय इत्ययमेव । सर्वोपास्य इति भावः । अत्र सत्त्वादिगुणयोगस्य, सृष्ट्यादिगुणयोगस्य च विशेषणगत्या त्रैविध्यहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ ६१ ॥

तर्हि कीदृशमस्य स्वरूपं कुतो वा मानुषविग्रह इत्यपेक्षायामुभयं निरूपयन्नाह—सर्वेति । अमुं कृष्णं सर्व्ववेदिनं सर्व्वज्ञमित्यर्थः । अत एवानादिमादिरहितम्, अनादिनिधनमित्यर्थः । तथापि देहिनां प्राणिनामनुजिघृक्षयानुग्रहीतुमिच्छया, भूभारावतरणार्थमित्यर्थः । ग्रहेः सन्नन्तात् स्त्रियाम् 'अप्रत्ययात्' इत्यप्रत्यये टाप् । वपुरास्थितं मानुषविग्रहमास्थितम् । न कर्म्मारब्धशरीरभाजमित्यर्थः । अतएव क्लेशकर्म्मफलभोगवर्जितम् । क्लेशाः पञ्च क्लेशाः, अविद्यास्मितारागद्वेषाभिनिवेशाख्याः, कर्म्माणि पुण्यपापानि तेषां फले सुखदुःखे तयोर्भोगोऽनुभवस्तेन क्लेशैश्च वर्जितम् । तैरसंस्पृष्टमित्यर्थः । ईश्वरमीश्वरशब्दितं पंविशेषं क्षेत्रज्ञविलक्षणं पुरुषविशेषं परमपुरुषं वा विदुर्विदन्ति । सन्त इति शेषः । 'विदो लटो वा' इति झेरुसादेशः । अत्राकर्म्मारब्धत्वान्नित्यज्ञानत्वादिविरोधसमर्थनाद्विरोधाभासोऽलङ्कारः । तेषामेव गुणानां विशेषणगत्या पुंविशेषहेतुत्वात् काव्यलिङ्गमिति सङ्करः ॥ ६२ ॥

भक्तिमन्त इह भक्तवत्सले सन्ततस्मरणरीणकल्मषाः।
यान्ति निर्वहणमस्य संसृतिक्लेशनाटकविडम्बनाविधेः॥ ६३॥
ग्राम्यभावमपहातुमिच्छवो योगमार्गपतितेन चेतसा।
दुर्गमेकमपुनर्निवृत्तये यं विशन्ति वशिनं मुमुक्षवः॥६४॥

युग्मम्।

आदितामजननाय देहिनामन्ततां च दधतेऽनपायिने।
बिभ्रते भुवमधः सदाथ च ब्रह्मणोऽप्युपरि तिष्ठते नमः॥६५॥

एवं हरेः स्वरूपं निरूप्य तदुपासनात् फलं युग्मेनाह—भक्तिमन्त इति। भक्तवत्सले भक्तप्रिये इहास्मिन् हरौ। भक्तिमन्तोऽनुरागवन्तो जनाः। पूज्येष्वनुरागो भक्तिः। सन्ततं सततं तत्स्मरणेन निरन्तरध्यानेन रीणकल्मषाः क्षीणपापाः सन्तः। 'री क्षये' ल्वादिभ्यः' इति तिष्ठानत्वम्। अस्यानुभूयमानस्य कृष्णस्य संसृतिः संसारस्तस्य क्लेशो दुःखं तदेव नाटकमिति रूपकम्। तस्य विडम्बनाभिनयस्तस्य निर्व्वहणं समाप्तिं यान्ति। मुच्यन्त इत्यर्थः। 'तमेवं विद्वानमृत इह भवति' इति श्रुतेरिति भावः॥ ६३॥

ग्राम्येति। ग्रामे भवा ग्राम्याः प्राकृताः। मूढा इति यावत्। 'ग्रामाद्यखञौ' इति यप्रत्ययः। तेषां भावस्तमपहातुं मोक्तुमिच्छवः मुमुक्षवो मोक्षार्थिनः अपुनर्निवृत्तयेऽपुनरावृत्तये पुनरावृत्त्यभावाय। मोक्षायेत्यर्थः। दुःखेन गम्यत इति दुर्गं दुष्प्रापं एकमेवाद्वितीयं वशिनं स्वतन्त्रं यं हरिं योगमार्गपतितेन ध्यानमार्गनिविष्टेन। 'योगः संनहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः। चेतसा विशन्ति। ध्यायन्तीत्यर्थः। यं विशन्ति इह भक्तिमन्त इति पूर्वेणान्वयः॥ ६४॥

अथ भक्त्युद्रेकान्नमस्करोति—आदितामिति। देहिनां प्राणिनामादितां कारणतां अन्तोऽन्तकरो नाशहेतुः। 'तत्करोति—' इति ण्यन्तादन्तयतेः पचाद्यच्। तस्य भावस्तत्तामन्ततां च दधते। 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतेः। स्वयमजननाय जन्मरहिताय। अपायोऽस्यास्तीत्यपायी स न

केवलं दधति कर्त्तृवाचिनः प्रत्ययानिह न जातु कर्म्मणि।
धातवः सृजतिसंहृशास्तयः स्तौतिरत्र विपरीतकारकः॥ ६६॥

भवतीत्यनपायी तस्मा अनपायिने नाशरहिताय च, कालतोऽपरिच्छिन्नायेत्यर्थः। देशतोऽपि तथेत्याह—सदाऽधः पाताले भुवं बिभ्रते कूर्म्मरूपेण दधते। अथ च तथैव ब्रह्मणो लोकस्याप्युपरि तिष्ठते, सर्व्वव्यापिन इत्यर्थः। तस्मै। हरय इति शेषः। नमः नमस्कारः। 'नमःस्वस्ति—' इत्यादिना चतुर्थी। अत्र हरेरनादिनिधनत्वेन तद्वतः पुरुषान्तरादाधिक्यवर्णनाद्व्यतिरेकालङ्कारः॥६५॥

केवलमिति। सृजतिश्च संहा च शास्तिश्च सृजतिसंहृशास्तयः। 'सृज विसर्गे' 'हृञ् हरणे' सम्पूर्वोऽयं शासु अनुशिष्टौ इत्येते त्रय इत्यर्थः। 'इक्श्तिपौ धातुनिर्द्देशे' इति वचनादेवं निर्देशः। धातवो भुवादयो धातव इत्युक्तलक्षणाः शब्दविशेषाः, इहास्मिन् भगवति विषये केवलमनन्ययोगव्यवच्छिन्नं यथा तथा कर्त्तृवाचिनः कर्त्तृकारकवाचकान् दधति, तदन्ता एव भवन्तीत्यर्थः। जातु कदाचित् कर्म्मणि प्रत्ययात् कर्म्मार्थविहितान् यागादीन् न दधति न तदन्ता भवन्तीत्यर्थः। सर्व्वकर्त्तृत्वान्नियन्तृत्वाच्च सृजति स्रष्टा संहरति हर्त्ता शास्तीति शासितेत्यादिभिः कर्त्तृत्वेन निर्दिश्यते न कदाचित् सृज्यते, संह्रियते, शिष्यत इत्यादिभिः कर्म्मत्वेन। अनादिनिधनत्वादनियम्यत्वाच्चेति भावः। किञ्च अत्र भगवति स्तौतिः। 'ष्टुञ् स्तुतौ' इति धातुः। विपरितं कारकं यस्य सः विपरीतकारकः स्तूयते स्तुत्य इत्यादिकर्म्मप्रत्ययान्त एव न तु कदाचित् स्तौति स्तोता इत्यादिकर्त्तृप्रत्ययान्तः। सकललोकस्तुत्यस्य तस्य स्तुत्यन्तराभावादित्यर्थः। अत्र शब्दानां कर्म्मकर्त्तृप्रत्ययविधिनिषेधद्वारा विभक्त्यन्तरेण सर्वकर्त्तृत्वसर्वोपास्यत्वादिसूक्ष्मार्थबोधपरत्वात् सौक्ष्म्याख्यो गुणः। 'अन्तःसङ्कल्परूपत्वं शब्दानां सौक्ष्म्यमुच्यते' इति लक्षणात्। अत्र भगवतः स्रष्ट्यादिकर्त्तृकर्म्मत्वोभयप्राप्तावेकनियमात् परिसङ्ख्या। तत्र जातु कर्म्मणीति शब्दादेव कर्म्मत्वनिषेधादितरनिवृत्तिः, शब्दात् स्तुतौ कर्त्तृत्वनिवृत्तिरार्थीति भेदद्वय संसर्गः। अनया च भगवतः पुरुषान्तराधिक्यप्रतीतेर्व्यतिरेकश्च प्रतीयत इत्यलङ्कारेणालङ्कारध्वनिः॥ ६६॥

पूर्वमेष किल सृष्टवानपस्तासु वीर्य्यमनिवार्य्यमादधौ ।
तच्च कारणमभूद्धिरण्मयं ब्रह्मणोऽसृजदसाविदं जगत् ॥ ६७ ॥
मत्कुणाविव पुरा परिप्लवौ सिन्धुनाथशयने निषेदुषः ।
गच्छतः स्म मधुकैटभौ विभोर्यस्य नैद्रसुखविघ्नतां क्षणम् ॥६८॥
श्रौतमार्गसुखगानकोविदब्रह्मषट्चरणगर्भमुज्ज्वलम् ।
श्रीमुखेन्दुसविधेऽपि शोभते यस्य नाभिसरसीसरोरुहम् ॥६९॥

पूर्वमिति । एष हरिः पूर्व्वं प्रथममपः सृष्टवान् । किलेत्यैतिह्ये । तास्वप्सु अनिवार्य्यं वीर्य्यं रेतः । 'शुक्रं तेजोरेतसी च बीजवीर्य्येन्द्रियाणि च' इत्यमरः । आदधावाहितवान्, तद्वीर्य्यन्तु हिरण्मयस्य स्वर्णस्य विकारः हिरण्मयम् । 'दाण्डिनायन'—इत्यादिना निपातः । ब्रह्मणश्चतुर्मुखस्य कारणमभूत् । ब्राह्ममण्डं जातमित्यर्थः । असौ तदुत्पन्नो ब्रह्मा ब्रह्माण्डमिदं जगदसृजत् । सर्व्वस्यापि प्रपञ्चस्यायमेव मूलकारणमिति भावः । अत्र मनुः—'अप एव ससर्जादौ तासु बीजमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्व्वलोकपितामहः' । इति । अत्र वीर्य्यमनिवार्य्यमिति वृत्त्यनुप्रासः ॥ ६७ ॥

अथैनं त्रिभिर्विशिनष्टि—मत्कुणाविवेत्यादिना । पुरा पूर्वं परिप्लवौ । चञ्चलौ । मुहुरितस्ततश्चलन्ताविवेत्यर्थः । 'चञ्चलं चपलं तूर्णं पारिप्लवपरिप्लवे' इत्यमरः । मधुकैटभावसुरविशेषौ मत्कुणौ सुप्ताह्तकपायिनौ मलोद्भवौ कीटविशेषौ ताविवेत्युपमा । सिन्धुनाथः सरित्पतिः स एव शयनं तत्र निषेदुषो निषण्णस्य, समुद्रशायिन इत्यर्थः । 'भाषायां सदवसश्रुवः' इति लिटः क्वसुरादेशः । विभोः प्रभोः यस्य हरेः क्षणं निद्रायाः सम्बन्धिनः आगतं वा नैद्रं यत् सुखं तस्य विघ्नतां विधातुं कर्त्तुं यच्छतः स्म गतौ तादृशावपि महासुरौ मत्कुणाविव क्षणमात्रेण प्रनष्टाविति भगवतः प्रभावातिशयोक्तिः । एषां त्रयाणां पूर्वेणान्वयः ॥ ६८ ॥

श्रौतेति । श्रौतमार्गस्य सुखं सुखकरं यद्गानं तस्य कोविदोऽभिज्ञः । कोविदो व्याख्यातः । स चासौ ब्रह्मा च स एव षट्चरणः स गर्भे यस्य

सत्यवृत्तमपि मायिनं जगद्‌वृद्धमप्युचितनिद्रमर्भकम् ।
जन्म बिभ्रतमजन्नवं बुधा यं पुराणपुरुषं प्रचक्षते ॥ ७० ॥
स्कन्धधूननविसारिकेशरक्षिप्तसागरमहाप्लवामयम् ।
उद्धृतामिव मुहूर्तमैक्षत स्थूलनासिकवपुर्वसुन्धराम् ॥ ७१ ॥

तत् उज्ज्वलं निर्मलं यस्य हरेर्नाभिरेव सरसी । सर: कासार: 'कासार: सरसी सर:' इत्यमर: । तस्यां सरोरुहं पद्मं श्रियो मुखमिवेन्दुस्तस्य सन्निधौ समीपेऽपि शोभत इति विरोध: । स च मुखस्येन्दुत्वरूपणायत्त इत्यनयो-रङ्गाङ्गिभावेन सङ्कर: ॥ ६८ ॥

सत्येति । यं हरिं सत्यवृत्तमकपटचरितमपि मायिनं मायाविनं कपट-वन्तमिति विरोध: । माया नाम शक्ति: तद्वन्तमित्यविरोध: । व्रीह्यादि-त्वादिनिप्रत्यय: । जगद्वृद्धं सर्व्वलोकपितामहत्वात् स्थविरमपि । 'प्रवया: स्थविरो वृद्ध:' इत्यमर: । उचितनिद्रं परिचितयोगनिद्रमर्भकं डिम्भम् । 'वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि' इत्यागमवचनादिति भाव: । 'पोत: पाकोऽर्भको डिम्भ:' इत्यमर: । न जायत इत्यजो जन्म-रहित: । 'अन्येभ्योऽपि दृश्यते' इति जनेर्डप्रत्यय: । तमपि जन्म बिभ्रतम् । कामवशात् कृष्णादिजन्मभाजमित्यर्थ: । नवं रमणीयत्वादभिनवं तथापि पुराणं प्राचीनमनादिञ्च पुरुषं प्रचक्षते । बुधा इति वाक्यं सर्व्वत्र सम्बध्यते । सर्वेऽपि विरोधा हरेरचिन्त्यमहिमत्वेनाभास्या इति विरोधाभासचतुष्ट-संसृष्टि: ॥ ७० ॥

अथ षोड़शभिरवतारान् वर्णयिष्यन् वराहावतारं तावदेकेनाह—स्कन्धेति । स्थूलनासिकवपुर्वराहमूर्त्तिरयं हरि: स्कन्धस्य कन्धराया: धूननेन कम्पनेन विसारिभिरुत्सर्पिभि: केसरै: सटाभि: क्षिप्तोऽवकीर्ण: सागरस्य महाप्लवो महापूर: यस्यास्ताम्, जलापसारेण प्रकाशितामित्यर्थ: । वसुन्धरां भुवं मुहूर्त्तं क्षणमात्रम्, 'मुहूर्त्तमल्पकालेऽपि' इति शब्दार्णवे । उद्धृतामनावृत-त्वात् सागरादुत्क्षिप्तामिव ऐक्षत प्रेक्षितवानित्युत्प्रेक्षा । ईक्षतेर्लङि 'आडजादीनाम्' 'आटश्च' इति वृद्धि: ॥ ७१ ॥

दिव्यकेशरिवपुः सुरद्विषो नैव लब्धशममायुधैरपि ।
दुर्निवाररणकण्डु कोमलैर्वक्ष एष निरदारयन्नखैः ॥ ७२ ॥
वारिधेरिव कराग्रवीचिभिर्दिग्गजानां मुखान्यभिघ्नतः ।
यस्य चारुनखशुक्तयः स्फुरन्मौक्तिकप्रकरगर्भतां दधुः ॥ ७३ ॥

युग्मकम् ।

दीप्तिनिर्जितविरोचनादयं गां विरोचनसुतादभीप्सतः ।
आत्मभूरवरजाखिलप्रजः स्वर्पतेरवरजत्वमाययौ ॥ ७४ ॥

द्वाभ्यां नृसिंहावतारमाह—दिव्येति । दिव्यकेशरिवपुर्दिव्यसिंहमूर्त्तिः । हरेरायुधैर्वज्रादिभिरपि नैव लब्धशममप्राप्तशान्ति दुर्निवारा दुर्ज्जया रणकण्डूर्यस्य तत्, रणव्यसनीत्यर्थः । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । सुरद्विषो हिरण्यकशिपोर्वक्षः कोमलैर्नखैः निरदारयदभिनत् । वज्राद्यभेद्यस्य कोमलनखविदार्य्यत्वं भगवत्प्रभावादिति विरोधाभासोऽलङ्कारः ॥ ७२ ॥

वारिधेरिति । कराग्राणि वीचय इवेत्युपमितसमासः । वारिधेरिवेति लिङ्गात् । ताभिः कराग्रवीचिभिः, दिगन्तविततामिरिति भावः । अतएव दिग्गजानां मुखान्यभिघ्नतो रोषातिरेकात् प्रहरतो यस्य सिंहमूर्त्तेर्हरेर्वारिधेरिव चारुनखाः शुक्तय इव । पूर्व्ववदुपमितसमासः । स्फुरन् मौक्तिकप्रकरो दिग्गजकुम्भसम्भूतमुक्ताव्रातो गर्भेऽन्तर्गतो यासां तासां भावस्तत्ता तां दधुः । एष निरदारयदिति पूर्व्वेणान्वयः । एतेन नरहरिक्रोधस्य महासुरेऽपि न पर्य्याप्तमिति व्यज्यत इति वस्तुना वस्तुध्वनिः । उपमालङ्कारः ॥ ७३ ॥

अथ चतुर्भिर्वामनावतारमाह—दीप्तीत्यादि । आत्मना भवतीति आत्मभूः स्वयम्भूरपि । अवरजास्वरमजा अखिलाः प्रजा जना यस्य सोऽपि । सर्व्वज्येष्ठोऽपीत्यर्थः । अयं हरिः दीप्तिनिर्जितविरोचनाज्ज्योतिर्विजितमार्तण्डात् । विरोचनः प्रह्लादपुत्त्रः । 'विरोचनोऽर्के दहने चन्द्रे प्रह्लादनन्दने' इत्युभयत्रापि विश्वः । तस्य सुताद्बलेर्गां भुवमभीप्सतः प्राप्तुमिच्छतोऽभ्याहर्तुमिच्छतः । समन्तादाप्नोतेर्लटः शत्रादेशः । स्वर्पतेरवरजत्वमिन्द्रानुजत्वं ययौ, बलिध्वंसनार्थमिति शेषः । लोकानुग्रहार्थिनः किं न कुर्व्वन्तीति भावः । अत्रा-

किं क्रमिष्यति किलैष वामनो यावदित्थमहसन् न दानवाः ।
तावदस्य न ममौ नभस्तले लङ्घितार्कशशिमण्डलक्रमः ॥ ७५ ॥
गच्छतापि गगनाग्रमुच्चकैर्यस्य भूधरगरीयसाङ्घ्रिणा ।
क्रान्तकन्धर इवाबलो बलिः स्वर्गभर्तुरगमत् सुबन्धताम् ॥७६॥
क्रामतोऽस्य ददृशुर्दिवौकसो दूरमूरुमलिनीलमायतम् ।
व्योम्नि दिव्यसरिदम्बुपद्धतिस्पर्द्धयेव यमुनौघमुत्थितम् ॥ ७७ ॥

जत्वावरजसामानाधिकरण्यविरोधो भगवत्प्रभावादाभासीकृत इति विरोधाभासोऽलङ्कारः ॥ ७४ ॥

किमिति । एष वामनः खर्व्वः । 'खर्वो ह्रस्वश्च वामनः' इत्यमरः । किं क्रमिष्यति इत्थमनेन प्रकारेण दानवा यावन्नाहसन् तावत्ततः प्रागेव लङ्घितेऽतिक्रान्ते अर्कशशिमण्डले येन सोऽस्य हरेः क्रमः पादविक्षेपो नभस्तले न ममौ न परिमाणं गतवान्, यथा न माति तथा ववृधे इत्यर्थः । अत्राधारान्नभस्तलादाधेयस्य क्रमस्याधिक्यकथनादधिकालङ्कारभेदः । आश्रयाश्रयिणोराधिक्यमधिकमिति लक्षणात् ॥ ७५ ॥

गच्छतेति । गगनाग्रं गगनोपरिभागं गच्छतापीति विरोधः । भूधरगरीयसेत्युपमा, यस्य वामनस्योच्चकैरुन्नतेनाङ्घ्रिणा क्रान्तकन्धरोऽवष्टब्धकण्ठ इवाबलो दुर्ब्बलो बलिर्वैरोचनिः स्वर्गभर्त्तुरिन्द्रस्य सुखेन बध्यत इति सुबन्धः । 'ईषद्दुःसुषु'—इत्यादिना खल्प्रत्ययः । तत्तामगमत्, गुरुद्रव्यावष्टब्धकण्ठो हि सुखेन बध्यत इति भावः । 'न लोका'—इत्यादिना क्वचिद्योगलक्षणाया एव षष्ठ्या निषेधात् स्वर्गभर्तुरिति शेषे षष्ठी । अत्र क्रान्तकन्धर इवेत्युत्प्रेक्षाया भूधरगरीयसेत्युपमासापेक्षत्वात् सङ्करः । विरोधेन त्वनपेक्षिता संसृष्टिः ॥ ७६ ॥

क्रामत इति । क्रामतः पादं विक्षिपतोऽस्य सम्बन्धिनं दूरमायतमलिनीलं भृङ्गश्याममूरुं सक्थि दिवौकसो देवा व्योम्नि दिव्यसरितो मन्दाकिन्या अम्बुपद्धत्या जलप्रवाहेण स्पर्द्धया उत्थितमूर्द्ध्वतः प्रवृत्तं यमुनाप्रवाहमिव ददृशुरित्युत्प्रेक्षेयमुपमासङ्कीर्णा ॥ ७७ ॥

यस्य किञ्चिदपकर्तुमक्षम: कायनिग्रहगृहीतविग्रह: ।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥ ७८ ॥
सम्प्रदायविगमादुपेयुषीरेष नाशमविनाशिविग्रह: ।
स्मर्तुमप्रतिहतस्मृति: श्रुतीर्दत्त इत्यभवदत्त्रिगोत्रज: ॥ ७९ ॥
रेणुकातनयतामुपागत: शातितप्रचुरपत्त्रसंहति: ।
लूनभूरिभुजशाखमुज्झितच्छायमर्जुनवनं व्यधादयम् ॥ ८० ॥

अवतारान्तरमाह—यस्येति । कायनिग्रहेणामृतविभागकाले देहच्छेदेन गृहीतविग्रहो बद्धवैर: कृती कुशलो राहुर्यस्य हरे: किञ्चिदपकर्तुमक्षम: सन् कान्तं रम्यं यद्वक्त्रं हरिमुखं तेन सदृशी आकृतिर्यस्य तम्, तत्सुहृदमित्यर्थ: । इन्दुमधुनापि बाधते पीड़यति, उपरागमिषेणेति भाव: । अत्र साक्षात् प्रतिपक्षहरिनिग्रहाशक्त्या राहोस्तदीयेन्दुनिग्रहोक्त्या प्रत्यनीकालङ्कार: । तथा च सूत्रम्—'प्रतिपक्षप्रतीकाराशक्तौ तदीयतिरस्कार: प्रत्यनीकम्' इति ॥ ७८ ॥

दत्तात्रेयावतारमाह—सम्प्रदायेति । अविनाशिविग्रहोऽनपायस्वरूप: अत एव अप्रतिहता स्मृति: स्मरणशक्तिर्यस्य स एष हरि: सम्प्रदाय उपदेशपरम्परा तस्य विगमादपायान्नाशं कालदोषादध्ययनविच्छेदमुपेयुषी: प्राप्ता: । 'उगितश्च' इति ङीप् । श्रुतीर्वेदान् । 'श्रुति: स्त्री वेद आम्नाय:' इत्यमर: । स्मर्तुम्, श्रुतिसम्प्रदायं प्रवर्त्तयितुमित्यर्थ: । दत्त इति विख्यात इति शेष: । अत्रिगोत्रे जातोऽत्रिगोत्रजोऽभवत्, दत्तात्रेयोऽभूदित्यर्थ: । अत्रानपायित्वस्मृत्यप्रतिघातयोर्विशेषणगत्या श्रुतिस्मृतिहेतुत्वोक्त्या काव्यलिङ्गम् ॥ ७९ ॥

परशुरामावतारमाह—रेणुकेति । अयं हरि: रेणुकातनयतां परशुरामत्वमुपागत: सन् । अर्जुन: कार्तवीर्य्यार्जुन: । 'अर्जुन: ककुभे पार्थे कार्त्तवीर्य्यमयूरयो:' इत्यनेकार्थेऽपि रेणुकेयविरोधित्वान्निश्चय: । तदुक्तं हरिणा—'संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता । अर्थ: प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधि: ॥ सामर्थ्यमौचिती देश: कालो व्यक्ति: स्वरादय: । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव: ॥' इति । स एव वनं तत् शातिता छिन्ना प्रचुरा प्रभूता पत्त्रसंहतिर्वाहनसमूह: पर्णसङ्घातश्च यस्य तत् । 'पत्त्र'

एष दाशरथिभूयमेत्य च ध्वंसितोद्धतदशाननामपि ।
राक्षसीमकृत रक्षितप्रजस्तेजसाधिकविभीषणां पुरीम् ॥ ८१ ॥
निष्प्रहन्तुममरेशविद्विषामर्थितः स्वयमथ स्वयम्भुवा ।
सम्प्रति श्रयति सूनुतामयं कश्यपस्य वसुदेवरूपिणः ॥ ८२ ॥
तात नोदधिविलोडनं प्रति त्वद्विनाथ वयमुत्सहामहे ।
यः सुरैरिति सुरौघवल्लभो वल्लवैश्च जगदे जगत्पतिः ॥ ८३ ॥

स्याद्वाहने पर्णे' इति विश्वः । लूनाश्छिन्ना भूरयः प्रचुरा भुजा एव शाखा यस्य तत् । उज्झिता छाया कान्तिरनातपश्च तस्य तत्तथा व्यधाद्विहितवान् । दधातेर्लुङि 'गातिस्था—' इत्यादिना सिचो लुक् । 'छाया सूर्यप्रिया कान्तिः प्रतिविम्बमनातपः' इत्यमरः । अत्र समस्तवस्तुविषयं सावयवं रूपकं व्यक्तं तच्च छायेति पत्रेति च श्लेषप्रतिभोत्थापिताभेदातिशयोक्त्यानुप्राणितमिति सङ्करः ॥ ८० ॥

रामावतारमाह—एष इति । किञ्चेति चार्थः । रक्षितप्रजः एष हरिर्दशरथस्यापत्यं पुमान्दाशरथी रामः । 'अत इञ्' । तस्य भावः दाशरथिभूयं रामत्वम् । 'भुवो भावे' इति क्यप् । एत्य प्राप्य ध्वंसितो हत उद्धतो दृप्तो दशाननो रावणो यस्यां तामपि राक्षसीं रक्षःसम्बन्धिनीं पुरीं लङ्कां तेजसा स्ववीर्येणाधिकविभीषणामत्यन्तभीषणामकृतेति विरोधः । भयहेतोरुद्धतस्य रावणस्य ध्वंसनादधिको महान् विभीषणो रावणानुजो यस्यां तामित्यविरोधः । अत एव विरोधाभासोऽलङ्कारः ॥ ८१ ॥

अथ पञ्चभिः प्रस्तुतं कृष्णावतारमाह—निष्प्रहन्तुमिति । अथ रामावतारानन्तरं अयं हरिः अमरेशविद्विषां निष्प्रहन्तुम् । चैद्यादीनिन्द्रशत्रून् हन्तुमित्यर्थः । 'जासिनिप्रहण—' इत्यादिना कर्मणि षष्ठी । स्वयम्भुवा ब्रह्मणा स्वयमात्मनैवार्थितः प्रार्थितः सन् सम्प्रतीदानीं वसुदेवरूपिणो वसुदेवमूर्त्तिधरस्य कश्यपस्य पुत्रतां श्रयति व्रजति । कृष्णरूपेणेति भावः । अत्र स्वयम्भूप्रार्थनाया विशेषणगत्या वसुदेवपुत्रताप्राप्तिहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ ८२ ॥

तातेति । सुरौघवल्लभः सुरगणप्रियः, जगत्पतिर्यो हरिः सुरैर्देवैर्वल्लवै-

नात्तगन्धमवधूय शत्रुभिश्छायया च शमितामरश्रमम् ।
योऽभिमानमिव वृत्रविद्विषः पारिजातमुदमूलयद्दिवः ॥ ८४ ॥
यं समेत्य च ललाटलेखया बिभ्रतः सपदि शम्भुविभ्रमम् ।
चण्डमारुतमिव प्रदीपवच्चेदिपस्य निरवाद्विलोचनम् ॥ ८५ ॥

र्गोपैश्च हे तात जनक, नेति छेदे उदधिविलोड़नं समुद्रमथनं प्रति, नो इति छेदे दधिविलोड़नं दधिमन्थनञ्च प्रति त्वद्विना, त्वां विहायेत्यर्थः। 'पृथग्विना'—इत्यादिना विकल्पात् पञ्चमी। अथ वयं न नो वोढुमहामहे न क्षमामहे इति जगदे गदितम्। अत्र हरिवर्णनाङ्गत्वेन सुराणां वल्लवानाञ्च प्रकृतानामेव नोदधिशब्दमूलाभेदाध्यवसायलब्धदध्युदधिविलोड़नक्षमत्वकर्म्म-साम्यादन्यौपम्यत्वात् तुल्ययोगिताभेदः। तेन च हरेर्दधिमन्थनकलावदुद-धिमन्थनमपीति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः॥ ८३ ॥

नात्तगन्धमिति। किञ्चेति चार्थः। यो हरिः शत्रुभिरवधूयाभिभूय नात्तगन्धमनाघ्रातसौरभमनभिभूतञ्च 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। छाययानातपेन, पालनेन च। 'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः। पालनोत्कर्षयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियाम्' इति विश्वः। शमितामरश्रमं निवारितसुरखेदं पारिजातं वृत्रद्विषः शक्रस्याभिमानमहङ्कारमिव दिवः स्वर्गादुदमूलयदुन्मूलितवानिति पारिजातहरणोक्तिः। श्लेषसविशेषणीयमुपमेति केचित्। श्लेषवत्यन्ये ॥८४॥

यमिति। किञ्चेति चार्थः। ललाटमेव लेखा तया ललाटलेखया ललाटदेशेन शम्भोर्विभ्रमं सौन्दर्य्यं बिभ्रतः, ललाटलोचनमित्यर्थः। चेदि-पस्य शिशुपालस्य लोचनं तृतीयनेत्रं कर्तृ यं हरिमेव शण्डमारुतं शण्ड-मारुतमिव समेत्य प्रदीपवत् प्रदीपेन तुल्यम्। 'तेन तुल्यम्'—इति वति-प्रत्ययः। निरवान्निर्वाति स्म, नष्टमित्यर्थः। निर्पूर्वाद्वाधातोर्लङ्। 'निरवाप इति क्वाचित्कः पाठः स न सम्यक्। वातेः प्रक्रियाविरोधादाप्नोतेरसङ्ग-तार्थत्वादिति। अनेकार्थेयमुपमा ॥ ८५ ॥

य: कोलतां वल्लवतां च बिभ्रद् दंष्ट्रामुदस्याशु भुजां च गुर्वीम् ।
मग्नस्य तोयापदि दुस्तरायाङ्गोमण्डलस्योद्धरणं चकार ॥ ८६ ॥

धन्योऽसि यस्य हरिरेष समक्ष एव
दूरादपि क्रतुषु यज्वभिरिज्यते य: ।
दत्त्वार्घमत्रभवते भुवनेषु यावत्
संसारमण्डलमवाप्नुहि साधुवादम् ॥ ८७ ॥

य इति । यो हरि: कोलतां वराहत्वम् । 'वराह: शूकरो घृष्टि: कोल: पोत्री: किरि: किटि:' इत्यमर: । वल्लवतां गोपालत्वं च बिभ्रत् । आशु गुर्वीं दंष्ट्रां भुजां च यथासंख्यमिति भाव: । उदस्योद्यम्य दुस्तरायां तोयापदि जलसङ्कटे एकत्र समुद्रकृतायां, अन्यत्र वर्षकृतायां च मग्नस्य गोमण्डलस्य भूगोलस्य धेनुवृन्दस्य चोद्धरणं चकार । अत्र कोलत्ववल्लवत्वयो: प्रकृतयोरेव श्लेषमूलाभेदाध्यवसायेन गोमण्डलोद्धरणस्य दंष्ट्राभुजोद्यमनस्य च साम्यादौपम्यगम्यतायां तुल्ययोगिता सती यथासंख्येन सङ्कीर्यते । इन्द्रवज्रा वृत्तम् । 'स्यादिन्द्रवज्रा यदि तौ जगौ ग:' इति लक्षणात् ॥ ८६ ॥

एवं देवं स्तुत्वानन्तरं कर्तव्यमुपदिशति—धन्योऽसीति । धनं लब्धो धन्य: पुण्यवानसि । 'सुकृती पुण्यवान्धन्य:' इत्यमर: । 'धनगणं लब्धा' इति यत्प्रत्यय: । यस्य ते एष हरि: समक्ष एव अक्ष्णो: समीप एव, पुरत एवेत्यर्थ: । स्थित इति शेष: । सामीप्येऽव्ययीभाव: । 'अव्ययीभावे शरत्प्रभृतिभ्य:' इति समासान्त: । अत एव 'तृतीयासप्तम्योर्बहुलम्' इति सप्तम्या अमभाव: । अन्यत्र को विशेषस्तत्राह—यो हरिर्दूरादपि परोक्षेऽपि क्रतुषु यागेषु यज्वभिर्विधिवदिष्टवद्भि: । 'यज्वा तु विधिनेष्टवान्' इत्यमर: । 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्प्रत्यय: । इज्यते पूज्यते, स ते प्रत्यक्ष इति धन्यस्त्वमित्यर्थ: । फलितमाह—अत्रभवते, पूज्यायेत्यर्थ: । 'पूज्यस्तत्रभवान्' इति सज्जन: । 'इतरेभ्योऽपि दृश्यते' इति सार्वविभक्तिके त्रल्प्रत्यये सुप्सुपेति समास: । अर्घं पूजां दत्त्वा यावत् संसारमण्डलं वर्तते तावदिति शेष: । भुवनेषु साधुर्वाद: शब्दस्तं साधुवादं साधुसमाख्यामवाप्नुहि, लभस्वेत्यर्थ: ।

भीष्मोक्तं तदिति वचो निशम्य सम्यक्
साम्राज्यश्रियमधिगच्छता नृपेण ।
दत्तेऽर्घे महति महीभृतां पुरोऽपि
त्रैलोक्ये मधुभिदभूदनर्घ एव ॥ ८८ ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये श्रीकृष्णार्घदानं नाम चतुर्दशः सर्गः ॥ १४ ॥

अत्र राज्ञो धन्योऽसीति विशेषणगत्या यस्येत्यादिवाक्यार्थहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । वसन्ततिलका वृत्तम् ॥ ८७ ॥

भीष्मेति । 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः । सम्राजो भावः साम्राज्यं तदेव श्रीस्तां श्रियमधिगच्छता भजता नृपेण युधिष्ठिरेण इतीत्थं भीष्मोक्तं तद्वचः सम्यङ्निशम्य श्रुत्वा । महीभृतां राज्ञां पुरोऽग्रे महति अर्घे पूजायां दत्तेऽपि मधुभिद्धरिः त्रयो लोकास्त्रैलोक्यम् । चातुर्वर्ण्यादित् स्वार्थे ष्यञ्प्रत्ययः । तत्र त्रैलोक्ये कृष्णोऽनर्घः पूजारहित एवाभूदिति विरोधः । अमूल्य एवाभूदित्यविरोधः । 'मूल्ये पूजाविधावर्घः' इत्यमरः । अत्रार्घयोरभेदाध्यवसायाद्विरोधः । तद्व्यवसायादविरोध इति विरोधाभासोऽलङ्कारः । प्रहर्षिणी वृत्तम् ॥ ८८ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवधमहाकाव्यव्याख्याने सर्वङ्कषाख्ये चतुर्दशः सर्गः ॥ १४ ॥

---

# पञ्चदशः सर्गः ।

अथ तत्र पाण्डुतनयेन सदसि विहितं मधुद्विषः ।
मानमसहत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनाम् ॥ १ ॥
पुर एव शार्ङ्गिणि सवैरमथ पुनरमुं तदर्चया ।
मन्युरभजदवगाढ़तरः समदोषकाल इव देहिनं ज्वरः ॥ २ ॥
अभितर्जयन्निव समस्तनृपगणमसावकम्पयत् ।
लोलमुकुटमणिरश्मि शनैरशनैः प्रकम्पितजगत्त्रयं शिरः ॥ ३ ॥

अथेति । अथ हरिपूजानन्तरं चेदिपतिः शिशुपालः तत्र सदसि सभायां पाण्डुसुतेन युधिष्ठिरेण विहितं मुरद्विषो हरेर्मानं पूजां नासहत । ईर्ष्यां चकारेत्यर्थः । 'परोत्कर्षाक्षमेर्ष्या स्याद्दौर्जन्यान्मन्युतोऽपि च' इति लक्षणात् । तथा हि—मानिनामहङ्कारिणां मनः परवृद्धौ मत्सरि हि । परश्रेयोद्वेषि खल्वित्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । अस्मिन् सर्गे उद्गता वृत्तम् । 'सजसादिमे सलघुकौ च सनजगुरुकेऽप्यथोद्गता । अङ्घ्रिगतभजनजला गयुताः सजसा जगौ चरणमेकतः पठेत्' । इति लक्षणात् ॥ १ ॥

पुर इति । पुरः पूर्वमेव शार्ङ्गिणि सवैरं सक्रोधममुं चैद्यं अथ पुनः अतः परं तदर्चया हरिपूजया अवगाढ़तरो निविड़तरो मन्युः क्रोधः । रौद्ररसस्य स्थायीभाव इति भावः । देहिनं शरीरिणं समौ तुलितौ दोषोऽपथ्यसेवा कालः कर्मविपाकश्च यस्य च ज्वर इवाभजत् । उपमालङ्कारः ॥ २ ॥

अथाष्टभिरस्य गात्रारब्धक्रोधचेष्टां प्रपञ्चयति—अभीत्यादि । असौ चैद्यः । समस्तनृपगणमभितर्जयन्निवेत्युत्प्रेक्षा । 'तर्ज भर्त्सने' चौरादिकस्यानुदात्तेत्त्वेन प्राप्तस्य आत्मनेपदस्य चक्षिङादेशस्य व्याजः स्थानिवद्भावानादरेण

स वमन् रुषाम्बु घनघर्म्मविगलदुरुगण्डमण्डलः ।
स्वेदजलकणकरालकरो व्यरुचत् प्रभिन्न इव कुञ्जरस्त्रिधा ॥४॥
स निकामघर्म्मितमभीक्ष्णमधुवदवधूतराजकः ।
क्षिप्तबहुलजलबिन्दुवपुः प्रलयार्णवोत्थित इवादिशूकरः ॥ ५ ॥
क्षणमाश्लिषद्घटितशैलशिखरकठिनांसमण्डलः ।
स्तम्भमुपहितविधूतिमसावधिकावधूनितसमस्तसंसदम् ॥ ६ ॥

पुनर्णिज्करणसामर्थ्यादनित्यत्वज्ञापनात् परस्मैपदम् । अतएव तर्जयतीत्यपि दृश्यते कविष्विति भट्टमल्लः । अशनैरतिमात्रं प्रकम्पितं जगत्त्रयं येन तत् त्रैलोक्यभीषणं शिरः शनैर्लीलाश्चपला मुकुटमणिरश्मयो यस्मिन् कर्म्मणि तद्यथा तथा अकम्पयत्, क्रोधातिरेकादिति भावः ॥ ३ ॥

स इति । रुषा रोषेणाम्बु वमन् मुञ्चन् । घनेन सान्द्रेण घर्मेण क्रोधोष्मणा विगलत् स्रवदुरु महत् गण्डमण्डलं यस्य सः, स्विद्यत्कपोल इत्यर्थः । स्वेदजलकणैः स्वेदबिन्दुभिः करालकरो दन्तुरहस्तः स चैद्यः त्रिधा नेत्रकपोलहस्तदेशैः प्रभिन्नो मदस्रावी मत्तः । 'प्रभिन्नो मत्तः स्यात्' इति वैजयन्ती । कुञ्जर इव व्यरुचत् । रुचेः 'द्युद्भ्यो लुङि' इति विकल्पात् परस्मैपदम् । एतेन स्वेदाख्यः सात्त्विकभाव उक्तः । उपमालङ्कारः ॥ ४ ॥

स इति । राज्ञां समूहो राजकम् । 'गोत्रोक्ष'—इत्यादिना वुञ् प्रत्ययः । तदवधूतमभिभूतं येन स तथोक्तः स चैद्यो निकामं घर्मितं सञ्जातघर्मम्, उद्भवत्स्वेदमित्यर्थः । 'घर्मः स्यादातपे ग्रीष्म उष्णस्वेदाम्भसोरपि' इति विश्वः । तारकादित्वादितच्प्रत्ययः । वपुः प्रलये अर्णवस्तस्मादुत्थितः आदिशूकरः इव क्षिप्ताः प्रेरिता बहुलाः सान्द्रजलबिन्दवो यस्मिन् कर्म्मणि तद्यथा तथा अभीक्ष्णमधुवत् क्रोधाद्धुवति स्म । 'धूञ् विधूनने' इति धातोस्तौदादिकाल्लङ् । अत्रापि स्वेदः सात्त्विकः एवोक्तः । उपमालङ्कारः ॥ ५ ॥

क्षणमिति । घटितं सुसंहितं यच्छैलशिखरं तद्वत् कठिनमंसमण्डलं यस्य सोऽसौ चैद्यः उपहितावगाहिता, आरोपितेत्यर्थः । विधूतिः कम्पो यस्मिं-

कनकाङ्गदद्युतिभिरस्य गमितमरुचत्पिशङ्गताम् ।
क्रोधमयशिखिशिखापटलैः परितः परीतमिव बाहुमण्डलम् ॥७॥
कृतसन्निधानमिव तस्य पुनरपि तृतीयचक्षुषा ।
क्रूरमजनि कुटिलभ्रु गुरुभ्रुकुटीकठोरितललाटमाननम् ॥ ८ ॥
अतिरक्तभावमुपगम्य कृतमतिरमुष्य साहसे ।
दृष्टिरगणितभयासिलतामवलम्बते स्म समया सखीमिव ॥९॥

स्तम् अधिकमत्यन्तमवधूनिता कम्पिता समस्ता सकला संसत् सभा येन तं स्तम्भं क्षणं आश्लिषच्छ्लिष्टवान्, तेनांसमण्डलेनाहतवानित्यर्थः। अतएव कठिनांसमण्डल इति विशेषणञ्च। पुषादित्वाच्च्लेरङादेशः। आलिङ्गनार्थत्वे तु 'श्लिष आलिङ्गने' इति क्सादेशः स्यात्। क्रोधान्धाः किमु न कुर्वन्तीति भावः। अत्रांसकाठिन्यस्य विशेषणगत्या स्तम्भाश्लेषहेतुत्वात् काव्यलिङ्गं शैलशिखरोपमया सङ्कीर्य्यते ॥ ६ ॥

कनकेति। कनकस्याङ्गदयोः केयूरयोः द्युतिभिः पिशङ्गतां पिङ्गलवर्णतां गमितं प्रापितमिति तद्गुणालङ्कारः। अस्य चैद्यस्य बाहुमण्डलं क्रोधमयशिखिशिखापटलैः क्रोधाग्निज्वालाजालैः परितः परीतं परिवृतमिवारुचदित्युत्प्रेक्षा। 'द्युद्भ्यो लुङि' इति परस्मैपदम् ॥ ७ ॥

कृतेति। कुटिले भ्रुवौ यस्य तत् कुटिलभ्रु। उपसर्जनस्य ह्रस्वः। गुर्व्या भ्रुकुट्या भ्रूभङ्गेन कठोरितं भीषणीकृतं ललाटं यस्य तत् तस्य चैद्यस्याननं पुनरपि तृतीयचक्षुषा कृतसन्निधानं कृतसंसर्गमिवेत्युत्प्रेक्षा। क्रूरमजनि भयङ्करमभूत्। जनेः कर्त्तरि लुङ् 'दीपजन'—इत्यादिना विकल्पाच्चिण्प्रत्ययः ॥ ८ ॥

अतिरक्तेति। अमुष्य चैद्यस्य दृष्टिः। अतिरक्तस्य भावस्तमतिरक्तभावं रोषातिरेकादत्यरुणतामन्यत्र कर्म्मातिरेकादत्यनुरागितामुपगम्य प्राप्य साहसे कृष्णादिवधरूपे अन्यत्र युद्धे कृतमतिः। सर्व्वथा गमिष्यामि हनिष्यामि इति च कृतनिश्चया अर्थनिर्द्धारणं मतिरिति। अगणितमविचारितं भयं शत्रोर्गुरुजनाच्च यया सा सती समया समीपे असिलतां सखीमिवावलम्बते स्म साधन-

**करकुड्मलेन निजमूरुमुरुतरनगाश्मकर्कशम् ।**
**त्रस्तचपलचलमानजनश्रुतभीमनादमयमाहतोच्चकैः ॥ १० ॥**
**इति चुक्रुधे भृशमनेन ननु महदवाप्य विप्रियम् ।**
**याति विकृतिमपि संवृतिमत् किमु यन्निसर्गनिरवग्रहं मनः॥११**
**प्रथमं शरीरजविकारकृतमुकुलबन्धमव्यथी ।**
**भाविकलहफलयोगमसौ वचनेन कोपकुसुमं व्यचीकसत् ॥१२॥**

त्वेन स्वीचकार, क्रोधाज्जिघांसया खड्गमद्राक्षीदित्यर्थः। अत्र प्रस्तुतदृष्टिविशेषणसाम्यादप्रस्तुतनायिकाप्रतीतेः समासोक्तिरुपमासङ्कीर्णा ॥ ८ ॥

करेति। अयं चैद्यः उरुतरो महत्तरो नगाश्मवच्छैलशिलेव कर्कश इत्युपमा, तं निजमात्मीयमूरुं सक्थि। 'सक्थि क्लीबे पुमानूरुः' इत्यमरः। करः कुड्मल इवेत्युपमितसमासः। तेन संहतप्रसारिताङ्गुलिना पाणितलेनेत्यर्थः। त्रस्तो भीतः अतएव चपलं चञ्चलं चलमानेन जनेन श्रुतो भीमनादो भयङ्करध्वनिर्यस्मिन् कर्म्मणि तद्यथा तथा उच्चकैराहत आहतवान्। अलब्धलक्ष्याः क्रोधान्धाः स्वात्मानमेव घ्नन्तीति भावः। आङ्पूर्व्वाद्धन्तेर्लङ्, 'आङो यमहनः' इत्यकर्म्मकाधिकारेऽपि 'स्वाङ्गकर्म्मकाचेति वक्तव्यम्' इत्यात्मनेपदे 'अनुदात्तोपदेश'—इत्यादिनानुनासिकलोपः ॥ १० ॥

इतीति। इतीत्थमनेन प्रकारेण अनेन चैद्येन भृशं चुक्रुधे क्रुद्धम्। भावे लिट्। संवृतिमदपि संवृतिर्विकारगुप्तिः तद्वदपि, धीरमपीत्यर्थः। मनो महद्विप्रियमप्रियमवाप्य विकृतिं विकारं याति ननु प्राप्नोति खलु। यन्मनो निसर्गात् स्वभावान्निरवग्रहम्, चपलमित्यर्थः। ग्रहेः खल्प्रत्ययः। तदिति शेषः। किमु, विकृतिं यातीति किमु वक्तव्यमित्यर्थः। चपलचित्तश्चायं चैद्य इति भावः। अत्र चैद्यक्रोधस्य नन्वित्यादिवाक्यार्थहेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ११॥

एवं गात्रारब्धविकारानुक्त्वा वागारब्धान् वक्तुमुपोद्घातयति—प्रथममिति। न व्यथते बिभेतीत्यव्यथी निर्भयः। दिट्टचीत्यादिना नञ्पूर्व्वाद्व्यथतेरिनिः। असौ चैद्यः प्रथमं शरीरजैर्विकारैः पूर्वोक्तैः शिरःकम्पनादिभिः कृतो मुकुल-

**ध्वनयन् सभामथ सनीरघनरवगभीरवागभीः ।**
**वाचमवददतिरोषवशादतिनिष्ठुरस्फुटतराक्षरामसौ ॥ १३ ॥**
**यदपूपुजस्त्वमिह पार्थ ! मुरजितमपूजितं सताम् ।**
**प्रेम विलसति महत्तदहो दयितं जनः खलु गुणीति मन्यते॥१४**
**यदराज्ञि राजवदिहार्घ्यमुपहितमिदं मुरद्विषि ।**
**ग्राम्यमृग इव हविस्तदयं भजते ज्वलत्सु न महीशवह्निषु ॥१५॥**

बन्धो मुकुलप्रादुर्भावो यस्य तत्। भाविकलहस्य रणस्यैव फलस्य योगो यस्य तत्। 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः। कोप एव कुसुमं तत् वचनेन यदपूपुज इत्यादि वक्ष्यमाणवाक्येन व्यचीकसद्विकासयति स्म। कसेः 'णौ चङ्युपधाया ह्रस्वः'। 'दीर्घो लघोः' इत्यभ्यासदीर्घः। अत्र विकारकलहवचनकोपेषु मुकुलफलविकासकुसुमत्वरूपणात् समस्तवस्तुवर्त्तिसावयवरूपकम् ॥ १२ ॥

ध्वनयन्निति। अथ सनीरघनरवगभीरवाक्। सजलमेघगर्जितगभीरस्वर इत्यर्थः। अभीः निर्भीकः असौ चैद्यः सभामास्थानं ध्वनयन्नतिरोषवशादतिनिष्ठुराण्यतिपरुषाणि स्फुटतराणि चाक्षराणि यस्यास्तां वाचमवदत्। घनरवगभीरेत्युपमालङ्कारः ॥ १३ ॥

वाचमवददित्युक्तम्, अथ तामेव प्रपञ्चयन् पञ्चभिः पाण्डवोपालम्भमाह—यदित्यादि। हे पार्थ ! पृथापुत्रेति मातृप्राधान्येनामन्त्रणं मर्मोद्घाटनार्थम्। सतामपूजितम्, सद्भिरपूज्यमानमित्यर्थः। 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्त्तमाने क्तः। 'क्तस्य च वर्त्तमाने' इति षष्ठी। मुरजितं कृष्णं इह सदसि यद्यस्मादपूपुजः पूजयसि स्म। 'णौ चङ्युपधाया ह्रस्वः'। तत् तस्मान्महत् प्रेम विलसति स्फुरति। अन्यथा कथमपूज्ये पूज्यत्वाभिमान इत्यभिप्रेत्याह—जनो लोकः दयितं प्रियं जनं गुणीति मन्यते खलु, अगुणिनमपीत्यर्थः। अहो आश्चर्यम्। कृष्णः प्रेम्णा पूजितो न गुणादिति भावः। अत्र प्रेमविलसितस्योत्तरवाक्यार्थहेतुकं काव्यलिङ्गम् ॥ १४ ॥

यदिति। अराज्ञि अभिषेकादिराजगुणविरहिणीत्यर्थः। 'नञस्तत्पुरुषात्' इति समासान्तप्रतिषेधः। इहास्मिन्मुरद्विषि कृष्णे। अपात्रद्योतनार्थ-

अनृताङ्गिरं न गदसीति जगति पटहैर्विघुष्यसे ।
निन्द्यमथ च हरिमर्चयतस्तव कर्म्मणैव विकशत्यसत्यता ॥१६॥
तव धर्म्मराज इति नाम कथमिदमपष्ठु पठ्यते ।
भौमदिनमभिदधत्यथवा भृशमप्रशस्तमपि मङ्गलं जनाः ॥ १७ ॥
यदि वार्चनीयतम एष किमपि भवतां पृथासुताः ।
शौरिरवनिपतिभिर्निखिलैरवमाननार्थमिह किं निमन्त्रितैः॥१८

मसम्प्रदानविभक्तिनिर्देशः । राजानमर्हतीति राजवद्राजार्हम् । तदर्हमिति वतिप्रत्ययः । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वम् । यदिदमर्घ्यमर्घार्थं द्रव्यम्, अर्हणमित्यर्थः । उपहितमर्पितं तदर्घ्यमयं कृष्णः महीशा अवनिपा वह्नय इवेत्युपमितसमासः । तेषु महीशवह्निषु ज्वलत्सु सत्सु, अन्यत्र महीशा इव वह्नयस्तेषु ज्वलत्सु सत्स्वित्यर्थः । ग्राम्यमृगः शुनको हविरिव न भजते न प्राप्नोति । उपमालङ्कारः ॥ १५ ॥

अनृतामिति । हे पार्थ ! अनृतामसत्यां गिरं न गदसि न वदसीति जगति लोके पटहैर्वाद्यविशेषैः कर्त्तृभिर्विघुष्यसे उद्घोष्यसे । अथ च तथापि निन्द्यं हरिमर्चयतस्तव कर्म्मणा अपूज्यपूजाकरणेनैवासत्यता सत्यहीना विकसति प्रकाशते । अत्रासत्यप्रसिद्धसत्याचरणयोर्विरूपयोर्घटनाद्विरूपघटनारूपो विषमालङ्कारः ॥ १६ ॥

तवेति । हे पार्थ । तवेदं धर्म्मराज इति नाम कथमपष्ठु असत्यमेव पठ्यते । 'अपदुःसुभ्यः स्थः' इत्यौणादिकः कुप्रत्ययः । 'अम्बाम्बगोभूमि'— इत्यादिना षत्वम् । यद्वा युक्तमेव तदित्याह । अथवा जनाः भृशमप्रशस्तमपि भौमदिनमङ्गारकवारं मङ्गलमभिदधति व्यपदिशन्ति तद्वदिदमपीत्यर्थः । लोकैरप्रशस्तं प्रशस्तशब्देन विरुद्धार्थेनापि व्यपदिश्यते तदुच्चारणदोषात् तद्वदधर्म्मराजस्यापि ते धर्म्मराजव्यपदेश इति भावः । अत्र धर्म्मराजभौमदिनयोर्निरपेक्षवाक्यद्वये प्रतिबिम्बकरणाद्दृष्टान्तालङ्कारः ॥ १७ ॥

यदि वेति । हे पृथासुताः ! कौन्तेयाः ! एष शौरिर्वा, शौरिरेवेत्यर्थः । 'वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये' इति विश्वः । किमपि कथमपि

अथवा न धर्म्ममसुबोधसमयमवयात बालिशाः ।
काममयमिह वृथापलितो हतबुद्धिरप्रणिहितः सरित्सुतः ॥१९॥
स्वयमेव शन्तनुतनूज यमपि गणमर्घ्यमभ्यधाः ।
तत्र मुररिपुरयं कतमो यमनिन्द्यवन्दिवदभिष्टुषे वृथा ॥ २० ॥

भवतामर्चनीयतमो यदि पूज्यश्चेत्। तर्ह्यीति शेषः। अवमानस्तिरस्कारः तस्मै तदर्थमेव। अर्थेन सह नित्यसमासः सर्व्वलिङ्गता च वक्तव्या। क्रियाविशेषणम्। निमन्त्रितैराहूतैर्निखिलैरवनिपतिभिरिह किम्। कोऽर्थः साध्य इत्यर्थः। अतएव साधनक्रियापेक्षया करणत्वे तृतीया। अत्र गम्यमानक्रियापेक्षयापि कारकवृत्तिरिति न्यासद्योते। अत्र सकलराजनिषेधस्य पूर्व्ववाक्यार्थहेतुकत्वात् काव्यलिङ्गभेदः ॥ १८ ॥

अथ त्रिभिर्भीष्मोपालम्भमाह—अथेत्यादि। अथवा बालिशा मूर्खाः। यूयमिति शेषः। सुबोधो न भवतीत्यसुबोधो दुर्बोधः समय आचारो यस्य तं धर्म्मं नावयात न जानीत। अवपूर्वाद्याधातोर्लोटः 'तस्तस्थस्'—इत्यादिना थस्य तादेशः। किन्तु वृथा निष्फलं पलितं यस्य स वृथापलितः, वृथापरिणत इत्यर्थः। 'पलितं जरसा शौक्ल्यम्' इत्यमरः। वृथात्वे हेतुः। हतबुद्धिर्नष्टमतिरयं सरित्सुतो भीष्मोऽपि काममप्रणिहितोऽनवहितः प्रमत्तः। बालाः पार्था न जानन्तु हन्त, वृद्धोऽपि न जानातीति चित्रमित्यर्थः। अत एव सत्यपि कारणे कार्य्यानुदयाद्विशेषोक्तिरलङ्कारः। तथा बालिशत्वधर्म्मदुर्ब्बोधत्वयोर्विशेषणगत्या धर्म्माज्ञानाहेतुत्वात् काव्यलिङ्गं चेत्यनयोः सापेक्षत्वात् सङ्करः ॥ १९ ॥

स्वयमेवेति। हे शन्तनुतनूज! भीष्म। स्वयमेवेत्यर्थः। यमपि गणं वर्गमर्घ्यमर्घार्हं पूज्यम्। 'दण्डादिभ्यो यत्' इति यत्प्रत्ययः। अभ्यधा अवोचः। 'स्नातकं गुरुम्,' इत्यादि श्लोक इति भावः। धाधातोर्लङि 'गातिस्था—' इत्यादिना सिचो लुक्। तत्र स्नातकादिगणे अयं मुररिपुः कतमः। न कोऽपीत्यर्थः। मास्तु अस्तु वा, अस्मदुपालम्भे को हेतुरत आह—यमिति। यं मुररिपुमनिन्द्यवन्दिवत् प्रमत्तवैतालिकवदित्युपमा। अभिष्टुषे मिथ्या

**अवनीभृतां त्वमपहाय गणमतिजड़ः समुन्नतम् ।**
**नीचि नियतमिह यच्चपलो निरतः स्फुटं भवसि निम्नगासुतः २१**
**प्रतिपत्तुमङ्ग घटते च न तव नृपयोग्यमर्हणाम् ।**
**कृष्ण कलय ननु कोऽहमिति स्फुटमापदां पदमनात्मवेदिता२२**
**असुरस्त्वया न्यवधि कोऽपि मधुरिति कथं प्रतीयते ।**
**दण्डदलितसरघः प्रथसे मधुसूदनस्त्वमिति सूदयन् मधु ॥२३॥**

स्तौषि । अतस्त्वमेवोपलभ्यस इति भावः । 'उपसर्गात् सुनोति—' इत्यादिना षत्वम् ॥ २० ॥

अवनीति । अतिजड़ोऽतिमूढ़ोऽतिशीतश्च चपलोऽस्थिरः सत्वरश्च त्वं समुन्नतमुन्नतमवनीभृतां राज्ञां भूधराणां च गणमपहाय । न्यञ्चतीति न्यङ् तस्मिन्नीचि नीचवृत्ते, निम्ने च । 'अचः' इत्यकारलोपे 'चौ' इति दीर्घः । इहास्मिन् कृष्णे यद्यस्मान्नियतं नित्यं निरतोऽनुरक्तः प्रवणश्च स इति शेषः । निम्नं नीचं गच्छतीति निम्नगा नदी । 'डोऽन्यत्रापि दृश्यते' इति डप्रत्ययः । तस्याः सुतो भवसि स्फुटं व्यक्तम् । नीचनिरतत्वादिधर्म्मसंक्रमादिति भावः । उक्तञ्च —'न पित्र्यमनुवर्त्तन्ते मातृकं द्विपदाः' इति । अत्र चतुर्थपादार्थस्य पूर्व्ववाक्यार्थहेतुकत्वात् काव्यलिङ्गभेदः ॥ २१ ॥

अथ सप्तदशभिः कृष्णोपालम्भं करोति—प्रतिपत्तुमिति । हे अङ्ग ! तव नृपयोग्यं राजार्हमर्हणं पूजनं प्रतिपत्तुं स्वीकर्तुं न च घटते न युज्यते । नन्वहमपि राजैव कथमर्हणं मे न युक्तं तत्राह—कृष्णेति । हे कृष्ण ! अहं क इति कलय । अहं राजा न वेति निजस्वरूपमालोचयेत्यर्थः । अनालोचनेऽनर्थमाह—अनात्मवेदिता अनात्मज्ञत्वं आपदां पदं स्थानं स्फुटं खलु, सत्यमित्यर्थः । आत्मा च कंसकिङ्करस्तस्य पशुपालकत्वादिति भावः । अतो निजस्वरूपं चिन्त्यमिति हेतुमद्भावात् काव्यलिङ्गमिति ॥ २२ ॥

असुर इति । मधुरिति कोऽप्यसुरस्त्वया न्यवधि हतः । 'आत्मनेपदेष्वन्यतरस्याम्' इति हन्तेर्लुङि विकल्पाद्वधादेशः । इति कथं प्रतीयते विश्वस्यते । न कथञ्चिदित्यर्थः । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । किन्तु

मुचुकुन्दतल्पशरणस्य मगधपतिशातितौजसः ।
सिद्धमबल सबलत्वमहो तव रोहिणीतनयसाहचर्य्यतः ॥२४॥
छलयन् प्रजास्त्वमनृतेन कपटपटुरैन्द्रजालिकः ।
प्रीतिमनुभवसि नग्नजितः सुतयेष्टसत्य इति सम्प्रतीयसे ॥२५
धृतवान् न चक्रमरिचक्रभयचकितमाहवे निजम् ।
चक्रधर इति रथाङ्गमदः सततं बिभर्षि भुवनेषु रूढ़ये ॥ २६ ॥

दण्डेन दलिता ध्वस्ता सरघा मधुमक्षिका येनेदृशस्त्वम्। 'सरघा मधुमक्षिका' इत्यमरः। अतएव मधु क्षौद्रं सूदयन् पीड़यन् मधुसूदन इति प्रथसे प्रथितोऽसि। मक्षिकासूदनमेव मधुसूदनसंज्ञाप्रवृत्तिनिमित्तं, न तु मधुनाम्नो दैत्यस्य सूदनमित्यर्थः। अत्र मधुसूदनसंज्ञायां प्रसिद्धार्थनिषेधस्योत्तरवाक्यस्यान्यथा व्युत्पादनहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ २३ ॥

मुचुकुन्देति। हे अबल! बलहीन, कुतः मुचुकुन्दो नाम कश्चिद्राजा। यस्यासुरविजयश्रान्त्या निद्रायमाणस्य देवतावरप्रसादान्निद्राविघातकारी दृष्टिपाताद्भस्मीभवति। तस्य तल्पं शय्या तदेव शरणं रक्षकं यस्य तस्य। कालयवनविद्रावितस्येति भावः। तथा मगधपतिना जरासन्धेन शातितौजसः अष्टादशकृत्वो नष्टवीर्य्यस्य तव रोहिणीतनयस्य बलापरनाम्नो बलभद्रस्य साहचर्य्यतः साहचर्य्यात् सबलत्वं सिद्धम्, न तु स्वबलसम्पत्त्येत्यर्थः। अहो कारणं विना कार्य्योदयादाश्चर्य्यम्। अतएव विभावनालङ्कारः। पुण्यैर्य्यशो लभ्यत इति भावः॥ २४॥

छलयन्निति। इन्द्रजालं वेत्तीत्यैन्द्रजालिकः। अतएव कपटपटुर्वञ्चनाकुशलस्त्वमनृतेनासत्येन प्रजाश्छलयन् वञ्चयन् इष्टं सत्यं यस्य स इष्टसत्यः प्रियसत्य इति सम्प्रतीयसे सम्यक्ख्यायसे। 'प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः' इत्यमरः। नग्नजितो नग्नजिन्नाम्नो राज्ञः सुतया सत्यभामया सत्यापराख्यया प्रीतिमानन्दमनुभवसि सत्यायोगादिष्टसत्यो न तु सत्ययोगादिति भावः। अत्र हरेः सत्यसम्बन्धेऽपि तदसम्बन्धोक्तेः सम्बन्धेऽसम्बन्धरूपातिशयोक्तिः॥ २५॥

धृतवानिति। आहवे युद्धे अरिचक्रादरिसैन्याद्भयेन चकितं सम्भ्रान्तम्।

जगति श्रिया विरहितोऽपि यदुदधिसुतामुपायथाः।
ज्ञातिजनजनितनामपदां त्वमतः श्रियः पतिरिति प्रथामगाः२७
अभिशत्रु संयति कदाचिदविहितपराक्रमोऽपि यत्।
व्योम्नि कथमपि चकर्थ पदं व्यपदिश्यसे जगति विक्रमीत्यतः २८

'चकितं भयसम्भ्रमः' इति सज्जनः। निजमात्मीयं चक्रं सैन्यं न धृतवान् नावलम्बितवान्, न रचितवानित्यर्थः। किन्तु चक्रधर इति भुवनेषु रूढ्यै प्रसिद्धये। अदः इदं रथाङ्गं चक्रापराख्यं सततं बिभर्षि दधासि, वृथाभारमिति भावः। 'चक्रं सैन्यरथाङ्गयोः' इति हेमसज्जनौ। अयोविकारधरः चक्रधरो भवान्नरिभीतचक्राधारकत्वादित्यर्थः। अत्र हरौ भगवति चक्रधारणसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः॥ २६॥

जगतीति। श्रिया राजलक्ष्म्या विरहितोऽपि यदूनां ययातिशापाद्राज्यानधिकारित्वादिति भावः। ज्ञातिजनेन बन्धुजनेन जनितं प्रवर्त्तितं नामपदं श्रीपतिरिति पारिभाषिकसंज्ञाशब्दो यस्यास्तामुदधिसुतामब्धिकन्यां यद्यस्मादुपायथाः, उदूढवानित्यर्थः। 'विवाहोपयमौ समौ' इत्यमरः। 'उपाद्यमः स्वकरणे' इत्यात्मनेपदम्। 'तनादिभ्यस्तथासोः' इति सिचो लुक् 'अनुदात्तोपदेश'—इत्यादिनानुनासिकलोपः। अतो जगति श्रियः पतिरिति प्रथां ख्यातिमगाः प्राप्तवानसि। 'इणो गा लुङि' इति गादेशः। न राजान्तरवद्राज्यलक्ष्मीयोगात्तव श्रीपतित्वम्, किन्तु श्रीसंज्ञिकायाः कस्याश्चिद्दाराक्याः परिग्रहादिति भावः। अत्रोग्रसेनस्याभिषेकसंस्कारेऽपि त्रैलोक्यप्रतिष्ठापकस्य हरेरेव सकलराज्यश्रीधुरन्धरत्वसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः॥ २७॥

अभीति। संयति युद्धे कदाचित् कदापि अभिशत्रु शत्रुमभिव्याप्य। आभिमुख्येऽव्ययीभावः। अविहितपराक्रमोऽकृतपौरुषोऽपि यद्यस्मात् कथमपि महता प्रयत्नेन व्योम्नि पदं पादक्षेपं चकर्थ कृतवानसि। 'ऋतो भारद्वाजस्य' इति इट्प्रतिषेधः पित्त्वेनाकित्त्वाद्गुणः। अतो जगति विक्रमी विक्रमवानिति व्यपदिश्यसे व्यवह्रियसे न तु, पराक्रमयोगादित्यर्थः। अत्रापि पराक्रमसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः॥ २८॥

पृथिवीं बिभर्थ यदि पूर्वमिदमपि गुणाय वर्त्तते ।
भूमिभृदिति परहारितभूस्त्वमुदाक्रियस्व कथमन्यथा जनैः ॥२९
तव धन्यतेयमपि सर्व्वनृपतितुलितोऽपि यत् क्षणम् ।
क्रान्तकरतलधृताचलकः पृथिवीतले तुलितभूभृदुच्यसे ॥ ३०॥
त्वमशक्नुवन्नशुभकर्म्मनिरत परिपाकदारुणम् ।
जेतुमकुशलमतिर्नरकं यशसेऽधिलोकमजयः सुतं भुवः ॥ ३१ ॥

पृथिवीमिति । पूर्व्वं प्रागपि । सम्प्रत् सम्भवेऽपीति भावः । पृथिवीं बिभर्थ यदि भृतवांश्चेत् । भृञो लिटि भारद्वाजीयेट्प्रतिषेधः । पित्त्वेनाकित्त्वाद्गुणः । इदं भूधारणमपि गुणायोत्कर्षाय वर्त्तते । भूतपूर्व्वगत्यादपि नास्तीति भावः । प्रत्युत परैः शत्रुभिः हारितभूः परिहारितभूमिकः जरासन्धेन मथुरानगरान्निष्कासितत्वादिति भावः । अत्र हर्तुरवहरणक्षमत्वमेव हारयितृत्वमिति निजर्थोपपत्तिः । जनैः कथमन्यथा अर्थवैपरीत्येन भूमिभृदित्युदाक्रियस्व उदाक्रियेथाः । सम्भावनायां लोट् । असम्भावितमेवेत्यर्थः । अत्रापि भूधरणसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिः ॥ २९ ॥

तवेति । तवेयं धन्यता पुण्यवत्ता कथं सर्व्वैर्नृपतिभिस्तुलितोऽवधूतोऽपि । तिरस्कृतोऽपीत्यर्थः । क्षणं क्रान्ते भारवत्तयैव श्रान्ते करतले धृतः अचलकोऽल्पाचलो येन स सन् पृथिवीतले तुलितभूभृदुद्धृतराजश्चोच्यस इति यत् इयमप्यपरा ते धन्यतेत्यर्थः । गोवर्द्धनाख्यक्षुद्रभूधरतोलनात्तुलितभूभृत्त्वं भवति न माद्दशामिव महावीरातितुलनादिति भावः । अत्र सर्व्वनृपतितुलितोऽपि तत्तोलक इति विरोधो भूभृदिति श्लेषमूलाभेदाध्यवसायोत्थापित इति विरोधातिशयोक्त्योः सङ्करः । तेन गोवर्धनोद्धरणमपि नातीवाद्भुतं बाहुबलशालिनामिति वस्तु व्यज्यते ॥ ३० ॥

त्वमिति । हे अशुभकर्म्मनिरत ! पापाचारपर ! अतएवाकुशलमतिर्दुर्ब्बुद्धिस्त्वं परिपाके फलकाले दारुणम् । विचित्रपापयातनामयत्वाद्भयङ्करमित्यर्थः । नरकं निरयम् । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः । जेतुमशक्नुवन् । पापिष्ठैर्दुर्जयत्वादिति भावः । अधिलोकं लोके । विभक्त्यर्थेऽव्ययीभावः । यशसे नरकविजयीति प्रसिद्धये भुवः सुतं नरकाख्यमजयः

**सकलैर्वपुः सकलदोषसमुदितमिदं गुणैस्तव।**
**त्यक्तमपगुण गुणत्रितयत्यजनप्रयासमुपयासि किं मुधा॥ ३२॥**
**त्वयि पूजनं जगति जाल्म कृतमिदमपाकृते गुणैः।**
**हासकरमघटते नितरां शिरसीव कङ्कतमपेतमूर्द्धजे॥ ३३॥**
**मृगविद्विषामिव यदित्थमजनि मिषतां पृथासुतैः।**
**अस्य वनशुन इवापचितिः परिभाव एष भवतां भुवोऽधिपाः ३४**

जितवानसि। परलोकप्रतारणमात्रपरो न परलोकवाध्योऽसीति भावः। अत्र निरयापराख्यनरकविजयाशक्तेर्विशेषणगत्या तज्जयस्यार्थिनो हरेर्नरकासुरविजयप्रकृतिहेतुकत्वात् पदार्थहेतुकं काव्यलिङ्गम्। तच्च नरकयोः श्लेषमूलाभेदात्तदुत्थापितमिति सङ्करः॥ ३१॥

सकलैरिति। हे अपगुण! निर्गुण, सकलैः सर्वैर्दोषैः समुदितं युक्तं तवेदं वपुः सकलैर्गुणैः शौर्यादिभिस्त्यक्तम्, सर्वगुणान्निवर्तितमेवेत्यर्थः। एवं च सति गुणत्रयस्य त्यजने त्यागे यः प्रयासः तं मुधा वृथा किं किमर्थमुपयासि मुमुक्षयेति भावः। यत्र सकलगुणस्य त्यागस्तत्र गुणत्रयस्य त्यागोऽन्तर्गत्या सिद्ध एव अन्यथा साकल्यव्याघातादित्यर्थः। स्वभावतो निर्गुणस्य परवस्तुनः कुतो गुणत्रयचिन्तेति ध्वनिः। गुणत्रयत्यागनिषेधस्य सकलैरित्यादिवाक्यार्थहेतुकत्वात्काव्यलिङ्गभेदः॥ ३२॥

त्वयीति। हे जाल्म! असमीक्ष्यकारिन्, 'जाल्मोऽसमीक्ष्यकारी स्यात्' इत्यमरः। गुणैरपाकृते निरस्ते गुणैर्हीने त्वयि पूजनं कृतं जगति हासकरं परिहासजनकं इदं पूजनम्। अपेतमूर्द्धजेऽपगतकेशे शिरसि कङ्कतं दारुदन्तादिनयः केशप्रसाधनविशेषः। 'प्रसाधनं कङ्कतिका' इति विश्वामरौ। कङ्कतमेव कङ्कतिका। 'कङ्कणम्' इति पाठे शेखरमित्यर्थः। 'कङ्कणं शेखरे हस्तसूत्रमण्डनयोरपि' इति विश्वः। तदिव नितरामघटते, न सङ्गच्छत इत्यर्थः। 'नञो नलोपस्तिङि क्षेपे' इत्युपसंख्यानमिति निन्दायां तिङ्योगेऽपि नलोपः। उपमालङ्कारः॥ ३३॥

सम्प्रति राज्ञां रोषमुत्पादयन्नाह—मृगेति। हे भुवोऽधिपा राजानः, मृगविद्विषां सिंहानामिव भवतां मिषतां पश्यतां भवत्सु मिषत्सु। मिषतो

**अवधीज्जनङ्गम इवैष यदि हतवृषो वृषं ननु ।**
**स्पर्शमशुचिवपुरर्हति न प्रतिमाननान्तु नितरां नृपोचिताम् ॥३५॥**
**यदि नाङ्गनेति मतिरस्य मृदुरजनि पूतनां प्रति ।**
**स्तन्यमघृणमनसः पिबतः किल धर्म्मतो भवति सा जनन्यपि ॥३६॥**
**शकटव्युदासतरुभङ्गधरणिधरधारणादिकम् ।**
**कर्म्म यदयमकरोत्तरलः स्थिरचेतसां क इव तेन विस्मयः ॥३७॥**

युष्माननादृत्येत्यर्थः। 'षष्ठी चानादरे' इति विकल्पाद्भावलक्षणे षष्ठी । इत्थं पृथासुतैः कौन्तेयैः पितरमितेषां न वेद्मीति भावः। अस्य कृष्णस्य वनशुनो वनशुनकस्येव, जम्बुकस्येवेति यावत्। अपचितिः पूजा अजनि जनिता कृतेति यत्। जनेर्ण्यन्तात्कर्म्मणि लुङ्। एष भवतां परिभावः परिभवः। 'परौ भुवोऽवज्ञाने' इति विभाषया घञ्प्रत्ययः ॥ ३४ ॥

अवधीदिति। हतवृषो हतसुकृतः। 'सुकृतं वृषभे वृषे' इति विश्वः। एष कृष्णो जनङ्गमश्चाण्डाल इव। 'चाण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः' इत्यमरः। 'गमेश्च' इति संज्ञायां जनपूर्वाद्गमधातोः खच्प्रत्ययः 'अरुर्द्विषत्'—इत्यादिना मुमागमः। वृषं वृषभरूपिणमरिष्टाख्यमसुरमवधीत् यदि हतवांश्चेत्। 'लुङि च' हनो वधादेशः। अत एव अशुचिवपुरशुद्धात्मा स्पर्शं नार्हति। नृपोचितां राजार्हां प्रतिमाननां पूजां तु नितरां नार्हति स्पर्शायोग्यो गोघ्नः कथं पूज्य इत्यर्थः। उपमा ॥ ३५ ॥

यदीति। अस्य कृष्णस्य मतिः पूतना नाम बालग्रहविशेषः तां प्रति अङ्गनेति हेतोर्मृदुः कृपा दया नाजनि यदि न जाता चेत् माऽस्त्विति शेषः। जनेः कर्तरि लुङ् 'दीपजन'—इत्यादिना चिण्प्रत्ययः। अघृणमनसो निर्घृणचित्तस्य। स्तने भवं स्तन्यं पयः। 'शरीरावयवाच्च' इति यत्प्रत्ययः। पिबतोऽस्य सा पूतना धर्म्मतः शास्त्रतो जनन्यपि माता च भवति खलु। स्त्रीति कृपाभावेऽपि मातेति जुगुप्साप्यस्य नास्तीत्यहो न केवलं स्त्रीहन्ता किन्तु मातृहन्ता चायं स्तनप्रदाया उपमातृत्वादिति भावः। अत्र स्तनपानस्य विशेषणगत्या जननीत्वहेतुत्वात्काव्यलिङ्गम् ॥ ३६ ॥

शकटेति। तरलश्चपलोऽयं कृष्णः शकटव्युदासः शकटासुरमर्दनं तरु-

**अयमुग्रसेनतनयस्य नृपशुरपरः पशूनवन् ।**
**स्वामिवधमसुकरं पुरुषैः कुरुते स्म यत्परममेतदद्भुतम् ॥ ३८ ॥**

**प्रक्षिप्ताः—**

**ननु सर्व्व एव समवेक्ष्य कमपि गुणमेति पूज्यताम् ।**
**सर्व्वगुणविरहितस्य हरेः परिपूजया कुरु नरेन्द्र को गुणः ॥१॥**

भङ्गो यमलार्जुनभञ्जनं धरणिधरधारणं गोवर्द्धनोद्धरणम् । तान्यादिर्यस्य तत्तथोक्तं यत्कर्म्माकरोत् तेन कर्म्मणा स्थिरचेतसां धीरचित्तानां क इव विस्मयः, न कोऽपीत्यर्थः । अत्र स्थिरचेतस्त्वनाया विशेषणगत्या विस्मयनिषेधहेतुत्वात्काव्यलिङ्गं वृत्त्यनुप्रासेन संसृज्यते ॥ ३७ ॥

अयमिति । अपरोऽन्यः ना पशुरिवेति नृपशुरित्युपमितसमासः । कार्य्याकार्य्यविवेकशून्यत्वादेवेत्यर्थः । अयं कृष्णः उग्रसेनतनयस्य कंसस्य पशूनवन् गाः पालयन् पुरुषैरसुकरं लोकवेदविगीतत्वाद्दुष्करं स्वामिवधं यत् कुरुते स्म, चकारेति यावत् । एतत्परममद्भुतम् । अभूतपूर्व्वादिति भावः । अत्र पशवनस्य विशेषणगत्या कंसकृष्णयोः स्वामिभृत्यभावहेतुत्वात्काव्यलिङ्गम् ॥३८॥

"ननु" इत्यादिप्रक्षिप्तचतुस्त्रिंशच्छ्लोकानां व्याख्या मल्लिनाथेनोपेक्षिता, अतो वल्लभदेवकृतव्याख्या अत्र प्रकटयते ।

किमवोचदित्याह—नन्विति । हे कुरुनरेन्द्र ! कौरवनाथ, ननु सर्व्व एव कश्चित् कमपि पौरुषश्रुतादिकं समवेक्ष्य पूज्यतामेति पूज्यते गुणैः । गुणाः पूजाया निमित्तमित्यर्थः । यदि वा गुणं स्वप्रयोजनं पर्य्यालोच्य, अतश्चैवं स्थिते अस्य हरेर्वानरतुल्यस्य सर्वैर्गुणैः कृतज्ञत्वादिभिर्विरहितस्य विशेषेण रहितस्य परिपूजनात् को गुणः । एनमर्चयित्वा न कश्चिद्गुणस्त्वया प्राप्तः । ननुरमर्षे, कमपि, स्वल्पमपीत्यर्थः । हरिर्वानरः तत्साधर्म्याद्भगवानत्र हरिर्विवक्षितः । यथाग्निर्म्माणवक इति तत्त्वम्, यादृशस्तादृशस्त्वम् । येनागुणं पूजयसीति 'कुरुनरेन्द्र' इत्यामन्त्रणपदेन सूच्यते ।

अत्र कविरतिभक्तत्वाद्भगवतः कथाक्रमागतामपि निन्दामसहमानः प्रतीयमानां स्तुतिं व्यरचयदिति तदर्थोऽधुना व्याख्यायते—हरेर्विष्णोः परि-

**न महानयन्न च बिभर्त्ति गुणसमतया प्रधानताम्।**
**स्वस्य कथयति चिराय पृथग् जनताञ्जगत्यनभिमानतान्दधत्॥२**

पूजया कोऽगुणः, अपि तु स्वर्गादिको गुणः। नतु गुण एवेत्यर्थः। यदिवा को गुणो नीरागत्वेन, नैवास्य गुण उपकार इत्यर्थः। कीदृशस्य सर्व्वैस्त्रिभिरपि गुणैः सत्त्वरजस्तमोभिर्विरहितस्य 'निर्गुणो हि पुरुषः' इति सांख्याः। अत्र द्वितीयार्द्धमेव तेन भिद्यते। प्रथमार्द्धे तु न किञ्चित् प्रयोजनम्। नहि तत्र ते गुणनिन्दागताः। पूज्यतामितीतीणधात्वर्थस्य तु अवेचत्येककर्त्ता। य एव हि समीचते स एव पूजयते इति ल्यब् भवत्येव, सर्वो गुणान् दृष्ट्वा पूज्यत इत्यर्थः। वक्रश्लेषोऽत्र। निन्दास्तुतावकारः॥ १॥

तदेव निर्गुणत्वं दर्शयितुमाह—नेति। अयं हरिर्न महान् सर्वोत्कृष्टः। सर्व्वनाम सर्व्वत्र प्रत्यक्षनिर्देशे, कदाचिदन्येषां प्रधानानां गुणैः समः स्यात्तदापि पूज्यः। एतदपि नेत्याह—गुणसमतया गुणसाम्येन या प्रधानता विवक्षितत्वं तदपि न बिभर्त्ति। यतोऽन्येषां गुणैरसम इत्यर्थः। गुणोत्कर्षाद्धि प्राधान्यमाप्यते, कदाचित् महत् प्रधानञ्च न भवेद्यावद्धेतोऽपि न तत् स्यात्। तदपि नेत्याह—अनभिमानितां निरहङ्कारित्वं दधत् स्वस्यात्मनः चिराय जगति पृथग् जनतां हीनत्वं कथयति। प्राकृतोऽपि निरभिमानो भवति। इति निन्दा।

स्तुतिस्तु—अयं न महान् महत्तत्त्वं न भवति। गुणानामुद्रेके साम्याभावे बुद्धेरेव महत्त्वम्। अथ गुणानां सत्त्वरजस्तमसां समतया या प्रधानता तामपि न बिभर्त्ति, प्रधानमप्ययं न भवतीत्यर्थः। अनुभूतविक्रियाणि प्रकृतिस्थानि सत्त्वरजस्तमांसि प्रधानशब्देनाहुः। तथाऽनभिमानितामनहङ्कारितां दधत् स्वस्यात्मनः पृथग्जनतां जनव्यतिरिक्तत्वं कथयतीति वा। जनाः पञ्चतन्मात्राणि। पृथग्भूतो जनेभ्यः। पृथग्वा जनो यस्मात् स पृथग्जनः। तद्भावस्तत्ता तां कथयति। सर्व्वातीतत्वात्। तेनायं न महान्, न प्रधानम्, न भूतानि, न तन्मात्राणि, नाहङ्कारः। इति वाक्यार्थः। पञ्चविंशकोऽयं पुरुषः। चतुर्विंशकबाह्य इति यावत्॥ २॥

रहितङ्कलाभिरखिलाभिरकृतरसभावसंविदम् ।
क्षेत्रविदमुपदिशन्ति जनाः पुरवाह्यमेतगतं विदग्धताम् ॥३॥
अतिभूयसापि सुकृतेन दुरुपचर एष शक्यते ।
भक्तिशुचिभिरुपचारपरैरपि न ग्रहीतुमभियोगिभिर्नृभिः ॥४॥

भूयोऽपि निर्गुणत्वमाह—रहितमिति । एनं हरिं क्षेत्रविदमपदिशन्ति कर्षकमाहुः । अत एव पुरवाह्यं ग्राम्यम् । कार्षिका हि नगराद्बहिर्वसन्ति । यद्वा पुरस्य वाहनीयो वाह्यः पुरायत्तः । तथा सर्वाभिः कलाभिर्गीतवाद्या-दिभिर्वर्जितम् । यतः अकृता रसानां शृङ्गारादीनां भावानां रत्यादिकानाञ्च संवित्सङ्केतः संवचनं येन । विदग्धशास्त्राणां सङ्केतमपि यो न वेदेत्यर्थः । यतो विदग्धतां वैदग्ध्यमगतमप्राप्तम् । इति निन्दा ।

स्तुतिस्तु—एनं भगवन्तं क्षेत्रज्ञमात्मानमामनन्ति । क्षेत्रं शरीरम् । कीदृशं समग्राभिः कलाभिरवयवै रहितं निष्कलम् । अकृतरसा अविहित-रागा भावसंवित् पदार्थसंवेदनं यस्य । पुरुषो हि भावान् वेत्ति नतु तत्र रस-ज्ञतां भजते । यद्वा अविद्यमानाः कृतरसभावाः कर्म्मरागोत्पत्तयो यस्य स चासौ संवित्,चिद्रूपः । पुराद्देहाद्बाह्यं विलक्षणम् । विदग्धतां विशेषेण दाह्य-त्वमगतम् । यदाह—'नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः' इति ॥३ ॥

अतीति । अयमेवंविधैरपि नृभिर्ग्रहीतुमावर्जयितुं न शक्यते । कीदृशैः ? भक्त्या तत्त्वतः शुचिभिः शुद्धमतिभिरुपचारपरैराराधनपरैरभियोगिभिः एत-न्मनोभिः । कथं तर्हि न शक्यते ? इत्याह—यतोऽतिभूयसापि बहुतरेणापि सुकृतेनोपकारेण दुरुपचरो दुराराधः । अकृतज्ञोऽयमिति वाक्यार्थ इति निन्दा ।

स्तुतिस्तु—एषोऽभियोगिभिराभिमुख्ये न योगिभिरपि नृभिर्ग्रहीतुं परि-च्छेत्तुं न शक्यते । आत्मतत्त्वस्य दुर्ज्ञानत्वात् । कीदृगेषः ? अतिभूयसापि सुकृतेन यज्ञदानादिना दुरुपचरो दुराराधः भक्तिगम्यो हि भगवान् । कीदृशैर्नृभिः ? भक्त्या शुचिभिर्निर्म्मलोमसैः । केचित्स्वमताशङ्कया नञं काका व्याचक्षते । नैष सुकृतेन दुरुपचरो योगिभिरपि न ग्रहीतुं शक्यते । परन्तु शक्यते । परन्तु तैरेव ज्ञायते इत्यर्थः । यदुक्तम्—'नाहं वेदैर्न तपसा'—इत्यादि ॥ ४ ॥

व्रजति स्वतामनुचितोऽपि सविनयमुपासितो जनैः ।
नित्यमपरिचितचित्ततया पर एव सर्व्वजगतस्तथाप्ययम् ॥५॥

उपकारिणन्निरुपकारमनरिमप्रियं प्रियम् ।
साधुमितरमबुधम्बुधमित्यविशेषतः सततमेष पश्यति ॥ ६ ॥

उपकारकस्य दधतोऽपि बहुगुणतया प्रधानताम् ।
दुःखमनिशमयमाप्नुवतो न परस्य किञ्चिदुपकर्त्तुमिच्छति ॥७॥

व्रजतीति । अयमनुचितोऽप्ययोग्योऽपि स्वतां जन्मना ज्ञातित्वं याति । असमोऽपि शिशुपालस्याहं स्वजनः इति वक्तीत्यर्थः । तथा जनैः सविनयं साचारं सेवितोऽपि परः शत्रुरेवायं त्रिभुवनस्य । यद्ययमकृतप्रज्ञः सेवितोऽपि शत्रुस्तत्कथं जनाः सेवन्ते ? इत्याह—अपरिचितचित्ततया चलचित्ततया अविश्वासहृदयत्वेन सर्वजगतः परमेवेति योज्यम् । इति निन्दा ।

स्तुतिश्च—असौ स्वतामात्मत्वं व्रजति प्रतिपद्यते । क्षेत्रज्ञोऽयमित्यर्थः । लोकप्रसिद्धयात्र स्वशब्देनात्मोक्तः । आत्मात्मीयज्ञातिधनवचनः स्वशब्दः । साङ्ख्या ह्यात्मानं स्वामिशब्दवाच्यमाहुः । कीदृशोऽयम्—अनुचितोऽप्यनभ्यस्तोऽप्यज्ञेयोऽपि सविनयमेकाग्र्येण योगिभिरुपासितश्चिन्तितः । तस्मात् सर्वस्माज्जगतो व्यक्तात् परो विलक्षणः । कुतः । अपरिचितमसङ्गतं चित्तं मनो बुद्धिर्वा यस्य सोऽपरिचितचित्तः । तद्भावस्तत्ता तया । अन्यो ह्यात्मा, अन्या च बुद्धिः, अन्यच्च चित्तम्, जगच्चेदं प्राकृतो भागः ॥ ५ ॥

उपकारिणमिति । अयमुपकारिणमपकारिणं चाविशेषेण पश्यति । अपकारिणमिवोपकारकमप्यसौ स्वया दृष्ट्या पश्यतीत्यर्थः । इत्यकृतज्ञत्वकथनम् । एवमन्यच्च । तथा अरिं शत्रुं त्वनरिं मित्रम् । नायं नियमो यन्मित्रमुपकार्येव भवति । अनुपकारकश्च शत्रुरेव सम्भवति । अप्रियं द्वेष्यं प्रियं मनोज्ञम् । साधुमार्य्यमितरं खलम् । अबुधं मूर्खं, बुधं पण्डितम् । इति दुष्टतानिर्देशः । एषा निन्दा ।

स्तुतौ तु—निर्गुणत्वात् पुरुषस्य समदृष्टित्वम् ॥ ६ ॥

उपकारकस्येति । अयं परस्यान्यस्य किञ्चिदपि मनागपि नोपकर्त्त-

स्वयमक्रियः कुटिलमेष तृणमपि विधातुमक्षमः।
भोक्तुमविरतमलज्जतया फलमीहते परकृतस्य कर्म्मणः ॥८॥
य इमं समाश्रयति कश्चिदुदयविपदोर्निराकुलम्।
तस्य भवति जगतीह कुतः पुनरुद्भवो विकरणत्वमेयुषः ॥९॥

मिच्छति। उपकारकरणे बुद्धिरेवास्य न भवतीत्यर्थः। कदाचित् परोऽनुपकारी स्यादित्याह—उपकारकस्यापि अतएवैतदर्थमनिशं दुःखं क्लेशमासवतः प्राप्तस्य। कदाचिदमुख्यः परः स्यात् तदप्रत्युपकारित्वेन तथा लज्जादोषो भवेदित्याह—बहुगुणतया श्रुतशौर्य्यादिसद्भावेन प्रधानतां मुख्यत्वं दधतो बिभ्रतः। तदेतेन पूर्वोक्तार्थो दृढीकृतः। इति निन्दा।

स्तुतिस्तु—अयं परस्य बुद्धितत्त्वस्य प्रधानसंज्ञकस्य किञ्चिदपि नोपचिकीर्षति। द्रष्टा हि पुरुषो न सक्रियः। कीदृशस्य पुरुषप्रवृत्तिद्वारेणोपकारकस्य, तथा बहवस्त्रयोऽपि ये गुणास्तद्भावेन प्रधानतां प्रकृतित्वं दधतः। सत्त्वरजस्तमांसि प्रधानम्। तथा दुःखं जननमरणादिकं सदा प्राप्तस्य। सर्व्वं हि बुद्धिरनुभवति न पुरुषः ॥ ७ ॥

स्वयमिति। एष देवः परकृतस्यान्यनिष्पादितस्य कर्म्मणः क्रियायाः फलं भोक्तुमीहते वाञ्छति। कथम्। अलज्जतया निस्त्रपत्वेन, कदाचिदैश्वर्य्यादेवं स्यादित्याह—आत्मना तृणमपि कुटिलं कर्तुमक्षमोऽसमर्थोऽनीशः। यतोऽक्रियोऽलसः। अशक्त्या स्वयं निष्क्रियः पराधीनोऽन्यदत्तेन पिण्डेन जीवति। इति निन्दा।

अथ च वाक्यार्थपर्य्यालोचनया स्तुतिः—एष भगवान् परजनितस्य बुद्धिकृतस्य कर्म्मणः शुभाशुभस्य फलं सुखदुःखात्मकं भोक्तुमीहते। आत्मा हि फलभागीति साङ्ख्याः। कीदृगेष इति पुरुषस्य स्वरूपमाह—स्वयमक्रियो निष्कर्मा। तथा तृणमपि कुटिलं कर्त्तुमनीशः। निर्लज्जत्वं निर्गुणत्वात् ॥ ८ ॥

य इति। यः कश्चिन्मुखं इमं कृष्णं समाश्रयति सेवते, तस्यास्मिन् संसारे कुतः पुनरुद्भवो भवति, नैव समुत्थानं भवतीत्यर्थः। य एनमुदये विपदि च निराकुलं निश्चिन्तमाश्रितस्य। यदि सम्पत्ततोऽस्य नैव सुखम्,

गुणवन्तमप्ययमपास्य जनमखिलमव्यवस्थितैः ।
याति सुचिरमतिबालतया धृतिमेक एव परिवारितो जनैः॥१०
सुकृतोऽपि सेवकजनस्य बहुदिवसखिन्नचेतसः ।
सर्व्वजनविहितनिर्व्विदयं सकृदेव दर्शनमुपैति कस्यचित् ॥११॥

यदि वा विपत्ततो नैव दुःखमित्यर्थः । तस्य कीदृशस्य विकरणत्वं मृतिमेयुषः प्राप्तस्य । एतदाश्रयणात् स मृत एव । सामग्रीवैकल्यं वा विकरणत्वम् । इति निन्दा ।

स्तुतिश्च—यः कश्चिद्योगी एनं परमात्मानं सेवते तस्य विकरणत्वमेयुषो नष्टदेहस्य पुनरिह कुत उद्भवो जन्म, मुक्त एवासावित्यर्थः । कीदृशम्—समुदयविपदोर्निराकुलमव्यग्रम् । अक्रियत्वात् । करणानीन्द्रियाणि । एयुष इत्याङ्पूर्व्वस्येणः क्वसुः । 'उपेयिवान्'—इत्यत्र हि उपसर्गनिर्देशोऽतन्त्रम् ॥ ८ ॥

गुणवन्तमिति । अयं सर्व्वमेव गुणिनं जनं अतिबालतयातिचापलेन हित्वा अव्यवस्थितैश्चपलैर्जडैरज्ञैः परिवारितः सन्नजस्रमेक एव धृतिमेति प्रीयते । एतद्वर्जं नान्यो नाकलोकमपास्य गोपमध्ये रमते । इति निन्दा ।

स्तुतिस्तु—एष भगवान् बालतया बालरूपो भवन् जलैरद्भिः परिवारित आवृतः सुचिरं धृतिमेति । उक्तञ्च—'सम्भक्ष्य सर्व्वभूतानि कृत्वा चैकार्णवं जगत् । बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः' । कीदृशैर्जलैरव्यवस्थितैर्भरितसकलभुवनैः, किं कृत्वा धृतिं याति गुणवन्तं सत्त्वाद्याश्रयं जनमपास्य क्षिप्त्वा विनाश्य । सर्वं जनं संहृत्य बालरूपधरो जलमध्येऽयं शेते ॥१०

सुकृत इति । अयं सुकृतोऽप्युपकारकस्याप्याश्रितजनस्य सकृदेकवारमेव दर्शनमुपैति दर्शनं ददाति कस्यचित्, न सर्व्वस्य । किम्भूतः ? सर्व्वजनविहितनिर्वित् सर्व्वजनस्य विहिता निर्वित् खेद यस्य । कीदृशस्य जनस्य ? बहुदिवसखिन्नचेतसः बहुभिर्दिवसैः खिन्नं चेतो यस्य, चिरकालमेवोद्विग्नचित्तस्येत्यर्थः । इति निन्दा ।

स्तुतिस्तु—अयं कस्यचिदेव सेवकजनस्य भक्तलोकस्य सकृदेव दर्शनमुपैति, न हि सेव्यः सर्व्वस्य सदैव । कीदृशस्य ? सुकृतः पुण्यकृतः । तथा बहुभि-

स्वजने सखिष्वनुगतेषु नियतमनुरागवत्स्वपि ।
स्नेहममृदुहृदयः क्षपयन्निरपेक्ष एष समुपैति निर्वृतिम् ॥१२॥
क्षणमेष राजसतयैव जगदुदयदर्शितोद्यतिः ।
सत्त्वहितकृतमतिः सहसा तमसा विनाशयति सर्व्वमावृतः ॥१३॥

दिवसैर्भूयसा कालेन खिन्नचेतसः क्षुण्णमनसः। दीर्घेण योगेन श्रान्तचेतस इत्यर्थः। न ह्यनभ्यासगम्य ईश्वरः, अतएव सर्व्वजनविहितनिर्वेदः। श्रेयस्यपि चिरकालमभ्यसनो निर्विद्यते। यदि वा सर्वेषु जनेषु विगतौ हितनिर्वेदौ यस्य स सर्व्वजनविहितनिर्वेद्। नास्य कश्चित् प्रियो न च द्वेष्य इत्यर्थः। यदि वा सर्वे जना यत्र स सर्व्वजनः विगते हितनिर्विदौ सुखदुःखे यस्य स विहितनिर्वित्। ततः कर्म्मधारयः। सर्व्वजनस्य विहिता निर्वित् निर्वाणो येनेत्यन्ये, आश्रितजनं संसारान् मोचयतीत्यर्थः। शोभनं करोति सुकृदुपकारी, पुण्यकृच्च। निर्विन्निर्वेदो निर्वाणञ्च ॥ ११ ॥

स्वजन इति। एष बन्धुमित्राश्रितेषु प्रीतिं नाशयन्निर्वृतिं सदा समुपैति, सुखं प्राप्नोति। सर्व्वैरेव वैरायमाणः सुखायत इत्यर्थः। कदाचिदेते विरक्ताः स्युरित्याह—अनुरक्तेष्वपि कथं तर्हि निःस्नेह इत्याह—यतो हृदयेऽमृदुः क्रूरचित्तः। तथा निरपेक्षो निर्विवेकः। इति निन्दा।

स्तुतिस्तु—एष स्वजनादिषु अनुरागवत्स्वपि स्नेहं क्षपयंस्तृष्णां तनूकुर्व्वन् निर्वृतिं समुपैति निर्वाणं याति। तृष्णाक्षयात् किल मुक्तिः। अमृदुहृदयः नार्द्रभावो वीतरागत्वात्। यदि वा अमृदुर्बोधं हृदयं स्वरूपं यस्य। निरपेक्षो निःसङ्गः। (क्षपिर्धातुष्वपठितोऽपि क्रियावाचित्वात् खचिमिलोकस्यार्घत्यादिक वद्धातुरेव) ॥ १२ ॥

क्षणमिति। एष राजसतया चापलेन क्षणं जगदुदये लोकहिते दर्शितोद्यतिर्दर्शितोद्यमः। इति क्रिया राजसिकत्वेन क्षणमुपकुरुते इत्यर्थः। तमसा तु मोहेन पुनरन्तरमावृतत्वात् अहितकृतमतिः उपद्रवविहितबुद्धिः सन् सहसैव सर्वं सत् सुकृतं विनाशयति। यदेव पूर्व्वमुपकृतं तदेव मोहयन् नाशयतीत्यर्थः। सत् सुकृतम्। तु भिन्नक्रमः। इति गर्हा।

अभिहन्यते यदभिहन्ति परितपति यच्च तप्यते ।
नास्य भवति वचनीयमिदं चपलात्मिका प्रकृतिरेव हीदृशी॥१४॥
अतिसत्त्वयुक्त इति पुंभिरयमतिशयेन वर्ण्यते ।
सूक्ष्ममतिभिरथ चापगते समुपैति नाल्पमपि सत्त्वसङ्करम् ॥ १५

नुतिरपि—एष त्रिमूर्त्तिः राजसतया रजोगुणेनाश्रितः सन् ब्रह्मरूपेण जगदुदये प्रजासर्गे दर्शितोद्यमः । तथा सत्त्वेन गुणेन स्थिते रक्षायां विहित-चित्तो विष्णुरूपेण । तथा तमसा गुणेनावृतः सन् सहसैव सर्वं व्यक्तं रुद्र-रूपेण नाशयति ॥ १३ ॥

अभीति । यदेष हरिरन्येनाभिहन्यते ताड्यते यच्चैषोऽन्यानभिहन्ति । तथा यत् परितपति बाधते, यच्च तप्यते उपसृयते, अतोऽस्य वचनीयता वाच्यता न भवति । यतोऽस्यैवंविधैव चपलात्मिका अविनीता प्रकृतिः स्वभावः । स्वभावाच्चपलस्तु अयोग्यतामर्हति । इति क्षेपः ।

स्तुतिस्तु—अस्य परमात्मनो यथोक्तं वचनीयं वचनं न भवति न प्रवर्त्तते । 'एष हन्ति हन्यते तपति परितप्यते च' न वाच्यमित्यर्थः । यत ईदृशी चपलात्मिकाऽनेकरूपा प्रकृतिर्बुद्धिः । नत्वेषः । हननादिकं तमसा भवति । पुरुषश्च निर्गुण इत्यर्थः । उक्तञ्च—'य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् उभौ तौ न विजानीतो नायं हन्ति न हन्यते' । इति । तस्मान्न बुध्यतेऽसौ न मुच्यतेऽसौ नापि संसरति संसरति बुध्यते मुच्यते च नानाश्रया प्रकृतिः । तपिः सकर्म्मकोऽपि शारीरं दुःखमभिघातः । मानसन्तु परि-तापः ॥ १४ ॥

अतीति । एष सूक्ष्ममतिभिः स्वल्पप्रज्ञैर्नृभिर्महता सत्त्वेन धैर्य्येण युक्त इति सुष्ठु वर्ण्यते । अथानन्तरं चापगते प्राप्तचापे गृहीतधनुषि कस्मिंश्चित् स्वल्पमपि सत्त्वसङ्करं पौरुषलेशं न भजति पलायनादिना । परेणोत्तब्धस्यास्य सत्त्वलेशोऽपि न लभ्यत इत्यर्थः । तस्मादयुक्ताश्च तैर्वर्ण्यत इति भावः । इति निन्दा ।

स्तुतिस्तु—चापं गतश्चापगतः । यद्वा चापस्य गतं प्राप्तिश्चापगतं तस्मिं-श्चापगते धनुःसन्निधाने सतीत्यर्थः । अथ च सबीजनिर्बीजसमाधौ पुंभिर्यो-

प्रलयं परस्य महतोऽपि नियतमिह निःसुखे गुणाः ।
यान्ति जगदपि सदोषमदः स्वरुचैव पश्यति गुणान् द्विषन्नयम् १६
क्षितिपीठमम्भसि निमग्नमुदहरत यः परः पुमान् ।
एष किल स इति कैरबुधैरभिधीयमानमपि तत् प्रतीयते ॥१७॥

गिभिः 'सत्त्वेन गुणेन युक्तः' इति कथ्यते । सूक्ष्ममतिभिः कुशाग्रीयबुद्धिभिर्बहुदृश्वभिरपगते ज्ञाते सति निर्बीजसमाधौ स्वल्पमपि सत्त्वसङ्गं नोपैति, निर्गुणो हि पुरुषः । अथ चेति विस्मये ॥ १५ ॥

प्रलयमिति । परस्यान्यस्य महतोऽपि मुख्यस्यापीह क्षणे गुणाः सौन्दर्य्यादयो नियतमवश्यं प्रलयं यान्ति नश्यन्ति । नैष कस्यचिद्गुणानङ्गीकरोतीत्यर्थः । अविद्यमानं सुखमस्मादिति निःसुखः । गुणापहाराद्धि कुतः सुखम् । यद्वा अविद्यमानं सुखमस्मादिति निःसुखः । अतएव ते नाशमत्र यान्ति । अतश्चायं गुणान् द्विषन् अखिलमप्येतज्जगद्विश्वं स्वरुचैवात्मेच्छयैव सदोषं पश्यति । गुणद्वेषित्वादन्यानपि सदोषान् वेत्तीत्यर्थः । इति निन्दा ।

अथ स्तुतिः—इह परमात्मनि क्षणे परस्य बुद्धितत्त्वस्य महतोऽपि महत्तत्त्वस्य गुणाः सत्त्वरजस्तमांसि प्रलयं यान्ति नाशं गच्छन्ति । पुरुषं प्राप्य निवर्त्तन्त इत्यर्थः । कीदृशेऽत्र निःसुखे सुखवर्जिते, अविक्रियत्वात् । सुखासुखे नात्मनः । तथैष गुणान् सत्त्वादीन् द्विषन्नभिनन्दन् अस्पृशन्नदो जगत् प्रकृतिं सदोषं क्लेशयुक्तं पश्यतीच्यते । द्रष्टा हि पुरुषः प्रकृतेरिष्यते, जगत्प्रकृतिर्हि भागो व्यक्तम् । तच्च सदोषं जननमरणयोगात् । केन पश्यति स्वरुचा आत्मभावेनेत्यर्थः ॥ १६ ॥

एवं साङ्ख्यदर्शनेन स्तुत्वा अधुना पुराणदर्शनेन तुष्टूषुर्निनिन्दिषुश्चाह—क्षितीति । कैरबुधैर्मूर्खैरिति तदभिधीयमानमपि उच्यमानमपि प्रतीयते । मूर्ख एव सत्यमवगच्छतीत्यर्थः । इतीति किम् । स एष परमपुरुषः । यो वराहरूपेणाम्भसि निमग्नं क्षितिपीठं पृथ्वीमण्डलमुदहरतोद्धृतवान् । इति निन्दा ।

स्तुतिस्तु—कैश्चिदभिधीयमानं तत् मूर्खैरपि प्रतीयते । मूर्खा अपि सत्यमवगच्छन्तीत्यर्थः ॥ १७ ॥

नरसिंहमूर्त्तिरयमेव दितिसुतमदारयन्नखैः ।
आप्तजनवचनमेतदपि प्रतिपत्तुमोमिति जनोऽयमर्हति ॥१८॥
अपहाय तुङ्गमपि मानमुचितमवलम्ब्य नीचताम् ।
स्वार्थकरणपटुरेष पुरा बलिना परेण सह सम्प्रयुज्यते ॥१९॥
क्रमते नभो रभसयैव विरचयति विश्वरूपताम् ।
सर्व्वमतिशयगतं कुरुते स्फुटमिन्द्रजालमिदमेष मायया ॥२०॥

नरसिंहेति । नृसिंहवपुः सन्नयमेव नखैर्हिरण्यकशिपुमदारयदिति यदाप्तवचनं तदप्ययं भीष्मादिक एव जन ओमित्येवमेवैतदिति प्रतिपत्तुमङ्गीकर्त्तुमर्हति । सुहृद एवैनं स्तुवन्ति, तत्र मूर्खैरेष सत्यं बुध्यत इत्यर्थः । इतिशब्दोऽत्रार्थयोः सम्बन्धोपादानायाध्याहार्य्यः ।

स्तुतौ त्वयमर्थः—अयमेव भगवान् नापरो नरसिंहमूर्त्तिमाश्रित्य नखैर्दैत्येन्द्रमदारयदित्येतदपि आप्तजनवचनं शिष्टवाक्यमयं मनीषी जनः प्रतिपत्तुमर्हति नान्यः । आप्तोक्तत्वात् पण्डिता एव सत्यं जानन्तीत्यर्थः । आप्ता अवितथवादिनो व्यासादयः ॥ १८ ॥

अपहायेति । एष बलिना बलवता परेणान्येनारिणा वा सह पुरा अचिरात् संप्रयुज्यते सम्बध्यते समर्थं चेत् परं वेत्ति तद्भयात् तमेव प्रविशतीत्यर्थः । सर्व्वनामनिर्देशः सर्व्वत्र निन्दायामनास्थां सूचयति । स्तुतौ तु गौरवम् । किं कृत्वा ? उचितं योग्यं तुङ्गमुन्नतं मानमपि अपहायाहङ्कारमपि त्यक्त्वा । तथा नीचतां प्राकृतत्वमाश्रित्य । यतः स्वार्थकरणपटुरात्मप्रयोजनसम्पादनचतुरः । शक्तिः किलात्मनो नाशाय । इति निन्दा ।'

स्तुतिस्तु—एष तुङ्गं मानं प्रमाणं हित्वा नीचतां खर्व्वत्वं चावलम्ब्य । पुरा पूर्व्वमुत्कृष्टेन बलिना वैरोचनिना सह सम्प्रयुज्यते सम्प्रयुयुजे । यतः स्वस्य भ्रातेरिन्द्रस्य योऽर्थः शत्रुवशीकरणलक्षणस्तत्र पटुः कुशलः । इन्द्रप्रीतये वामनरूपत्वमवलम्ब्यैष भगवान् बलिं बबन्धेत्यर्थः ॥ १९ ॥

क्रमत इति । एष कृष्णः स्फुटमिन्द्रजालमसद्भूतं मायया हेतुभूतया कुरुते । किमित्याह—रभसया रभसेन युद्धादौ नभः क्रमते आरोहति । वयः पक्षिणः, श्वानः कुक्कुराः तद्रूपा मृगाः तद्भावं विरचयति । यदि वा

**किल रावणारिरयमेव किमिदमियदेव कथ्यते ।**
**सत्त्वमधिबलमधिद्युति यत्तदशेषमेष इति धृष्टमुच्यताम् ॥२१॥**
**चलतैष पादयुगलेन गुरुशकटमीषदस्पृशत् ।**
**दैवकलितमथ चोदलसद्दलितोरुभाण्डचयमात्मनैव तत् ॥२२॥**

विश्वरूपतां नानारूपत्वम् । तथा सर्व्वमतिशयगतं शिशेषप्राप्तं कुरुते । तात्त्विकोऽस्य व्यवहारो न कश्चित् । इति निन्दा ॥

स्तुतिस्तु—इदमीदृक् स्फुटमेष भगवान् मायया रभसा इन्द्रजालं कुरुते । इन्द्रजालमिवेन्द्रजालं भ्रमकारित्वात् । तदेवाह—नभः क्रमते वलिबन्धनार्थम् । विश्वरूपत्वं सर्व्वदेवमयत्वं विरचयति । सर्व्वञ्च जगदतिशयगतं प्राप्तविशेषं कुरुते । कीदृश्या मायया ? रभसमौत्सुक्यं करोतीति रभसा तया रभसया । क्रमते इति 'अनुपसर्गाद्वा' इत्यात्मनेपदम् ॥ २० ॥

किलेति । अयं हरिः रावणारिरिति । एतेन दशास्यो हत इति यदेवैतत् स्वल्पमात्रकं किमिति कस्मादुच्यते । अतिबलं महाशक्ति अधिद्युति महातेजश्च यत्सत्त्वं प्राणि तत्सर्व्वमेष एवेति धृष्टं निःशङ्कमुच्यताम् । न ह्यलीकस्यान्तो भवतीति भावः । अतश्च येनासत्यं वाच्यं स बह्वेव कस्मान्नाह । तस्मान्नैतेन किञ्चिदपि कृतमिति वाक्यार्थः । इति निन्दा ॥

स्तुतिस्तु—अयं रावणारिरेवेति किमेतावदेवोच्यते । यस्मात् यदतिबलमधिद्युति च सत्त्वं तत्सर्व्वमेष इति धृष्टं निःशङ्कमुच्यताम् । उक्तञ्च—'यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा । तत् तदेवावगच्छ त्वं मम तेजोऽंशसम्भवम्' ॥२१॥

किलागमे यश्च बाल्ये शकटमेष एव चिक्षेपेत्युच्यते तदप्यसत्यमिति वक्तुमाह—चलतेति । एष वै चलद्भ्यां चरणाभ्यां गुरु शकटं किञ्चिदस्प्राक्षीत् । तच्च दैवकलितं दैवचोदितं स्वयमेव उदलसदपतत् । न त्वेतस्यात्र किञ्चित् पौरुषम् । दलितः स्फुटित उरुर्महान् भाण्डानां दधिघृतघटादीनां चयो राशिर्यत्र । इति निन्दा ॥

स्तुतिस्तु—एष भगवांश्चलता पादयुगलेन गुरु शकटमीषदेवास्पृशत् । अथ चोदलसत् परिवृत्तम् । यत् एतेन दैवेन भगवता कलितं प्रेरितम् । अथेति

स्तुवतामुना स्तवयुगेन जनितजननीजनादरा ।
स्त्रीति सदयमविधाय मनस्तदकारि साधु यदघाति पूतना ॥२३॥
अभनक् तरू कथमिवैष कृतधरणिरिङ्गणः क्षणात् ।
बाढमिदमपि न बालकृतं ननु दैवताविधिरयं विजृम्भते ॥२४॥
विहरन् वने विजन एव महति दधदेष गोपताम् ।
नाम जगति मधुसूदन इत्यगमद्व्रतेन मधुना महीयसा ॥२५॥

विस्मये । ईषत् स्पर्शमात्रात् किल भङ्गो न युक्तः । शकटशब्दोऽस्त्रीलिङ्गः ॥२२॥

स्तुवतेति । अमुना यत् पूतना राक्षसी स्त्री इति सदयं मनः अकृत्वा अघाति हता तत् साध्वकारि युक्तं कृतमिति काक्वा प्रयोजनेनैव साधु कृतमित्यर्थः । कीदृशी सा । स्नुवता क्षीरं स्रवता स्तनयुगेन कृतो जननीजनादरो मातृस्नेहो यया । अतश्च मातृघात्येवायम् । इति निन्दा ।

स्तुतिस्तु—यदमुना स्नुवता स्तनयुगेन कृतमातृस्नेहापि पूतना राक्षसी स्त्रीति मनः सदयमकृत्वा हता तत् साध्वकारि युक्तमेवानुष्ठितमिति स्पष्ट एवार्थः । सा हि राक्षसी स्तनाभ्यां क्षीरं स्रवन्ती तन्मारणार्थमेवागमदित्यागमार्थः । निष्कारणवधोद्यतस्य वधे कथमधर्म्मः स्यात् ॥ २३ ॥

अभनगिति । कृतधरणिरिङ्गणो विहितोर्वीगतिः स कथमिव केन प्रकारेण क्षणेनैव तरू अर्जुनाख्यौ बाढं भृशमभनग्बभञ्ज । न सम्भावयाम एतदित्यर्थः । ननु सर्व्वैव तेनैव भिन्नाविति प्रतीतिः तत् कथं भवतो न सम्भावनेत्याह—इदमपि न बालकृतं न शिशुकर्म्म । ननु दैवताविधिरयं विजृम्भते विलसति । केनाप्यदृष्टेन दैवेन तत् कृतं न त्वनेन । यस्य हि गमनमात्रे न शक्तिः स कथममानुषं कर्म्म कुर्य्यादिति भावः । ननु अमर्षे । न केवलं शकटभङ्गो दैवताविधिर्यावदयमपीत्यपिशब्दार्थः । इति निन्दा ।

स्तुतिस्तु—यदेष कृतधरणिरिङ्गणः कथमिवावस्थिव क्षणादर्जुनौ बभञ्ज इदमपि न बालकृतम् । नन्वयं दैवताविधिरुज्जृम्भते । एतस्य दैवरूपत्वं दैवत्वमाश्रित्यैतदेतेन कृतम् । नतु तत्त्वतो बालेनेत्यर्थः । ननुरभिमुख्ये । अभनगिति भञ्जेर्लङि रूपम् ॥ २४ ॥

विहरन्निति । एष महति विशाले विजने वनेऽरण्ये गोपरूपो विहरन्

अविमृष्य गोवधसमुत्थमघमयममीमरद्रुषा।
रिष्टमुपगु समुपोढमदं यदसौ किलासुर इति प्रमार्ष्टि तत् ॥२६
मुखकन्दरान्तरगतोऽपि विकटदशनेन केशिना।
नास्य सपदि यदखादि भुजस्तदहो तिरश्चि सहजैव मूढता ॥२७

अहता मधुना माक्षिकपटलेन हतेन जगति मधुसूदन इति नाम प्राप्तम्। वने मधु सूदितवान्, नतु मधुनामानं दैत्यम्। इति निन्दा।

स्तुतिस्तु—एष कृष्ण एव महीयसा बलवत्तरेण मधुना दैत्येन हतेन मधुसूदन इति नाम जगति अगमत् प्राप। कीदृगेषः—वने तोये महति सर्वलोकव्यापिनि विगतजने विहरन्। तथा गां पृथ्वीं पातीति गोपस्तद्भावं बिभ्रत् ॥ २५ ॥

अविमृष्येति। अयं गोवधसमुत्थं तत्कारणोद्भवं पापमविमृष्यागणयित्वा यद्रुषा कोपेन रिष्टमनड्वाहममीमरदवधीत् तदकार्य्यम्। असौ पापी असुरः इति किल प्रमार्ष्टि नाशयति। दान्तरूपी असुरो मया हतो न तु गौरिति लोकस्य परिशुध्यति। किलालीके। तत्त्वतस्त्वसौ गौरेव, अयञ्च गोघाती-त्यर्थः। कीदृशं रिष्टम्। उपगु गवां समीपे समुपोढमदं धृतहर्षम्, सुरभीः कामयानमित्यर्थः। अतश्च सुरतासक्तादान्तवधपातकित्वादयं पूजार्हः। इति निन्दा।

स्तुतिस्तु—किलशब्दस्य सत्यार्थत्वात्। यदसावुपगु गोनिकटे रिष्टमहन्णेट् तदसौ किलासुर इति समार्ष्टि। असुर एवानेन हत इत्यर्थः। कीदृशं तम्—अविमृष्यश्चिन्तयितुमशक्यो यो गोवधस्तत्र समुत्था उत्थानमुद्यमो यस्य तमविमृष्यगोवधसमुत्थं यतोऽघं पापिनम्। अघमस्यास्तीति कृत्वा। तथा समुपोढमदं धृतदर्पम्। अतश्च गोवधसमुत्थस्य दर्पिष्ठस्य पापमतेर्दानवस्य वधाद्भगवतो महती नुतिरेव। अविमृष्येति ल्यप्, 'ऋदुपधात्'—इति च क्यप्। अमीमरदिति मारयतेर्लुङ् चङ्। प्रमार्ष्टीति मृजेर्वृद्धिः ॥ २६ ॥

मुखेति। अस्य केशिनाम्ना अश्वेन यद्भुजो नाखादि न जग्धः तदहो तिरश्चि तिर्य्यक्षु सहजैव स्वाभाविक्येव मूढता अज्ञत्वम्, तिर्य्यक्त्वात्। मूर्खेण तेन न भक्षितो न त्वस्य कापि शक्तिरिति वाक्यार्थः। कदाचिदप्राप्तोऽसौ

किमिवात्र चित्रमयमन्नमचलमहकल्पितं यदि ।
प्राश निखिलमखिलेऽपि जगत्युदरङ्गते बहुभुजोऽस्य न व्यथा ॥२८
यदुदस्य बाहुमयमेकमधृत गिरिमद्भुतं न तत् ।
भूरिसलिलमविषह्यमियज्जलदे विमुञ्चति गवां सभाग्यता ॥ २९

भवेन्नेत्याह—आस्योदरविवरप्राप्तः। कदाचिद्दन्ताभावः स्यादित्याह—विकटदशनेन दन्तुरेणापि। सपदि असत्र प्राप्त्यनन्तरम्। अहो विषादे।

स्तुतिरत्र—परमतमाशङ्क्य काकुप्रयोगेण। यदसत्र केशिना दैत्येन भुजो नाखादि। तत् किं तिरश्चि सहजैव मूढ़ता न त्वसत्र माहात्म्यमित्यर्थः। एतस्यैव ह्येवमसौ शक्तिः। न स तात्त्विकोऽर्थः। अहोशब्दः परस्योल्लुण्ठनाय। तिरश्चीति सप्तमी ॥ २७ ॥

यदिति। मेघे दुःसहं प्रभूतं वारि वर्षति यदयं हरिकङ्कभुजमुत्क्षिप्य गिरिं गोवर्द्धनमधृत दध्रे तन्नाद्भुतं नाश्चर्य्यम्। इयं गवां सभाग्यता पुण्यवत्त्वम्। गवां महिम्नासौ धृतो न त्वेतस्य काचिच्छक्तिरित्यर्थः। इति निन्दा।

स्तुतिस्तु—परमतमाशङ्क्य काकुप्रयोगेण न तदद्भुतम्, अपि त्वाश्चर्य्यमेव। तथेयं गवां सभाग्यता न त्वस्य सा किम्। अयमेव स्वमहिम्ना बभारेत्यर्थः ॥ २८ ॥

किमिवेति। अयं हरिरचलमहकल्पितं पर्व्वतोत्सवकृतमन्नं यदि प्राश भुक्तवांस्तत्किमिवात्र चित्रमाश्चर्य्यम्। यतोऽस्य बहुभुज औदरिकस्य सकलेऽपि जगत्युदरं प्राप्ते न व्यथा पीड़ा अजीर्णत्वात्। अतश्च यः कुक्षिम्भरत्वात् सर्व्वमेव जिघत्सति तस्योदनमात्रभोजनात् को विस्मयः। इत्यात्मम्भरित्वकथनेन निन्दा।

स्तुतिस्तु—अस्य अन्नादनात् को विस्मयः। यतोऽस्य जगन्निवासस्य सर्व्वेषु जगत्सूदरस्थितेषु न व्यथा। बहु भुनक्तीति बहुभुक् निखिलभुवनपालकः। यदि वा बहवो भुजा यस्य स बहुभुजोऽयम्। पूर्व्वत्र तु बहु भुङ्क्ते इति बहुभुक्। प्राशेत्यत्र अश्नातेर्लिट् ॥ २९ ॥

अमुना करेण पृथुदन्तमुसलमुदखानि दन्तिनः ।
तेन यदवधि स एव पुनर्बलशालिनां क इव तत्र विस्मयः ॥३०॥
शिशुरेव शिक्षितनियुद्धकरणमकृतक्रियः स्वयम् ।
मल्लमलघुकठिनांसतटं न्यवधीद्यदेष तददृष्टकारितम् ॥३१॥
यदयुध्यमानमपि सन्तमुपहितमुरौघसाध्वसम् ।
कंसमभियमयमभ्यभवत् समुदा जनेन तदपि प्रशस्यते ॥३२॥

अमुनेति । अमुना हरिणा दन्तिनः कुवलयापीडस्य यत् पृथुदन्तमुसलं करेण उदखानि उत्खातम् । तेनोत्खातेन योऽसौ हस्ती अवधि हतः तत्र बलशालिनां क इव विस्मयः ? न युक्तस्तत्र विस्मयः । मर्म्महननाद्धि शिशुरपि मारयति, इति निन्दा ।

स्तुतिस्तु काक्वा गम्यते—को विस्मयः। विस्मय एवेत्यर्थः । स तु हस्तिनो हन्तुमशक्यत्वादिति भावः । यदुक्तम्—'एकः क्रुद्धो गजो हन्ति षट्सहस्राणि वाजिनाम्' । अवधीति कर्म्मणि लकारः चुँञ्चिण् अकारलोपः ॥३०॥

शिशुरिति । एष हरिः शिशुरेव बालः सन् यन्मल्लं चूणाराख्यं न्यवधीज्जघान, तददृष्टकारितं दैवविहितम् । विधिवशाद्द्यबलोऽपि बलीयांसमभिभवति, तदेव बलवत्त्वमाह—कीदृशं मल्लम् ? शिक्षितानि नियुद्धकरणानि बाहुयुद्धक्रियाः येन तं शिक्षितनियुद्धकरणं युद्धज्ञं, तथा अलघु पीनं कठिनमंसतटं यस्य तम् । एष तु स्वयमकृतक्रियोऽशिक्षितकरणः । यतः शिशुः ।

स्तुतिस्तु—पूर्व्ववत् काक्वा । तत् किमदृष्टकारितं नैतद्दैवविजृम्भितम्, अपि त्वस्यैवायं महिमेत्यर्थः ॥ ३१ ॥

यदिति । यदयमयुध्यमानं कंसं स्वजनमप्यभ्यभवत् आचकर्ष तदपि समुदा जनेन प्रशंस्यते नैवाभिनन्द्यत इति काकुप्रयोगः । निष्क्रियस्य हि वधे का नाम स्तुतिः । कीदृशं तम्—जनितदेवपूगकम्पम् । अभियं त्रासरहितं वीरमित्यर्थः । इति निन्दा ।

स्तुतिस्तु—अयुध्यमानमपि सन्तं कंसमभियं त्रासरहितं वीरं यदभ्यभवत्तदपि सन्तोषवता जनेन प्रशंस्यते स्तूयत एव । यत उपहितसुरौघसाध्वं, सदर्पञ्च । कण्टकोद्धरणेन चावश्यं प्रहृष्टो जनः प्रशंसां करोति ॥ ३२ ॥

इति निन्दितं कृतधियापि वचनममुना यदाददे ।
स्तोतुमनिशमुचितस्य परैः स्तुतिरेव सा मधुनिघातिनोऽभवत्॥३३
यदुवाच दुष्टमतिरेष परिविवदिषुर्मुरद्विषन् ।
द्व्यर्थमपि सदसि चेदिपतिस्तदतोऽपराधगणनामगाद्वचः ॥३४॥

इतीति । इत्युक्तप्रकारेण अमुना चैद्येन यद्वच आददेऽभ्यधायि । सा मधुरिपोर्नुतिरेवाभवत् । कदाचित्तुष्टूषुरसौ स्यादित्याह—निन्दितं कृतधियापीति । किंविधस्य हरेः । परैः शत्रुभिरपि स्तोतुमजस्रं योग्यस्य । अत एतत् स्तुतिरभवत् । एतेन पूर्व्वेषां वाक्यानामुभयार्थताख्याता यथा च तथा व्याख्यातुमेव । आददे इत्यास्यविहरणस्याशब्दार्थत्वात् प्रतिषेधाभावः प्रतीयते यत्र तत्र तु शब्दोपात्तं यथा आस्यं व्याददातीति । मधुं निहन्तीत्यावश्यके णिनिः । 'कर्म्मणि हनः' इत्यर्थकुत्सायाम् ॥ ३३ ॥

यदुवाचेति । एष सभायां यद्वचोऽवोचत्तदुभयार्थं निन्दास्तुतिवाचकमप्यतो हेतोरपराधगणनामगात् अपराधगणनामध्ये गणितम् । यतो दुष्टत्वात् मुरारिं परिविवदिषुर्निनिन्दिषुः । तेन हि तद्वच आक्रोशतोक्तम् । या तु तस्य स्तोत्ररूपता सा काकतालीयेति भगवतो वा माहात्म्यम् । नैतावतासौ प्रियम्वद इति अपराधगणनामगात् । यस्मादेष दुष्टमतिः सन् देवं परिविवदिषुराह इत्येवं वा योज्यम् ॥ ३४ ॥

इति प्रक्षिप्ताः श्लोकाः ।

---

इति वाचमुद्धतमुदीर्य्य सपदि सह वेणुदारिणा ।
सोढ़रिपुबलभरोऽसहनः स जहास दत्तकरतालमुच्चकैः ॥३९॥
कटुनापि चैद्यवचनेन विकृतिमगमन्न माधवः ।
सत्यनियतवचसं वचसा सुजनञ्जनाश्चलयितुं क ईशते ॥४०॥
न च तन्तदेति शपमानमपि यदुनृपाः प्रचुक्रुधुः ।
शौरिसमयनिगृहीतधियः प्रभुचित्तमेव हि जनोऽनुवर्त्तते ॥४१॥
विहितागसो मुहुरलङ्घ्यनिजवचनदामसंयतः ।
तस्य कतिथ इति तत्प्रथमं मनसा समाख्यदपराधमच्युतः ॥४२॥

इतीति। सोढ़ः क्षान्तो रिपूणां बलभरो वीर्य्यातिशयो येन सः न सहत इत्यसहनः असहिष्णुः स चैद्य इतीत्थमुद्धतं निष्ठुरं यथा तथा वाचमुदीर्य्य सपदि वेणुदारिणा नरकात्मजेन सह दत्तः करतालः परस्परपाणिताड़नं यस्मिन् कर्म्मणि तद्यथा तथा उच्चकैस्तारं जहास। कृष्णदोषोद्घाटनहर्षाद्-दृहासं चकारेत्यर्थः। स्वभावोक्तिः॥ ३९ ॥

कटुनेति। माधवः कटुनापि चैद्यवचनेन विकृतिं नागमत्। गमेर्लुङि 'पुषादि'—इति च्लेरङादेशः। तथाहि सत्ये नियतवचसमस्खलितवचसं सत्यसन्धं सुजनं के जना वचसा, तीव्रेणापीति भावः। चलयितुमीशते शक्नुवन्ति, न केऽपीत्यर्थः। सहिष्ये शतमागांसीति प्रतिज्ञाभङ्गभयादसहतेति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ ४० ॥

न चेति। किञ्चेति चार्थः। तदा तत्काले इतीत्थं शपमानमाक्रोशन्तमपि। शपतेराक्रोश इति भट्टमल्लः। तं चैद्यं यदुनृपा यादवाः शौरेः कृष्णस्य समयेन सङ्केतेन निगृहीतधियो निरुद्धबुद्धयः सन्तो न प्रचुक्रुधुः। 'क्रुधद्रुहोरुपसृष्टयोः कर्म्म' इति कर्मत्वम्। तथाहि जनो लोकः प्रभुचित्तमेवानुवर्त्तते। शौरिसङ्केतनिरुद्धबुद्धेर्यदुविशेषणमत्या क्रोधाभावहेतुत्वात्काव्यलिङ्गमर्थान्तरन्यासेन सङ्कीर्य्यते॥ ४१ ॥

विहितेति। अलङ्घ्येन निजवचनदाम्ना स्वप्रतिज्ञापाशेन संयतो बद्धोऽच्युतः मुहुर्विहितागसः पूर्व्वं सहस्रशः कृतापराधस्यापि यस्य चैद्यस्यापराधं

स्मृतिवर्त्म तस्य न समस्तमपकृतमियाय विद्विषः ।
स्मर्त्तुमधिगतगुणस्मरणाः पटवो न दोषमखिलं खलूत्तमाः ॥४३॥
नृपतावधिक्षिपति शौरिमथ सुरसरित्सुतो वचः ।
स्माह चलयति भुवं मरुति क्षुभितस्य नादमनुकुर्व्वदम्बुधेः ॥४४
अथ गौरवेण परिवादमपरिगणयंस्तमात्मनः ।
प्राह मुररिपुतिरस्करणक्षुभितः स्म वाचमिति जाह्नवीसुतः ॥४५

स एव प्रथमो यस्मिन् कर्म्मणि तत्प्रथमं यथा तथा कथितः । कतीनां पूरण इति 'तस्य पूरणे डट्' इति डट् प्रत्ययः । 'षट्कतिकतिपयचतुरां थुक्' इति थुगागमः । मनसा समाख्यद्गणनां चकार । 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः । अत्र प्रतिज्ञापाशबन्धनस्य विशेषणगत्या प्राचीनापराधानन्त्येऽपि तात्कालिकापराधगणनाहेतुत्वात् काव्यलिङ्गभेदः ॥ ४२ ॥

स्मृतीति । विद्विषश्चैद्यस्य सम्बन्धि समस्तमपकृतमपकारजातम् । नपुंसके भावे क्तः । तस्य हरेः कृष्णस्य स्मृतिपथं नेयाय न प्राप । न तमपकारं सस्मारेत्यर्थः । अर्थान्तरं न्यस्यति । अधिगतगुणस्मरणाः परिचितोपकारस्मृतयः उत्तमाः सज्जनाः अखिलं दोषमपकारं स्मर्तुं अपटवः खलु । नालं भवन्तीत्यर्थः । 'पर्याप्तिवचनेष्वलमर्थेषु'—इति तुमुन्प्रत्ययः । उपकारमेव स्मरन्ति साधवो नापकारमित्यर्थः ॥ ४३ ॥

नृपताविति । अथ नृपतौ चेदिपे शौरिं हरिमधिक्षिपति सति सुरसरित्सुतो भीष्मः मरुति प्रलयमारुते भुवं चलयति कम्पयति सति क्षुभितस्योद्वेलस्य अम्बुधेर्नादमनुकुर्वत्तद्वद्गम्भीरं वचः आहस्म उवाच । 'लट् स्मे' इति भूतार्थे लट् । 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति णल्याहादेशः । यद्यपि 'न पादादौ खल्वादयः' इत्याह वामनः । तथापि कविप्रौढ्या स्मशब्दस्य पादादौ प्रयोगः । उपमालङ्कारः ॥ ४४ ॥

उक्तमेवार्थं वक्तुराशयाविष्कारार्थमाह—अथेति । अथ शिशुपालप्रलापान्तरं मुररिपुतिरस्करणेन हरिनिन्दया क्षुभितः कलुषमनाः जाह्नवीसुतो गाङ्गेयः गौरवेण धैर्य्येण तमात्मनः परिवादं कामकमयं वृथापलित इत्यादि स्वनिन्दामपरिगणयन् इति वक्ष्यमाणप्रकारेण वाचं प्राह स्म प्रोक्तवान्, गत-

विहितं मयाद्य सदसीदमपमृषितमच्युतार्चनम् ।
यस्य नमयतु स चापमयं चरणः कृतः शिरसि सर्व्वभूभृताम् ॥४६
इति भीष्मभाषितवचोऽर्थमधिगतवतामिव क्षणात् ।
क्षोभमगमदतिमात्रमथो शिशुपालपक्षपृथिवीभृतां गणः ॥४७॥
शितितारकानुमितताम्रनयनमरुणीकृतं क्रुधा ।
बाणवदनमुदयादि भिये जगतः सकीलमिव सूर्य्यमण्डलम् ॥४८

मेतत् । धीराः स्वनिन्दामिव सहन्ते न गुरुदेवादिनिन्दामिति भावः । अत्र क्षोभस्य विशेषणगत्या वचनहेतुत्वात्काव्यलिङ्गभेदः ॥ ४५ ॥

विहितमिति । मया अद्य सदसि सभायां विहितं कृतम् । इदमच्यु-तार्चनं यस्यापमृषितमतितिक्षितमसोढमित्यर्थः । 'मृष तितिक्षायाम्' इति धातोः कर्म्मणि क्तः । उपसर्गवशाद्विपरीतार्थता । अतएव मृषस्तितिक्षा-यामेव किन्त्वनिषेधादतितिक्षार्थत्वान्न गुणः 'मतिबुद्धिपूजार्थेभ्यश्च' इति चकाराद्वर्त्तमानार्थता 'क्तस्य च वर्तमाने' इति षष्ठी । सोऽपमृष्टा पुरुषश्चापं नमयतु आरोपयतु । सर्वभूभृतां मिषतामिति भावः । शिरस्ययं चरणः कृतो न्यस्तः । अयमिति भूमौ पात्यमानस्य चरणस्य हस्तेन निर्देशः । अयं कोपामर्ष इत्यनुसन्धेयम् ॥ ४६ ॥

इतीति । इतीत्थं भीष्मेण भाषितस्योक्तस्य वचसोऽर्थमभिधेयं शिरसि पादन्यासरूपं क्षणादधिगतवताम् । प्राप्तवतामिव सतामित्यर्थः । शिशुपालस्य पक्षा ये पृथिवीभृतो राजानस्तेषामसौ गणोऽतिमात्रं क्षोभं क्रोधं विकार-मगमत् । एतेनैषामात्मविनाशावसायी रौद्रस्थायी क्रोधः प्रादुरभूदित्युक्तम् । उत्प्रेक्षा ॥ ४७ ॥

अथैषां दशभिर्गात्रारम्भान् क्रोधानुभावानाह—शितीत्यादि । क्रुधा क्रोधेन अरुणीकृतमत एव शिती श्यामे ये तारके कनीनिके ताभ्यामनुमिते-ऽनुमापिते ताम्रे नयने यस्य तत् । 'तारकाक्ष्णः कनीनिका' इत्यमरः । सर्वमुखस्य रक्तत्वादिति भावः । बाणो नृपस्तस्य वदनं सकीलं कीलाकार-च्छायासहितम्, परिधियुक्तमिति यावत् । सूर्य्यमण्डलमिव जगतो भिये

प्रविदारितारुणतरोग्रनयनकुसुमोज्ज्वलः स्फुरन् ।
प्रातरहिमकरताम्रतनुर्विषजद्रुमोऽपर इवाभवद् द्रुमः ॥४९॥
अनिशान्तवैरदहनेन विरहितवतान्तरार्द्रताम् ।
कोपमरुदभिहतेन भृशं नरकात्मजेन तरुणेव जज्वले ॥५०॥
अभिधित्सतः किमपि राहुवदनविकृतं व्यभाव्यत ।
ग्रस्तशशधरमिवोपलसत्सितदन्तपङ्क्ति मुखमुत्तमौजसः ॥५१॥
कुपिताकृतिं प्रथममेव हसितमशनैरसूचयत् ।
क्रुङ्मशनिदलिताद्रितटध्वनि दन्तवक्रमरिचक्रभीषणम् ॥५२॥

भयाय उददीपि प्रजज्वाल । दीप्यतेः कर्त्तरि लुङि 'दीपजन'—इत्यादिना चिण्प्रत्यये तलुक् । अत्र नयनयोः स्वभावत्यागेनारुणस्वीकारात्तद्गुणः । तत्सापेक्षत्वादौत्पातिकसूर्य्यमण्डलोपमासङ्करः ॥ ४८ ॥

प्रवीति । प्रविदारितेऽतिविकासिते अरुणतरे क्रोधादतिरक्ततरे अत एवोग्रे भयङ्करे ये नयने ते एव कुसुमे ताभ्यामुज्ज्वलो दीप्तः स्फुरन् स्वतेजसा दीप्यमानः प्रातरहिमकरताम्रतनुः प्रभातार्कारुणविग्रहः प्रसिद्धो द्रुमो द्रुमाख्यो नृपः अपरो विषजद्रुम इवाभवदित्युत्प्रेक्षा रूपकसङ्कीर्णा ॥ ४९ ॥

अनिशान्तेति । अनिशान्तोऽनिर्वाणो वैरदहनो विरोधाग्निर्यस्य तेन अतएवान्तरभ्यन्तरे आर्द्रतां सारसं विरहितवता त्यक्तवता । रहयतेः क्तवतुप्रत्ययः । कोपो मरुदिव तेनाभिहतः प्रज्वलितः तेन नरकात्मजेन वेणुदारिणा तरुणा वृक्षेणेव भृशं जज्वले ज्वलितम् । भावे लिट् । उपमालङ्कारः ॥ ५० ॥

अभीति । किमप्यभिधित्सतोऽभिधातुमिच्छतः । दधातेः सन्नन्ताल्लटः शत्रादेशः । उत्तमौजसो नाम राज्ञः सम्बन्धि राहुवदनविकृतं व्यात्तत्वाद्राहुवक्त्रवत् करालम्, उपलसन्ती लक्ष्यमाणा सिता दन्तपङ्क्तिर्यस्य तन्मुखं ग्रस्तशशधरमिव संदष्टचन्द्रमिव व्यभाव्यतातर्क्यत । इत्युत्प्रेक्षा ॥ ५१ ॥

कुपितेति । प्रथमं प्रागेव, अकुपितावस्थायामपीत्यर्थः । कुपितस्येवाकृतिर्मुखरागो यस्येत्युपमा । अरिचक्रभीषणं परबलभयङ्करं दन्तवक्रं

प्रतिघः कुतोऽपि समुपेत्य नरपतिगणं समाश्रयत् ।
यामिहरणजनितानुशयः समुदाचचार निज एव रुक्मिणः ॥५३॥
चरणेन हन्ति सुबलः स्म शिथिलितमहीध्रबन्धनाम् ।
तीरतरलजलराशिजलामवभुग्नभोगिफणमण्डलां भुवम् ॥५४॥
कुपितेषु राजसु तथापि रथचरणपाणिपूजया ।
चित्तकलितकलहागमनो मुदमाहुकिः सुहृदिवाधिकां दधौ॥५५

दन्तवक्त्रनामानं राजानम् अशनिदलितस्य वज्राहतस्याद्रितटस्य ध्वनिरिव ध्वनिर्यस्य तदित्युपमा । न शनैरशनैः उच्चैर्हसितमट्टहासः सक्रुधमसूचयत् । सर्वदा मुखरामस्य विशेषणादनुभावान्तरवेद्यः, क्रुध इत्यर्थः । कोपव्यञ्जकसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिरूपमासङ्कीर्णा ॥ ५२ ॥

प्रतिघ इति । प्रतिघः कोपः । 'कोपक्रोधामर्षरोषप्रतिघा' इत्यमरः । कुतोऽपि समुपेत्यागत्य नरपतिगणं राजमण्डलं समाश्रयत् समाविशत् । रुक्मिणस्तु यामिः स्वसा । 'यामिः स्वसृकुलस्त्रियोः' इत्यमरः । तस्या रुक्मिण्या हरणेन जनितोऽनुशयो हा कष्टमापन्नं कदा निर्यातयामीत्यनुतापो यस्मिन् सः । 'अथानुशयो दीर्घद्वेषानुतापयोः' इत्यमरः । निजो नित्य एव प्रतिघः । 'निजमात्मीयनित्ययोः' इति विश्वः । समुदाचचार समुद्दिदीपे । भीष्मवाक्यमन्येषां कोपोत्पादकमासीत्, रुक्मिणस्तु प्रागेवारूढकोपस्योद्दीपकमासीदित्यर्थः । अत्रानुशयस्य विशेषणगत्या कोपोद्दीपनहेतुत्वात् काव्यलिङ्गभेदः ॥ ५३ ॥

चरणेनेति । सुबलो नाम राजा महीं धारयन्तीति महीध्राः पर्वताः । 'कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम्' इति कप्रत्ययः । शिथिलितानि विश्लेषितानि महीध्राणां बन्धनानि सन्धयो यस्यास्ताम् । तीरेषु तरलानि भूकम्पाच्चलितानि जलराशेरम्बुधेर्जलानि यस्यास्ताम् अवभुग्नं कुटिलम्, अतिभारादित्यर्थः । भोगिनां फणिनां फणमण्डलं फणसमूहो यस्यास्तां भुवं चरणेन हन्ति स्म जघान । 'लट् स्मे' इति भूतार्थे लट् । अत्र पादाघाताद्भुवः कम्पासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ५४ ॥

कुपितेष्विति । रथचरणपाणेश्चक्रपाणेः पूजया राजसु तथा कुपितेष्वपि

गुरुकोपरुद्धपदमापदसितयवनस्य रौद्रताम् ।
व्यात्तमशितुमिव सर्वजगद्विकरालमास्यकुहरं विवक्षतः ॥५६॥
विवृतोरुबाहुपरिघेण सरभसपदं निधित्सता ।
हन्तुमखिलनृपतीन् वसुना वसने विलम्बिनि निजे विचस्खले॥५७॥
इति तत् तदा विकृतरूपमभजत् तदभिन्नचेतसम् ।
मारबलमिव भयङ्करतां हरिबोधिसत्त्वमभि राजमण्डलम् ॥५८॥

चित्ते कलितं निश्चितं कलहागमनं युद्धलाभो येन स आहुकिः आहुकिर्नाम राजा शोभनं हृदयं यस्य स सुहृन्मित्रमिव, कृष्णपक्षपातीवेत्यर्थः । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातः । अधिकां मुदं दधौ सन्तोषं धत्तवान् । सुदुःसहोऽपि कृष्णोत्कर्षः कलहकण्डूलबाहोराहुकेर्मोदहेतुरासीदित्यर्थः । उपमालङ्कारः ॥ ५५ ॥

गुर्विति । विवक्षत किमपि वक्तुमिच्छतः । वचेः सन्नन्ताल्लटः शत्रादेशः । असितयवनस्य कालयवनस्य राज्ञः सम्बन्धि सर्वजगदशितुमत्तुमिव व्यात्तं विवृतम् अतएव विकरालमतिविकृतम् । 'करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि च' इति वैजयन्ती । गुरुणा कोपेन रुद्धपदं प्रतिबद्धवचनमास्यकुहरं वक्त्रविवरं रौद्रतां भयङ्करतामापत् । अत्राशितुमिवेति फलोत्प्रेक्षा व्यादानक्रियानिमित्ता ॥ ५६ ॥

विवृतेति । अखिलनृपतीन् हन्तुं विवृतः प्रसारित ऊरुबाहुरेव परिघ आयुधविशेषो येन तेन । 'परिघः प्रतिघातेऽस्त्री' इति हैमः । सरभसं ससत्वरं यत् पदं तन्निधित्सता निधातुमिच्छता । दधातेः सन्नन्ताल्लटः शत्रादेशः । वसुना तन्नाम्ना राज्ञा विलम्बिनि उत्पातवेगाद्विस्रंसिनि निजे वसने स्वाम्बरे विचस्खले स्खलितम् । तच्चास्य दुर्निमित्तमिति भावः । भावे लिट् । अत्र वस्त्रस्रंसनस्य विशेषणगत्या स्खलनहेतुत्वात् काव्यलिङ्गं तच्चाहुपरिघेति रूपकेण संसृज्यते ॥ ५७ ॥

इतीति । इतीत्थं तदा तस्मिन् काले विकृतरूपं रोषभीषणाकारं तद्राजमण्डलं मारबलमिव मदनसैन्यमिव । 'मदनो मन्मथो मारः' इत्यमरः ।

रभसादुदस्थुरथ युद्धमनुचितभियोऽभिलाषुकाः ।
सान्द्रमुकुटकिरणोच्छलितस्फटिकांशवः सदसि मेदिनीभृतः ५९
स्फुरमाणनेत्रकुसुमोष्ठदलमभृत भूभृदङ्घ्रिपैः ।
धूतपृथुभुजलतं चलितैर्द्रुतवातपातवनविभ्रमं सदः ॥ ६० ॥

अविभिन्नचेतसमविकृतचित्तं बोधिसत्त्वो बुद्धः । 'बुद्धस्तु श्रीघनः शास्ता बोधिसत्त्वो विनायकः' इति वैजयन्ती । स हरिरिवेत्युपमितसमासः । तं हरिबोधिसत्त्वमभि । तत् समक्षमित्यर्थः, 'अभिरभागे' इत्यभेः कर्म्मप्रवचनीयत्वात् योगे द्वितीया, भयं करोतीति भयङ्करः । 'मेघर्तिभयेषु कृञः' इति खच्प्रत्यये मुमागमः । तस्य भावस्तत्तामभजत् । उपमालङ्कारः । तेन भगवतो बुद्धस्य समाधिभङ्गाय प्रवृत्तं मारबलं यथा तेन भग्नं तथा राजमण्डलमपि हरिणा भज्यत इति वस्तु व्यज्यते ॥ ५८ ॥

रभसादिति । अथानन्तरमनुचितभियोऽनभ्यस्तसाध्वसाः । 'अभ्यस्तेऽप्युचितम्' इति यादवः । अतएव युद्धमभिलाषुका युद्धार्थिनः । 'लषपत'—इत्यादिना उकञ्प्रत्यये 'न लोका'—इत्यादिना षष्ठीप्रतिषेधः । सदसि मेदिनीभृतः सदसि स्थितास्चैद्यपक्षीया राजानः । सान्द्रैर्मुकुटकिरणैरुच्छलिताः स्फटिकांशवः सभाभित्तिस्फटिकमणिमयूखा यैस्ते तथोक्ताः सन्तो रभसाद्वेगादुदस्थुरुत्थिताः, 'उदोऽनूर्द्ध्वकर्म्मणि' इत्यस्य प्रत्युदाहरणमेतत् । अत्र युद्धाभिलाषुकस्य विशेषणगत्योत्थानहेतुत्वात् काव्यलिङ्गभेदः ॥ ५९ ॥

स्फुरमाणेति । स्फुरमाणानि नेत्राण्येव कुसुमान्योष्ठा एव दलानि च यस्मिन् कर्म्मणि तद्यथा तथा धूताः कम्पिताः पृथवो भुजा एव लताः शाखा यस्मिन् कर्म्मणि तद्यथा तथा चलितैः भूभृतो राजानस्त एव अङ्घ्रिपाः पादपास्तैः सदः सभामण्डपं द्रुतः शीघ्रो वातपातो वायुप्रचारो यस्य तस्य वनस्य विभ्रमं शोभाम् । 'विभ्रमः संशये भ्रान्तौ शोभायाञ्च' इति वैजयन्ती । अभृत बभार । भृञो लुङि तङ्, 'उश्च' इति सिचः कित्त्वाद्गुणाभावः, 'ह्रस्वादङ्गात्' इति सलोपः । अत्र वनविभ्रममिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना नेत्रकुसुमेत्यादिरूपकोत्थापितेति सङ्करः ॥ ६० ॥

**हरिमप्यमंसत तृणाय कुरुपतिमजीगणन्न वा ।**
**मानतुलितभुवनत्रितयाः सरितः सुतादबिभयुर्न भूभृतः ॥६१॥**
**गुरु निःश्वसन्नथ विलोलसदवथुवपुर्वचोविषम् ।**
**कीर्णदशनकिरणाग्निकणः फणवानिवैष विससर्ज चेदिपः ॥६२॥**
**किमहो नृपाः सममभीभिरुपपतिसुतैर्न पञ्चभिः ।**
**वध्यमभिहत भुजिष्यममुं सह चानया स्थविरराजकन्यया ॥६३॥**

हरिमिति । मानतुलितभुवनत्रितया अहङ्कारावधीरितजगत्त्रयाः भूभृतश्चैद्यपक्षा राजानः । हरिमपि तृणायामंसत तृणसमममन्यन्त । तथा लघु मेनिर इत्यनादरोक्तिः । मन्यतेः कर्त्तरि लुङि च्लेः सिच् । अनुदात्तत्वादिट्प्रतिषेधः 'मन्यकर्म्मणि'—इति चतुर्थी । कुरुपतिञ्च नाजीगणन् । न धर्म्मराजं गणयन्ति स्मेत्यर्थः । गणेर्णौ चङि 'ई च गणः' इत्यभ्यासस्येकारः । सरितः सुताद्भीष्मादपि नाबिभयुर्न भीताः । बिभेतेर्लङि 'श्लौ' इति द्विर्भावे 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशः, 'जुसि च' इति गुणः । अत्र राजसु हर्य्येवमानाद्यनेकक्रियायौगपद्यात् समुच्चय इति सर्व्वस्वकारः ॥ ६१ ॥

गुर्विति । अथैष चेदिपः फणवान् फणीव । गुर्वधिकं निःश्वसन् फूत्कुर्व्वन् विलोलं सदवथु ससन्तापम् । सन्तापो दवथुरित्यनेकार्थादिति सज्जनः । तद्वपुर्यस्य स विलोलसदवथुवपुः । 'ट्वितोऽथुच्' । कीर्णा विक्षिप्ता दशनकिरणा अग्निकणा इव यस्य सः तथा सन् वचो विषमिव तद्वचोविषं विससर्ज, विषप्रायं वच उज्जगारेत्यर्थः । अतः फणवानिवेति व्यस्तोपमालिङ्गात् सर्व्वत्रोपमितसमासाश्रयणम् ॥ ६२ ॥

अथैतद्वचोविषमेव चतुर्भिराह—किमित्यादि । हे नृपाः, अमीभिः पञ्चभिरुपपतिसुतैः समं जारजैः सह । पाण्डवानां क्षेत्रजत्वादित्थं प्रलापः । अनया स्थविरराजकन्यया क्षत्रियाङ्गनया च सह, 'कन्या कुमारिकानार्य्योः' इति विश्वः । भीष्मस्योर्द्ध्वरेतस्कत्वेन निन्दा । वध्यं वधार्हम् । अराज्ञो राजार्हणग्रहणापराधादिति भावः । अराजत्वं व्यनक्ति, अमुं भुजिष्यं किङ्करम् । कंसपशुपालनादिति भावः । 'भुजिष्यः किङ्करो मतः' इति हलायुधः ।

अथवाध्वमेव खलु यूयमगणितमरुद्गणौजसः ।
वस्तु कियदिदमयं न मृधे मम केवलस्य सुखमीक्षितुं क्षमः ॥६४
विदतुर्यमुत्तममशेषपरिषदि नदीजधर्मजौ ।
यातु निकषमधियुद्धमसौ वचनेन किं भवतु साध्वसाधु वा॥६५
अचिरान्मया सह गतस्य समरमुरगारिलक्ष्मणः ।
तीक्ष्णविशिखमुखपीतमसृक् पततां गणैः पिबतु साद्यमुर्वरा॥६६

किं नाभिहत किमिति न मारयत, किन्त्वभिहतेत्यर्थः । हन्तेर्विधार्थे लोट् 'लोटो लङ्वत्' इति थस्य तादेशः, 'अनुदात्तोपदेश'—इत्यादिनानुनासिकलोपः । अहो अतिवध्योऽपि न हन्यत इत्याश्चर्यं, अत्रामर्षानुभावो वागारम्भः । 'क्रोधः कृतापराधेषु स्थिरोऽमर्ष इतीर्य्यते' ॥ ६३ ॥

अथवेति । अथवा अगणितमरुद्गणौजसोऽवधीरितसुरसङ्घसत्त्वाः यूयमाध्वमेव तूष्णीं तिष्ठतैव खलु । आस्तेर्लोटि 'धि च' इति सकारलोपः । इदं कृष्णहननं कियद्वस्तु कियत् कार्य्यम् । अल्पमित्यर्थः । कुतः अयं कृष्णो मृधे युद्धे । 'मृधमास्कन्दनं सङ्ख्यम्' इति युद्धपर्य्यायेष्वमरः । केवलस्यैकाकिनो ममैव सुखमीक्षितुं न क्षमः युष्माकं का वार्त्तेति भावः । एतेनास्य बलगर्वो व्यज्यते, 'आत्मोत्कर्षोऽन्यधिक्कारो यत्नावस्थविभूतिभिः' इति लक्षणात् ॥ ६४ ॥

विदतुरिति । किञ्च नदीजधर्म्मजौ भीष्मयुधिष्ठिरौ, अशेषपरिषदि समग्रसंसदि । 'परिषत् संसत्' इति विश्वः । यं कृष्णमुत्तमं विदतुः । विदितवन्तावित्यर्थः । 'विदो लटो वा' इति तसोऽतुसादेशः । असौ कृष्णः अधियुद्धं युद्धे, विभक्त्यर्थेऽव्ययीभावः । निकषं निकषणं यातु । परीक्ष्यतामित्यर्थः । ततः साधूत्कर्षोऽसाध्वनुत्कर्षो वा भवतु, व्यक्तमस्त्वित्यर्थः । वचनेन किम् ? वृथा वाग्वीर्य्यैरलमित्यर्थः । अत्रापि गर्वामर्षौ व्यज्येते ॥ ६५ ॥

अचिरादिति । किञ्च मया सह समरं गतस्योरगारिलक्ष्मणो गरुडध्वजस्य सम्बन्धि तीक्ष्णैर्विशिखमुखैः पीतं, महाणोच्छिष्टमित्यर्थः । असृक् रक्तमुर्वरा भूमिः । 'उर्वरा सर्व्वशस्याढ्यभूमौ स्याद्भूमिमात्रके' इति विश्वः । पततां गणैः पक्षिसमूहैः । 'पतत्पत्त्ररथाण्डजाः' इत्यमरः । सार्द्धमचिरात् पिबतु । अद्यैवाहमेनं हनिष्यामीत्यर्थः । अत्रापि अमर्ष एवेति भावः ॥ ६६ ॥

अभिधाय रूक्षमिति मास्म गम इति पृथासुतैरिताम् ।
वाचमनुनयपरां स ततः सहसावकर्ण्य निरियाय संसदः ॥६७॥
गृहमागताय कृपया च कथमपि निसर्गदक्षिणाः ।
क्षान्तिमहितमनसो जननीस्वसुरात्मजाय चुकुपुर्न पाण्डवाः॥६८
चलितं ततोऽनभिहतेच्छमवनिपतियज्ञभूमितः ।
तूर्णमथ ययुमिवानुययुर्दमघोषसूनुमवनीशसूनवः ॥ ६९ ॥

अभिधायेयि । स चैद्य इतीत्थं रूक्षं परुषमभिधाय ततः पृथासुतैः पार्थैरीरितामुक्तामनुनयपरां मास्म गमो न गच्छेति वाचम् । 'स्मोत्तरे लङ् च' इति चकाराद्गमेराशिषि लुङि 'पुषादि'—इति च्लेरङादेशः, 'न माङ्योगे' इत्यड़भावः । अवकर्ण्य अनादरेण श्रुत्वा सहसा संसदः सदसो निरियाय निर्ययौ । अमर्षादेवेति भावः ॥ ६७ ॥

गृहमिति । निसर्गदक्षिणाः स्वभावतो दाक्षिण्यसम्पन्नाः । परच्छन्दानुवर्त्तिन इत्यर्थः । 'त्रिषु वाकुशलावामपरच्छन्दानुवर्त्तिषु दक्षिणा' इति वैजयन्ती । किञ्च क्षान्त्या क्षमया महितमनसः पूजितचित्ताः क्षमावन्तः पाण्डवाः । किञ्च गृहमागताय, अभ्यागतायेत्यर्थः । किञ्च जननीस्वसुर्मातृष्वसुरात्मजाय शिशुपालाय कृपया च कथमपि, असह्यापराधेऽपीत्यर्थः । न चुकुपुः न चुक्रुधुः । सद्यो वध्यस्यापि तस्याभ्यागतत्वान्मातृबन्धुत्वात् स्वयं क्षान्तत्वाद्दाक्षिण्यात् कृपया च कथमपि जिघांसां न चक्रुरित्यर्थः । 'क्रुधद्रुह'—इत्यादिना सम्प्रदानत्वाच्चतुर्थी । अत्राभ्यागतत्वादिविशेषणानां साभिप्रायत्वादकोपहेतुत्वाच्च परिकरः, काव्यलिङ्गे सति सापेक्षत्वात् सङ्कीर्य्यते ॥ ६८ ॥

चलितमिति । अथ चैद्यनिर्य्याणानन्तरं अवनीशसूनवस्तत्पक्षराजपुत्रास्ततस्तस्याः अवनिपतेर्युधिष्ठिरस्य यज्ञभूमितो यज्ञभूमेर्देवयजनात् । पञ्चम्यास्तसिल् । अनभिहतेच्छमप्रतिहतमनोरथं यथा तथा चलितं प्रस्थितं दमघोषसूनुं शिशुपालम् । याति परलोकमिति ययुः परलोकप्रापकोऽश्वमेधीयोऽश्वः । 'ययुरश्वोऽश्वमेधीयः' इत्यमरः । 'यो द्वे च' इति यातेरौणा-

**विशिखान्तराण्यतिपपात सपदि जवनैः सवाजिभिः।**
**द्रष्टुमलघुरभसापतिता वनिताश्चकार न सकामचेतसः ॥७०॥**
**क्षणमीक्षितः पथि जनेन किमिदमिति जल्पता मिथः।**
**प्राप्य शिबिरमविशङ्किमनाः समनीनहद् द्रुतमनीकिनीमसौ ॥७१॥**
**त्वरमाणशाङ्खिकसवेगवदनपवनाभिपूरितः।**
**शैलकटकतटभिन्नरवः प्रणनाद सान्नहनिकोऽस्य वारिजः ॥७२॥**

दिक उक् इलश्च। तं ययुमिव तूर्णमनुययुः। ययुरपि राजकं राजपुत्रै-रन्वीयते। 'चतुःशता रक्षन्ति' इति श्रुतेः। अश्वमेध्याश्वोपमया चैद्यस्य वध्यत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः॥ ६९॥

विशिखान्तराणीति। स चैद्यः सपदि जवनैर्वेगशालिभिर्वाजिभिरश्वै-र्विशिखान्तराणि रथ्यान्तराणि। 'रथ्या प्रतोली विशिखा' इत्यमरः। अति-पपात अतिचक्राम। अत एव द्रष्टुमलघुरभसेनातिवेगेनापतिता आधावन्ती-र्वनिताः सकामानि साभिलाषाणि चेतांसि चित्तवृत्तयो यासां ताः सकाम-चेतसः, सफलमनोरथा इत्यर्थः। न चकार। अतिशीघ्रलङ्घनान्न दर्श-नावकाशस्तासामासीदित्यर्थः। अत एव वाक्यार्थहेतुकं काव्यलिङ्गम् ॥७०॥

क्षणमिति। असौ चैद्यः पथि किमिदमिति मिथः जल्पता कोऽय-मनर्थः संवृत्त इति परस्परमालपता जनेन क्षणमीक्षितः सन् शिबिरं स्वकटकं प्राप्याविशङ्किमना निःशङ्कचित्तः द्रुतं शीघ्रमनीकिनीं सेनां समनीनहत् सन्नाहयति स्म। नह्यतेः संपूर्वकाल्लुङि 'णौ चङ्युपधाया ह्रस्वः' अभ्यासदी-र्घश्च। शिबिरं शकटमिति केचित्। एतेनास्य रौद्रस्थायिनः कोपस्य प्ररूढत्वं वेदितव्यम्॥ ७१॥

त्वरमाणेति। शङ्खः शिल्पमस्येति शाङ्खिकः। 'तदस्य शिल्पम्' इति ठक्। त्वरमाणस्य जवमानस्य शाङ्खिकस्य यः संवेगो वदनपवनो मुख-मारुतः तेनाभिपूरितः प्रध्मातः शैलानां कटकतटेषु नितम्बप्रदेशेषु भिन्नरवो मूर्च्छितप्रतिध्वनिरस्य चैद्यस्य सम्बन्धि सन्नहनं प्रयोजनमस्येति सान्न-हनिकः, योधानां रणसन्नाहप्रवर्त्तक इत्यर्थः। 'तदस्य प्रयोजनम्' इति

**जगदन्तकालसमवेतविषदविषमेरितारवम् ।**
**धीरनिजरवविलीनगुरुप्रतिशब्दमस्य रणतूर्य्यमावधि ॥ ७३ ॥**
**सहसा ससम्भ्रमविलोलसकलजनतासमाकुलम् ।**
**स्थानमगमदथ तत् परितश्चलितोडुमण्डलनभःस्थलोपमाम्७४॥**
**दधतो भयानकतरत्वमुपगतवतः समानताम् ।**
**धूमपटलपिहितस्य गिरेः समवर्मयन् सपदि मेदिनीभृतः ॥७५॥**

ठक् । वारिजः शङ्खः, 'वारिजः शङ्खपद्मयोः' इति विश्वः । प्रणनाद दध्वान, सन्नहनशङ्ख दध्मावित्यर्थः । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । एतेनास्य महानुत्साहो वीररसस्थायी व्यज्यते ॥ ७२ ॥

जगदिति । जगदन्तकाले कल्पान्ते समवेता मिलिता ये विषदास्तोयदाः पुष्करावर्त्तकादयो मेघाः । 'विषन्तु गरले तोये' इति विश्वः । तैर्व्विषमं दारुणं यथा तथेरित उत्पादितो य आरवः स इवारवो यस्य तत् । धीरे गम्भीरे निजरवे विलीना अन्तर्गता गुरवः प्रतिशब्दाः शब्दान्तराणि यस्य तत् । अस्य चैद्यस्य रणतूर्य्यं रणदुन्दुभिरावधि आहतम् । आहन्तेः कर्म्मणि लुङ्, 'आत्मनेपदेष्वन्यतरस्याम्' इति हनो वधादेशः । अत्राप्युत्साहो व्यज्यते । उपमालङ्कारः ॥ ७३ ॥

सहसेति । अथ रणदुन्दुभिताड़नानन्तरं सहसा झटिति ससम्भ्रमं सव्यग्रं यथा तथा विलोलया चलन्त्या सकलया समग्रया जनतया जनसमूहेन समाकुलं सङ्कीर्णं तत् स्थानं परितश्चलितं प्रस्थितमुड़मण्डलं ज्योतिश्चक्रं यस्मिन् तस्य नभःस्थलस्योपमां सादृश्यमगमत् । अत्रोड़मण्डलस्य चलनासम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेरतिशयोक्तिः । उपमा तु तदुज्जीविता प्रतीतिमात्रसारा तदङ्गम्, तत्रैव चमत्कारस्फुरणात् । 'पुष्पं प्रवालोपहितं यदि स्यात्' इत्यादिवत् ॥ ७४ ॥

दधत इति । मेदिनीभृतो राजानः । धूमपटलेन पिहितस्य छादितस्य अत एव भयानकतरत्वमतिभयङ्करत्वमुपगतवतो गिरेः समानतां सादृश्यं दधतो दधानाः सपदि समवर्म्मयन् संवर्म्मयन्ति स्म । सम्यग्वर्म्मणा नद्धमित्यर्थः । 'सत्यापपाश—' इत्यादिना णिच् । उपमालङ्कारः ॥ ७५ ॥

परिमोहिणा परिजनेन कथमपि चिरादुदाहृतम् ।
वर्म करतलयुगेन महत् तनुचूर्णपेषमपिषद्रुपाः परः ॥ ७६ ॥
रणसम्मदोदयविकासिबलकलकलाकुलीकृते ।
शारिमशकदधिरोपयितुं द्विरदे मदच्युति जनः कथञ्चन ॥७७॥
परितश्च धौतमुखरुक्मविलसदहिमांशुमण्डलाः ।
तेनुरतनुवपुषः पृथिवीं स्फुटलक्ष्यतेजस इवात्मजाः श्रियः ॥७८॥

परिमोहिणेति । परोऽन्यो नृपः। परिमुह्यतीति परिमोही । 'सम्पृच—' इत्यादिना घिनुण्प्रत्ययः । तेन, खेदयुक्तेनेत्यर्थः। परिजनेन सेवकजनेन कथमपि विलम्बेन कष्टसृष्ट्या चिरादुदाहृतमानीतं महद्वर्म सन्नाहं करतलयुगेन पाणितलद्वयेन तनुचूर्णपेषं तनुचूर्णं पिष्ट्वा । 'शुष्कचूर्णरूक्षेषु पिषः' इति णमुल्प्रत्ययः । अपिषच्चूर्णितवान् । तच्च जिगीषोर्दुर्निमित्तमिति भावः । 'कषादिषु यथाविध्यनुप्रयोगः' इत्यनुप्रयोगः । पिषेर्लुङि 'पुषादि—' इति च्लेरङादेशः । अत्र वर्मणः पेषणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः । तथा चामानुषं वीर्यमस्य व्यज्यते ॥ ७६ ॥

रणेति । रणेन रणारम्भेण यः सम्मदो हर्षः । 'प्रमदसम्मदौ हर्षे' इति निपातः । तस्योदयेन जन्मना विकासिभिर्विस्तारिभिर्बलकलकलैः सैन्यकोलाहलैराकुलीकृते संक्षोभिते । अत एव मदं च्योततीति मदच्युति मदस्राविणि । क्विप् । द्विरदे गजे जनः परिजनः शारिं पर्याणम् । 'ना पर्याणे विहङ्गे स्त्री शारिर्द्यूतगुडे न पुम्' इति वैजयन्ती । 'शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे । युद्धार्थे गजपर्याणे व्यवहारान्तरे क्वचित् ॥' इति विश्वप्रकाशश्च । अधिरोपयितुमारोपयितुं कथञ्चन कृच्छ्रादशकच्छशाक । शकेर्लुङि 'पुषादि—' इति च्लेरङादेशः । अत्र विशेषणगत्या सेनाकलकलस्य मदहेतुत्वान्मदस्य शारिदुरारोपत्वहेतुत्वाच्च काव्यलिङ्गद्वयं तत्सापेक्षत्वात् सङ्कीर्यते ॥ ७७ ॥

परित इति । किञ्चेति चार्थः । धौतेषु शोधितेषु मुखरुक्मेषु मुखस्थरुक्माभरणेषु विलसत् प्रत्येकं प्रतिफलदहिमांशुमण्डलम् अर्कबिम्बं येषां ते

प्रधिमण्डलोद्धतपरागघनवलयमध्यवर्त्तिनः ।
पेतुरशनय इवाशनकैर्गुरुनिःस्वनव्यथितजन्तवो रथाः ॥ ७९ ॥
दधतः शशाङ्कितशशाङ्करुचि लसदुरश्छदं वपुः ।
चक्रुरथ सह पुरन्ध्रिजनैरयथार्थसिद्धि सरकं महीभृतः ॥८०॥
दयिताय सासवमुदस्तमपतदवसादिनः करात् ।
कांस्यमुपहितसरोजपतद्भ्रमरौघभारगुरु राजयोषितः ॥८१॥

तथोक्ताः । अत एव स्फुटलक्ष्यमन्तर्गत्वा बहिः स्फुरितं तेजोऽन्तः सारो येषां ते इव स्थिता इत्युत्प्रेक्षा । तेजो व्याख्यातं पञ्चमे तेजोनिरोधेत्यत्र । अतनुवपुषो महाकायाः श्रिय आत्मजा अश्वाः । 'लक्ष्मीपुत्त्रोऽश्व आख्ये च' इति वैजयन्ती । परितः पृथिवीं तेनुर्व्याप्नुवन्तः ॥ ७८ ॥

प्रधीति । 'चक्रधारा प्रधिर्नेमिः' इति हलायुधः । प्रधिमण्डलैर्नेमिवलयै-रुद्धता उत्थापिताः परागाः पांसव एव घना मेघास्तेषां वलयानि मण्डलानि तेषां मध्यवर्त्तिनः गुरुभिर्निःस्वनैः स्वघोषैर्व्यथिता भीषिता जन्तवः प्राणिनो यैस्ते रथा अशनयः वज्रा इवाशनकैः पेतुस्तीव्रमधावन् । अत्र रथानामशनित्वे-नोत्प्रेक्षा परागाणां घनत्वरूपणसापेक्षेति सङ्करः ॥ ७९ ॥

दधत इति । लसन्नुरश्छदः कवचो यस्मिन् कर्म्मणि तद्यथा तथा । 'उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्' इत्यमरः । अतएव शशाङ्कितो मृगलाञ्छितो यः शशाङ्कः इन्दुस्तस्य रुचिरिव रुचिर्यस्येत्युपमा । तद्वपुर्दधतो दधानः महीभृतो राजानः पुरन्ध्रिजनैः अङ्गनाजनैः सह । अयथार्था असत्या सिद्धिर्मदकार्य्योत्पत्तिर्यस्मिंस्तत् यथार्थसिद्धिरहितम् । अनिर्वृतचित्तत्वाद-मादकमित्यर्थः । सरकं मधुपानं चक्रुः । उत्साहवर्द्धनार्थमिति भावः । 'मर्णो शीर्धो शीधुपाने सरकं मधुभाजनम्' इति वैजयन्ती ॥ ८० ॥

अथासर्गसमाप्तेः प्रायाणिकामन्त्रणाय प्रियासङ्गतानां भटानामागामि-शुचः सूचिकास्तात्कालिकचेष्टा वर्णयति—दयितायेत्यादि । दयिताय प्रेयसे उदस्तं पानार्थमुत्क्षिप्तं सासवं समद्यं अतएवोपहिते वासनार्थं निहिते सरोजे पतन् भ्रमरौघ एव भारस्तेन गुरु दुर्भरम् । 'गुरुस्तु वाक्पतौ श्रेष्ठे तुङ्गे पितरि दुर्भरे' इति शब्दार्णवे । कांस्यं पानभाजनम् । 'कंसोऽस्त्री पान-

भृशमङ्गसादमरुणत्वमविशदृशः कपोलयोः ।
वाक्यमसकलमपास्य मदं विदधुस्तदीयगुणमात्मना शुचः ॥८२॥
सुदृशः समीकगमनाय युवभिरथ सम्बभाषिरे ।
शोकपिहितगलरुद्धगिरस्तरसागताश्रुजलकेवलोत्तराः ॥८३॥

भाजनम्' इत्यमरः । 'वृत्त्वदिहनिकमिकषिभ्यः सः' इति कमेर्धातोरौणादिकः सप्रत्ययः । तस्मै हितं कंसीयं लोहविशेषः । 'प्राक्क्रीताच्छः' इति छप्रत्ययः । तस्य विकारः कांस्यं पानपात्रम् । कंसीयपरशव्ययोर्यञञौ लुक्च' इति यञ्प्रत्यये छस्य लुक् । राजयोषितः कस्याश्चिद्राजवध्वाः सम्बन्धिनः अवसादिनः शैथिल्यभाजः करादपतत् । तच्च दुर्निमित्तमिति भावः । एतेनास्या भाविविरहशोकादेवाप्रसन्नदृष्टेः काचिच्चिन्ता व्यज्यते । अत्रावसादभारगौरवयोर्विशेषणगत्या पात्रपातहेतुत्वात् काव्यलिङ्गम् ॥ ८१ ॥

भृशमिति । शुचो भाविविरहभावनाप्रसूताः शोकाः अविशददृशः शोकादेवाप्रसन्नदृष्टेः । कस्याश्चिदिति शेषः । मदमपास्य तदुत्पत्तिं प्रतिरुध्य तदीयं गुणं तद्धर्मं मदकार्यभूतमित्यर्थः । अङ्गसादमङ्गशैथिल्यं कपोलयोररुणत्वमसकलमसमाप्तं वाक्यं चात्मना स्वयम् । प्रकृत्यादिभ्य उपसङ्ख्यानात् तृतीया । भृशं विदधुः । करुणेन शृङ्गारस्तिरस्कृत इत्यर्थः । अत्र मदाभावेऽपि तत्कार्योदयात् तस्यावलोकननिमित्तकत्वोक्त्या उक्तनिमित्ताख्यो विभावनाभेदः ॥ ८२ ॥

सुदृश इति । अथास्मिन्नवसरे युवभिः समीकगमनया युद्धगमनया । 'समीकं साम्परायिकम्' इत्यमरः । सुदृशः शोकपिहिते शोकावृते गले कण्ठे रुद्धगिरः प्रतिबद्धोत्तरवाचस्तथापि तरसा वेगेनागतमश्रुजलमेव केवलं निर्णीतमुत्तरं यासां ताः । 'निर्णीतं केवलं चोक्तम्' इति विश्वः । सम्बभाषिरे सम्भाषिताः, योद्धुं गच्छामीत्यामन्त्रिताः । हा कष्टमिदमेवान्तिमदर्शनमिति वाक्यभेदेऽप्यश्रुपातेनैवानुत्तरं दत्तोत्तरा आसन्नित्यर्थः । अत्राप्यश्रुपातो दुर्निमित्तमिति भावः । एतेन गन्तव्यं चेद्गम्यतां, वयं च युष्मदालोककामा इत्यनिष्टविध्याभासरूपाक्षेपालङ्कारो व्यज्यते । अनिष्टविध्याभासश्चेति सूत्रेणेष्टनिषेधाभासावदस्यापि लक्षणात् ॥ ८३ ॥

विपुलाचलस्थलघनेन जिगमिषुभिरङ्गनाः प्रियैः ।
पीनकुचतटनिपीड़दलद्वरवाणमुरसालिलिङ्गिरे ॥८४॥
न मुमोच लोचनजलानि दयितजयमङ्गलैषिणी ।
यातमवनिमवसन्नभुजान्न गलद्विवेद वलयं विलासिनी ॥८५॥
प्रविवत्सतः प्रियतमस्य निगड़मिव चक्षुरक्षिपत् ।
नीलनलिनदलदामरुचि प्रतिपादयुग्ममचिरोढ़सुन्दरी ॥८६॥

विपुलेति । जिगमिषुभिर्युद्धाय गन्तुमिच्छुभिः । प्रियैः कर्त्तृभिः अङ्गनाः विपुलं यदचलस्य स्थलं तद्वद्घनेन दृढेनोरसा निजवक्षसा करणेन पीने कुचतटे निपीड़ो नितरां पीड़नं तेन दलन्तो विदीर्यमाणा वराः श्रेष्ठा वारबाणाः कञ्चुका यस्मिन् कर्म्मणि तद्यथा तथा । 'कञ्चुको वारबाणोऽस्त्री' इत्यमरः । आलिलिङ्गिरे आलिङ्गिताः । अत्र वारबाणानां दलनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ८४ ॥

नेति । दयितस्य जयमङ्गलं, तदर्थमङ्गलमित्यर्थः । अश्वघासादिवत् तदर्थे षष्ठीसमासः । तदिच्छतीति तदेषिणी विलासिनी काचिदङ्गना लोचनजलान्यश्रूणि न मुमोच, अश्रुपातस्यामङ्गलत्वादिति भावः । अमङ्गलं तदन्यतः प्रवृत्तमेवेत्याह—यातमिति । अवसन्नभुजाच्छोकशैथिल्यात् करान्नलत् भ्रश्यदेवावनिं भुवं यातं प्राप्तं वलयं कङ्कणं न विवेद । अवश्यभाविनां को निवारक इति भावः । एषा च दैन्यचिन्तेति । अत्रावसादस्य विशेषणगत्या वलयपातहेतुत्वात् काव्यलिङ्गम् ॥ ८५ ॥

प्रेति । अचिरोढ़सुन्दरी काचिन्नवोढ़ा स्त्री प्रविवत्सतः प्रवासं कर्तुमिच्छतः । वसेः सन्नन्तात्लटः शत्रादेशः । प्रियतमस्य प्रतिपादयुग्मं पादयुग्मे, विभक्त्यर्थेऽव्ययीभावः । नीलनलिनदलदामरुचि नीलोत्पलमालासच्छायमित्युपमा । निगड़मिव शृङ्खलमिव चक्षुर्नेत्रमक्षिपत्, प्रेरयदित्यर्थः । चक्षुषो दूरे पदमपि गन्तुं न शशाकेत्यर्थः । तच्च दुर्निमित्तमिति भावः । प्रयाणे स्त्र्यवलोकननिषेधात् । उक्तोपमासापेक्षा चक्षुषो निगड़त्वोत्प्रेक्षेति सङ्करः ॥८६॥

व्रजतः क्व तात वजसीति परिचयगतार्थमस्फुटम् ।
धैर्य्यमभिनदुदितं शिशुना जननीनिर्भर्त्सनविवृद्धमन्युना ॥८७॥
शठ नाकलोकललनाभिरविरतरतं रिरंससे ।
तेन वहसि मुदमित्यशठं रणरागिणं रमणमीर्य्ययाऽपरा ॥८८॥
भ्रियमाणमप्यगलदश्रु चलति दयिते नतभ्रुवः ।
स्नेहमकृतकरसं दधतामिदमेव युक्तमतिमुग्धचेतसाम् ॥८९॥

व्रजत इति । जनन्याः अपशकुनभीतायाः मातुर्निर्भर्त्सनाद्विवृद्धमन्युना प्रवृद्धकोपेन शिशुना बालकेन हे तात जनक ! 'तातस्तु जनकः पिता' इत्यमरः । क्व वजसि कुत्र व्रजसि इत्यस्फुटमुदितमुक्तम् । वदेः कर्म्मणि क्तः । 'वचिस्वपि'—इत्यादिना सम्प्रसारणम् । व्रजसीति सरेफपदमपाटवादरेफमुच्चारितमित्यर्थः । तथापि परिचयादभ्यामपाटवाद्गतार्थम् । पितृभ्यां केवलावगताभिधेयं वचनमिति शेषः । व्रजतः प्रस्थातुः धैर्य्यं प्रयाणोत्साहमभिनत् । गमनकारिणो दुर्निमित्तत्वादिति भावः । उक्तञ्च योगयात्रायाम्—'यानात् पुरा निपतनं ब्रुहतीव काचिन्नर्भेण भारब्रुहती स्वपुरःस्थिता स्त्री । आगच्छ तिष्ठ कुत इत्यलमर्थवाचिशब्दाश्च राजगमने प्रतिषेधकाः स्युः ॥' इति । अत्र दम्पत्योर्दैन्यविषादचिन्ताशङ्कादयः सञ्चारिणोऽनुसन्धेयाः ॥ ८७।

शठेति । अपरा स्त्री रणरागिणं युद्धोत्साहिनं रमणं हे शठ ! वञ्चक ! नाकलोकललनाभिः, अप्सरोभिः सहेत्यर्थः । 'सहयुक्तेऽप्रधाने' इति सहार्थे तृतीया । वृद्धो यूनेति वत् । अविरतरतमविच्छिन्नसुरतं यथा भवति तथा रिरंससे रन्तुमिच्छसि । रमेः सन्नन्ताल्लट् । 'पूर्ववत् सनः' इत्यात्मनेपदम् । तेनाप्सरोरिरंसाकरणेन मुदं वहसीति ईर्ष्यया सापत्न्याक्षमया अवदत् । अर्थाद्विरहासहनया प्रस्थानप्रतिषेधपरया व्याहृतमिदमेवास्य मरणशंसिनी दुरुपश्रुतिरिति भावः । ईर्ष्यात्र कण्ठोक्त एव सञ्चारी ॥ ८८ ॥

भ्रियमाणमिति । दयिते चलति प्रतिष्ठमाणे सति नतभ्रुवः वध्वाः अश्रु भ्रियमाणममङ्गलभिया धार्य्यमाणमपि । धरतेः कर्म्मणि लटः शानजादेशः । अगलदस्रवत् । शोकातिरेकाद्धारयितुमशक्यमासीदित्यर्थः । तथाहि—अकृतकरसमकृत्रिमरागं स्नेहं प्रेम दधताम् अतएव अतिमुग्धचेतसामत्यन्ता-

सह कज्जलेन विरराज नयनकमलाम्बुसन्ततिः ।
गण्डफलकमभितः सुतनोः पदवीव शोकमयकृष्णवर्त्मनः ॥९०॥
क्षणमात्ररोधि चलितेन कतिपयपदं नतभ्रुवः ।
स्रस्तभुजयुगगलद्वलयस्वनितं प्रति क्षुतमिवोपशुश्रुवे ॥९१॥
अभिवर्त्म वल्लभतमस्य विगलदमलायतांशुका ।
भूमिनभसि रभसेन यती विरराज काचन समं महोल्कया॥९२

कपटवृत्तीनामिदमेव असंवरणं युक्तम् । अन्यथा स्नेहव्याघातेन तत्कालविरुद्ध-मश्रुमोचनं नानुचितमिति भावः । रसस्नेहयो रागप्रेमापरनाम्नोरवस्थाभिदा-द्भेदः । 'रागस्तत्सम्बन्धी प्रेम तद्वियोगासहिष्णुता' इति रससागरे । सामा-न्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८९ ॥

सहेति । सुतनोः शुभाङ्ग्याः गण्डफलकमभितः, गण्डस्थलयोरित्यर्थः । 'अभितः परितः'—इत्यादिना द्वितीया । नयनकमलाम्बुसन्ततिरश्रुधारा कज्जलेनाञ्जनेन सह शोक एव शोकमयस्तस्य कृष्णवर्त्मनः शोकाग्नेः पदवी निःसरणमार्ग इव विरराज शुशुभे । येन वर्त्मनाग्निर्गच्छति तत्कृष्णं भवतीति कृष्णवर्त्मा । अत्राप्यश्रुपात एव दुर्निमित्तमिति भावः ॥ ९० ॥

क्षणेति । कतिपयं च तत्पदं च तत् । जातावेकवचनम् । कतिचित् पदानीत्यर्थः । पदशब्दस्य तदवच्छिन्नदेशवाचित्वादत्यन्तसंयोगे द्वितीया । चलितेन प्रस्थितेन, केनचिदिति शेषः । क्षणमात्ररोधि क्षणमात्रप्रति-बन्धकम् । प्राणदानैकजीविनामवसरे सत्यधिकं स्थातुमनौचित्यादिति भावः । नतभ्रुवः स्रस्तानामङ्गसादेन झटिति प्रकोष्ठाग्रे पतितानां भुज-युगगलद्वलयानां हस्तद्वयचलत्कङ्कणानां स्वनितं रणत्कारं प्रतिमुखं क्षुत-मिवोपशुश्रुवे उपश्रुतम् । 'स्त्री क्षुत् क्षुतं क्षवः पुंसि' इत्यमरः । रणत्कारे क्षुतभ्रान्त्या निवृत्तं । क्षणमात्रं स्थितमित्यर्थः । अक्षुते क्षुतभ्रान्त्या भ्रान्ति-मदलङ्कारः । दैन्यविषादाख्याः सञ्चारिणः ॥ ९१ ॥

अभीति । वल्लभतमस्य प्रियतमस्याभिवर्त्माभिमार्गं विगलदङ्गसादात् स्रंसमानममलमायतं चांशुकं वस्त्रं यस्याः, अन्यत्र विगलन्तो विशीर्यमाणा अमला उज्ज्वलाः सायता दीर्घीभूता अंशवो रश्मयो यस्याः सा । शैषिकः कप्रत्ययः । भूमिर्नभ इव तस्मिन् भूमिनभसि रभसेन वेगेन यती यान्ती ।

समरोन्मुखे नृपगणेऽपि तदनुमरणोद्यतैकधीः ।
दीनपरिजनहृताश्रुजलो न भटीजनः स्थिरमना विचक्रमे ॥९३॥
विदुषीव दर्शनममुष्य युवतिरतिदुर्लभं पुनः ।
यान्तमनिमिषमविह्वलमनाः पतिमीक्षते स्म भृशमा दृशः पथः ॥९४
सम्प्रत्युपेयाः कुशली पुनर्युधः सस्नेहमाशीरिति भर्त्तुरीरिता ।
सद्यः प्रसह्य ह्रितयेन नेत्रयोः प्रत्याचचक्षे गलता भटस्त्रियाः ॥९५

इणः शतरि 'उगितश्च' इति ङीप् । काचनाङ्गना महोल्कया समं सदृशं विरराज । अत्र प्रस्थातुरग्रे स्वकान्ताया महोल्कासादृश्यभवनमेव दुर्निमित्तमिति भावः । उपमालङ्कारः ॥ ९२ ॥

समरेति । नृपगणे समरोन्मुखेऽपि तस्य नृपगणस्यानुमरणे सहमरणे उद्यतोद्युक्ता अतएवैका मुख्या धीर्यस्य सः । दीनेनाप्यशोच्येन परिजनेन हृताश्रुजलो मुक्तबाष्पः । दासीमुक्ताश्रुबिन्दुरित्यर्थः । तथापि स्वयं स्थिरमना अचलितचित्तो भटीजनो भटस्त्रीलोकः । जातावेकवचनम् । 'पुंयोगादाख्यायाम्' इति ङीप् । न विचक्रमे न तत्रास, महत्स्वल्पप्रियाणां कुतः सन्त्रास इति भावः । अत्र मरणोद्योगस्य विशेषणगत्या अक्लैव्यहेतुत्वात् काव्यलिङ्गभेदः॥९३

विदुषीति । युवतिः काचिदङ्गना अमुष्य पत्युर्दर्शनं पुनः पश्चादतिदुर्लभम् । तस्यापुनरावृत्तेरिति भावः । विदुषी जानतीवेत्युत्प्रेक्षा । 'विदेः शतुर्वसुः' इति वस्वादेशः, 'उगितश्च' इति ङीप् । अविह्वलमना अविह्वलचित्ता सती यान्तं योद्धुं गच्छन्तं पतिं भर्तारं आ दृशः पथः आ दृष्टिपथात् । दृष्टिपथातिक्रमपर्यन्तमित्यर्थः । 'आङ् मर्य्यादाभिविध्योः' इति विकल्पादाङो न समासः । भृशमनिमिषं निमेषरहितं यथा तथा ईक्षते स्म ॥ ९४ ॥

सम्प्रतीति । सम्प्रतीदानीमेव कुशली अक्षतः सन् युधो युद्धात् पुनः उपेयाः प्रत्यावर्त्तस्वेति सस्नेहं भर्त्तुरीरिता भर्त्रा प्रयुक्ता आशीराशीर्वादः सद्यः प्रसह्य बलाद्गलदम्भसा स्रवदश्रुणा तस्या भटस्त्रियास्तस्य बध्वा एव । अस्त्रीति प्रतिषेधाभदीत्वादाड़ागमः । नेत्रयोर्ह्रितयेन प्रत्याचचक्षे प्रत्याख्याता, निराकृतेत्यर्थः । अमङ्गलेनाश्रुपातेन निष्फलीकृतेत्यवश्यं भवितव्यं भवत्येवेति भावः । 'वा लिटि' इति विकल्पान्न चक्षिङः ख्याञादेशः । अत्राश्रुपातस्य नेत्रविशेषणद्वारा आशीःप्रत्याख्याने हेतुत्वात् काव्यलिङ्गभेदः ॥ ९५ ॥

**काचित्कीर्णा रजोभिर्दिवमनुविदधे भिन्नवक्त्रेन्दुलक्ष्मी-**
**रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।**
**भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत् कम्पमापुः ।**
**प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्य्यः शशंसुः ॥९६॥**

## इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये पञ्चदशः सर्गः ॥ १५ ॥

काचिदिति । काचित् स्त्री रजोभिरार्त्तवैरङ्गसंस्कारत्यागात् पांशुभिर्वा कीर्णा, 'स्याद्रजः पुष्पमार्तवम्' इति । 'पांशुर्ना न द्वयो रजः' इति चामरः । दिवस्त्वौत्पातिकपांशुवर्षणाद्रजःकीर्णता । वक्त्रमिन्दुरिव अन्यत्र वक्त्रमिवेन्दुर्भिन्नास्तस्य लक्ष्मी यस्याः सा भिन्नवक्त्रेन्दुलक्ष्मीः । बहुवचनान्तो बहुव्रीहिः । एवमपि एकवचनान्तस्यैव लक्ष्मीशब्दस्योरःप्रभृतिषु पाठान्न तन्निमित्तः कप्प्रत्ययः । शैषिकस्तु वैभाषिक इत्यविरोधः । काचिन्नारी दिवमनु विदधेऽनुचकार, काश्चिन्नार्य्यो दिश इवाश्रीका वीतशोभाः । उद्भ्रान्तसत्त्वा उद्भ्रान्तचित्ता उद्भ्रान्तजन्तुकाश्च सत्यः । अन्तरात्मनि मध्ये च दाहं सन्तापम् । अन्यत्रौत्पातिकं प्रज्वलनं दधिरे दधुः । अन्या नार्य्यो वात्या इव वातसमूहा इव, 'शाखादिभ्यो यत्' इति यत्प्रत्ययः । प्रतिदिशं दिशि दिशि, 'अव्ययीभावे शरत्प्रभृतिभ्यष्टच्' इति समासान्तष्टच्प्रत्ययः । भ्रेमुर्बभ्रमुः । 'वा जॄभ्रमुत्रसाम्' इति विकल्पादेत्वाभ्यासलोपौ । अपरा नार्य्यो भूम्या तुल्यं भूमिवत् कम्पमापुः । इतीत्थं पार्थिवानां प्रस्थाने प्रयाणे नार्य्यो भाव्यशुभं पुरः पूर्वं शशंसुः, सूचयामासुरित्यर्थः । अत्र नारीणां भाव्यशुभसूचनस्य रजोदाहादिवाक्यार्थहेतुकं काव्यलिङ्गम् । तत्र नारीणां द्युदिगाद्युपमाभिस्तद्रजोदाहादिवन्नारीरजोदाहादीनामशुभसूचकत्वमित्युपमाकाव्यलिङ्गयोरङ्गाङ्गिभावेन सङ्करः । सञ्चारिणश्च पूर्ववद्विषादादयः सुगमाः । अत्र 'काश्चित् कीर्णा रजोभिर्दिवमनुविदधुर्भिन्नवक्त्रेन्दुलक्ष्मयो निश्रीकाः काश्चित्' इति पाठे काचित् कीर्णेत्येकवचनप्रक्रमभङ्गे दोषो नास्ति । न चैवमुपमानोपमेययोर्भिन्नवचनत्वदोषः । लोकेषु चन्द्रादिष्वेकत्व नियतेषु दोषबुद्ध्यनुदयात् । यथाह दण्डी—'न लिङ्गवचने भिन्ने न हीनाधिकतापि वा । उपमादूषणायालं यत्रोद्वेगो न धीमताम्' । इति । स्रग्धरावृत्तम्, 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणात् ॥ ९६ ॥

**इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवधमहाकाव्यव्याख्याने सर्वङ्कषाख्ये पञ्चदशः सर्गः ॥ १५ ॥**

# षोडशः सर्गः ।

दमघोषसुतेन कश्चन प्रतिशिष्टः प्रतिभानवानथ ।
उपगम्य हरिं सदस्यदः स्फुटभिन्नार्थमुदाहरद्वचः ॥ १ ॥
अभिधाय तदा तदप्रियं शिशुपालोऽनुशयं परङ्गतः ।
भवतोऽभिमनाः समीहते सरुषः कर्त्तुमुपेत्य माननाम ॥२॥

अथानन्तरसर्गे हरेश्चैद्यदूतसंवादं वर्णयति—दमघोषेत्यादि । अथ सभा-ह्वानान्तरं दमघोषसुतेन शिशुपालेन प्रतिशिष्टः प्रहितः प्रतिभानमस्यास्तीति प्रतिभानवान्, अवसरोचितोत्तरस्फुरणशक्तिमानित्यर्थः । कश्चन कश्चिद्दूतः हरिं कृष्णमुपगम्य प्राप्य सदसि सभायां स्फुटौ भिन्नार्थौ पृथगर्थौ प्रियाप्रिय-रूपौ यस्मिंस्तत् स्फुटभिन्नार्थम्, युगपदुभयार्थाभिधायकमित्यर्थः । तथैव वक्ष्यति—'उभयं युगपन्मयोदितं त्वरया सान्त्वमथेतरच्च ते' इति । अदः इदं वक्ष्यमाणं वचः उदाहरदव्याहरत् । अस्मिन् सर्गे वैतालीयाख्यं मात्रा-वृत्तम् । 'षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्र-पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः' ॥ इति लक्षणात् ॥ १ ॥

स्फुटभिन्नार्थमुदाहरद्वच इत्युक्तं तदेव चतुर्दशभिः श्लोकैरभिधत्ते—अभि-धायेत्यादि । शिशुपालस्तदार्घस्वीकारकाले तत् तादृशमप्रियमभिधाय पर-मनुशयमनुतापं गतः अभिमना उत्कण्ठितचित्तः सन् उपेत्यागत्य सरुषः समन्योर्भवतस्तव माननां पूजां कर्त्तुं समीहते, अनुनेतुमिच्छतीत्यर्थः । अयं मधुरोऽर्थः । परुषस्तु—तदा तदप्रियमभिधाय परं अनुशयं केवलं न गमव्यः, किन्तु हन्तव्यथेति दीर्घद्वेषं गतः प्राप्तः । 'रन्ध्रे शब्देऽथानुशयो दीर्घद्वेषानुतापयोः' इत्युभयत्राप्यमरः । अतएव नास्ति भीर्यस्येत्यभि निर्भीकं मनो यस्य सोऽभिमनाः निःशङ्कचित्तः सन् उपेत्य स्वयमागत्य सरुषः सकोपस्य भवतो माननां हननं कर्त्तुं समीहते । 'मानना हनने माने'

विपुलेन निपीड्य निर्दयं मुदमायातु नितान्तमुन्मनाः ।
प्रचुराधिगताङ्गनिर्वृतिं परितस्त्वां खलु विग्रहेण सः ॥ ३ ॥
प्रणतः शिरसा करिष्यते सकलैरेत्य समं धराधिपैः ।
तव शासनमाशु भूपतिः परवानद्य यतस्त्वयैव सः ॥ ४ ॥

इत्युभयत्रापि केशवः । भवन्तं हन्तुमिच्छतीत्यर्थः । 'मन स्तम्भे' इति धातोश्चौरादिकाल्लुट् णिचो लुक् । अत्र चतुर्दशश्लोक्यां परहृदयपरीक्षापराणां दूतानां प्रियाप्रिये द्वे अपि वक्तव्ये, चमत्काराय तु श्लेषभङ्ग्याभिधीयेत इति प्रियाप्रिययोर्द्वयोरपि प्रकृतत्वादभिधेयत्वाच्छब्दमात्रसाधर्म्याच्च केवलप्रकृतगोचरः श्लेषः । प्रकृताप्रकृतोभयगतमुक्तं चेच्छब्दमात्रसाधर्म्यं श्लेषोऽयमिति लक्षणात् । न चोभयगतः निन्दास्तुत्योरन्यतरगम्यतया तदुत्थापनात् । इह 'उभयं युगपन्मयोदितं त्वरया सान्त्वमथेतरच्च ते' इति वक्ष्यमाणलिङ्गादुभयोर्वाच्यत्वावगमादित्यलं प्रपञ्चेन ॥ २ ॥

विपुलेनेति । उन्मना उत्सुकचेताः स चैद्यः परितः प्रचुरं प्रभूतं यथा तथा अधिगता प्राप्ता अङ्गनिर्वृतिः सुहृत्स्पर्शकृतमङ्गसुखं येन तं त्वां विपुलेन विशिष्टपुलकेन । 'पुलः स्यात् पुलके नापि पुलन्तु विपुलेऽन्यवत्' इति विश्वः । विग्रहेण वपुषा निर्दयं गाढं निपीड्यालिङ्ग्य नितान्तं मुदमायातु खलु । परुषस्तु—उन्मना मनस्वी स चैद्यः प्रचुरेणाधिना मनोव्यथया गताङ्गनिर्वृतिं विगतशरीरसौख्यं त्वां विपुलेन महता विग्रहेण समरेण । 'विग्रहः समरे काये' इति विश्वः । निर्दयं निष्कृपं निपीड्य कृत्वा मुदमायातु ॥ ३ ॥

प्रणत इति । भूपतिः चैद्यः सकलैर्धराधिपैः समं सह एत्यागत्य शिरसा प्रणतः प्रणामं कृतवान् । कर्त्तरि क्तः । आशु तव शासनमाज्ञां करिष्यते त्वदाज्ञाकरो भविष्यति । कुतः ? यतः स चैद्योऽस्मिन्नवसरे त्वयैव परवांस्त्वदेकपरतन्त्रः । परुषस्तु—शिरसा प्रणतो नमस्कृतः । नराधिपैरिति भावः । कर्मणि क्तः । भूपतिस्तव शासनं शास्तिं शिक्षां करिष्यते यतस्त्वयैव परवान् शत्रुमान् । त्वमेक एवास्य शत्रुरवशिष्ट इति भावः । अन्यत् समम् । 'शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशास्तिषु' इति विश्वः ॥ ४ ॥

अधिवह्निपतङ्गतेजसो नियतस्वान्तसमर्थकर्म्मणः।
तव सर्व्वविधेयवर्त्तिनः प्रणतिं बिभ्रति केन भूभृतः ॥५॥
जनतां भयशून्यधीः परैरभिभूतामवलम्बसे यतः।
तव कृष्ण गुणास्ततो नरैरसमानस्य दधत्यगण्यताम् ॥ ६ ॥
अहितादनपत्रपस्त्वसन्नतिमात्रोज्झितभीरनास्तिकः।
विनयोपहितस्त्वया कुतः सदृशोऽन्यो गुणवानविस्मयः ॥ ७ ॥

प्रणामे हेतुमाह—अधीति। अधिगतं वह्निपतङ्गयोरग्निभान्वोरिव तेजो येन तस्य, तत्तुल्यतेजस इत्यर्थः। नियतस्वान्तो नियतचित्तः स चासौ समर्थकर्म्मा च। खञ्जकुञ्जवद्विशेषणसमासः। तस्य तथोक्तस्य सर्वे विधेयवर्त्तिनो वशवर्त्तिनः कर्म्मकरा यस्य तस्य तव के भूभृतः प्रणतिं नतिं न बिभ्रति, सर्वेऽपि बिभ्रतीत्यर्थः। परुषम्तु—प्रणामे हेतुमाह—अधिवह्नि अग्नौ पतङ्गस्य शलभस्येव तेजः पौरुषं यस्य तस्य। 'पतङ्गः शलभे भानौ' इति विश्वः। नियते अव्यभिचारे स्वान्ते स्वविनाशे समर्थं हेतुभूतं कर्म्म यस्य तस्य सर्व्वेषां विधेये वर्त्तते विधेयं वर्त्तयति वा सर्व्वविधेयवर्त्तिनः सर्व्वकिङ्करस्य निष्पौरुषस्य तव केन गुणेन भूभृतः प्रणतिं बिभ्रति। न केनापीत्यर्थः ॥ ५ ॥

जनतामिति। हे कृष्ण हे हरे, भयशून्यधीर्निर्भीकचित्तः सन् परैः शत्रुभिरभिभूतां जनतां जनसमूहम्। 'ग्रामजन'—इत्यादिना समूहे तल् प्रत्ययः। यतोऽवलम्बसे परिग्टह्णासि, रक्षसीत्यर्थः। ततो हेतोर्नरैरसमानस्य सर्वोत्कृष्टस्य तव गुणाः आर्त्तभूभरणादयः अगण्यतामसंख्येयतां दधति। परुषस्तु—हे मलिनात्मक, भयशून्यधीर्मूढबुद्धिः परैस्त्वदन्यैः। 'परं दूरान्यमुख्येषु परोऽरिपरमात्मनो' इत्युभत्रापि वैजयन्ती। अभिभूतामवधीरितां जनतां पशुपालनपारतन्त्र्यादिना पृथग्जनत्वम्। भावेऽर्थे तल्प्रत्ययः। यतोऽवलम्बस आश्रयसि। ततो नरैरसमानस्य, ततोऽपि हीनस्येत्यर्थः। तव गुणाः लेशतः स्वभावतोऽपीति भावः। अगण्यतामनादरणीयतां दधति ॥ ६ ॥

अहितादिति। त्वया सदृशोऽन्यो गुणवान् गुणाढ्यः कुतः ?. न कुत्रा-

**कृतगोपवधूरतेर्घ्नतो वृषमुग्रे नरकेऽपि सम्प्रति ।**
**प्रतिपत्तिरधःकृतैनसो जनताभिस्तव साधु वर्ण्यते ॥ ८ ॥**

पीत्यर्थः। कुतस्त्वं अहितादनर्थात्त्रसन्, अधर्मभीरुरित्यर्थः। अपत्रपो निस्त्रपो न भवतीत्यनपत्रपस्त्रपावान्, अकार्य्यजुगुप्सुरित्यर्थः। अतिमात्रमत्यन्तमुज्झितभीः, त्यक्तारिभय इत्यर्थः। नास्ति मतिरस्येति नास्तिकः नास्तिपरलोकः। 'अस्तिनास्तिदिष्टं मतिः' इति ठक्, स न भवतीत्यनास्तिकः, आस्तिक इत्यर्थः। विनयेनानीडत्येनोपहितो विशिष्टः, विनयवानित्यर्थः। विस्मयो विशिष्टगर्व्वो न भवतीत्यविस्मयोऽगर्व्वः। परुषस्तु—त्वया सदृशोऽन्यो गुणवान्न भवतीत्यगुणवान्निर्गुणः कृतः कुत्र, न कुत्रापीत्यर्थः। कुतः? त्वमहिताच्छत्रोस्त्रसन् भीरुः। नास्त्यपत्रपा लज्जाविशेषो यस्येत्यनपत्रपो निर्लज्जः। 'लज्जा सापत्रपान्यतः' इत्यमरः। नतिमात्रेण प्रणामेनैवोज्झितभीरपाकृतारिभयः, न तु पराक्रमेणेति भावः। अस्ति मतिरस्येत्यास्तिकोऽस्तिपरलोकः। पूर्व्ववट्ठक्, स न भवतीत्यनास्तिकः, नास्तिक इत्यर्थः। विनयो नयातीतः अपहितो हितादपेतः विस्मयो विगर्व्वो न भवतीत्यविस्मयो गर्व्वी, गर्व्वयुक्त इत्यर्थः। अत्राहितादित्यर्थश्लेषः। अन्यत्र शब्दश्लेष इत्यनयोः सङ्करः ॥ ७ ॥

कृतेति। गोप्य एव वध्वो गोपवध्वः। 'स्त्रियाः पुंवत्'—इत्यादिना पुंवद्भावः। तासु रतिः कृता येन तस्य, गोपीजनवल्लभस्येत्यर्थः। वृषं वृषभरूपिणमरिष्टाख्यमसुरं घ्नतो मारयतः। हन्तेर्लटः शत्रादेशः। अधःकृतैनसो निरस्तकल्मषस्य तवोग्रे भयङ्करे नरके नरकासुरे प्रतिपत्तिः प्रवृत्तिः, पुरुषकार इति यावत्। सम्प्रति जनताभिर्जनसमूहैः साधु वर्ण्यते। अहो महद्दुष्करं कृतमित्युपश्लोक्यते। परुषस्तु—गोपानां वधूषु रतिः कृता येन तस्य पारदारिकस्य वृषं धर्म्मं वृषभं वा घ्नतः। 'सुकृते वृषभे वृषः' इति विश्वः। अतएव कृतैनसः पापकृतः तेन उग्रे दारुणे नरके निरये अधःप्रतिपत्तिरधःप्राप्तिः। 'प्रतिपत्तिः पदप्राप्तौ पौरुषे गौरवेऽपि च' इति विश्वः। जनताभिः साधु वर्ण्यते, दुस्तरोऽस्य पापिष्ठस्य नरकपात इत्युद्घोष्यत इत्यर्थः। अत्र गोपपरदारिकोऽप्यधःकृतैना इति विरोधाभासः श्लेषेण सङ्कीर्य्यते ॥ ८ ॥

विहितापचितिर्महीभृतां द्विषतामाहितसाध्वसो बलैः।
भव सानुचरस्त्वमुच्चकैर्महतामप्युपरि क्षमाभृताम् ॥ ९ ॥
घनजालनिभैर्दुरासदाः परितो नागकदम्बकैस्तव।
नगरेषु भवन्तु वीथयः परिकीर्णा वनजैर्मृगादिभिः ॥ १० ॥
सकलापिहितस्वपौरुषो नियतव्यापदवर्द्धितोदयः।
रिपुरुन्नतधीरचेतसः सततव्याधिरनीतिरस्तु ते ॥ ११ ॥

विहितेति। सहानुचरः सानुचरः सभृत्यो महीभृता चैद्येन विहितापचितिः कृतपूजः। लोकवेदयोः सानुचरस्यैव राज्ञः पूज्यत्वप्रसिद्धेरिति भावः। अतएव बलैः सैन्यैर्द्विषतां शत्रूणामाहितसाध्वसो जनितभयः सन् महतामपि क्षमाभृतां राज्ञामुपर्युच्चकैरुन्नतस्त्वं भव सर्वोत्कर्षेण वर्त्तस्व। परुषस्तु—महीभृता चैद्येन विहितापचितिः कृतहानिः। 'भवेदपचितिः पूजाव्ययहानिषु निष्कृतौ' इति विश्वः। अतएव द्विषतां बलैराहितसाध्वसो भीषितः सन् महतां क्षमाभृतां भूधराणामुपरि सानुषु चरतीति सानुचरः स भव, चरेष्टः। अत्रापि शब्दार्थश्लेषसङ्करः ॥ ९ ॥

घनेति। तव नगरेषु वीथयो रथ्याः घनजालनिभैर्मेघसमूहकल्पैः वनजैर्वनभवैर्मृगादिभिः मृगप्रभृतिभिः। भद्रो मन्द्रो मृगश्चेत्येवं विविधैरपीत्यर्थः। नागकदम्बकैर्गजवृन्दैः परितः परिकीर्णा व्याप्ताः अत एव दुरासदा दुष्प्रवेशा भवन्तु। राज्ञा सन्धाने महैश्वर्यञ्च ते भविष्यतीत्यर्थः। परुषस्तु—घनजालनिभैः सान्द्रानायतुल्यैः। 'आनायः पुंसि जालं स्यात्' इत्यमरः। नागकदम्बकैः सर्पसङ्घैर्वनजैर्मृगादिभिर्मृगव्यालपुलिन्दप्रभृतिभिः। अथवा मृगादिभिः मृगभक्षकैः शार्दूलादिभिः दुरासदा भवन्तु। राजविग्रहादरण्यप्रायं गता भवन्त्वित्यर्थः ॥ १० ॥

सकलेति। उन्नतमुदारं धीरमविकारं चेतो यस्य तस्य ते तव रिपुः सकलैरपिहितं तिरस्कृतं स्वपौरुषं यस्य सः। नियता नित्या व्यापदो विशिष्टापदो यस्य सः। अवर्द्धितोदयोऽसम्पूरिताभ्युदयः सततव्याधिः सततरोगः। अनीतिर्नीतिरहितः एवम्विधोऽस्तु। परुषस्तु—अचेतसोऽमनस्विनः ते रिपु-

विकचोत्पलचारुलोचनस्तव चैद्येन घटामुपेयुषः।
यदुपुङ्गव बन्धुसौहृदात् त्वयि पाता ससुरो न वासवः॥ १२॥
चलितानकदुन्दुभिः पुरः सबलस्त्वं सह सारणेन तम्।
समितौ रभसादुपागतः सगदः सम्प्रतिपत्तुमर्हसि॥ १३॥

सैन्यः सकलैरपिहितस्वपौरुषः अतिरस्कृतात्मविक्रमः। 'वष्टि भागुरिरल्लो-पमवाप्योरुपसर्गयोः' इत्यल्लोपे नञ्समासः। नियतं नित्यं व्यापत् विगतापत् अवर्द्धितोदयोऽच्छिन्नोदयः। 'वृधु च्छेदने वृद्धौ' इति धातोः कर्म्मणि क्तः। उन्नतधीरुदारबुद्धिः सततव्याधिर्व्विगताधिर्म्मनोव्यथारहितः। अनीतिरीति-बाधारहितोऽस्तु। 'अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः। प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः'। अत्र सर्व्वत्र पदभङ्गेनार्थद्वयप्रतिपादनाज्जतु-काष्ठवदेकशब्दप्रतीतेः शब्दश्लेषः॥ ११॥

विकचेति। पुमान् गौरिव पुङ्गवः पुरुषर्षभः उपमितसमासः। 'गोर-तद्धितलुकि' इति समासान्तष्टच्प्रत्ययः। यदुषु पुङ्गव यदुश्रेष्ठ। 'श्रेष्ठोत्तमौ तु पुङ्गवौ' इति वैजयन्ती। चैद्येन कर्त्रा घटां घनसन्निमुपेयुषस्तव सम्बन्धीनि विकचोत्पलानि वासनार्थविहितानि तान्येव चारुलोचनानि यस्य सः। सह सुरया माध्व्या गौड्या वा ससुरः 'गौडी पैष्टी च माध्वी च विज्ञेया सा सुरा त्रिधा' इति वचनात्। अत्र क्षत्रियवैश्ययोः पैष्ट्यामिव निषेधः। नवासवो नवमद्यं नालिकेरादिकमिति सुरासवयोर्न पौनरुक्त्यम्। बन्धुसौहृदाद्बन्धौ त्वयि स्नेहात् पाता पास्यते त्वद्गृहे सह पानं करिष्यते। सम्प्रति तं सत्प्रति-पन्नत्वादिति भावः। पिबतेः कर्म्मणि लुट्। परुषस्तु—हे यदुपुङ्गव यादव-बलीवर्द, चैद्येन सह घटामुपेयुषः समराभियोगं गतस्य तव विकचोत्पल-चारुलोचनः, ससुरः सदेवो वासवोऽपि बन्धुसौहृदात्, उपेन्द्रे त्वयि सौभ्रा-त्रादित्यर्थः। पाता त्राता न। किं पुनर्म्मशका भीष्मादय इति भावः। पाते-स्तृच्। सुहृदयस्य भावः सौहृदमिति विग्रहः। युवादित्वादण्प्रत्ययः 'हृदयस्य हृल्लेख—' इति हृद्भावविधानसामर्थ्यान्न 'हृद्भग—' इत्युभयपदवृद्धिः। अत एव सौहृददौहृदशब्दाभ्यामपि हृद्भाववािति वामनः। सुहृदस्तु सौहार्दमेव। शब्दार्थश्लेषसङ्करः॥ १२॥

चलितेति। रभसाद्वर्गादुपागतः प्राप्तस्तं चैद्यं त्वं पुरश्चलितानकदुन्दुभिः

**समरेषु रिपून् विनिघ्नता शिशुपालेन समेत्य सम्प्रति।**
**सुचिरं सह सर्व्वसात्वतैर्भव विश्वस्तविलासिनीजनः॥ १४॥**
**विजितक्रुधमीडतामसौ महतान्द्रा महितम्महीभृताम्।**
**असकृज्जितसंयतं पुरो मुदितः सप्रमदं महीपतिः॥ १५॥**

पुरोगतवसुदेवः। 'वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः' इत्यमरः। सबलो बलभद्रसहितः। 'सारणेन सारणाख्येन पुत्रेण सह सगदः गदाख्येनानुजेन सहितः समितौ सभायां सम्प्रतिपत्तुं सम्भावयितुमर्हसि। सर्व्वबन्धुसमेतः प्रत्येतुमर्हसीत्यर्थः। परत्र्षस्तु—समितौ समरे रभसाद्वेगादुपागतः। 'रभसो वेगहर्षयोः'। समितिः समरे साम्ये सभायामपि सङ्गता, इत्युभयत्रापि विश्वः। तं चैद्यं पुरतश्चलिता आनकाः पटहाः, दुन्दुभयो भेर्य्यश्च यस्य सः। 'आनकः पटहोऽस्त्री स्याद्भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः। सबलः ससैन्यः। सगदः गदया कौमोदक्या सहितः सन् सहसा झटिति रणेन युद्धेन सम्प्रतिपत्तुमभियोक्तुमर्हसि। अत्रापि शब्दार्थश्लेषसङ्करः॥ १३॥

समरेष्विति। किञ्च समरेषु रिपून् विनिघ्नता, अतिशूरेणेत्यर्थः। शिशुपालेन समेत्यैक्यं प्राप्य सम्प्रति सुचिरं बहुकालं सत्वतः अपत्यानि पुमांसः सात्वता यादवाः। 'उत्सादिभ्योऽञ्'। तैः सर्व्वैः सर्व्वसात्वतैः सह विश्वस्तविलासिनीजनः शिशुपालभयनिवृत्तिविश्रब्धविलासिनीजनो भव। 'समौ विश्रम्भविश्वासौ' इत्यमरः। परत्र्षस्तु—रिपुघातिना शिशुपालेन सह समरेषु समेत्य सङ्गत्य सम्प्रत्येव सर्व्वसात्वतैः सह विश्वस्तविलासिनीजनो भव। 'विश्वस्ता विधवा समा' इत्यमरः। 'आदितश्च' इति चकारादनुक्तसमुच्चयार्थाच्छसेर्निष्ठायामिट्प्रतिषेधः। शिशूनामनुव्रतानामिवायं पालयिता नोद्धतानामिति सर्व्वथा यादवानद्यैव हनिष्यतीति भावः॥ १४॥

विजितेति। असौ महीपतिश्चैद्यः मुदितः सन् विजितक्रुधं मैत्रीबन्धान्निरस्तक्रोधं महतां महीभृतां राज्ञां महितं पूजितम्। 'मतिबुद्धि'—इत्यादिना वर्त्तमाने क्तः। तद्योगे षष्ठी। असकृद्बहुशो जिताः संयतः आजयो येन स तम्। 'समुदायः स्त्रियां संयत्समित्याजिसमिद्युधः' इत्यमरः। सप्रमदं सहर्षं त्वा त्वाम्। 'त्वामौ द्वितीयायाः' इति त्वादेशः। पुरोऽग्रे ईडतां

इति जोषमवस्थिते द्विषः प्रणिधिङ्गामभिधाय सात्यकिः ।
वदति स्म वचोऽथ चोदितश्चलितैकभ्रु रथाङ्गपाणिना ॥ १६ ॥
मधुरं बहिरन्तरप्रियं कृतिनाऽवाचि वचस्तथा त्वया ।
सकलार्थतया विभाव्यते प्रियमन्तर्बहिरप्रियं यथा ॥ १७ ॥
अतिकोमलमेकतोऽन्यतः सरसाम्भोरुहवृन्तकर्कशम् ।
वहति स्फुटमेकमेव ते वचनं शाकपलाशदेश्यताम् ॥ १८ ॥

पश्यतु । परुषस्तु—विजितक्रुधं सन्त्यक्तक्रोधं महतां महीभृतां चैद्यादीनामहितमरिमसञ्जिञ्जितश्चासौ संयतश्च । स्नातानुलिप्तवत् पूर्व्वकालेति समासः । 'बद्धो नद्धश्च संयतः' इति वैजयन्ती । सप्रमदं सस्त्रीकं त्वामिति पदच्छेदः । असकृदीक्षताम् ॥ १५ ॥

इतीति । इतीत्थम्भूतां गां वाचम् । 'अर्जुनीनेत्रदिग्बाणभूवाग्वारिषु गौर्मता' इति विश्वः । अभिधाय जोषमवस्थितम् । 'तूष्णीं जोषं भवेन्मौने' इति वैजयन्ती । द्विषः प्रणिधिं दूतं सात्यकिः शैनेयः अथ दूतवाक्यानन्तरं रथाङ्गं चक्रं पाणौ यस्य तेन रथाङ्गपाणिना हरिणा । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति पाणेः परनिपातः । चलिता प्रेरिता एका भ्रूर्यस्मिन् कर्म्मणि तत् । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । चोदितः । अस्योत्तरं देहीति भ्रूसंज्ञया प्रेरितः सन्नित्यर्थः । वचो वदति स्म अवादीत् ॥ १६ ॥

किं तद्वचस्तदेकविंशतिश्लोकैराह—मधुरमित्यादि । कृतिना कुशलेन त्वया बहिः प्रकाशे मधुरं प्रियं अन्तर्गर्भेऽप्रियं वचस्तथा तेन प्रकारेणावाचि उक्तम् । वचेः कर्म्मणि लुङि चिणि वृद्धिः । यथा येन प्रकारेण सकलार्थतया सम्पूर्णाभयार्थतया हेतुना अन्तःप्रियं बहिरप्रियं विभाव्यतेऽवधार्य्यते । अप्रियगर्भं प्रियं यदुक्तं तदस्माकन्तु प्रियगर्भमप्रियमेव प्रतीयते । इदमुक्तिचातुर्य्यं तवैवेत्यभिप्रेत्योक्तं कृतिनेति । अतो न अश्रेयमिदं वच इति भावः ॥ १७ ॥

अथवा बहिरेव प्रियं अन्तरेवाप्रियं तथापि न ग्राह्यमित्युपमया व्यनक्ति—अतीति । एकतो बहिरतिकोमलम्, अन्यतः अन्तः सरसमार्द्रं यदम्भोरुहस्य वृन्तं प्रसववन्धनं तदिव कर्कशं परुषं एकमेव ते तव वचनं ईषदसमाप्तं शाकपलाशं महापत्त्राख्यतरुपत्त्रं तत्तुल्यम् । 'शाकः पलाशसारः स्याद्वरदारु:

प्रकटं मृदु नाम जल्पतः परुषं सूचयतोऽर्थमन्तरा।
शकुनादिव मार्गवर्त्तिभिः पुरुषादुद्विजितव्यमीदृशात्॥ १९॥
हरिमर्चितवान् स भूपतिर्यदि राजस्तव कोऽत्र मत्सरः।
व्यसनाय ससौरभस्य कस्तरुसूनस्य शिरस्यसूयति॥ २०॥
सुकुमारमहो लघीयसां हृदयं तद्गतमप्रियं यतः।
सहसैव समुद्गिरन्त्यमी क्षपयन्त्येव हि तन्मनोषिणः॥ २१॥

करच्छदः। महापत्रो महाशाकः स्थिरदारुर्हनीटकः॥' इत्यभिधानरत्नमालायाम्। 'ईषदसमाप्तौ कल्पदेश्यदेशीयरः' इति देश्यप्रत्ययः। कल्पदेश्यदेशीयानि सादृश्यवाचकानीति दण्डी। तस्य भावस्तत्ता तां स्फुटं वहति। अन्तःपरुषस्य बहिर्माधुर्यं शाकपलाशवदिति भावः। अत्र शाकपलाशोपमायाः पद्मवृन्तोपमासापेक्षत्वात् सङ्करः॥ १८॥

नन्वप्रियगर्भेऽपि वाक्ये गुणग्राहिभिः प्रियमेव गृह्यतां हंसैः क्षीरमिवाम्भसीत्याशङ्क्याह—प्रकटमिति। प्रकटं प्रकाशं मृदु नाम मृदुकल्पं जल्पतः कथयतः। अन्तरान्तः परुषमनिष्टमर्थं सूचयतः ईदृशादन्तःशुद्धिशून्यात् पुरुषादीदृशः शकुनादिव बहिः शुभकरं कुर्व्वतोऽन्तरा परुषं सूचयतः पिङ्गलादिपक्षिण इव मार्गवर्तिभिः सन्मार्गवर्तिभिरध्वगैश्चोद्विजितव्यम्। नचांशतोऽपि ग्राह्यं विषसंपृक्तान्नवदखिलस्यानर्थहेतुत्वादिति भावः। 'विज इट्' इतीटः ङित्त्वान्न गुणः॥ १९॥

एवं दूतं निर्भर्त्स्य अथ चैद्यं तद्दोषोद्घाटनपूर्व्वकं भर्त्सयते—हरिमित्यादि। स भूपतिर्युधिष्ठिरो हरिमर्चितवान् यदि पूजितवांश्चेत्। अत्र हर्यर्चनेन तव राज्ञश्चैद्यस्य मत्सरः कः, निरर्थक इत्यर्थः। ससौरभस्य परिमलयुक्तस्य तरुसूनस्य। तरुग्रहणं सूनस्य साधारणताद्योतनार्थम्। शिरसि व्यसनायार्पणाय कोऽसूयति, न कोऽपीत्यर्थः। 'क्रुधद्रुह'—इत्यादिना सम्प्रदानसंज्ञा। सर्व्वत्र गुणवद्वस्तु गुणज्ञैर्बहु मन्यते, तटस्थानां किमनु वृथा सन्तापेनेति भावः। अत्र हरितरुसूनयोर्वाक्यद्वये बिम्बप्रतिबिम्बभावेनार्चाशिरोधारणरूपसमानधर्म्मनिर्देशाद्दृष्टान्तालङ्कारः॥ २०॥

अथ कथं महान् महतः पूजां सहत इत्याशङ्क्य, हरिचैद्ययोर्महदन्तरं

उपकारपरः स्वभावतः सततं सर्व्वजनस्य सज्जनः ।
असतामनिशन्तथाप्यहो गुरुहृद्रोगकरी तदुन्नतिः ॥ २२ ॥
परितप्यत एव नोत्तमः परितप्तोऽप्यपरः सुसंवृतिः ।
परवृद्धिभिराहितव्यथः स्फुटनिर्भिन्नदुराशयोऽधमः ॥ २३ ॥

मनसि निधाय सामान्यतः सुजनदुर्जनयोरन्तरं चतुर्भिराह—सुकुमारमित्यादि । लघीयसामल्पीयसां हृदयं सुकुमारं तुच्छम् । कुतः यतोऽमी लघीयांसस्तद्गतं हृदयगतमप्रियं सहसैव झटित्येव समुद्गिरन्ति । समुच्चारयन्ति मनीषिणस्तु तदप्रियं कथंचित् । सम्भाव्यमानमपीति शेषः । अन्तरेव क्षपयन्ति जरयन्ति, नतूद्गिरन्तीत्यर्थः । अहो इत्याश्चर्ये । चैद्यश्चोद्गिरति नैवं हरिरित्यहो महदन्तरमनयोरिति भावः । अतएवाप्रस्तुतात्सामान्यात्प्रस्तुतविशेषप्रतिपत्तिरूपोऽयमप्रस्तुतप्रशंसाभेदः । 'अप्रस्तुतस्य कथनात् प्रस्तुतं यत्र गम्यते । अप्रस्तुतप्रशंसेयं सारूप्यादिनियन्त्रिता' । इति लक्षणात् । आदिशब्दात्सामान्यविशेषसंग्रहः । एवमुत्तरश्लोकत्रयेऽपि द्रष्टव्यं, विशेषं तु वक्ष्यामः ॥ २१ ॥

उपकारेति । किञ्च सज्जनः स्वभावतः सततं सर्व्वजनस्योपकारपरो भवति । नतूपाधिवशात् कदाचित् कस्यचिदेवेति भावः । तथापि सर्वोपकारित्वेऽपि तदुन्नतिस्तस्य सज्जनस्योत्कर्षः असतामसाधूनामनिशं गुरुहृद्रोगकरी अत्यन्तहृदयसन्तापकारिणी । अहो आश्चर्य्यम् । 'कृञो हेतु'—इत्यादिना ताच्छील्ये टप्रत्यये 'टिड्ढाणञ्'—इत्यादिना ङीप् । हरिचैद्यावेवंभूताविति सैवाप्रस्तुतप्रशंसा ॥ २२ ॥

परितप्यत इति । किं च उत्तमः परवृद्धिभिर्न परितप्यते न व्यथत एव । उत्तमस्यापरशुभद्वेष एव नास्तीत्यर्थः । अपरो मध्यम एवेत्यर्थः । परितप्तोऽपि शोभना संवृतिः परितापगोपनं यस्य सः सुसंवृतिः । सन्तमपि परशुभद्वेषं न प्रकाशयतीत्यर्थः । अधमस्तु परवृद्धिभिराहितव्यथः उत्पादितसन्तापः तथा स्फुटं निर्भिन्नः प्रकाशितो दुराशयः परशुभद्वेषलक्षणो दुरभिप्रायो यस्य सः । परशुभद्वेषं प्रकाशयत्येवेत्यर्थः । चैद्यस्त्वधमो हरिस्तूत्तम इति प्रतीते पूर्वोक्त एवालङ्कारः ॥ २३ ॥

अनिराकृततापसम्पदं फलहीनां सुमनोभिरुज्झिताम् ।
खलतां खलतामिवासतीं प्रतिपद्येत कथं बुधो जनः ॥ २४ ॥
प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभुजे ।
अनुहुङ्कुरुते घनध्वनिं न हि गोमायुरुतानि केशरी ॥ २५ ॥
जितरोषरया महाधियः सपदि क्रोधजितो लघुर्जनः ।
विजितेन जितस्य दुर्मतेर्मतिमद्भिः सह का विरोधिता ॥ २६॥

ननु मानिनां करोत्कर्षे परद्वेषो भूषणमेवेत्याशङ्क्य नेत्याह—अनिराकृतेति । अनिराकृता अनिवारिता तापसंपत् तापातिशयो यया ताम् एकत्र सन्तापजननैकस्वभावादपरत्रासतश्छायाविरहाच्चेति भावः । तथा फलहीनाम्, एकत्र इहामुत्र चोपकारशून्यां, प्रत्युतोभयताप्यनर्थकरीं चेति भावः । अन्यत्र सर्व्वार्थरहितां सुमनोभिर्बुधैरुज्झितां, अन्यत्र पुष्पैर्वर्जिताम् । 'सुमनाः पुष्पमालत्योः स्त्री देवबुधयोः पुमान्' इति वैजयन्ती । असतीं दुष्टाम्, अन्यत्र निरुपाख्यां खलस्य भावः तां खलतां दुर्जनत्वम् । खस्य लता तां खलतां गगनलतिकामिव बुधो जनः सदसद्विवेककुशलो जनः कथं प्रतिपद्येतावलम्बेत, न कथमपीत्यर्थः । वृथा मत्सरो न कस्यापि गुण इति भावः । तथापि स खलतां प्रतिपद्यते न चैवं हरिरिति प्रतीतेः सैवाप्रस्तुतप्रशंसा खलतामिवेत्युपमया सङ्कीर्य्यते । 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति न्यायादसत्याया अपि खलतिकायाः प्रतीतिसत्यतया खलतोपमत्वप्रसिद्धिः ॥ २४ ॥

नन्वेवं यद्यनुभावो हरिः किमर्थं तथा सदसि राज्ञा निर्भर्त्स्यमानो मौनमास्थित इत्याशङ्क्य सत्यम् अनादरान्न तु कातर्य्यादित्याह—प्रतीति । केशवः शपमानाय क्रोशते । स्वरितेत्त्वादात्मनेपदम् । चेदिभूभुजे । क्रियाग्रहणात् सम्प्रदानत्वम् । प्रतिवाचं प्रत्युत्तरं नादत्त । केशरी सिंहो घनध्वनिमनुहुंकुरुते प्रतिगर्जति । गोमायुरुतानि शिवारुतानि नानुहुंकुरुते । 'स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः' इत्यमरः । महतामधमेष्ववज्ञैव नोतिरिति भावः । दृष्टान्तालङ्कारः ॥ २५ ॥

किञ्च राज्ञो हरिणा विरोधोऽपि न योग्य इत्याह—जितेति । महा-

वचनैरसतां महीयसो न खलु व्येति गुरुत्वमुद्धतैः ।
किमपैति रजोभिरौर्व्वैरवकीर्णस्य मणेर्महार्घता ॥ २७ ॥
परितोषयिता न कश्चन स्वगतो यस्य गुणोऽस्ति देहिनः ।
परदोषकथाभिरल्पकः स्वजनं तोषयितुं किलेच्छति ॥ २८ ॥
सहजान्धदृशः स्वदुर्नये परदोषेक्षणदिव्यचक्षुषः ।
स्वगुणोच्चगिरो मुनिव्रताः परवर्णग्रहणेष्वसाधवः ॥ २९ ॥

धियः सुधियो जितो रोषरयो यैस्ते तथोक्ताः । लघुरल्पो जनस्तु सपदि क्रोधजितः एवं विजितेन जितस्य, जितेन क्रोधेन जितस्येत्यर्थः । दुर्मतेर्मूर्खस्य मतिमद्भिः पण्डितैः सह विरोधिता स्पर्धा का । मूर्खपण्डितयोर्मैत्रीव स्पर्धापि न सङ्गतेत्यर्थः । मूर्खश्चायं चैद्य इत्यप्रस्तुतात् सामान्याद्विशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥ २६ ॥

नापि चैद्यप्रलापैः कृष्णस्य किञ्चिल्लाघवमित्याशयेनाह—वचनैरिति । उद्धतैर्निष्ठुरैरसतां दुर्जनानां वचनैर्महीयसो महत्तमस्य गुरुत्वं गौरवं न व्येति नापैति खलु, और्वैर्भौमैः । 'उर्वी सर्व्वंसहास्याच्च भूमौ स्याद्भूमिमात्रके' इति विश्वः । रजोभिरवकीर्णस्य छन्नस्य मणेर्महार्घता महामूल्यत्वम् । 'मूल्यं पूजाविधावर्घः' इत्यमरः । अपैति किं ? नापैत्येवेत्यर्थः । अत्र मणिमहीयसोर्वाक्यभेदेन प्रतिबिम्बकरणाद्दृष्टान्तालङ्कारः । महीयस इति सामान्याद्धरेरिति विशेषप्रतीतेरप्रस्तुतप्रशंसा चेति सङ्करः । हरिमण्योरुपमाध्वनिश्च ॥ २७ ॥

युक्तं चैतत्पारुष्यं दुरात्मनामित्याह—परीति । यस्य देहिनो जन्तोः परितोषयिता परेषामानन्दयिता स्वगतो गुणः कश्चन कश्चिदपि नास्ति अल्पकः तुच्छः, स इति शेषः । यत्तदोर्नित्यसम्बन्धात् । परदोषकथाभिरन्यजनदोषोक्तिभिः स्वजनं, न तु मध्यस्थमिति भावः । तोषयितुमिच्छति किल ईहते खलु । चैद्यस्यापि निर्गुणत्वात् परदूषणं युक्तमिति, अत एवाप्रस्तुतप्रशंसाभेदः ॥ २८ ॥

नन्वात्मनो निर्दोषत्वाभिमानादित्थं विजृम्भणमित्याशङ्क्याह—सहजेति । असाधवः खलाः स्वदुर्नये स्वदोषे, महत्यपीति भावः । सहजा स्वाभाविकी

प्रकटान्यपि नैपुणम्महत् परवाच्यानि चिराय गोपितुम् ।
विवरीतुमथात्मनो गुणान् भृशमाकौशलमार्य्यचेतसाम् ॥ ३० ॥
किमिवाखिललोककीर्त्तितं कथयत्यात्मगुणं महामनाः ।
वदिता न लघीयसोऽपरः स्वगुणं तेन वदत्यसौ स्वयम् ॥ ३१ ॥

अन्धा अपश्यन्ती दृक् येषां ते, जात्यन्धा इत्यर्थः । परदोषाणां सूक्ष्माणामपीति भावः । ईक्षणे दर्शने दिव्यचक्षुषोऽप्रतिहतदृष्टयः । किञ्च स्वगुणेषूच्चगिरः । आत्मप्रशंसायामतिप्रगल्भवाच इत्यर्थः । परवर्णग्रहणेषु परस्तुतिवचनेषु । 'स्तुतौ वर्णन्तु वाचरे' इत्यमरः । मुनिव्रता मौनव्रतिनः । 'अर्श आदिभ्यो ऽच्' । चैषम्बैवम्विध इति प्रतीतेरप्रस्तुतप्रशंसा ॥ २८ ॥

साधवस्तु नैवमित्याह—प्रकटानीति । आर्य्यचेतसां सुमनसां प्रकटान्यपि परवाच्यानि परदूषणानि चिराय गोपितुं गोपायितुम्, सम्वरितुमित्यर्थः । 'आयादय आर्द्धधातुके वा' इति विकल्पादायप्रत्ययाभावः । महन्नैपुणं कौशलम् । अथेति वाक्यारम्भे, अथात्मनो गुणान्विवरीतुं प्रकटयितुम्, आत्मप्रशंसां कर्त्तुमित्यर्थः । भृशमाकौशलमत्यन्तमकौशलम् । साधवो न परान् निन्दन्ति नवात्मानं प्रशंसन्ति । 'आत्मप्रशंसां परगर्हामिव वर्जयेत्' इत्यापस्तम्बीये निषेधस्मरणादिति भावः । 'नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्' इति विकल्पान्नञ् पूर्व्वपदस्यापि वृद्धिः । क्रुधार्थं बभूत इति विशेषप्रतीतेरप्रस्तुतप्रशंसैव ॥ ३० ॥

किमिति । किञ्च महामना महात्मा । अखिललोककीर्त्तितं स्वत एव सर्वैर्लोकैः प्रख्यातमात्मगुणं किमिव किमर्थं कथयत्येव । स्वत एव सर्वैर्लोकैः कीर्त्यमानत्वादित्यर्थः । लघीयसस्तुच्छस्य तु स्वगुणं वदिता वक्ता । वदेस्तृच्प्रत्ययः । अतएव 'न लोका'—इत्यादिना षष्ठीप्रतिषेधः । अपरोऽन्यो नास्ति तेन कारणेनासौ लघीयान् स्वगुणं स्वयमेव वदति न केवलं निषेधात् । किञ्च प्रयोजनाभावादपि महानात्मप्रशंसां न करोति, तुच्छस्तु वक्त्रन्तरासम्भवात् स्वयमेव तां प्रलपतीत्यर्थः । पूर्व्वार्द्धे पदार्थहेतुकं काव्यलिङ्गम्, उत्तरार्द्धे वाक्यार्थहेतुकं चोन्नेयम् । क्रुधार्थेयौ चैवंविधाविति विशेषप्रतीतेरप्रस्तुतप्रशंसा चेति सङ्करः ॥ ३१ ॥

विसृजन्त्यविकत्थिनः परे विषमाशीविषवन्नराः क्रुधम् ।
दधतोऽन्तरसाररूपतां ध्वनिसाराः पटहा इवेतरे ॥ ३२ ॥
नरकच्छिदमिच्छतीप्सितुं विधिना येन स चेदिभूपतिः ।
द्रुतमेतु न हापयिष्यते सदृशन्तस्य विधातुमुत्तरम् ॥ ३३ ॥
समनह्य किमङ्ग भूपतिर्यदि सन्धित्सुरसौ सहामुना ।
हरिराक्रमणेन सन्नतिं किल बिभ्रीत भियेत्यसम्भवः ॥ ३४ ॥

किञ्च महात्मानः क्रुद्धाः काले पराक्रमन्ति, दुरात्मानस्तु केवलं प्रलपन्तीत्याह—विसृजन्तीति । परे नराः सत्पुरुषाः विषमाशीविषवत् क्रूरसर्पवदित्युपमा । अविकत्थिनोऽनात्मश्लाघिन एव क्रुधं क्रोधं विसृजन्ति वमन्ति, पराक्रमन्तीत्यर्थः । अन्तरभ्यन्तरे असाररूपतां निःसाररूपतां दधतो दधानाः । 'नाभ्यस्ताच्छतुः' इति नुमभावः । इतरे जना दुर्जनाः पटहा इव ध्वनिरेव सारो बलं येषां ते ध्वनिसारा वाक्शूरा एव, न तु बाहुबलशालिन इति भावः । अत्रापीदृशौ कृष्णचैद्यावित्यप्रस्तुतसामान्यात् प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥ ३२ ॥

अभिधाय तदा तदप्रियमित्यादिना यद्दूतेन युगपत् प्रियाप्रिये अभिहिते तत्रोत्तरमाह—नरकेति । स महीपतिश्चेदिभूपतिर्येन विधिना येन प्रकारेण सन्धिना विग्रहेण वा नरकच्छिदं नरकस्याप्यन्तकम् । किमन्येषामशक्तानामिति भावः । ईप्सितुमिच्छति तस्य विधेः सदृशमुत्तरं प्रतिक्रिया स्नेहो विरोधो वा विधातुं न हापयिष्यते । अविलम्बेन विधास्यत इत्यर्थः । जहातेर्ण्यन्तात् कर्मणि लृट् विधानक्रियया अनभिधानेऽपि प्रधानभूतक्रिययाभिहितत्वादुत्तरमिति न कर्मणि द्वितीया । द्रुतं शीघ्रमेतु आगच्छतु । आगमने स्वयमेव हीयत इति भावः ॥ ३३ ॥

नन्वभिधायेत्यादौ मया सान्त्वमेव विवक्षितं न विग्रहस्तत् किमुभयाभ्यनुज्ञयेत्याशङ्क्याह—समनह्येति । अङ्गेत्यामन्त्रणे । असौ भूपतिश्चैद्योऽमुना हरिणा सह सन्धित्सुर्यदि सन्धातुमिच्छुश्चेत् । दधातेः सन्नन्तादुप्रत्ययः । किं समनह्य किमर्थं सन्नद्धवान् । ततो नायं सन्धित्सुरिति भावः । नह्यतेः

महतस्तरसा विलङ्घयन् निजदोषेण कुधीर्विनश्यति।
कुरुते न खलु स्वयेच्छया शलभानिन्धनमिद्धदीधितिः॥ ३५ ॥
यदपूरि पुरा महीपतिर्न मुखेन स्वयमागसां शतम्।
अथ सम्प्रति पर्य्यपूपुरत् तदसौ दूतमुखेन शार्ङ्गिणः॥ ३६ ॥
यदनर्गलगोपुराननस्त्वमितो वक्ष्यसि किञ्चिदप्रियम्।
विवरिष्यति तच्चिरस्य नः समयोद्वीक्षणरक्षितां क्रुधम्॥३७॥

स्वरितेत्त्वात् कर्त्तरि लुङि तङ्, 'झलो झलि' इति सकारलोपः। कृष्णभीषणार्थं सन्नाह इत्यत आह—हरिः सिंहः कृष्णश्च किलाक्रमणेनाभिभवेन या भीस्तया सन्नतिं नम्रतां बिभ्रीत बिभृयादित्यसम्भवः। सम्भवो नास्ति खल्वित्यर्थः॥ ३४ ॥

अथाक्रमणेऽनिष्टमाचष्टे—महत इति। कुधीरासन्नविनाशत्वाद्विपरीतबुद्धिमान् महतो महानुभावांस्तरसा बलेन। 'तरसी बलरंहसी' इति विश्वः। विलङ्घयन्नाक्रामन् निजदोषेण स्वापराधेनैवोल्लङ्घनरूपेण विनश्यति। तथाहि इद्धदीधितिर्दीप्तार्चिरग्निः स्वया निजयेच्छया शलभान् पतङ्गान्। 'समौ पतङ्गशलभौ' इत्यमरः। इन्धनं, दाह्यं न कुरुते खलु, किन्तु त एव निजौद्धत्यात्निपत्य दह्यन्त इत्यर्थः। इतः परं न क्षम्यत इति भावः। दृष्टान्तालङ्कारः॥ ३५ ॥

नन्वसहने शार्ङ्गिणः शतापराधसहनप्रतिज्ञाभङ्गः स्यादित्यत आह—यदिति। पुरा पूर्वं महीपतिश्चैद्यो मुखेन स्ववाचा यदागसामपराधानां शतम्। 'आगोऽपराधो मन्तुश्च' इत्यमरः। शार्ङ्गिणः कृष्णस्य स्वयं नापूरि, नापूरयदित्यर्थः। पूरयतेः कर्त्तरि लुङ् 'दीपजन'—इत्यादिना विकल्पाच्चिण्प्रत्यये चिणो लुक्। अथ स्वप्रलापानन्तरं सम्प्रतीदानीमसौ चैद्यः दूतमुखेन दूतवाचा तत् आगसां शतं पर्य्यपूपुरत् परिपूरयामास। दूतमुखत्वात् राज्ञां तेन कृष्णक्रोधावसरदानेन महदुपकृतमायुष्मतेति भावः। पूरयतेर्लुङि णौ चङ्युपधाया ह्रस्वः, अभ्यासदीर्घः॥ ३६ ॥

निगमयन् फलितमाह—यदिति। अनर्गलमविष्कम्भम्, विवृतमिति यावत्। 'तद्विष्कम्भोऽर्गलं न ना' इत्यमरः। यद्गोपुरं पुरद्वारं तदिवाननं यस्य

निशमय्य तदूर्जितं शिनेर्वचनं नप्तुरनाप्तुरेनसाम् ।
पुनरुज्झितसाध्वसो द्विषामभिधत्ते स्म वचो वचोहरः ॥ ३८ ॥
विवनक्ति न बुद्धिदुर्विधः स्वयमेव स्वहितं पृथग्जनः ।
यदुदीरितमप्यदः परैर्न विजानाति तदद्भुतं महत् ॥ ३९ ॥
विदुरेष्यदपायमात्मना परतः श्रद्दधतेऽथवा बुधाः ।
न परोपहितं न च स्वतः प्रमिमीतेऽनुभवादृतेऽल्पधीः ॥ ४० ॥

सः । वाच्यावाच्यविवेकशून्य इत्यर्थः । त्वमितः इतः परं यदप्रियं वक्ष्यसि तदप्रियं चिरस्य चिरात् प्रभृति । 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यव्ययेष्वमरः । समयोद्वीक्षणेन सम्वित्प्रतीक्षणेन रक्षितां, रुद्धामित्यर्थः । 'समयाः शपथाचारकालसिद्धान्तसम्विदः' इत्यमरः । क्रुधं क्रोधं विवरिष्यति, 'वृतो वा' इति दीर्घविकल्पः । इतः परं त्वमपि दण्ड्य एवेति भावः ॥ ३७ ॥

निशमय्येति । एनसामनाप्तुरसंस्प्रष्टुः, सत्यवादिन इति भावः । आप्नोतेस्तृच् । शिनेर्नाम्नः कस्यचिद्यादवस्य नप्तुः पौत्रस्य, सात्यकेरिति भावः । तदूर्जितमर्थयुक्तं वचनं निशमय्य श्रुत्वा । 'ल्यपि लघुपूर्व्वात्' इति णेरयादेशः । पुनर्भूयोऽप्युज्झितसाध्वसं त्यक्तभयं यथा तथा द्विषां वचो हरतीति वचोहरो दूतः । 'हरतेरनुद्यमनेऽच्' । वचोऽभिधत्ते स्म अभिहितवान् ॥ ३८ ॥

विविनक्तीति । बुद्ध्या दुर्व्विधो दरिद्रः, बुद्धिशून्य इत्यर्थः । 'निःस्वस्तु दुर्व्विधो दीनो दरिद्रो दुर्गतश्च सः' इत्यमरः । पृथक्जनः पामरजनः स्वयमेव परोपदेशं विनैवात्महितं न विविनक्ति तद्युक्तमेवेति भावः । किन्तु परैरुदीरितमुपदिष्टमप्यदो हितं न विजानातीति यत्तन्महदद्भुतम् । यतः सूक्तं न गृह्णातीति भावः ॥ ३९ ॥

अथ किमद्भुतं मूर्खेष्वित्याशयेनाह—विदुरिति । बुधा बुद्धिमन्तः एष्यन्तमागामिनमपायमनर्थमात्मना स्वयमेव । प्रकृत्यादिभ्य उपसङ्ख्यानात्तृतीया । विदुर्व्विदन्ति 'विदो लटो वा' इति विकल्पाज्जुसादेशः । अथ वा परतोऽन्यस्मादाप्ताच्छ्रद्दधते विश्वसन्ति । आप्तोक्तं गृह्णन्तीत्यर्थः, 'अदन्तरोरुपसङ्ख्यानं,

**कुशलं खलु तुभ्यमेव तद् वचनं कृष्ण यदभ्यधामहम् ।**
**उपदेशपराः परेष्वपि स्वविनाशाभिमुखेषु साधवः ॥ ४१ ॥**
**उभयं युगपन्मयोदितं त्वरया सान्त्वमथेतरच्च ते ।**
**प्रविभज्य पृथङ्मनीषया स्वगुणं यत् किल तत् करिष्यसि ॥४२**
**अथवाभिनिविष्टबुद्धिषु व्रजति व्यर्थकतां सुभाषितम् ।**
**रविरागिषु शीतरोचिषः करजालं कमलाकरेष्विव ॥ ४३ ॥**

इत्युपसर्गसंज्ञोपसङ्ख्यानाज्ज्ञातेः प्राक् प्रयोगः । अत्यत्रोर्मूढस्त्वनुभवादृते स्वानुभवं विना । 'अन्यारादितरर्ते —' इति पञ्चमी । न प्रमिमीते न जानाति । अधमस्तु स्वानुभवैकप्रमाण इत्यर्थः । अधमस्त्वमिति भावः । अनयत्राप्रस्तुतसामान्यात्प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसाभेदः ॥ ४० ॥

अतः प्रस्तुते किमायातं तत्राह—कुशलमिति । हे कृष्ण, अहं यद्वचनमभ्यधाम् । अभिधायेत्यादिना राज्ञां सन्धिर्गुणाय विग्रहस्त्वनर्थायेत्येवमवोचमित्यर्थः । तद्वचनं तुभ्यमेव कुशलं हितम् । 'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः' इति चतुर्थी । नन्वहितेषु हितोपदेशात् प्रत्ययः कथमित्याशङ्कार्थान्तरन्यासेन परिहरति । साधवः सुजनाः स्वविनाशाभिमुखेषु, प्रबलविरोधादात्मविनाशहेतुभूतकर्मप्रवृत्तेष्वित्यर्थः । परेषु शत्रुष्वपि उपदेशपरा उपदिशन्त्येव, कृपालुतयेति भावः ॥ ४१ ॥

तथाप्यर्थद्वये त्वद्वाक्ये किं ग्राह्यं तत्राह—उभयमिति । मया सान्त्वं सामादि । अथेति पक्षान्तरे । इतरदसान्त्वम् । विग्रहश्चेत्यर्थः । युगपदुदितं, त्वन्तु मनीषया बुद्ध्या पृथग्भेदेन प्रविभज्य विविच्य यत् स्वगुणं तत्र द्वयेऽपि त्वया यच्छुभोदर्कं तत् करिष्यसि किल खलु । हंसः क्षीरमिवाम्भसीति भावः ॥ ४२ ॥

अथवा सुजनस्वभावात् कृतोऽपि हितोपदेशो मूर्खेषु निष्फल इत्याह—अथवेति । अथवा अभिनिविष्टबुद्धिषु दुराग्रहग्रस्तचित्तेषु विषये सुभाषितं हितोपदेशवचनं रविरागिषु कमलाकरेषु शीतरोचिषः शीतभानोः करजालमिव व्यर्थकतां निरर्थकतां व्रजति । तस्मादलमेव त्वयि हितोपदेशचिन्तयेति भावः ॥ ४३ ॥

अनपेक्ष्य गुणागुणौ जनः स्वरुचिं निश्चयतोऽनुधावति ।
अपहाय महीशमार्चिचत् सदसि त्वां ननु भीमपूर्व्वजः ॥४४॥
त्वयि भक्तिमता न सत्कृतः कुरुराजा गुरुरेव चेदिपः ।
प्रियमांसमृगाधिपोज्झितः किमवद्यः करिकुम्भजो मणिः ॥४५॥
क्रियते धवलः खलूच्चकैर्धवलैरेव सितेतरैरधः ।
शिरसौघमधत्त शङ्करः सुरसिन्धोर्मधुजित्तमङ्घ्रिणा ॥४६॥

नन्वभिनिविष्टोऽपि सुजनैर्ब्बलादपि हिते प्रवर्त्तयितव्य इत्याशङ्क्य न शक्यत इत्याह—अनपेक्ष्येति । जनस्त्वादृशः पृथग्जनः । गुणागुणौ गुणदोषौ । 'विप्रतिषिद्धं चानधिकरणवाचि' इति विभाषया न द्वन्द्वैकवद्भावः । अनपेक्ष्या-विमृश्य निश्चयतः स्वनिश्चयादेव स्वरुचिं स्वेच्छामनुधावति, न तु स्वहित-मनुसरतीत्यर्थः । तत्र पार्थ एव प्रमाणमित्याह—भीमपूर्वजः भीमाग्रजो युधिष्ठिरः, मूर्खाग्रणीरिति भावः । महीशं चेदिपमपहाय सदसि त्वामार्चिच-दर्चितवान् खलु । अर्चयतेर्णौ चङि 'अजादेर्द्वितीयस्य', 'नन्द्राः संयोगादयः' इति रेफवर्जितस्यैकाचो द्विभावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्त-रन्यासः ॥ ४४ ॥

पार्थानादरादेव राज्ञो लाघवं ज्ञेयमित्याशङ्क्य परिहरति—त्वयीति । हे कृष्ण, त्वयि भक्तिमता प्रेमवता । कुरूणां राट् । 'सत्सूद्विष'—इत्या-दिना क्विप् । तेन कुरुराजा कुरुराजेन पार्थेन न सत्कृतो नार्चितश्चेदिपो गुरुरेव पूज्य एव । तथा हि प्रियं मांसं यस्य तेन मांसगृध्नुना मृगाधिपेन सिंहेनोज्झितस्त्यक्तः करिकुम्भजो मणिर्मुक्तामणिरवद्यो गर्ह्यः किम्? अन-वद्य एवेत्यर्थः । मूर्खानादरान्न महतां किञ्चिल्लाघवमित्यर्थः । 'कुपूयकुत्सिता-ऽवद्यखेटगर्ह्याणकाः समाः' इत्यमरः । 'अवद्यपण्य'—इत्यादिना निपातः । दृष्टान्तालङ्कारः ॥ ४५ ॥

विदुषान्तु पूज्य एव चैद्य इत्याशयेनाह—क्रियत इति । धवलो निर्म्मलो धवलैर्निर्म्मलैरेवोच्चकैरुन्नतः क्रियते खलु । सितेतरैर्मलिनैरधः क्रियते । तथा हि शङ्करः शिवः सुरसिन्धोरोघं मन्दाकिनीपूरं शिरसा अधत्त उभयोर्निर्म्मल्या-

अबुधैः कृतमानसंविदस्तव पार्थैः कुत एव योग्यता ।
सहसि प्लवगैरुपासितं न हि गुञ्जाफलमेति सोष्मताम् ॥ ४७॥
अपराधशतक्षमं नृपः क्षमयात्येति भवन्तमेकया ।
हृतवत्यपि भीष्मकात्मजां त्वयि चक्षाम समर्थ एव यत् ॥४८॥
गुरुभिः प्रतिपादितां वधूमपहृत्य स्वजनस्य भूपतेः ।
जनकोऽसि जनार्दन स्फुटं हतधर्मार्थतया मनोभुवः ॥ ४९ ॥

दिति भावः । मधुजिन्मधुशत्रुर्विष्णुस्तु तमोघमङ्घ्रिणा अधत्त । स्वयं मलिनत्वादिति भावः । अतो विशेषविदुषां राजा पूज्य एवेति भावः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४६ ॥

किञ्च यथा पार्थानादराद्राज्ञो न किञ्चिल्लाघवं तथा तदादराच्च न तं किञ्चिद्गौरवमित्याह—अबुधैरिति । अबुधैरज्ञैः पार्थैः कृते मानसंविदौ पूजातोषणे यस्य तस्य । 'संवित् स्त्रियां प्रतिज्ञायां सङ्केताचारनामसु । सम्भाषणे तोषणे च' इति विश्वः । तव योग्यता कुत एव ? न कुतोऽपीत्यर्थः । तथाहि सहसि मार्गशीर्षे । 'मार्गशीर्षे सहा मार्गः' इत्यमरः । प्लवगैरुपासितं सेवितं गुञ्जाफलं काकफलानि । जातावेकवचनम् । 'काकचिञ्चीगुञ्जे तु कृष्णला' इत्यमरः । सोष्मतामुष्णतां नैति हि । न हि पुंसां मूढपरिग्रहौ गौरवागौरवयोः प्रयोजकावित्यर्थः । अत्र कृष्णगुञ्जाफलयोर्विशेषयोरेव वाक्यभेदेन प्रतिबिम्बकरणाद्दृष्टान्तालङ्कारः ॥ ४७ ॥

यदपूरीत्यादिना यत् सात्यकिना शतापराधक्षमत्वमुक्तं तत्रोत्तरमाह—अपराधेति । नृपश्चैद्यः अपराधस्य शतक्षमं राज्ञः शतापराधसहिष्णुं भवन्तं एकया क्षमया, एकापराधसहनेनेत्यर्थः । अत्येति अतिक्रामति । अपराधकोटीनामपि तदंशेनापि साम्यासम्भवादिति भावः । तामेव क्षमां दर्शयति—त्वयि भीष्मकात्मजां रुक्मिणीं हृतवत्यपि समर्थः प्रतीकारक्षम एव सन्नपि चक्षाम क्षाम्यति स्मेति यत् तया क्षमयेत्यर्थः ॥ ४८ ॥

'राक्षसः क्षत्रियस्यैवम्' इति स्मरणाद्राक्षसोद्वाहस्य क्षात्रधर्मत्वाद्रुक्मिणीहरणे कोऽस्माकमपराधः, राज्ञो वा कात्र क्षमेत्याकाङ्क्षायामाह—गुरुभिरिति । हे जनार्दन, गुरुभिः पित्रादिभिः प्रतिपादितां राज्ञे दत्ताम् अत

अनिरूपितरूपसम्पदस्तमसो वान्यभृतच्छदच्छवेः ।
तव सर्व्वगतस्य सम्प्रति क्षितिपः क्षिप्नुरभीशुमानिव ॥ ५० ॥
क्षुभितस्य महीभृतस्त्वयि प्रशमोपन्यसनं वृथा मम ।
प्रलयोल्लसितस्य वारिधेः परिवाहो जगतः करोति किम् ॥५१॥

एव स्वजनस्य बन्धोर्भूपतेर्महाराजस्य बधूं जायामपहृतस्य हृतौ धर्म्मार्थौ येन तत् तया हृतधर्म्मार्थतया हेतुना स्फुटं मनोभुवः कामस्य जनकोऽसि। धर्म्मार्थबाधेन काममात्रनिष्ठोऽसीत्यर्थः । मायं राक्षसो विवाहः । 'हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं तथा । प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥' इति कन्याहरणस्य राक्षसत्वलक्षणात् । अयन्तु परदारापहरणे बन्धुद्रोहो राजद्रोहश्चेत्यहो पापिष्ठस्य कामान्धस्य ते परमसाहसिकत्वमिति भावः ॥४८॥

सत्यमीदृगेवाहं ततः किमित्याशङ्क्य किमन्यदधादित्याह—अनिरूपितेति । अनिरूपितरूपसम्पदः शैलूषवद्बहुरूपधारित्वादज्ञातरूपविशेषस्य अवाङ्मनसगोचररूपवैभवस्येति च गम्यते । अन्यत्र आरोपितकृष्णरूपं तमः, तेजोविशेषाभावस्तम इति च मतद्वयेऽपि प्रमाणानवधृतरूपसम्पद इत्यर्थः । अन्यभृतच्छदच्छवेः कोकिलपक्षकान्तेस्तव तमसो वा तिमिरस्येव । 'वा स्याद्विकल्पोपमयोः' इति विश्वः । सर्वगतस्य क्षितिपश्चेदिपोऽभीशुमानंशुमानिव सम्प्रतीदानीमेव क्षिप्नुः क्षेप्ता, आहन्तेत्यर्थः । शास्तासौ दुरात्मनामिति भावः । 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति क्नुप्रत्ययः । न लोका'—इत्यादिना कृद्योगे षष्ठ्या निषेधे तवेति शेषे षष्ठी । पर्य्यवसानात्तु कर्म्मत्वलाभः । 'अभीषुः प्रग्रहे रश्मौ' इत्यमरः । विश्वप्रकाशादयः सर्वेऽप्याभिधानिका मूर्धन्यान्तेषु पेठुः । लोकवेदयोस्तालव्यान्तो दृश्यते । अभीशूनां महिमानमित्यादि ॥ ५० ॥

तर्ह्यस्मदर्थं त्वया राजा सान्त्वयितव्य इत्याशङ्क्य नेत्याह—क्षुभितस्येति । त्वयि विषये क्षुभितस्यातिक्रुद्धस्य महीभृतो राज्ञो मम प्रशमोपन्यसनं शान्त्योपदेशो वृथा निष्फलः । तथा हि प्रलयोल्लसितस्य कल्पान्तक्षुभितस्य वारिधेः जगतः परिवाहो जगत्कृतो जलनिर्गममार्गः किं करोति, न किञ्चिदित्यर्थः । दृष्टान्तालङ्कारः ॥ ५१ ॥

**प्रहितः प्रधनाय माधवानहमाकारयितुं महीभृता ।**
**न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ॥ ५२ ॥**
**तदयं समुपैति भूपतिः पयसां पूर इवानिवारितः ।**
**अविलम्बितमेधि वेतसस्तरुवन्माधव मा स्म भज्यथाः ॥ ५३ ॥**
**परिपाति स केवलं शिशूनिति तन्नामनि मा स्म विश्वसीः ।**
**तरुणानपि रक्षति क्षमी स शरण्यः शरणागतान् द्विषः ॥५४॥**

तर्हि सन्धित्सुना राज्ञा किमर्थं भवानिह प्रहितस्तत्राह—प्रहित इति । प्रधनाय युद्धाय माधवान् यादवानाकारयितुमाह्वातुम् । 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्' । 'हूतिराकारणाह्वानम्' इति चामरः । महीभृता राज्ञाहं प्रहितः प्रेरितः । ननु रन्ध्रे हन्तव्याः शत्रवो नाह्वातव्या इत्यत्राह—नेति । महौजसो महावीराः परेष्वरिषु मलिम्लुचाः पाटच्चरा इव । 'पाटच्चरमलिम्लुचाः' इत्यमरः । छलात् कपटान्नापकुर्वन्ति । तस्मादाह्वानं कर्त्तव्यमिति वाक्यार्थहेतुकं काव्यलिङ्गमुपमालङ्कारसङ्कीर्णम् ॥ ५२ ॥

तदेवागमनप्रयोजनमुक्त्वा हितमुपदिशति—तदयमिति । तत्तस्मात् युद्धार्थत्वादयं भूपतिश्चैद्यः पयसां पूरः प्रवाह इवानिवारितः समुपैति । हे माधव, अविलम्बितं शीघ्रं वेतसः एधि भव । तद्वन्नम्रमात्मानं रक्षेत्यर्थः । अस्तेर्लोट् सिपि हेर्धिः 'ध्वसोरेद्धावभ्यासलोपश्च' इति एत्त्वम् । धिचेति सकारलोपः । माधव, त्वं तरुवत् महावृक्षवत् मा स्म भज्यथा मा भज्यस्व । अतः आत्मानं न विनाशयेत्यर्थः ; भजेः कर्म्मण्याशिषि लिङः (अर्थे, 'स्मोत्तरे लङ् च' इति लङ् 'न माङ्योगे' इत्यडभावः । उपमालङ्कारः ॥ ५३ ॥

ननु राज्ञि शिशुपाले यूनामफलमित्याशङ्क्याह—परिपातीति । स शिशुपालः । केवलमित्यवधारणे क्रियाविशेषणम् । शिशून् परिपातीति शिशूनेव पालयतीति तन्नामनि तस्य शिशुपालसंज्ञायां मा स्म विश्वसीः, मा विश्वासं कुर्व्वित्यर्थः । श्वसेः 'स्मोत्तरे लङ् च' इति लङि 'रुदश्च पञ्चभ्यः' इति ईडागमः । चकाराल्लुङि वा तत्र 'अस्ति सिचोऽपृक्ते' इति ईडागमः 'ह्मन्तक्षणश्वसजागृणिश्व्येदिताम्' इति वृद्धिप्रतिषेधः । 'न माङ्योगे' इत्यडभावस्तूभयत्र । किन्तु क्षमी क्षमावान् । व्रीह्यादित्वादिनिः । शरणे रक्षणे साधुः

**न विदध्युरशङ्कमप्रियं महत: स्वार्थपरा: परे कथम्।**
**भजते कुपितोऽप्युदारधीरनुनीतिं नतिमात्रकेण स:॥ ५५॥**
**हितमप्रियमिच्छसि श्रुतं यदि सन्धत्स्व पुरा न नश्यसि।**
**अनृतैरथ तुष्यसि प्रियैर्जयताज्जीव भवावनीश्वर:॥ ५६॥**
**प्रतिपक्षजिदप्यसंशयं युधि चैद्येन विजेष्यते भवान्।**
**ग्रसते हि तमोऽपहं मुहुर्ननु राहुरहमहर्पतिं तम:॥ ५७॥**

शरण्य: रक्षणक्षम:। 'तत्र साधु:' इति यत्प्रत्यय:। स शिशुपाल: शरणं रक्षिता-रमागतान् प्राप्तान्। 'शरणं गृहरक्षित्रो: शरणं रक्षणे गृहे' इत्युभयत्रापि विश्व:। द्विष: शत्रूंस्तृणान्यूनोऽपि रक्षति। अतो नि:शङ्कं शरणमागच्छेत्यर्थ:॥५४॥

ननु वयं द्रोग्धार: सोऽप्यतिक्षुभित: किल कथं न: पालयेदित्याशङ्क्याह—नेति। स्वार्थपरा: स्वार्थनिष्ठा: परे शत्रवो महतोऽधिकस्य कथमप्रियमपकारं अशङ्कं यथा तथा न विदध्यु: कुर्युरेव, कार्य्यवशादित्यर्थ:। किन्तु उदार-धीर्महामति:। 'उदारो दातृमहतो:' इत्यमर:। स राजा कुपितोऽपि नतिमात्रकेण प्रणतिमात्रकेणानुनीतिमनुनयं भजते, अनुग्रहीष्यतीत्यर्थ:। प्रणिपातप्रतीकार: संरम्भो हि महात्मनामिति भाव:॥ ५५॥

किं बहुना तवायं हितोपदेशसंग्रह इत्याशङ्क्याह—हितमिति। श्रुतम् अप्रियं हितमिच्छसि यदि। अप्रियं हितं श्रुतमाप्तादाकर्णितं ग्रहीतुमिच्छसि चेदित्यर्थ:। सन्धत्स्व राज्ञा सन्धेहि। पुरा न नश्यसि। अन्यथा विनङ्क्ष्यसी-त्यर्थ:। 'यावत् पुरानिपातयोर्लट्' इति भविष्यदर्थे लट्। अथेति पक्षान्तरे अनृतैरसत्यै: प्रियैस्तुष्यसि यदि जयताज्जयतु। 'तुह्योस्तातङाशिष्यन्यतरस्याम्' इति तोस्तातङादेश:। जीव अवनीश्वर: सार्व्वभौमो भव, तत: किमेभि: प्रियालापै:। अप्रियमपि प्रियमेव गृहाणेति भाव:॥ ५६॥

ननु कंसाद्यनेकविजयी कृष्ण: कथं विजेष्यते राज्ञेत्याशङ्क्याह—प्रति-पक्षेति। प्रतिपक्षजिदनेकारिहन्तापि भवान् संशयं संशयो नास्ति। अर्था-भावेऽव्ययीभाव:। युधि सङ्ग्रामे चैद्येन शिशुपालेन विजेष्यते, जयते: कर्म्मणि लृट्। शेषे प्रथम:। तमांस्यपहन्तीति तमोपहं सर्व्वतमोपहारिणम्। 'अपे क्लेशतमसो:' इति हन्तेर्डप्रत्यय:। अह्नां पतिमहर्पतिं सूर्य्यम्। 'अहरादीनां

अचिराज्जितमीनकेतनो विलसन् वृष्णिगणैर्नमस्कृतः ।
क्षितिपः क्षयितोद्धृतान्धको हरलीलां स विड़म्बयिष्यति ॥५८॥
निहतोन्मदटुष्टकुञ्जराद् दधतो भूरि यशः क्रमार्जितम् ।
न बिभेति रणे हरेरपि क्षितिपः का गणनास्य वृष्णिषु ॥५९॥
न तदद्भुतमस्य यन्मुखं युधि पश्यन्ति भिया न शत्रवः ।
द्रवतां ननु पृष्ठमीक्षते वदनं सोऽपि न जातु विद्विषाम् ॥६०॥

पत्यादिषूपसंख्यानम्' इति वैकल्पिको रेफादेशः । राह्वाह्वं राह्वाख्यं तमः । 'आख्याह्वे अभिधानञ्च' इत्यमरः । मुहुर्ग्रसते ननु गिलति हि । अत्र हरि-सूर्ययो राहुचैद्ययोश्च वाक्यभेदेन प्रतिबिम्बकरणाद्दृष्टान्तालङ्कारः ॥ ५७ ॥

किञ्च न भवानेक एव विजेष्यते, किन्तु सर्वैर्यादवैः सहेत्याह—अचिरा-दिति । स क्षितिपः राजा अचिरादविलम्बितमेव जितो मीनकेतनः कार्ष्णिः प्रद्युम्नः, स्मरश्च येन सः । वृष्णयो यादवभेदास्तेषां गणैरोघैर्नमस्कृतो भीत्या प्रणतः सन् । अतएव विलसन् दीप्यमानः । अन्यत्र वृष्णीति पदच्छेदः । वृष्णि उक्षणि विलसन्, वृषारूढ़ इत्यर्थः । गणैः प्रमथैर्नमस्कृतः । 'गणाः प्रमथसंख्यौघाः' इति, 'वृषा महेन्द्रे वृषभे' इति च वैजयन्ती । क्षयिता नाशिता उद्धता दृप्ता अन्धका यादवभेदाः । अन्यत्रान्धकोऽसुरो येन सः हर-लीलां शम्भुविभ्रमं विड़म्बयिष्यत्यनुकरिष्यति, अत्र हरलीलामिति सादृश्या-क्षेपान्निदर्शना श्लेषसङ्कीर्णा ॥ ५८ ॥

ननु देवासुरैरप्यजय्या यादवाः कथं राज्ञा जेष्यन्ते तत्राह—निहतेति । क्षितिपश्चेदिपो निहत उन्मदो दुष्टकुञ्जरः कुवलयापीड़ाख्यो येन तस्मात्, अन्यत्र हतानेकमत्तमातङ्गात् । अतएव क्रमार्जितं भूरि यशो दधतः हरेः कृष्णात् सिंहाच्चेति ध्वनिः । रणे न बिभेति, अस्यैतादृशश्चैद्यस्य वृष्णिषु यादवेषु, मेषेषु च । 'वृष्णिस्तु यादवे मेषे' इति विश्वः । का गणना, कृष्ण-मगणयतो यादवाः के इत्यर्थः । अत्र कुञ्जरघातिनः सिंहस्य का कथा मेषेष्वित्यर्थान्तरप्रतीतिध्वनिरेव, न श्लेषः हरेर्वृष्णिविशेषस्यापि श्लिष्टत्वात् प्रकृताप्रकृतश्लेषे तदनङ्गीकारादित्युक्तं प्राक् ॥ ५९ ॥

हरेरपि न बिभेतीत्युक्तं तदेव सम्भावयितुं तस्य पराक्रमानासर्गसमाप्ते-

प्रतनूल्लसिताचिरद्युतः शरदं प्राप्य विखण्डितायुधाः ।
दधतेऽरिभिरस्य तुल्यतां यदि नासारभृतः पयोभृतः ॥ ६१ ॥
मलिनं रणरेणुभिर्मुहुर्द्विषताङ्क्षालितमङ्गनाश्रुभिः ।
नृपमौलिमरीचिवर्णकैः खलु यस्याङ्घ्रियुगं विलिप्यते ॥ ६२॥
समराय निकामकर्कशं क्षणमाकृष्टमुपैति यस्य च ।
धनुषा सममाशु विद्विषां कुलमाशङ्कितभङ्गमानतिम् ॥ ६३ ॥

वर्णयति—नेति । युधि शत्रवो भियास्य मुखं न पश्यन्तीति यत्तन्नाद्भुतम्, कुतः सोऽपि न ईक्षते ननु खलु । द्रवतां भयात् पलायमानानां विद्विषां पृष्ठं कायपार्श्वाङ्गमीक्षते । जातु कदाचित् वदनं न ईक्षते, ननु खलु द्वयोरन्यतरमुखेष्वन्योन्यस्य मुखविलोकनासम्भवात् स्वयं विमुखानां विद्विषामभिमुखस्याप्यस्य मुखादर्शनादद्भुतमित्यर्थः । अतएव वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ६० ॥

प्रतन्विति । शरदं ऋतुं प्राप्य विखण्डितायुधाः खण्डितेन्द्रचापाः अन्यत्र शरान् ददातीति शरदस्तं शरदं शरवर्षिणं प्राप्य खण्डितशस्त्राः प्रतनूल्लसिताचिरद्युतोऽल्पस्फुरितविद्युतः अन्यत्र प्रतनूल्लसिताः स्वल्पोल्लसितास्त एवाचिरद्युतोऽस्थिरद्युतः । पयोभृतो मेघा आसारभृतः वृष्टिमन्तः न यदि शरदि वृष्टिशून्यत्वादिति भावः । सुहृद्बलशून्या इत्यर्थः । 'आसारः स्यात् प्रसरणे वेगवृष्टौ सुहृद्बले' इति वैजयन्ती, अस्यारिभिस्तुल्यतां दधते । अत्र पयोभृतामुपमानानामुपमेयभावोक्तेः प्रतीपालङ्कारः तेषामासारसम्बन्धेऽपि सम्भावनया तदसम्बन्धोक्तेरतिशयोक्तिभेदश्चेति सङ्करः ॥ ६१ ॥

विशेषकमाह—मलिनमित्यादि । मुहुरसकृत्, रणरेणुभिर्मलिनम् अत एव द्विषतामङ्गनाश्रुभिः क्षालितं । नाहत्वारीन् रणान्निवर्त्तिन इति भावः । यस्याङ्घ्रियुगं चरणयुगलम् । अथ रेणुक्षालितानां नृपाणां प्रणतानां राज्ञां मौलिमरीचयो मुकुटमणिरश्मयस्तैरेव वर्णकैर्विलेपनैश्चन्दनैः । 'चन्दने चापि वर्णकम्' इति विश्वः । विलिप्यते विशेष्यते, अत्राङ्घ्रियुगस्य विशेषणमहिम्ना स्नातानुलिप्तपुरुषसाम्यप्रतीतेः समासोक्तिः ॥ ६२ ॥

समरायेति । किञ्चेति चार्थः । निकामकर्कशमतिकठिनं, दुर्धर्ष-

तुहिनांशुममुं सुहृज्जनाः कलयन्त्युष्णकरं विरोधिनः ।
कृतिभिः कृतदृष्टिविभ्रमाः स्रजमेके भुजगं यथापरे ॥ ६४ ॥
दधतोऽसुलभक्षयागमास्तनुमेकान्तरताममानुषीम् ।
भुवि सम्प्रति न प्रतिष्ठिताः सदृशा यस्य सुरैररातयः ॥ ६५ ॥
अतिविस्मयनीयकर्म्मणो नृपतेर्यस्य विरोधि किञ्चन ।
यदमुक्तनयो नयत्यसावहितानाकुलमक्षयङ्क्षयम् ॥ ६६ ॥

मित्यर्थः । समराय सम्प्रहारायाकृष्टमाहृतमावर्जितञ्च क्षणम् आशङ्कितभङ्गं मनसोत्प्रेक्षितस्वपराजयम्, अन्यत्रातिकर्षणात् सम्भावितदलनं यस्य विद्विषां कुलमाशु धनुषा सममानतिं नम्रतामुपैति । अत्र धनुर्नमनकार्य्यस्य द्विषन्नमनस्य तत्सहभावोक्तेः कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययनिमित्तरूपातिशयोक्तिमूला सहोक्तिरलङ्कारः ॥ ६३ ॥

तुहिनेति । अमुमेवं विधं चैद्यं सुहृज्जनाः तुहिनांशुं कलयन्ति आह्लादकत्वाच्चन्द्रं मन्यन्ते । विरोधिनः उष्णकरं तपनं कलयन्ति । एकस्यानेकप्रतीतिमुपमिमीते । कृतिभिरिति । कृतिभिः कुशलैरैन्द्रजालिकादिभिः कृतदृष्टिविभ्रमा जनितदृष्टिविपर्य्यया एके नराः यथा स्रजं मालां कलयन्ति, अपरे तु भुजगं कलयन्ति । एकमेव रज्ज्वादिकमिति शेषः । उपमालङ्कारः स चैकस्य निमित्तवशाद्गृहीतृभेदात्तदस्यानेकधोल्लिखनात्मकेनोल्लेखेन सङ्कीर्य्यते ॥ ६४ ॥

दधत इति । असुलभक्षयागमाः दुर्लभदृढप्राप्तयः, अन्यत्रामरत्वाद्दुर्लभनाशयोगाः । 'निलयापचयौ क्षयौ' इत्यमरः । एकान्तरतां भयाद्विजनस्थाने निरताममानुषीं कार्श्यमालिन्यादिना पिशाचादिवत् प्रतीयमानाम्, अन्यत्रैकान्तरतां नियतसुरतां नित्यभोगाममानुषीं दिव्यां तनुं दधतो दधानाः भुवि सम्प्रति क्वचन न प्रतिष्ठिताः राज्यभ्रंशात् क्वापि स्थितिमप्राप्ताः, अन्यत्र च भुवं न स्पृशन्तीत्यर्थः । देवत्वात् यस्यारातयः सुरैः सदृशाः । अत्राप्यमुमिति पूर्वेण सम्बन्धः । श्लिष्टविशेषणेयमुपमा । श्लेष एवेत्यन्ये ॥६५॥

अतीति । अतिविस्मयनीयकर्मणोऽत्यन्तविस्मितपौरुषस्य । स्मयतेरनीयर्प्रत्ययः । यस्य नृपतेश्चैद्यस्य विरोधि चेष्टितं द्वेषिरूपं, न किञ्चिद-

चलितोर्ध्वकबन्धसम्पदो मकरव्यूहनिरुद्धवर्त्मनः ।
अतरत् स्वभुजौजसा मुहुर्महतः सङ्गरसागरानसौ ॥ ६७ ॥
न चिकीर्षति यः स्मयोद्धतो नृपतिस्तच्चरणोपगं शिरः ।
चरणं कुरुते गतस्मयः स्वमसावेव तदीयमूर्द्धनि ॥ ६८ ॥
स्वभुजद्वयकेवलायुधश्चतुरङ्गामपहाय वाहिनीम् ।
बहुशः सह शक्रदन्तिना स चतुर्दन्तमगच्छदाहवम् ॥ ६९ ॥

स्तीत्यर्थः । यस्मादमुत्तनयोऽत्यक्तनीतिमार्गोऽसौ अक्षयमविनाशि । पूर्वं केनापि क्षयं न नीतमित्यर्थः । अहितानां कुलं शत्रुजातं क्षयं नाशं नयति । नीतिपौरुषाभ्यां द्विषन्निर्मूलयितुरस्य का विरोधिवार्त्तेति भावः । अक्षयमपि क्षयं नयतीति विरोधस्य नेत्वभेदेन परिहाराद्विरोधाभासोऽलङ्कारः ॥६६॥

चलितेति ॥ असौ चैद्यश्चलिताः प्रक्रान्ता ऊर्द्धा उत्थिताः कबन्धसम्पदः शिरोहीनकलेवरसम्पद एव कबन्धसम्पद उदकसमृद्धयो येषु तान् । श्लिष्टरूपकम् । 'कबन्धं सलिले प्रोक्तमपमूर्द्धकलेवरे' इति वैजयन्ती । मकरव्यूहाः मकराकारसैन्यविन्यासाः त एव मकरव्यूहा इति श्लिष्टरूपकम् । 'व्यूहौ समूहविन्यासौ' इति वैजयन्ती । निरुद्धवर्त्मनो निरुद्धप्रवेशमार्गान् । अतएव महतो दुस्तरान् सङ्गरसागरान् समरसमुद्रान् स्वभुजौजसा निजभुजबलेनैव मुहुरसकृदतरत् । भुजेनाब्धितरणमदृष्टचरमत्यद्भुतमिति भावः । अत्र कबन्धा एव कबन्धाः मकरव्यूहा एव कच्छपादिव्यूहा इति श्लिष्टरूपकस्य सङ्गरेषु सागररूपणहेतुत्वात् केवलं श्लिष्टपरम्परितरूपकम् ॥ ६७ ॥

नेति । स्मयोद्धतो गर्वेण दुर्विनीतो नृपतिः शिरो निजोत्तमाङ्गं तस्य शिशुपालस्य चरणमुपगच्छतीति तच्चरणोपगं तत्पादगतं यो न चिकीर्षति कर्तुं नेच्छति तदीये तस्य नृपतेः सम्बन्धिनि मूर्द्धनि गतस्मयो विगर्वोऽसौ शिशुपाल एव स्वं चरणं कुरुते, निधत्त इत्यर्थः । अनम्रान् सद्यो नमयति नम्रानवतीति तात्पर्य्यम् ॥ ६८ ॥

स्वेति । स चैद्यश्चत्वार्य्यङ्गानि हस्त्यादीनि यस्यास्तां चतुरङ्गां वाहिनीं सेनामपहाय स्वभुजद्वयं केवलमेकमायुधं यस्य सः सन् शक्रदन्तिना ऐरावतेन सह, चत्वारो दन्ता यस्मिंस्तं चतुर्दन्तम् । आहवं रणं बहुशोऽगच्छत् । चतु-

अविचालितचारुचक्रयोरनुरागादुपगूढ़योः श्रिया ।
युवयोरिदमेव भिद्यते यदुपेन्द्रस्त्वमतीन्द्र एव सः ॥ ७० ॥
भृतभूतिरहीनभोगभाग्विजितानेकपुरोऽपि विद्विषाम् ।
रुचिमिन्दुदले करोत्यजः परिपूर्णेन्दुरुचिर्महीपतिः ॥ ७१ ॥

दन्तेन शक्रदन्तिना दोर्द्वयेन योद्धुं चैद्यं विना कोऽन्यः शक्त इति भावः । दन्तिनोराहवश्चतुर्दन्त इत्युक्तं न तु मनुष्यदन्तिनोरिति विरोधः, स च शक्रदन्तिनेति परिहृतः, तस्य चतुर्दन्तत्वादिति विरोधाभासः ॥ ६८ ॥

अविचालितेति । अविचालितं परैरपर्य्यासितं अतएव चारु शोभनं चक्रं सुदर्शनं, राष्ट्रञ्च ययोस्तयोः । 'चक्रं राष्ट्ररथाङ्गयोः' इति विश्वः । श्रिया कमलया, सम्पदा चानुरागादुपगूढ़योराश्लिष्टयोर्युवयोस्तव तस्य च । 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषः । इदमेव भिद्यते विशिष्यते, कर्म्मकर्त्तरि लट् । किं तदित्यत्राह—त्वमिन्द्रमुपगत उपेन्द्र इन्द्रानुजः । तदनुचर इति यावत्, स तु इन्द्रमतिक्रान्तः अतीन्द्रः । इन्द्रविजयीति यावत्, इदमेव भिद्यते इति सम्बन्धः । इन्द्रकिङ्करेन्द्रजयिनोः का साम्यकथेति भावः । अत्रोपमानात् कृष्णादुपमेयस्य चैद्यस्याधिक्याद्भेदप्राधान्यसाधर्म्योक्तेर्व्यतिरेकालङ्कारः ॥ ७० ॥

किञ्च त्वत्तोऽप्यधिको राजेत्यवाच्योऽयमर्थः यदीश्वरादप्यधिक इत्याह—भृतेति । भृता भूतिर्भस्म, सम्पच्च येन स भृतभूतिः । 'भूतिर्भस्मनि सम्पदि' इत्यमरः । अहीनां भोगिनामिनोऽहीनः शेषः तस्य भोगं कायं भजतीत्यहीनभोगभाक्, शेषभूषण इत्यर्थः । अन्यत्र अहीनमन्यूनं भोगं सुखानुभवं भजतीत्यहीनभोगभाक् । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । विद्विषां विजितानेकपुरः, विजितानेकविद्विट्पुर इत्यर्थः । एकत्र त्रिपुरविजयादन्यत्र शत्रुनगरविजयाच्चेति भावः । सापेक्षत्वेऽपि गमकत्वात् समासः । एवम्भूतोऽप्यजो हरः । 'अजा विष्णुहरच्छागाः' इत्यमरः । इन्दुदले चन्द्रखण्डे विषये रुचिमभिलाषं करोति, इन्दुदले या रुचिः शोभा तां करोति दधातीति चार्थः । सामान्यशब्देन विशेषलक्षणा । महीपतिस्तु परिपूर्णेन्दोः रुचिरिव रुचिः शोभा यस्य सः तस्मिन् रुचिरभिलाषो यस्येति च

नयति द्रुतमुद्धतिश्रितः प्रसभं भङ्गमभङ्गुरोदयः ।
गमयत्यवनीतलस्फुरद्भुजशाखं भृशमन्यमुन्नतिम् ॥ ७२ ॥
अधिगम्य च रन्ध्रमन्तरा जनयन् मण्डलभेदमन्यतः ।
खनति क्षतसंहति क्षणादपि मूलानि महान्ति कस्यचित्॥७३॥
घनपत्त्रभृतोऽनुगामिनस्तरसाकृष्य करोति कांश्चन ।
दृढमप्यपरं प्रतिष्ठितं प्रतिकूलं नितरां निरस्यति ॥ ७४ ॥

परिपूर्णेन्दुरुचिः । 'रुचिर्मयूखे शोभायामभिषङ्गाभिलाषयोः' इति विश्वः । अत्र हरः खण्डेन्दुरुचिः, राजा पूर्णेन्दुरुचिरिति व्यतिरेकः । स च रुच्योरभेदाश्रयादिति श्लेषमूलाभेदातिशयोक्त्या सङ्कीर्णः ॥ ७१ ॥

अथ कलापकमाह—नयतीति । यः तटद्रुमैः सरितामुदकस्य पूर इव भूभृतां गणैः क्रीड़तीति चतुर्थे वक्ष्यति तत् क्रीड़ाप्रकारं त्रिभिर्वर्णयति । अभङ्गुरोदयः स्थिरवृद्धिः य उद्धतिश्रित औद्धत्यभाजः । अनम्रानिति यावत्, श्रयतेः क्विप्, नृपान् द्रुमांश्चेत्यर्थः । द्रुतं शीघ्रं प्रसभं प्रसह्य भङ्गं नयति । अवनीतले स्फुरन्तौ भुजौ शाखे इव भुजशाखं यस्य तं, भुजौ प्रसार्य्य भुवि प्रणिपतितमित्यर्थः । अन्यं नृपं, द्रुमञ्च वेतसादिकं भृशमुन्नतिं गमयति ॥७२॥

अधिगम्येति । किञ्चेति चार्थः । अन्तरा मण्डलमध्ये, आलवालमध्ये च रन्ध्रमवकाशं शुषिरं चाधिगम्य, अन्यतः मण्डलस्यामात्यादिचक्रस्य भेदमुपजापं जनयन्, अन्यत्र मण्डलस्याधारदेशस्य भेदं विदारणं कुर्व्वन्नित्यर्थः । क्षता संहतिरैकमत्यं, मूलानामाश्लेषश्च यस्मिन् कर्म्मणि तद्यथा तथा क्षणात् कस्यचिद्राज्ञः, द्रुमस्य च महान्ति मूलानि मुख्याञ्जनानपि खनति तापयति, अन्यत्राद्रीनपि खनत्यवदारयति ॥ ७३ ॥

घनेति । घनानि सान्द्राणि पत्त्राणि वाहनानि, पर्णानि च बिभ्रतीति घनपत्त्रभृतः कांश्चन नृपान्द्रुमांश्च तरसा बलेन, वेगेन च । 'तरसी बलरंहसी' इति विश्वः । आकृष्यानुगामिनोऽनुचरान् करोति । दृढं यथा तथा प्रतिष्ठितं प्रतिष्ठां गतमपि । प्रतिकूलं प्रातिकूल्यभाजमपरं नृपं, द्रुमञ्च नितरां निरस्यति उत्पाट्यान्यतः क्षिपति । द्रुमपक्षे प्रतिकूलं कूले क्षिपतीति चार्थः ॥ ७४ ॥

इति पूर इवोदकस्य यः सरितां प्रावृषिजस्तटद्रुमैः।
क्वचनापि महानखण्डितप्रसरः क्रीड़ति भूभृतां गणैः॥ ७५॥

कलापकम्।

अलघूपलपङ्क्तिशालिनीः परितोरुद्धनिरन्तराम्बराः।
अधिरूढ़नितम्बभूमयो न विमुञ्चन्ति चिराय मेखलाः॥७६॥
कटकानि भजन्ति चारुभिर्नवमुक्ताफलभूषणैर्भुजैः।
नियतं दधते च चित्रकैरवियोगं पृथुगण्डशैलतः॥ ७७॥

इतीति। इतीत्थं क्वचनाप्यखण्डितप्रसरः, सर्व्वत्राखण्डितप्रवृत्तिरत्यर्थः। महान् यः शिशुपालः प्रावृषि जातः प्रावृषिजः। 'सप्तम्यां जनेर्डः' इति डप्रत्ययः। 'प्रावृट्शरत्कालदिवां जे' इत्यलुक्। 'प्रावृषिकः' इति पाठे तत्र जात इत्यर्थे 'प्रावृषष्ठक्' इति ठक्प्रत्ययः। ठस्येकः। सरितामुदकानां पूरस्तटद्रुमैरिव भूभृतां राज्ञां गणैः साधनैः क्रीड़ति। महतः कुकुरेत्यागामिश्लोके स महीपतिरित्यनेनास्य सम्बन्धः॥ ७५॥

अथ विशेषकमाह—अलघ्वित्यादि, यस्यारिस्त्रियः सम्पद्यनुभूतमापद्यप्यनुभवन्तीति वक्ष्यति तत्प्रकारमेवाह। अधिरूढ़नितम्बभूमय उन्नतश्रोणिभागाः अलघुभिरुपलानां मणीनां, पाषाणानाञ्च पङ्क्तिभिः शालन्त इति तच्छालिनीः। 'उपलौ मणिपाषाणौ' इति विश्वः। परितो रुद्धमावृतं निरन्तरं सान्द्रं सन्निहितञ्च अम्बरं वस्त्रमाकाशञ्च याभिस्ताः अधिरूढ़नितम्बभूमीराक्रान्तश्रोणिभागाः प्राप्तकटकाश्चेति विभक्तिविपरिणामः। मेखला रशनाः पर्व्वतमध्यभूमीश्च चिराय न विमुञ्चन्ति। अत्र सम्पदादिविषयत्वेनोभयेषामपि मेखलादीनां वर्ण्यत्वेन प्रकृतत्वात् केवलप्रकृतगोचरः श्लेषः॥७६॥

कटकानीति। किञ्च नवमुक्ताफलानि नूतनमौक्तिकानि भूषणानि येषां तैश्चारुभिः भुजैः कठकानि वलयानि भजन्ति, अन्यत्र नवमुक्तान्यचिरत्यक्तानि अतः अफलानि वैधव्यान्निष्फलान्याभरणानि यैस्तैर्भुजैरुपलक्षिताः कटकानि तटानि भजन्ति। किञ्चेति चार्थः। पृथुगण्डशैलतः पृथुगण्डस्थलेषु चित्रकैः पत्ररचनाभिर्नियतमवियोगं सम्यक् दधते, अन्यत्र च्युतस्थूलोपलेषु चित्रकैर्मृगविशेषैः सह वासं दधते। अत्रापि प्रकृतगोचरः श्लेषः॥ ७७॥

इति यस्य ससम्पदः पुरा यदवापुर्भवनेष्वरिस्त्रियः ।
स्फुटमेव समस्तमापदा तदिदानीमवनीध्रमूर्द्धसु ॥ ७८ ॥

विशेषकम् ।

महतः कुकुरान्धकद्रुमानतिमात्रं दववद्दहन्नपि ।
अतिचित्रमिदं महीपतिर्यदकृष्णामवनीं करिष्यति ॥ ७९ ॥
परितः प्रमिताक्षरापि सर्वं विषयं प्राप्तवती गता प्रतिष्ठाम् ।
न खलु प्रतिहन्यते कुतश्चित् परिभाषेव गरीयसी यदाज्ञा ॥८०

इतीति । यस्यारिस्त्रियः पुरा पूर्वं ससम्पदः सश्रीकाः भवनेषु सदनेषु यदवापुर्मेखलादिकमनुबभूवुः । समस्तमशेषं तदिदानीमापदा अवनीध्रमूर्द्धसु शैलशृङ्गेषु इतीत्थं स्फुटमेवावापुः । न ह्यस्य वैरिणां जीविताशेति भावः । अत्रापि यदर्थत्वोत्तरश्लोकेनान्वयः ॥ ७८ ॥

महत इति । यत्तदोर्नित्यसम्बन्धात् । स महीपतिर्महतोऽधिकान् कुकुराश्चान्धकाश्च यादवभेदास्तानेव द्रुमानतिमात्रं दववद्दवाग्निवत् । 'दवदावौ वनारण्यवह्नी' इत्यमरः । दहन्नपि अवनीमकृष्णामश्यामां करिष्यति इति यत् इदमतिचित्रम्, विरुद्धमित्यर्थः । कृष्णरहितामित्यविरोधः । अत एव विरोधाभासोऽलङ्कारः । कुकुरान्धकैः सह कृष्णं हनिष्यतीति श्लेषार्थः ॥७९॥

अथ युग्मेनाह—परित इति । प्रकर्षेण मिताक्षरापि एकत्र मितभाषितत्वादन्यत्र तु सूत्रत्वाच्चाल्पाक्षरापि सर्व्वं विषयं राष्ट्रकार्य्यं, देशञ्च परितो व्याप्तवती । सर्व्वत्र प्रवृत्तेत्यर्थः । प्रतिष्ठां प्रामाण्यं स्थितिं गता गरीयसी भूयिष्ठार्था यदाज्ञा यस्य राज्ञः शासनं परिभाषा अनियमनिवारको न्यायविशेषः सेव कुतश्चित् कुत्रापि न प्रतिहन्यते खलु न बाध्यते हि । परिभाषा ह्येकदेशे स्थिता सर्व्वशास्त्रमभिज्वलयतीति भाष्यकारः । 'इको गुणवृद्धी, इत्यादिका परिभाषा । 'सिचि वृद्धिः—' इतादिविषयः । उपमालङ्कारः । औपच्छन्दसिकं वृत्तम् ॥ ८० ॥

यामूढ़वानूढ़वराहमूर्त्तिर्मुहूर्त्तमादौ पुरुषः पुराणः।
तेनोह्यते साम्प्रतमक्षतैव क्षतारिणा सम्यगसौ पुनर्भूः॥ ८१॥

भूयांसः क्वचिदपि काममस्खलन्त-
स्तुङ्गत्वं दधति च यद्यपि द्वयेऽपि।
कल्लोलाः सलिलनिधेरवाप्य पारं
शीर्य्यन्ते न गुणमहोर्मयस्तदीयाः॥ ८२॥

यामिति। यां भुवमादौ पूर्व्वं पुराणपुरुषो विष्णुः ऊढ़वराहमूर्त्तिर्धृतवराहशरीरः स च नतु स्वरूपेणेति भावः। मुहूर्त्तं क्षणमात्रमूढवान् धृतवान्। क्षतारिणा संहृतसकलविपक्षेण अतएवैनां पुनस्तेन राज्ञा अविकृतेनेति भावः। अक्षतैव विपक्षैरनुपद्रुतैवासौ भूः साम्प्रतमद्यापि न तु मुहूर्तमिति भावः। सम्यक् यथाशास्त्रमुह्यते धार्य्यते। वहेः कर्म्मणि लिट् 'वचिस्वपि'—इत्यादिना सम्प्रसारणम्। अत्र राज्ञो विष्णोराधिक्यकथनाद्व्यतिरेकः। अत्र ध्वनिः। कश्चिद्वृद्धः स चोढ़वराहमूर्त्तिर्यामविकृतामादौ प्रथमं मुहूर्त्तमूढ़वान् परिणीतवानिति अत एव अक्षता पूर्व्वेण अक्षतयोनिका। अत एवासौ भूर्वोढुः क्षतारिणा। शौर्य्यादिगुणाढ्येनेत्यर्थः। तेन केनचिद्यूना साम्प्रतं पुनरुह्यते पुनःपुनः परिणीयते। 'सा चेदक्षतयोनिः स्यात् पुनः संस्कारमर्हति' इति स्मरणादिति भावः। सा पुनर्भूरुच्यते इति योज्यम्। 'पूनर्भूर्दिधिषूरूढ़ा द्विस्तस्या दिधिषुः पतिः' इत्यमरः। अत्राभिधायाः प्रकृतार्थ एव नियन्त्रणादप्रकृतार्थप्रतीतिर्ध्वनिरेव॥ ८१॥

भूयांस इति। द्वयेऽपि समुद्रोर्म्मयो गुणोर्मयश्चेति द्वितया अपूरर्मय इति। द्वेस्तयप् तस्य 'द्वित्रिभ्याम्'—इत्यनेनायजादेशः, 'प्रथमचरम'—इत्यादिना जसि विभाषया सर्व्वनामसंज्ञा। भूयांसो बहुतराः क्वचिदप्यस्खलन्तः, अप्रतिहतप्रसरा इत्यर्थः। कामं तुङ्गत्वं दधति यद्यपि दधत्येव। 'यद्यपीत्यवधारणे' इति केशवः। तथापीति शेषः। सलिलनिधेः समुद्रस्य कल्लोला महोर्मयः। 'अथोर्मिषु। महत्सूल्लोलकल्लोलौ' इत्यमरः। पारं तीरमवाप्य शीर्य्यन्ते विलीयन्ते। शीर्य्यतेर्दैवादिकात् कर्तरि लट्। तदीया

लोकालोकव्याहतं घर्म्मरश्मेः
शालीनं वा धाम नालं प्रसर्त्तुम् ।
लोकस्याग्रे पश्यतो धृष्टमाशु
क्रामत्युच्चैर्भूभृतो यस्य तेजः ॥ ८३ ॥

विच्छित्तिर्नवचन्दनेन वपुषो भिन्नोऽधरोऽलक्तकै-
रच्छाच्छे पतिताञ्जने च नयने श्रोण्योलसन्मेखलाः ।
प्राप्तो मौक्तिकहारमुन्नतकुचाभोगस्तदीयद्विषा-
मित्थं नित्यविभूषणा युवतयः सम्पत्सु चापत्स्वपि ॥८४॥

गुणमहोर्मयस्तु पारमवाप्य न शीर्य्यन्ते । अत्र गुणमहोर्मीणां भूयस्त्वादिति साधर्म्येण गुरुत्वेन समुद्रस्याधिक्याद्व्यतिरेकः । अनेन राज्ञोऽपि समुद्राधिक्यं व्यज्यते । प्रहर्षिणीवृत्तम् ॥ ८२ ॥

अथ युग्मेनाह—लोकालोकेत्यादि । लोक्यते आलोक्यते च पार्श्वान्तरेणेति लोकालोकः । 'लोकालोकश्चक्रवालः' इत्यमरः । विशेषणसमासः । तेन व्याहतं निरुद्धप्रसारं लोकस्यालोकेन चक्षुःप्रकाशेन व्याहतमित्यपि स्फुरति । अतएव शालीनमधृष्टम् । लज्जया भग्नधार्ष्ट्यमित्यर्थः । 'शालीनकौपीने अधृष्टाकार्ययोः' इति निपातः । इवार्थे वाशब्दः, तद्वदुत्प्रेक्षा । घर्मरश्मेर्धाम तेजः पश्यतो लोका उच्चैर्भूभृतः पर्वतान् राज्ञश्च प्रसर्तुं व्याप्तुं नालं न समर्थम् । लोकालोकव्याप्तस्य लोकाग्रे सञ्चरत्वादित्यर्थः । यस्य राज्ञस्तु तेजः पश्यतो लोकस्याग्रत एव धृष्टं केनाप्यव्याहतत्वात् प्रगल्भं सत् उच्चैर्भूभृतो राज्ञः पर्वतांश्च क्रामति व्याप्नोति । अत्राप्रतिहतप्रतापत्वेन राज्ञः सूर्य्यादाधिक्याद्व्यतिरेकः, स च द्वयोर्लोकालोकयोर्द्वयानां भूभृतामभेदाध्यवसायाच्छ्लेषमूलातिशयोक्त्युत्थापितया शालीनत्वोत्प्रेक्षया सङ्कीर्य्यते । शालिनीवृत्तम् ॥ ८३ ॥

विच्छित्तिरिति । वपुषो नवचन्दनेन विच्छित्तिर्वियोग आपदि, अन्यत्र चन्दनालेपनमिति यावत्, अधरोष्ठोऽलक्तकैर्लाक्षारागैर्भिन्नो वियुक्तः, अन्यत्र युक्तः । नयने च पतिताञ्जने गलितकज्जले अतएवाच्छाच्छे अच्छप्रकारे,

विनिहत्य भवन्तमूर्जितश्रीर्युधि सद्यः शिशुपालतां यथार्थाम् ।
रुदतां भवदङ्गनागणानां करुणान्तःकरणः करिष्यतेऽसौ ॥८५॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
षोडशः सर्गः ॥ १६ ॥

'प्रकारे गुणवचनस्य' इति द्विर्भावः, 'कर्मधारयवत्'—इति सुपो लुक्, अन्यत्र अच्छाच्छे नयने पतिताञ्जने प्राप्ताञ्जने, श्रोण्यो नितम्बाः लसन्मेखला न भवन्तीत्यलसन्मेखलाः, निर्मेखला इत्यर्थः। अन्यत्र लसन्मेखला इति पदच्छेदः। उन्नतः कुचाभोगः कुचविस्तारो मौक्तिकानां हारं हरणं प्राप्तः। अन्यत्र मुक्तादाम प्राप्तः। इत्थमुक्तरीत्या तदीयद्विषां युवतयः सम्पत्सु चापत्सु नित्यविभूषणाः। अत्रापत्सम्पदोः प्रकृताप्रकृतयोः युवतिविशेषणद्वारा वर्णनाच्छ्लेषः। शार्दूलविक्रीडितं वृत्तं, लक्षणमुक्तम् ॥ ८४ ॥

सत्यमोदृशस्ते राजा ततः किमित्याशङ्क्य तर्हि तत्त्वमाकर्णयेत्याह—विनिहत्येति। ऊर्जितश्रीरधिकैश्वर्योऽसौ राजा युधि भवन्तं सद्यो विनिहत्य हत्वा रुदतां क्रन्दतां भवदङ्गनागणानां करुणान्तःकरणः कृपाविष्टचित्तः सन् शिशुपालतां यथार्थां करिष्यते। अङ्गनागणान् प्रति तच्छिशुपालनेन निजां शिशुपालसंज्ञामन्वर्थां करिष्यतीत्यर्थः। अत्र रोदनकरुणापदार्थयोर्विशेषणगत्या क्रमात् करुणाशिशुपालनहेतुकत्वात् काव्यलिङ्गयोः सङ्करः। औपच्छन्दसिकं वृत्तम् ॥ ८५ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवधमहाकाव्यव्याख्याने सर्वङ्कषाख्ये षोडशः सर्गः ॥ १६ ॥

---

## सप्तदशः सर्गः ।

इतीरिते वचसि वचस्विनाऽमुना
युगक्षयक्षुभितमरुद्गरीयसि ।
प्रचुक्षुभे सपदि तदम्बुराशिना
समं महाप्रलयसमुद्यतं सदः ॥ १ ॥

सरागया स्रुतघनघर्म्मतोयया
कराहतिध्वनितपृथूरुपीठया ।
मुहुर्मुहुर्दशनविखण्डितोष्ठया
रुषा नृपाः प्रियतमयेव भेजिरे ॥ २ ॥

इतीति । इतीत्थममुना वचस्विना वाग्मिना । 'मनस्विना' इति पाठे मनस्विना धीरेण दूतेन युगक्षये कल्पान्ते क्षुभित उद्धतो मरुत्तद्वद्गरीयसि वचसि ईरिते सति । तदम्बुराशिना युगक्षयवर्द्धिना समं तुल्यं यथा तथा सदो हरेरास्थानं महाप्रलये सर्वसंहारे समुद्यतमुद्युक्तं सत् सपदि प्रचुक्षुभे प्रचुकोप । कल्पोद्धतमहामारुतेन महार्णव इव तद्वचनेन तत्सदः क्षुभितमासीदित्यर्थः । उपमा । रुचिरा वृत्तम् । 'चतुर्ग्रहैरिह रुचिरा जभस्जगा' इति लक्षणात् ॥ १ ॥

अथाष्टादशभिः सभाक्षोभं वर्णयति—सरागयेत्यादि । नृपा राजानः सह रागेण पाटलिम्ना, अनुरागेण च सरागया । 'तेन सहेति तुल्ययोगे' बहुव्रीहिः । स्रुतं घनं सान्द्रं घर्म्मतोयं स्वेदोदकं यस्यां सा तया कराहत्या पाणितलास्फालनेन ध्वनितं पृथु महदुरुः पीठमिव उरुपीठं यस्यां तया मुहुर्मुहुर्दशनविखण्डितोष्ठया दन्तदष्टाधरया । रुषा प्रियतमयेव भेजिरे । आविष्टोऽनाविष्टश्च रौद्रस्थायी क्रोधः प्रादुर्भूत इत्यर्थः । उपमालङ्कारः ॥२॥

अलक्ष्यत क्षणदलिताङ्गदे गदे
करोदरप्रहितनिजांसधामनि ।
समुल्लसच्छकलितपाटलोपल-
स्फुलिङ्गवान् स्फुटमिव कोपपावकः ॥ ३ ॥
अवज्ञया यदहसदुच्चकैर्बलः
समुल्लसद्दशनमयूखमण्डलः ।
रुषारुणीकृतमपि तेन तत्क्षणं
निजं वपुः पुनरनयन्निजां रुचिम् ॥ ४ ॥
यदुत्पतत्पृथुतरहारमण्डलं
व्यवर्त्तत द्रुतमभिद्रुतमुल्मुकः ।
बृहच्छिलातलकठिनांसघट्टितं
ततोऽभवद्भ्रमितमिवाखिलं सदः ॥ ५ ॥

अथ सप्तदशभिः राज्ञां क्रोधानुभावानाह—अलक्ष्यतेत्यादि । करोदरप्रहितं पाणितलास्फालितं निजमंसधाम स्वांसप्रदेशो येन तस्मिन् । अतएव क्षणाद्दलिताङ्गदे भग्नकेयूरे गदे गदाख्ये कृष्णानुजे समुल्लसद्भिरुत्पतद्भिः शकलितैः शकलीकृतैर्दलदङ्गदगलितैः पाटलोपलैः पद्मरागैः कोपपावकः स्फुलिङ्गवानिव स्फुटं व्यक्तमलक्ष्यतेत्युत्प्रेक्षा । 'त्रिषु स्फुलिङ्गोऽग्निकणः' इत्यमरः ॥३॥

अवज्ञयेति । बलो बलभद्रः समुल्लसत्समन्ततः प्रसरद्दशनमयूखमण्डलं दन्तरश्मिपटलं यस्य स सन् अवज्ञयानादरेण उच्चैरहसदिति यत् तेन हासेन रुषारुणीकृतमपि निजं वपुः तत्क्षणं तस्मिन् क्षणे । अत्यन्तसंयोगे द्वितीया । पुनर्निजां रुचिं धावल्यमेवानयत् । अत्र वपुषः स्वधावल्यत्यागेन दन्तधावल्यस्वीकारात् तद्गुणालङ्कारः । 'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाश्रयात्' इति लक्षणात् ॥ ४ ॥

यदिति । उल्मुको नाम राजा उत्पतदुल्लुठत् पृथुतरं हारमण्डलं मुक्ताकलापो यस्मिन् कर्मणि तद्यथा तथा अभिद्रुतं द्रुताभिमुखं व्यवर्त्तत विवृत्त

प्रकुप्यतः श्वसनसमीरणाहति-
स्फुटोष्मभिस्तनुवसनान्तमारुतैः ।
युधाजितः कृतपरितूर्णवीजनं
पुनस्तरां वदनसरोजमस्विदत् ॥ ६ ॥

प्रजापतिक्रतुनिधनार्थमुत्थितं
व्यतर्कयज्ज्वरमिव रौद्रमुद्धतम् ।
समुद्यतं सपदि वधाय विद्विषा-
मतिक्रुधं निषधमनौषधं जनः ॥ ७ ॥

इति द्रुतं यत् ततो विवर्त्तनादखिलं सदः बृहता शिलातलकठिनेनांसेन स्कन्धेन घट्टितं भ्रमितमिवाभवत् । विवर्त्तवेगवशीत्यादंसघट्टनाद्भ्रमितमिवाभूदित्युत्प्रेक्षा ॥ ५ ॥

प्रकुप्यत इति । प्रकुप्यतोऽतिक्रुध्यतो युधाजितो नाम राज्ञो वदनसरोजं श्वसनसमीरणस्य निःश्वासमारुतस्याहतिभिः स्फुटः प्रकट ऊष्मा उष्णत्वं येषां तैः तनुवसनान्तमारुतैः सूक्ष्मवस्त्राञ्चलवातैः कृतं परितूर्णवीजनं शीघ्रविधूननं यस्य तत्, अतिशीघ्रं वीज्यमानमपीत्यर्थः । पुनस्तरां पुनरत्यन्तम् । अव्ययादामुप्रत्ययः । अस्विदत् स्विद्यति स्म । स्विदेर्लुङि पुषादित्वादङ्प्रत्ययः । अत्रोष्मविशेषणगत्या स्वेदहेतुत्वात् काव्यलिङ्गं वीजनेऽपि स्वेद इति विरोधः । वीजिरयं चुरादिष्वन्वेषणीयः ॥ ६ ॥

प्रजेति । जनः सपदि विद्विषां वधाय समुद्यतमुद्युक्तं उद्धतं तीव्रम् अतएवातिक्रुधमधिकक्रोधं अनौषधम्, अप्रतीकारमित्यर्थः । निषधं निषधाख्यं नृपं प्रजापतिक्रतुनिधनार्थं दक्षाध्वरध्वंसनार्थमुत्थितं रुद्रस्येमं रौद्रं रुद्रसम्बन्धिनं ज्वरमिव, वीरभद्ररूपिणमित्यर्थः । व्यतर्कयत् । अत्र राज्ञोऽपि प्रजापतित्वात् पुनः प्रजापतिक्रतुनिधनार्थमुत्थितः साक्षाद्दक्षाध्वरविध्वंसी वीरभद्र इवायमित्युत्प्रेक्षितवानित्यर्थः । उपमा ॥ ७ ॥

परस्परं परिकुपितस्य पिंषतः
क्षतोर्मिकाकनकपरागपङ्किलम् ।
करद्वयं सपदि सुधन्वनो निजै-
रनारतस्रुतिभिरधाव्यताम्बुभिः ॥ ८ ॥

निराततामनलशिखोज्ज्वलां ज्वल-
न्नखप्रभाकृतपरिवेषसम्पदम् ।
अविभ्रमदृभ्रमदनलोल्मुकाकृतिं
प्रदेशिनीं जगदिव दग्धमाहुकिः ॥ ९ ॥

दुरीक्षतामभजत मन्मथस्तथा
यथा पुरा परिचितदाहधार्ष्ट्यया ।
भ्रुवं पुनः सशरममुं तृतीयया
हरोऽपि न व्यसहत वीक्षितुं दृशा ॥ १० ॥

परस्परमिति । परिकुपितस्यातिक्रुद्धस्य अतएव परस्परं पिंषतः पीड़यतः, करद्वयमित्यर्थः । सपदि सुधन्वनो राज्ञः क्षतानां पिष्टानामूर्मिकाणामङ्गुलीयकानां कनकपरागेण सुवर्णचूर्णेन पङ्किलं पङ्कवत् । पिच्छादित्वान्मत्वर्थीय इलच्प्रत्ययः । 'अङ्गुलीयकमूर्मिका' इत्यमरः । करद्वयं पाणियुग्मं निजैः करद्वयजन्यैरेवानारतस्रुतिभिरविरतस्रावैरम्बुभिः स्वेदोदकैरधाव्यताक्षाल्यत । 'धावु गतिशुद्ध्योः' इति धातोः कर्म्मणि लङ् । अत्रोर्मिकाणां करद्वयस्य च परागत्वपङ्किलत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः तयोः सङ्करः ॥ ८ ॥

निरिति । आहुकिर्नाम राजा निरायतां प्रसारितां अनलशिखाग्निज्वाला तद्वदुज्ज्वलां ज्वलन्तीभिर्नखप्रभाभिः कृता परिवेषसम्पत्परिधिशोभा यस्यास्ताम् अतएव भ्रमतोऽनलोल्मुकस्यालातस्येवाकृतिः संस्थानं यस्यास्ताम् । 'अङ्गारोऽलातमुल्मुकम्' इत्यमरः । प्रदेशिनीं जगद्दग्धुमिवेत्युत्प्रेक्षा । अविभ्रमद्भ्रमयति स्म । भ्रमेर्णौ चङ्, दूतसन्तर्जनाय भ्राम्यमाणनखप्रभापटला तर्जनी जगद्दाहाय भ्राम्यमाणालातचक्रवदलक्ष्यतेत्यर्थः ॥ ९ ॥

दुरीक्षतामिति । मन्मथः प्रद्युम्नावतारः कामस्तथा दुरीक्षतां दुर्दर्शन-

विचिन्तयन्नुपनतमाहवं रसा-
दुरः स्फुरत्तनुरुहमग्रपाणिना ।
परामृशत् कठिनकठोरकामिनी-
कुचस्थलप्रमुषितचन्दनं पृथुः ॥ ११ ॥

विलङ्घितस्थितिमभिवीक्ष्य रुक्षया
रिपोर्गिरा गुरुमपि गान्दिनीसुतम् ।
जनैस्तदा युगपरिवर्त्तवायुभि-
र्विवर्त्तिता गिरिपतयः प्रतीधिरे ॥ १२ ॥

त्वम् । ईचतेः खलन्तात् तल्प्रत्ययः । अभजत, यथा हरोऽपि पुरा पूर्व्व-जन्मनि परिचितमभ्यस्तं दारुधार्ष्ट्यं दहनसाहसं यस्यास्तया तृतीयया दृशा सशरममुं मन्मथं ध्रुवं पुनर्वीक्षितुं न व्यसहत न शक्तः । 'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जां', 'सिवादीनां वाड्व्यवायेऽपि' इति विकल्पान्न षत्वम् । अनयोर्भ्रेन्या रुद्रस्यापि भीषणः किमुतान्येषामिति वस्तु व्यज्यते ॥ १० ॥

विचिन्तयन्निति । पृथुर्नाम राजा उपनतं प्राप्तमाहवं युद्धं रसाद्रणरागाद्विचिन्तयन् करोति ध्यायन् कठिनेन कर्कशेन कठोरेण प्रवृद्धेन कामिन्याः कुचस्थलेन प्रमुषितमपहृतं चन्दनं यस्य तत् । एतेनास्य सुरतसमरयोः समरसत्वं व्यज्यते, अतएव स्फुरत्तनुरुहमुदञ्चत् पुलकमुरः अग्रश्चासौ पाणिश्चेति समानाधिकरणसमासः । अतएव हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदयोरिति वामनः । तेनाग्रपाणिना पाणितलेन परामृशत् परामृष्टवान् । रणकण्डूलपाणित्वादिति भावः । अतएव यदन्येषां रोषजनकं दूतवाक्यं तदागामिरणकारणतयास्य हर्षहेतुरिति श्लोकार्थः ॥ ११ ॥

विलङ्घितेति । गुरुं स्वभावतो धीरमपि सन्तं रुक्षया परुषया रिपोर्गिरा दूतवाचा विलङ्घितस्थितिमुल्लङ्घितमर्यादम् । क्रोधातुल्यादि विकुर्वाणमित्यर्थः । गान्दिनीसुतमक्रूरमभिवीक्ष्य जनैस्तदा अक्रूरविक्रियालोकनसमये युगपरिवर्त्तवायुभिः कल्पान्तवातैर्विवर्त्तिताः स्थानादुच्चालिता गिरि-

विवर्त्तयन् मदकलुषीकृते दृशौ
कराहतक्षितिकृतभैरवारवः ।
क्रुधा दधत्तनुमतिलोहिनीमभूत्
प्रसेनजिद् गज इव गैरिकारुणः ॥ १३ ॥

सकुङ्कुमैरविरलमम्बुबिन्दुभि-
र्गवेषणः परिणतदाड़िमारुणैः ।
स मत्सरस्फुटितवपुर्विनिःसृतै-
र्बभौ चिरं निचित इवासृजां लवैः ॥ १४ ॥

अनयोऽद्रय: प्रतीयिरे विश्वसिरे, अक्रूरविक्रियादर्शनाद्गिरिचलनमपि युगान्ते सम्भावितमेवेति जनैर्विश्वस्तमित्यर्थः । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । प्रतिपूर्व्वादिणः कर्म्मणि लिट् । अत्र कल्पान्ते गिरिचलन-क्रियाकल्पेयमक्रूरविक्रियेति वाक्यभेदेन सादृश्याक्षेपान्निदर्शनालङ्कारः, तेना-क्रूरस्य लोकोत्तरं धैर्य्यं नैसर्गिकमिति वस्तु व्यज्यते ॥ १२ ॥

विवर्त्तयन्निति । मदो मद्यविकारो दानञ्च । 'मदो मद्येभदानयोः' इति विश्वः । तेन कलुषीकृते आकुलीकृते दृशौ विवर्त्तयन् घूर्णयन् करेण पाणिना शुण्डादण्डेन चाहतायां क्षितौ भूमौ कृतो भैरवारवो भयङ्करध्वनि-र्येन सः, क्रोधात् मध्वानं करेण क्षितिमाघ्नन्नित्यर्थः । क्रुधा क्रोधेन अति-लोहिनीमतिलोहिताम् । 'वर्णादनुदात्तात्तोपधात्तो नः' इति विकल्पात् ङीप् तकारस्य च नकारः । तनुं वपुर्दधत् प्रसेनजिन्नाम राजा गैरिकारुणो धातुरक्तो गज इवाभूत्, तद्वदलक्ष्यतेत्यर्थः ॥ १३॥

सकुङ्कुमैरिति । स प्रसिद्धो गवेषणो नाम राजा सकुङ्कुमैः सर्व्वाङ्गीण-काश्मीरजलेपैरित्यर्थः । अतएव परिणतदाड़िमारुणैः परिपक्वदाड़िमबीज-रक्तैरम्बुबिन्दुभिः क्रोधसात्त्विकैः, स्वेदबिन्दुभिरित्यर्थः । मत्सरेणान्तः सम्भृ-तेनात्युत्कटवैरेण स्फुटितान् निर्भिन्नाद्वपुषो विनिःसृतैरसृजां लवैरसृग्बिन्दु-भिरविरलं निरन्तरं निचितो व्याप्त इव चिरं बभौ, उत्प्रेक्षा ॥ १४ ॥

ससम्भ्रमं चरणतलाभिताड़न-
स्फुटन्मही विवरवितीर्णवर्त्मभिः ।
रवेः करैरनुचिततापितोरगं
प्रकाशतां शिनिरनयद्रसातलम् ॥ १५ ॥

प्रतिक्षणं विधुवति शारणे शिरः
शिखिद्युतः कनककिरीटरश्मयः ।
अशङ्कितं युधमधुना विशन्त्वमी
क्षमापतीनिति निरराजयन्निव ॥ १६ ॥

दधौ चलत्पृथुरसनं विवक्षया
विदारितं विततबृहद्भुजालतः ।
विदूरथः प्रतिभयमास्यकन्दरं
चलत्फणाधरमिव कोटरं तरुः ॥ १७ ॥

ससम्भ्रममिति । शिनिः सात्यकेः पितामहः ससम्भ्रमं सत्वरं चरणतलाभिताड़नेन पादतलाभिघातेन स्फुटन्त्या दहन्त्या मह्या विवरैश्छिद्रैर्वितीर्णवर्त्मभिर्दत्तमार्गैः, मत्प्रसरणैरित्यर्थः । रवेः करैरनुचितं पूर्व्वमपरिचितमिदं यथा तथा तापिताः सन्तापं गमिता उरगा यस्मिंस्तत् रसातलं प्रकाशतां प्रकटत्वमनयत् । अत्र महीरविकरोरगरसातलानां क्रमेण स्फुटनान्तःप्रवेशतापप्रकाशनैरसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः पादाहननैरमानुषीं तीव्रतां व्रजति स्मेति ध्वनिः ॥ १५ ॥

प्रतीति । शारणे नाम राज्ञि प्रतिक्षणं शिरो विधुवति क्रोधात् कम्पयति सति । धुवस्तौदादिकात्लटः शत्रादेशः, 'अचि श्नुधातु'—इत्यादिनोवङादेशः । शिखिवद्द्योतन्त इति शिखिद्युतोऽग्निप्रभाः । क्विप् । कनककिरीटरश्मयो नीराजनकर्त्तारः अमी भूपाः अधुना अशङ्कितं निःशङ्कं युधमाजिम् । 'समित्याजिसमिद्युधः' इत्यमरः । विशन्त्विति क्षमापतीन् निरराजयन्निव नीराजयन्ति स्मेवेत्युत्प्रेक्षा । नीराजनात् स्याद्विजय इत्यागमः ॥१६॥

दधाविति । वितते विस्तृते बृहत्यौ भुजे लते इव यस्य स विदूरथो नाम

समाकुले सदसि तथापि विक्रियां
मनोऽगमन्न मुरभिदः परोदितैः ।
घनाम्बुभिर्बहुलितनिम्नगाजलै-
र्जलं न हि व्रजति विकारमम्बुधेः ॥ १८ ॥

परानमी यदपवदन्त आत्मनः
स्तुवन्ति च स्थितिरसतामसाविति ।
निनाय नो विकृतिमविस्मितः स्मितं
मुखं शरच्छशधरमुग्धमुद्धवः ॥ १९ ॥

राजा । विवक्षया किमपि वक्तुमिच्छया विदारितं व्यात्तं अतएव चलन्ती पृथुर्महती रसना जिह्वा यस्मिंस्तम् । 'रसज्ञा रसना जिह्वा' इत्यमरः । प्रतिभयं भयङ्करमास्यं कन्दर इवास्यकन्दरस्तम् । 'दरी तु कन्दरो वा स्त्री' इत्यमरः । चलन् फणाधरः फणी यस्मिंस्तत्कोटरमिव । 'निष्कुहः कोटरं वा ना' इत्यमरः । ददर्श । श्रौती पूर्णोपमा ॥ १७ ॥

समाकुल इति । परोदितैः शत्रुवाक्यैः सदसि आस्थाने तथा समाकुले क्षुभितेऽपि मुरभिदो हरेर्मनो विक्रियां क्षोभं नागमत् । तथाहि बहुलितानि बहुलीकृतानि क्षोभितानि निम्नगाजलानि यैस्तैर्घनाम्बुभिर्मेघोदकैरम्बुधेर्जलं विकारं न व्रजति । यथा वर्षोदकैर्नद्यः क्षुभ्यन्ति न समुद्रस्तद्वदिति भावः । दृष्टान्तालङ्कारः ॥ १८ ॥

परानिति । अमी खलाः परानन्यानपवदन्ते । 'अपाद्वदः' इत्यात्मनेपदम् । आत्मनः स्वानि स्तुवन्ति चेति यत असावसतां खलानां स्थितिः प्रकृतिरिति । इति मत्वेत्यर्थः । गम्यमानार्थत्वादप्रयोगः । अन्यथा पौनरुक्त्यमित्यालङ्कारिकाः । विस्मितो न भवतीत्यविस्मितो दूतप्रलापैर्विस्मयं न गतः उद्धवः । स्मितं स्मेरम् । उभयत्र कर्त्तरि क्तः । अतएव शरच्छशधरमुग्धं शरदिन्दुसुन्दरमित्युपमा । मुखं विकृतिं न निनाय न प्रापयामास । न हि महतां निन्दा स्तुतिर्वा विकारकारणमिति भावः ॥ १९ ॥

निराकृते यदुभिरिति प्रकोपिभिः
स्पशे शनैर्गतवति तत्र विद्विषाम् ।
मुरद्विषः स्वनितभयानकानकं
बलं क्षणादथ समनह्यताजये ॥ २० ॥

मुहुः प्रतिस्खलितपरायुधा युधि
स्थवीयसीरचलनितम्बनिर्भराः ।
अदंशयन्नरहितशौर्यदंशना-
स्तनूरयं नय इति वृष्णिभूभृतः ॥ २१ ॥

दुरुद्वहाः क्षणमपरैस्तदन्तरे
रणश्रवादुपचयमाशु बिभ्रति ।
महीभुजां महिमभृतां न संममु-
र्मुदोऽन्तरा वपुषि बहिश्च कञ्चुकाः ॥ २२ ॥

निराकृत इति । तत्र सदसि इतीत्थं प्रकोपिभिरभितक्रुद्धैर्यदुभिः विद्विषां स्पशे चरे । 'अपसर्पश्चरः स्पशः' इत्यमरः । निराकृते धिक्कृते शनैर्गतवति गच्छति सति । सागसोऽपि दूतस्यावध्यत्वादिति भावः । अथ दूतगमनानन्तरं स्वनितेन ध्वनिना भयानका भयङ्करा आनकाः पटहा यस्मिंस्तत् मुरद्विषो बलं क्षणादाजये युद्धाय समनह्यत सन्नद्धम् ॥ २० ॥

मुहुरिति । वृष्णिभूभृतो यादवनरेन्द्राः मुहुरसकृद्युधि प्रतिस्खलितपरायुधाः भग्नप्रतिपक्षायुधाः स्थवीयसीः स्थूलतराः । पराक्रमानुरूपप्रकर्षवतीरित्यर्थः । 'स्थूलदूर—' इत्यादिना पूर्वस्य गुणलोपौ । अचलनितम्बनिर्भरा अद्रिकटकनिविडाः, अन्तःसारवतीरित्यर्थः । अरहितमव्यक्तं शौर्यमेव दंशनं वर्म यासां तास्तनूर्देहान् अयं नय इति वर्मधारणं नीतिरिति हेतोः न तु भयादिति भावः । अदंशयन्नवर्मयन् । दंशेरनुदात्तेत्त्वात् परस्मैपदं चिन्त्यमित्याहुः । अतएव भट्टमल्लः—'संवर्मयति संनह्यत्यात्मने सज्जतीत्यमी । सन्दंशते दंशयते संनाह्हे पदपञ्चकम् ॥' इति । केचित्तु चुरादिषूभयपदिषु पठन्ति । अत्र साभिप्रायविशेषणत्वात् परिकरालङ्कारः ॥ २१ ॥

दुरुद्वहा इति । महिमभृतामैश्वर्यवतां महीभुजां राज्ञां सम्बन्धिनि

सकल्पनं द्विरदगणं वरूथिन-
स्तुरङ्गिणो जयनयुजश्च वाजिनः ।
त्वरायुजः स्वयमपि कुर्वतो नृपाः
पुनः पुनस्तदधिकृताननत्वरन् ॥ २३ ॥
युधे परैः सह दृढबद्धकक्षया
कलक्वणन्मधुपकुलोपगीतया ।
अदीयत द्विपघटया सवारिभिः
करोदरैः स्वयमथ दानमक्षयम् ॥ २४ ॥

रणश्रवाद्युद्धश्रवणादाशु शीघ्रमुपचयं वृद्धिं बिभ्राणि वपुषि अपरैरन्यैः क्षणं क्षणमपि दुरुद्वहा दुर्भरा मुदः सन्तोषाः अन्तरा अन्तराले न संममुः । बहिः कञ्चुकाश्च न संममुः न मान्ति स्म, नावर्त्तन्तेत्यर्थः । पूर्वत्र आधेयाधिक्या-दुत्तरत्राधाराधिक्यादिति विवेकः । अत्र मुदां कञ्चुकानाञ्च प्रकृतानामेव विशेषणसाम्यादौपम्यगम्यतायां केवलप्रकृतास्पदा तुल्ययोगिता ॥ २२ ॥

सकल्पनमिति । द्विरदगणं सह कल्पनया सकल्पनं यथोचितमन्नाह-सहितम् 'कल्पना सज्जना समे' इत्यमरः । वरूथो रथगुप्तिरेषामस्तीति वरूथिनो रथान् । 'रथगुप्तिर्वरूथो ना' इत्यमरः । तुरङ्गिणोऽश्वयुक्तान् वाजिनोऽश्वाञ्जयनयुजः पल्ययनादिसन्नाहसंयुक्तान् । सम्पदादिभ्यः क्विप् । 'जयनः स्यात्तुरङ्गादिसन्नाहे विजयेऽपि च' इति विश्वः । स्वयं त्वरायुजः त्वरायुक्तान् स्वतः कुर्वतोऽपि, स्वत एव त्वरया कुर्वाणानपीत्यर्थः । तदधि-कृतान् हस्त्यादिषु नियुक्तपुरुषान् नृपाः पुनःपुनरतत्वरन् त्वरयन्ति स्म । तेषां तथा रणौत्सुक्यादिति भावः । त्वरेर्णौ चङि 'अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्' इत्यभ्यासस्याकारः ॥ २३ ॥

युध इति । अथ परैः सह युधे युद्धाय दृढबद्धा कक्षा मध्यबन्धनं यस्या-स्तया । 'कक्षा बृहतिकायां स्यात्काञ्च्यां मध्येभबन्धने' इति विश्वः, अन्यत्र दृढोद्योगयेत्यर्थः । कलं क्वणता मधुपकुलेनालिगणेनोपगीतया बन्दिमागध-स्तुतया चेति गम्यते । द्विपघटया कर्त्र्या स्वयं सवारिभिः सोदकैः करोदरैः पुष्कराग्रैः पाणितलाग्रैश्चाक्षयमपरिमितं दानं मदः अदीयत, दानं द्रव्यं

सुमेखलाः सिततरदन्तचारवः
समुल्लसत्तनुपरिधानसम्पदः ।
रणैषिणां पुलकभृतोऽधिकन्धरं
ललम्बिरे सदसिलताः प्रिया इव ॥२५ ॥

मनोहरैः प्रकृतिमनोरमाकृति-
र्भयप्रदैः समितिषु भीमदर्शनः ।
सदैवतैः सततमथानपायिभि-
र्निजाङ्गवन्मुरजिदसेव्यतायुधैः ॥ २६ ॥

अवारितङ्गतमुभयेषु भूरिशः
क्षमाभृतामथ कटकान्तरेष्वपि ।
मुहुर्युधि क्षतसुरशत्रुशोणित-
प्लुतप्रधिं रथमधिरोहति स्म सः ॥ २७ ॥

चादीयत दत्तम् । अत्र प्रस्तुतगजघटाविशेषणसाम्येनाप्रस्तुतदानकर्तृप्रतीतेः समासोक्तिरलङ्कारः ॥ २४ ॥

सुमेखला इति । शोभना मेखला बन्धनसूत्राणि काञ्चश्च यासां ताः सुमेखलाः । 'मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोः' इति विश्वः । सिततरैर्दन्तैर्दन्तमयत्सरुभिर्दशनैश्च चारवः उल्लसन्त्यः तनवः सूक्ष्माः परिधानसम्पदः कोशसम्पदो वस्त्रसम्पदश्च यासां ताः पुलकभृतः छायाभृतः रोमाञ्चधारिण्यश्च सदसिलताः चारुखड्गवल्लयः प्रिया इव रणैषिणां रणाकाङ्क्षिणां कन्धरास्वधिकन्धरमधिकण्ठम् । विभक्त्यर्थेऽव्ययीभावः । ललम्बिरे, लग्ना इत्यर्थः । श्लेषः श्लिष्टोपमा वा मतभेदात् ॥ २५ ॥

मनोहरैरिति । अथ प्रकृतिमनोरमाकृतिः स्वभावसुन्दरमूर्त्तिः समितिषु युद्धेषु भीमं दर्शनं यस्य स भीमदर्शनो मुरजिद्धरिर्मनोहरैः प्रकृतिमनोहरैः समितिषु भयप्रदैः सदैवतैः अधिदेवतायुक्तैः सततमनपायिभिरायुधैः शार्ङ्गादिभिर्निजाङ्गवत् पृथगवस्थितैः शरीरैरिवेत्युत्प्रेक्षा । असेव्यत सेवितः ॥२६॥

अवारितमिति । अथायुधसन्निधानानन्तरं स हरिरुभयेषु द्वयेषु,

उपेत्य च स्वनगुरुपक्षमारुतं
दिवस्त्विषा कपिशितदूरदिङ्मुखः ।
प्रकम्पितस्थिरतरयष्टि तत्क्षणं
पतत्पतिः पदमधिकेतनं दधौ ॥ २८ ॥

गभीरताविजितमृदङ्गनादया
स्वनश्रिया हृतरिपुहंसहर्षया ।
प्रमोदयन्नथ मुखरान् कलापिनः
प्रतिष्ठते नवघनवद्रथः स्म सः ॥ २९ ॥

द्विविधेष्वित्यर्थः । क्षमाभृतां राज्ञां, गिरीणाञ्च कटकान्तरेष्वपि शिबिराभ्यन्तरेषु नितम्बावकाशेषु च भूरिशो बहुशः अवारितमप्रतिहतं गतं प्रस्थितं मुहुरसकृद्युधि क्षतानां सुरशत्रूणामसुराणां शोणितैः प्लुताः सिक्ताः प्रधयो नेमयो यस्य तम् । 'चक्रधारा प्रधिर्नेमिः' इति हलायुधः । रथमधिरोहति स्म आरुरोह ॥ २७ ॥

उपेत्येति । किञ्चेति चार्थः । पतत्पतिरण्डजमण्डलेश्वरः । 'पतत्पत्त्ररथाण्डजाः' इत्यमरः । त्विषा कान्त्या कपिशितानि कपिलीकृतानि दूराणि दिङ्मुखानि येन सः । स्वनेन गुरुर्महान् पक्षमारुतो यस्मिन् कर्म्मणि तत्तथा दिवः स्वर्गादुपेत्यागत्य तत्क्षणं तस्मिन् क्षणे प्रकम्पिता स्थिरतरा निश्चला यष्टिरावासस्तम्भो यस्मिंस्तत्तथा अधिकेतनं केतने । विभक्त्यर्थेऽव्ययीभावः । पदं दधौ निहितवान् ॥ २८ ॥

गभीरतेति । अथ गरुड़ागमनानन्तरं स रथो नवघनवत् नवघनेन नवाम्बुदेन तुल्यम् । 'तेन तुल्यम्'—इति वतिप्रत्ययः । गभीरतया गाम्भीर्य्येण विजितो मृदङ्गनादो यया तया हृतो रिपुहंसानां हंसानामिव रिपूणां हर्षो यया तया स्वनश्रिया ध्वनिसम्पदा मुखरान् कूजतः कलापिनो मयूरान् प्रमोदयन् प्रतिष्ठते स्म प्रतस्थे । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् 'लट् स्मे' इति भूते लट् । तद्धितगता श्रौती पूर्णोपमा ॥ २९ ॥

निरन्तरस्थगितदिगन्तरं ततः
समुच्चलद्बलमवलोकयन् जनः ।
विकौतुकः प्रकृतमहाप्लवेऽभवद्
विशृङ्खलं प्रचलितसिन्धुवारिणि ॥ ३० ॥

बबृंहिरे गजपतयो महानकाः
प्रदध्वनुर्जयतुरगा जिहेषिरे ।
असम्भवद्गिरिवरगह्वरैरभूत्
तदा रवैर्दलित इव ख आश्रयः ॥ ३१ ॥

निरन्तरेति । ततो रथप्रस्थानानन्तरं निरन्तरं नीरन्ध्रं स्थगितान्याच्छादितानि दिगन्तराणि येन तत् । समुच्चलत्प्रतिष्ठमानं तद्बलं सैन्यमवलोकयन् जनो लोकः प्रकृतः प्रक्रान्तो महाप्लवो महापूरो जगत्संप्लवरूपो येन तस्मिन् विशृङ्खलमप्रतिघातं प्रचलितं क्षुभितं यस्मिन्सोरब्धेर्व्वारि तस्मिन् विकौतुको निवृत्तकौतूहलोऽभवत् । कल्पान्तक्षुभितवारिधेर्व्वारिवच्च तद्बलं सकलजगत् संहारशङ्कयालक्ष्यतेत्यर्थः । अत्रान्यदर्शनादन्यदिदृक्षानिवृत्तेर्ब्बलवारिधिवारिणोरैकत्वाक्षेपे बाधात् सादृश्याक्षेपाद्वाक्यभेदेन प्रतिबिम्बकरणान्निदर्शनालङ्कारः ॥३०॥

बबृंहिर इति । गजपतयो बबृंहिरे बबृंहुः । बृंहणं चक्रुरित्यर्थः । 'बृहि वृद्धौ शब्दे च' आत्मनेपदं चिन्त्यम् । अत एव भट्टमल्लः—'हेषते ह्रेषतेऽश्वानां हस्तिनां बृंहतीति च' इति । महानकाः प्रदध्वनुर्जयशीलास्तुरगा जयतुरगा जिहेषिरे, हेषां चक्रुरित्यर्थः । 'हेषृ ह्रेषृ अव्यक्ते शब्दे' । तदा तस्मिन् काले असम्भवन्त्यन्तर्द्धातुमपर्य्याप्नुवन्ति गिरिवरगह्वराणि येषान्तैः गिरिवरगह्वरेषु अमाद्भिः, अवर्त्तमानैरित्यर्थः । रवैर्बृंहणादिघोषैः । ख आश्रयः स्वसमवायिकारणमाकाशो दलित इव विदारित इवाभूदित्युत्प्रेक्षा तया तेषामतितीव्रत्वं व्यज्यते ॥ ३१ ॥

अनारतं रसति जयाय दुन्दुभौ
मधुद्विषः फलदलघुप्रतिस्वनैः ।
विनिष्पतन्मृगपतिभिर्गुहामुखै-
र्गताः परां मुदमहसन्निवाद्रयः ॥ ३२ ॥
जडीकृतश्रवणपथे दिवौकसां
चमूरवे विशति सुराद्रिकन्दराः ।
अनर्थकैरजनि विदग्धकामिनी-
रतान्तरक्वणितविलासकौशलैः ॥ ३३ ॥
अरातिभिर्युधि सहयुध्वनो हतान्
जिघृक्षवः श्रुतरणतूर्य्यनिस्वनाः ।
अकुर्वत प्रथमसमागमोचितं
चिरोज्झितं सुरगणिकाः प्रसाधनम् ॥ ३४ ॥

अनारतमिति । मधुद्विषो हरेः दुन्दुभौ रणभेर्य्यां जयाय अनारतमश्रान्तं रसति ध्वनति सति फलन्तः सङ्क्रामन्तोऽलघवो महान्तः प्रतिस्वना प्रतिध्वनयो येषु तैः । विनिष्पतन्तः क्षोभान्निर्गच्छन्तः मृगपतयः सिंहा येभ्यस्तैर्गुहाभिरेव मुखैरद्रयः परां मुदं गताः सन्तः अहसन्निव । सिंहानां धावल्याद्गुनियोगाच्च हसनोत्प्रेक्षा ॥ ३२ ॥

जडीकृत इति । दिवमोको येषां तेषां दिवौकसां देवानाम्, कन्दरान्तर्गतानामित्यर्थः । जडीकृतश्रवणपथे बधिरीकृतश्रवणपथे बधिरीकृतश्रोत्रमार्गे । सापेक्षत्वेऽपि गमकत्वात् समासः । चमूरवे सेनाघोषे सुराद्रिकन्दराः मेरुगह्वराणि विशति सति, विदग्धकामिनीनां प्रौढाङ्गनानां रतान्तरे सुरतमध्ये क्वणितविलासाः कूजितसम्पदस्तासु यानि कौशलानि तैरनर्थकैरजनि जातम् । प्रेयसां बाधिर्य्यादिति भावः । अत्र श्रोत्रजाड्यस्य विशेषणगत्या क्वणितानर्थक्यहेतुत्वात् काव्यलिङ्गम् । तदुपजीवितेन क्वणितानामानर्थक्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरित्यनयोरङ्गाङ्गिभावेन सङ्करः ॥३३ ॥

अरातिभिरिति । सह युध्यन्त इति तान् सहयुध्वनः । 'सहे च' इति

प्रचोदिताः परिचितयन्तृकर्म्मभि-
र्निषादिभिर्विदितयताङ्कुशक्रियैः ।
गजाः सकृत्करतललोलनालिका
हत मुहुःप्रणदितघण्टमाययुः ॥ ३५ ॥

सविक्रमक्रमणचलैरितस्ततः
प्रकीर्णकैः क्षिपत इव क्षिते रजः ।
व्यरंसिषुर्न खलु जनस्य दृष्टय-
स्तुरङ्गमादभिनवभाण्डभारिणः ॥ ३६ ॥

क्विप् । अत एवारातिभिर्युधि हतान् जिघृक्षवो ग्रहीतुमिच्छवः स्वयं वरणकामाः । ग्रहेः सन्नन्तादुप्रत्ययः । सुरगणिका अप्सरसः स्तुतरणतूर्य्यनिःस्वनाः सत्यश्चिरोज्झितं । प्रायेण प्रवीरसम्बाधाभावादिति भावः । प्रथमसमागमोचितं, अतिमोहनमित्यर्थः । प्राथम्यञ्च पुंसामिदं प्रथमत्वादिति भावः । प्रसाधनमकुर्व्वत, परिष्कृतवत्य इत्यर्थः । 'प्रतिकर्म्म प्रसाधनम्' इत्यमरः । अत्र स्वयम्बरणतूर्य्यश्रवणयोर्विशेषणगत्या प्रसाधनहेतुत्वात् काव्यलिङ्गम् ॥ ३४ ॥

प्रचोदिता इति । परिचितं यन्तृकर्म्म सादिकृत्यं यैस्तैः, सम्यस्तगजशास्त्रैरित्यर्थः । अतएव विदिते यताङ्कुशक्रिये यतयाताख्ये पदाङ्कुशकर्म्मणी यैस्तैः । 'पादकर्म्म यतं प्रोक्तं यातमङ्कुशवारणम्' इति हलायुधः । निषादिभिर्य्यन्तृभिः प्रचोदिताः प्रेरिता गजाः सकृदेकवारमेव करतललोलाभिः पाणितलचलिताभिर्नालिकाभिरन्तर्नाड़िकाभिर्हतास्ताड़ितास्तथापि मुहुः प्रणादिता असकृद्ध्वनन्ती घण्टा यस्मिन् कर्म्मणि तत्तथा आययुः प्रस्थातुमागताः । स्वभावोक्तिः ॥ ३५ ॥

सविक्रमेति । सविक्रमेण साङ्घ्रिविन्यासविशेषेण क्रमणेन गमनेन चलैः प्रकीर्णकैश्चामरैः । 'चामरन्तु प्रकीर्णकम्' इत्यमरः । क्षिते रजः स्वखुरोद्धतमितस्ततः क्षिपतो निरस्यत इव स्थितादित्युत्प्रेक्षा । अभिनवभाण्ड-

चलाङ्गुलीकिशलयमुद्धतैः करै-
रनृत्यत स्फुटकृतकर्णतालया ।
मदोदकद्रवकटभित्तिसङ्गिभिः
कलस्वरं मधुपगणैरगीयत ॥ ३७ ॥

असिच्यत प्रशमितपांशुभिर्मही
मदाम्बुभिर्धृतनवपूर्णकुम्भया ।
अवाद्यत श्रवणसुखं समुन्नम-
त्पयोधरध्वनिगुरु तूर्य्यमाननैः ॥ ३८ ॥

भारिणः प्रत्यग्राभरणधारिणः । 'स्याद्वाण्डमश्वाभरणम्' इत्यमरः । तुरङ्गमात् तुरङ्गमेभ्यः । जातावेकवचनम् । 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' इत्यपादानत्वम् । जनस्य दृष्टयो न व्यरंसिषुर्न विरताः खलु । रमेर्लुङि 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । 'यमरमनमातां सक्च', इति सगिडागमौ । इटि 'नेटि' इति वृद्धिप्रतिषेधः ॥ ३६ ॥

अथ विशेषकेणाह—चलेत्यादि । स्फुटं कृतः कर्णतालः कर्णताड़नं यया तया द्विपघटया कर्त्र्या चलाङ्गुल्य एव किशलया यस्मिन् कर्म्मणि तत्तथोद्धतैः करैर्हस्तैरनृत्यत अनर्त्ति । भावे लङ् । तथा मदोदकेन द्रवास्वार्द्रासु कटभित्तिषु गण्डस्थलेषु सङ्गिभिरासक्तैः मधुपगणैर्भ्रमरगणैः कलस्वरं मधुरस्वरमगीयत गीतम् । भावे लङ् ॥ ३७ ॥

असिच्यतेति । धृतौ नवौ पूर्णकुम्भौ शिरःपिण्डकलशौ यया तया द्विपघटया कर्त्र्या । 'कुम्भौ घटेभमूर्द्धांशौ' इत्यमरः । प्रशमितपांशुभिर्मदाम्बुभिर्मही असिच्यत सिक्ता । आननैर्मुखैः करणैः श्रवणयोः सुखयतीति सुखं सुखकरम् । 'सुखहेतौ सुखे सुखम्' इति शब्दार्णवे । समुन्नमत्पयोधरध्वनिगुरु उद्यन्मेघगर्जितगम्भीरं तूर्य्यमवाद्यत वादितम् । स्वमुखबृंहणैरेव तूर्य्यं सम्पादितमित्यर्थः ॥ ३८ ॥

उद्ासिरे पवनविधूतवासस-
स्ततस्ततो गगनलिहश्च केतवः ।
यतः पुरः प्रतिरिपु शार्ङ्गिणः स्वयं
व्यधीयत द्विपघटयेतिमङ्गलम् ॥ ३९ ॥

विशेषकम् ।

न शून्यतामगमदसौ निवेशभूः
प्रभूततां दधति बले चलत्यपि ।
पयस्यभिद्रवति भुवं युगावधौ
सरित्पतिर्न हि समुपैति रिक्तताम् ॥ ४० ॥

यियासितामथ मधुभिद्विवस्वता
जनो जरन्महिषविषाणधूसराम् ।
पुरः पतत्परबलरेणुमालिनी-
मलक्षयद्दिशमभि धूमितामिव ॥ ४१ ॥

उद्ासिर इति । पवनेन विधूतवाससः कम्पितपटाः गगनलिहोऽभ्रङ्कषाः केतवो ध्वजाश्च ततस्तत उद्ासिरे उत्क्षिप्ता इतीत्थं द्विपघटया प्रतिरिपु रिपून् प्रति । आभिमुख्येऽव्ययीभावः । यतो गच्छतः । इणो लटः शत्रादेशः । शार्ङ्गिणः पुरोऽग्रे स्वयं मङ्गलं व्यधीयत विहितम् । अत्र श्लोकत्रये प्रस्तुतद्विपघटाविशेषणसाम्यादप्रस्तुतमङ्गलाचरणपरपुरन्ध्रीप्रतीतेः समासोक्तिरलङ्कारः ॥ ३९ ॥

नेति । प्रभूततां भूमानं दधति दधाने बले सैन्ये चलति प्रतिष्ठमानेऽपि असौ निवेशभूः सेनानिवेशभूमिः शून्यतां रिक्ततां नागमत् । तथाहि, युगावधौ युगान्ते पयसि भुवमभिद्रवत्यभिप्लवमाने सति सरित्पतिः समुद्रो रिक्ततां न समुपैति हि । दृष्टान्तालङ्कारः ॥ ४० ॥

यियासितामिति । अथ मधुभिद्धरिरेव विवस्वान् तेन यियासितां यातुमिष्टां जिगमिषिताम् । यातेः सन्नन्तात् कर्मणि क्तः । पततोऽभिधावतः परबलस्य शत्रुसैन्यस्य रेणून् मलते धारयतीति तन्मालिनी। मलतेर्णिनिप्रत्ययः ।

मनस्विनामुदितगुरुप्रतिश्रुतिः
श्रुतस्तथा न निजमृदङ्गनिस्वनः ।
यथा पुरः समरसमुद्यतद्विष-
द्दलानकध्वनिरुदकर्षयन्मनः ॥ ४२ ॥

यथा यथा पटहरवः समीपता-
मुपागमत् स हरिवराग्रतःसरः ।
तथा तथा हृषितवपुर्मुदाकुला
द्विषां चमूरजनि जनीव चेतसा ॥ ४३ ॥

अत एव जरतो वृद्धस्य महिषस्य विषाणवद्धूसरां धूम्रां पुरोऽग्रे दिशमभितो धूमोऽस्याः सञ्जातस्तामभिधूमितामिव जनो लोकोऽलक्षयत् । मधुभिद्दिव-स्वतेति रूपकोत्थापिताग्रदिशि धूमितत्वोत्प्रेक्षेति सङ्करः । अत्राहुः—'अङ्गा-रिणी दिक्रविविप्रयुक्ता यस्यां रविस्तिष्ठति सा प्रदीप्ता । प्रधूमिता यास्यति यां दिनेशः शेषाः प्रशस्ताः शुभदाश्च ताः स्युः ॥' इति ॥ ४१ ॥

मनस्विनामिति । उदिता उत्पन्ना गुरुर्गभीरा प्रतिश्रुतिः प्रतिध्वनिर्यस्य सः निजमृदङ्गनिःस्वनः स्वसेनातूर्यघोषः श्रुतः सन् तथा मनस्विनां मनो नोदकर्षयन्नाचकर्ष । कृषिरयं स्वार्थण्यन्तः । यथा पुरोऽग्रे समरसमुद्यते समरोद्युक्ते द्विषद्दले शत्रुसैन्ये ये आनकास्तेषां ध्वनिरुदकर्षयत् । एतेनैषां वीरस्थायी महोत्साह उक्तः । अत्र भयङ्करस्यापि परसैन्यघोषस्योत्साहजन-कत्वं महावीरेषु न विरुध्यत इति विरोधाभासोऽलङ्कारः । भीहेतौ सत्यपि भयानुत्पत्तेर्विशेषोक्तिर्विरुद्धकार्य्योत्पत्तेर्विषमभेदश्चेति सङ्करः ॥ ४२ ॥

यथा यथेति । हरिर्वरो जामातेव हरिवरः । 'वरो जामातृवर्य्ययोः' इति विश्वः । तस्याग्रतः सरतीत्यग्रतःसरोऽग्रेसरः । 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टप्रत्ययः । स पूर्वोक्तः पटहरवो यथा तथा यावद्यावत् समीपताम् आसन्नता-मुपागमत् तथा तथा तावत् तावद्द्विषतां चमूर्जनीव वधूरिव, 'जनी सीमन्तिनी वधूः' इति विश्वः । चेतसा मुदाकुला आनन्दाविला हृषितवपू रोमाञ्चि-ताङ्गी, 'हृषेर्लोमसु' इति इडागमः । अजनि जाता । जनेः कर्त्तरि लुङ्

प्रसारिणी सपदि नभस्तले ततः
समीरणभ्रमितपरागरूषिता ।
व्यभाव्यत प्रलयजकालिकाकृति-
र्विदूरतः प्रतिबलकेतनावलिः ॥ ४४ ॥
क्षणेन च प्रतिमुखतिग्मदीधिति-
प्रतिप्रभास्फुरदसिदुःखदर्शना ।
भयङ्करा भृशमपि दर्शनीयतां
ययावसावसुरचमूस्य भूभृताम् ॥ ४५ ॥
पयोमुचामभिपततां दिवि द्रुतं
विपर्य्ययः परित इवातपस्य सः ।
समक्रमः समविषमेष्वथ क्षणात्
क्षमातलं बलजलराशिरानशे ॥ ४६ ॥

'दीपजन'—इत्यादिना चिण्प्रत्ययः। बधूवरसमागमवत् प्रतिद्वन्द्विसमागमो महोत्साहवर्द्धनो वीरसेनाया इत्युपमार्थः। तेन सैन्ययोरन्योन्यशब्दश्रवणकारिणी प्रत्यासत्तिरासीदिति व्यज्यते ॥ ४३ ॥

प्रसारिणीति। ततः श्रवणानन्तरं सपद्यविलम्बेन नभस्तले प्रसारिणी व्याप्ता समीरणेन वायुना भ्रमितेन परागेण रूषिता रूक्षीकृता अतएव प्रलयजायाः कल्पान्तप्रादुर्भूतायाः कालिकाया महाकाल्या आकृतिरिवाकृतिर्यस्याः सा। प्रतिबले प्रतिपक्षसैन्ये केतनावलिर्ध्वजपङ्क्तिर्विदूरतो दूरादलक्ष्यत। एतावता प्रत्यासत्तिरासीदित्यर्थः। उपमालङ्कारः ॥ ४४ ॥

क्षणेनेति। प्रतिमुखस्याभिमुखस्य तिग्मरश्मेरुष्णांशोः प्रतिप्रभाभिः प्रतिफलितदीप्तिभिः स्फुरद्भिर्दीप्यमानैरसिभिः खड्गैर्दुःखं दुष्करं दर्शनं यस्याः सा, दुर्दर्शेत्यर्थः। असावसुरचमूश्चैद्यसेना क्षणेन च भूभृतां हरिसैनिकानां भृशं भयं करतीति भयङ्करापि। 'मेघर्त्तिभयेषु कृञः' इति खच्प्रत्ययः। दर्शनीयतां मनोहरतामिति विरोधः। दृष्टिविषयतां ययावित्यविरोधः। अतएव विरोधाभासोऽलङ्कारः ॥ ४५ ॥

पयोमुचामिति। अथासुरसेनादर्शनानन्तरं समविषमेषु निम्नोन्नतेषु

ममौ पुरः क्षणमिव पश्यतो महत्
तनूदरस्थितभुवनत्रयस्य तत्।
विशालतां दधति नितान्तमायते
बलं द्विषां मधुमथनस्य चक्षुषि ॥ ४७ ॥
भृशस्विदः पुलकविकाशिमूर्त्तयो
रसाधिके मनसि निविष्टसाहसाः।
मुखे युधः सपदि रतेरिवाभवन्
ससम्भ्रमाः क्षितिपचमूवधूगणाः ॥ ४८ ॥

समक्रमम्तुल्यसञ्चारः बलजलराशिः सैन्यसागरः दिवि व्योम्नि द्रुतमभिपततामभिधावतां पयोमुचां सम्बन्धी आतपस्य विपर्य्ययः छायेव परितः क्षणात् क्षमातलं भूतलमानशे। 'अशू व्याप्तौ' 'अत आदेः' इत्यभ्यासदीर्घः, 'अश्नोतेश्च' इति नुमागमः। उपमालङ्कारः ॥ ४६ ॥

ममाविति। पुरोऽग्रे क्षणमिव पश्यतः क्षणमात्रं विलोकयतः, इवशब्दो वाक्यालङ्कारे। तनौ क्षोदीयस्युदरे कुक्षौ स्थितं भुवनत्रयं यस्य तस्य मधुमथनस्य हरेः सम्बन्धिनि विशालतां वैपुल्यं दधति दधाने नितान्तमायते दीर्घे द्राघीयसि चक्षुषि महत् द्विषां बलं ममौ ववृते। क्षणमीक्षणादेव परबले इयत्तां परिचिच्छेदेत्यर्थः। क्षोदीयस्यपि कुक्षौ भुवनत्रयं परिच्छिन्दतः हरेरतिमहति चक्षुषि अल्पबलपरिच्छेदः कियानिति भावः। अत्र भुवनत्रयापेक्षया आधारस्य कुक्षेरल्पत्वाच्चक्षुरपेक्षया आधेयस्य बलस्याल्पत्वाच्चाधिकालङ्कारौ सङ्कीर्य्येते ॥ ४७ ॥

भृशेति। क्षितिपचम्वो बध्व इवेत्युपमितसमासः। रतेरिवेति लिङ्गात्। तासां गणाः युधो मुखे युद्धारम्भे रतेर्मुखे रत्यारम्भ इव सपदि भृशं स्विद्यन्तीति भृशस्विदः। क्विप्। पुलकविकाशिमूर्त्तयो रोमाञ्चोदञ्चितगात्राः रसः वीरः शृङ्गारश्च तेनाधिके निर्भरे मनसि निविष्टसाहसाः प्रविष्टधार्ष्ट्याः ससम्भ्रमाः सत्वराश्चाभवन्। यादृशी बधूनां सुरतरसकर्म्मण्युत्कण्ठा तादृशी चमूनां समरकर्म्मणीत्युपमार्थः, तेनैतासां समरसुरतयोः समरसत्वं व्यज्यते ॥४८

ध्वजांशुकैर्ध्रुवमनुकूलमारुत-
प्रसारितैः प्रसभकृतोपहूतयः ।
यदूनभि द्रुततरमुद्यतायुधाः
क्रुधा परं रयमरयः प्रपेदिरे ॥ ४९ ॥

हरेरपि प्रति परकीयवाहिनी-
रधिस्यदं प्रववृतिरे चमूचराः ।
विलम्बितुं न खलु सहा मनस्विनो
विधित्सतः कलहमवेक्ष्य विद्विषः ॥ ५० ॥

उवाहितैर्वपुषि निवातवर्मभिः
स्फुरन्मणिप्रसृतमरीचिसूचीभिः ।
निरन्तरं नरपतयो रणाजिरे
रराजिरे शरनिकराचिता इव ॥ ५१ ॥

ध्वजांशुकैरिति । अरयः चैद्यपक्षाः अनुकूलमारुतेन प्रसारितैर्ध्वजांशुकैर्ध्रुवं प्रसभेन बलात्कारेण कृतोपहूतयः, कृताह्वाना इवेत्यर्थः । यदूनभि यादवान् प्रति द्रुततरमुद्यतायुधा उत्क्षिप्तायुधाः सन्तः क्रुधा क्रोधेन परमधिकं रयं त्वरां प्रपेदिरे । ध्वजांशुकदर्शनोत्थक्रोधहेतुकस्य शीघ्राभिपातस्य ध्वजाह्वानहेतुकत्वमुत्प्रेक्ष्यते ध्रुवमिति ॥ ४९ ॥

हरेरिति । हरेरपि चमूषु चरन्तीति चमूचराः सैनिकाः । चरेष्टः । परेषामिमाः परकीया वाहिनीः सेनाः प्रति अधिस्यदमभिकरयं यथा तथा । 'रंहस्तरसी तु रयः स्यदः' इत्यमरः । प्रववृतिरे प्रवृत्ताः । तथाहि मनस्विनो धीराः कलहं युद्धं विधित्सतः विधातुमिच्छतः, दधातेः सन्नन्ताल्लटः शतरि रूपम् । तान् विद्विषः शत्रूनवेक्ष्य विलम्बितुम् । 'शक-धृष'—इत्यादिना तुमुन्प्रत्ययः । सहन्त इति सहाः क्षमाः । पचाद्यच् । न खलु । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५० ॥

उपाहितैरिति । रणाजिरे रणाङ्गणे नरपतयो राजानो वपुषि उपाहितैरामुक्तैः स्फुरन्तो मणिप्रसृता रत्ननिर्गता मरीचय एव सूचयो येषां तैः

अथोच्चकैर्जरठकपोतकन्धरा-
तनूरुहप्रकरविपाण्डुरद्युति ।
बलैश्चलच्चरणविधूतमुच्चरद्-
घनावलीरुदचरत चमारजः ॥ ५२ ॥

विषङ्गिभिर्भृशमितरेतरं क्वचित्
तुरङ्गमैरुपरि निरुद्धनिर्गमाः ।
चलाचलैरनुपदमाहताः खुरै-
र्विबभ्रमुश्चिरमथ एव धूलयः ॥ ५३ ॥

निवातवर्मभिरच्छिद्रकञ्चुकैः । 'निवातो दृढसन्नाहे निर्वाते चाश्रयेऽपि च' इति विश्वः । 'तनुत्रं वर्म कञ्चुकम्' इत्यमरः । निरन्तरं नीरन्ध्रं शरनिकरैराचिताः प्रता इव रराजिरे । 'फणाञ्च सप्तानाम्' इति विकल्पादेत्वाभ्यासलोपाभावः । मणिरोचिषः साहश्याच्छरनिकरत्वोत्प्रेक्षा ॥ ५१ ॥

अथेति । अथानन्तरं उच्चकैरुन्नतं जरठकपोतकन्धरातनूरुहप्रकरविपाण्डुरद्युति जीर्णपारावतकन्धरारोमनिकरधूसरच्छायमित्युपमा । 'पारावतः कलरवः कपोतः' इत्यमरः । बलैः सैन्यैश्चलद्भिश्चरणैर्विधूतमुद्धूतं प्रेरितं सदुच्चरदुत्पतत् चमारजो भूरेणुर्घनावलीर्घनपङ्क्तीरुदचरत्, प्रचक्रामेत्यर्थः । 'उदश्चरः सकर्मकात्' इत्यात्मनेपदम् । अस्य प्रत्युदाहरणमुच्चरदिति । अत्र भूरेणोर्मेघमण्डलाक्रमणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरुपमासङ्कीर्णा ॥५२

विषङ्गिभिरिति । चलाचलैश्चटुलैः खुरैरनुपदं प्रतिपादमाहता उद्धताः भृशमितरेतरं परस्परं 'निरन्तरम्' इति पाठेऽभितो निरन्तरं नीरन्ध्रं विषङ्गिभिर्मिथः श्लिष्टैस्तुरङ्गमैरुपरि निरुद्धो निर्गमो यासां ताः धूलयः क्वचित् चिरमध एव विबभ्रमुर्नोत्पेतुरिति भावः । अत्रोद्धतानामधोभ्रमणविरोधस्योपरिनिर्गमरोधेन विशेषणगत्या परिहारात् काव्यलिङ्गसङ्कीर्णो विरोधाभासोऽलङ्कारः ॥ ५३ ॥

गरीयसः प्रचुरमुखस्य रागिणो
रजोऽभवद् व्यवहितसत्वमुत्कटम् ।
सिसृक्षतः सरसिजजन्मनो जगद्-
बलस्य तु क्षयमपनेतुमिच्छतः ॥ ५४ ॥

पुरा शरक्षतिजनितानि संयुगे
नयन्ति नः प्रसभमसृञ्जि पङ्कताम् ।
इति ध्रुवं व्यलगिषुरात्तभीतयः
खमुच्चकैरनलसखस्य केतवः ॥ ५५ ॥

क्वचिल्लसद्घननिकुरम्बकर्बुरः
क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः ।
क्वचिच्छरच्छशधरखण्डपाण्डुरः
खुरक्षतक्षितितलरेणुरुद्ययौ ॥ ५६ ॥

गरीयस इति । गरीयसः सर्वलोकपितामहत्वात् पूज्यतरस्य, अन्यत्र महत्तरस्य प्रचुरमुखस्य, चतुर्मुखस्येत्यर्थः । अन्यत्र बहुप्रवाहस्य रागिणो रक्तवर्णस्य, अन्यत्र रणे रागिणोऽनुरागवतः एवम्भूतस्य सरसिजजन्मनो ब्रह्मणो जगत्सिसृक्षतः जगत्स्रष्टुमिच्छतः सतः । सृजेः सन्नन्ताल्लटः शत्रादेशः । व्यवहितसत्त्वं तिरस्कृतसत्त्वगुणकं, अन्यत्र तिरोहितजन्तुकं रजो रजोगुणो रेणुश्चोत्कटमुद्रिक्तमभवत् । बलस्य सैन्यस्य तु जगत्क्षयमपनेतुमिच्छतः सतोऽभवत् । अत्र ब्रह्मबलयोर्गरीयस्त्वादिसाधर्म्येऽपि रजःशब्देनैकस्य सिसृक्षोरन्यस्य सञ्जिहीर्षोरिति व्यतिरेकः श्लेषोत्थापित इति सङ्करः ॥ ५४ ॥

पुरेति । संयुगे युद्धे सति शरक्षतिजनितानि क्षतजानि असृञ्जि रुधिराणि नोऽस्मान् प्रसभं प्रसह्य पङ्कतां पुरा नयन्ति नेष्यन्ति । 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट् । इतीत्थमालोक्य ध्रुवमात्तभीतयः प्राप्तभयाः सन्तोऽनलसखस्याग्निमित्रस्य वायोः केतवो रेणवः । यल्लिङ्गत्वात् तस्येति भावः । उच्चकैरुन्नतं खमाकाशं व्यलगिषुः । वियदारूढा इत्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् ॥५५

क्वचिदिति । क्वचिल्लसत् घननिकुरम्बवन्नवाभ्रपटलवत् कर्बुरः शबलः ।

महीयसां महति दिगन्तदन्तिना-
मनीकजे रजसि मुखानुषङ्गिणि ।
विसारितामजिहत कोकिलावली-
मलीमसा जलदमदाम्बुराजयः ॥ ५७ ॥
शिरोरुहैरलिकुलकोमलैरमी
मुधा मृधे मृषत युवान एव मा ।
बलोद्धतं धवलितमूर्द्धजानिति
ध्रुवं जनान् जरत इवाकरोद्रजः ॥ ५८ ॥

क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः कनकचूर्णराशिकपिशः । क्वचिच्छरच्छशधरखण्डपाण्डुरः खुरैः क्षतस्य क्षितितलस्य रेणुरुद्ययौ उज्जगाम । अत्रोपमात्रयस्य संसृष्टिः ॥ ५६ ॥

महीयसामिति । महति अनीकजे सेनासमुत्थे रजसि महीयसां दिगन्ता एव दन्तिनः तेषां मुखानि पुरोभागा एव मुखान्याननानि इति श्लिष्टरूपकम् । तेष्वनुषङ्गिणि लग्ने सति । कोकिलावलीवन्मलीमसा मलिना जलदा दिङ्मुखसङ्गिन एव ये मेघास्त एव मदाम्बुराजयो मदरेखाः विसारितां प्रसृमरत्वमजिहतागच्छन्त, प्राप्ता इत्यर्थः । पांशुपातस्य दन्तिनां मदहेतुत्वादिति भावः । तदुक्तं महाभारते—'स्त्रियो जारेण तुष्यन्ति गावः स्वच्छन्दचारतः । कुञ्जराः पांशुवर्षेण ब्राह्मणाः परनिन्दया' । इति । दिगन्तलग्निनो मेघाः सेनारजोमेलनाद्बहुलीबभूवुरित्यर्थः । अत्र दिगन्तेषु तन्मेघेषु च दन्तित्वतन्मदत्वरूपणात् समस्तवस्तुवर्त्ति सावयवरूपकं मुखमेव मुखमिति श्लिष्टपरम्परितमिति सङ्करः । अजिहतेति, ओहाङो लङि तङ्, 'श्नाभ्यस्तयोरातः' इत्याकारलोपः 'अदभ्यस्तात्' इत्यदादेशः ॥ ५७ ॥

शिरोरुहैरिति । अलिकुलकोमलैर्भ्रमरवृन्दमनोरमैः शिरोरुहैः केशैरुपलक्षिता अमी राजानो युवान एव मुधा वृथा मृधे युद्धे, 'मृधमास्कन्दनं' इति युद्धपर्य्यायेष्वमरः । मा म्रियत न म्रियन्ताम् म्रियतेर्माङि लुङि 'न माङ्योगे' इत्यड्भावः 'उश्च' इति सिचः कित्त्वान्न गुणः । इति, इत्यमालोच्येत्यर्थः । बलोद्धतं रजः कर्त्तृ धवलितमूर्द्धजान् धवलीकृतकेशाञ्जनान् जरत इवाकरोत्,

सुसंहतैर्दधदपि धाम नीयते
तिरस्कृतिं बहुभिरसंशयम्परैः ।
यतः क्षितेरवयवसम्पदोऽणव-
स्त्विषां निधेरपि वपुरावरीषत ॥ ५९ ॥

द्रुतद्रवद्रथचरणक्षतक्षमा-
तलोल्लसद्बहुलरजोऽवगुण्ठितम् ।
युगक्षयक्षणनिरवग्रहे जगत्
पयोनिधेर्जल इव मग्नमाबभौ ॥ ६० ॥

समुल्लसद्दिनकरवक्त्रकान्तयो
रजस्वलाः परिमलिताम्बरश्रियः ।
दिगङ्गनाः क्षणमविलोकनक्षमाः
शरीरिणाम्परिहरणीयतां ययुः ॥ ६१ ॥

वृद्धानिवाकरोदित्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् । अत्रेवशब्दस्यावधारणार्थत्वान्न तेन पौनरुक्त्यम् । 'इवौपम्येऽवधारणे' इति विश्वः । 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि' इत्यमरः । जीर्यतेरतृन्निति अतृन्प्रत्ययः ॥ ५८ ॥

सुसंहतैरिति । धाम तेजो दधदपि दधानोऽपि, तेजस्व्यपीत्यर्थः । परैरन्यैः सुसंहतैः सुसङ्गतैः परैरैक्यं गतैश्च बहुभिस्तिरस्कृतिं नीयते, असंशयं निश्चितम् । अर्थाभावेऽव्ययीभावः । कुतः यतोऽणवः सूक्ष्माः क्षितेरवयवसम्पदो रेणुसमूहयः त्विषां निधेः सूर्यस्यापि वपुरावरीषत आच्छादितवत्यः । वृञो लुङि 'वृतो वा' इतीटो दीर्घः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५९ ॥

द्रुतेति । द्रुतं शीघ्रं द्रवतां धावतां रथानां चरणैश्चक्रैः क्षतात् क्षुण्णात् क्षमातलादुल्लसता पतता बहुलेन सान्द्रेण रजसावगुण्ठितमाच्छादितं जगद्युगक्षयक्षणे कल्पान्तकाले निरवग्रहे निष्प्रतिबन्धे पयोनिधेर्जले मग्नमिवाबभावित्युत्प्रेक्षा ॥ ६० ॥

समुल्लसदिति । समुल्लसन्ती दिनकरस्येव वक्त्रस्य कान्तिर्यासां ताः

निरीक्षितुं वियति समेत्य कौतुकात्
पराक्रमं समरमुखे महीभृताम् ।
रजस्ततावनिमिषलोचनोत्पल-
व्यथाकृति त्रिदशगणैः पलाय्यत ॥ ६२ ॥
विषङ्गिणि प्रतिपदमापिबत्यपो
हृताचिरद्युतिनि समीरलक्ष्मणि ।
शनैः शनैरुपचितपङ्कभारिकाः
पयोमुचः प्रययुरपेतवृष्टयः ॥ ६३ ॥

रजो रेणुरेव रज आर्त्तवमासामस्तीति रजस्वलाः । 'रजःकृष्यासुतिपरिषदो वलच्' इत्यादिना मत्वर्थीयो वलच्प्रत्ययः । धूलिधूसरा उदक्याश्च । परिमलिताः परितः सञ्जातमला अम्बरस्याकाशस्यैवाम्बरस्य वस्त्रस्य च श्रीर्यासां ताः अतएवाविलोकनक्षमा विलोकनानर्हाः दिश एवाङ्गना दिगङ्गनाः शरीरिणां प्राणिनां क्षणमीषत्कालं परिहरणीयतामगम्यतां ययुः । तस्मान् मलवद्वाससं न सम्विशेदेवेत्यादिनिषेधादिति भावः । श्लिष्टपरम्परितरूपकम् ॥ ६१ ॥

निरीक्षितुमिति । त्रिदशगणैर्देवगणैः समरमुखे रणारम्भे महीभृतां राज्ञां पराक्रमं निरीक्षितुं वियति कौतुकात् समेत्य रजस्ततौ रजस्तोमे न निमिषन्त्यनिमिषाणि पक्ष्मपातरहितानि । मिषेः पचाद्यच्, कुटादित्वान्न गुणः । तेषां लोचनोत्पलानां व्यथाकृति दुःखकारिण्यां सत्याम् । कृञः क्विप् । पलाय्यताधाव्यत, भावे परापूर्व्वादयतेर्लङि तङ् 'उपसर्गस्यायतौ' इति रेफस्य लत्वम् । अत्र लोचनोत्पलानां व्यथाऽसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः ॥ ६२ ॥

विषङ्गिणीति । विषङ्गिणि विषक्ते अतएव हृताचिरद्युतिनि विरमिताचिरद्युतिनि समीरलक्ष्मणि वातकेतौ रजसि प्रतिपदं प्रतिक्षणमपोऽम्भांस्यपिबत्याकर्षति सति अतएवापेतवृष्टयो निवृत्तवर्षाः पयोमुचः उपचिताः प्रवर्द्धिताः पङ्कभारिकाः पङ्कभरणानि येषां ते उपचितपङ्कभारिकाः सन्तः ।

नभोनदीव्यतिकरधौतमूर्त्तिभि-
र्वियद्गतैरनधिगतानि लेभिरे ।
चलच्चमूतुरगखुराहतोत्पत-
न्महीरजःस्नपनसुखानि दिग्गजैः ॥ ६४ ॥

गजव्रजाक्रमणभरावनम्रया
रसातलं यदखिलमानशे भुवा ।
नभस्तलं बहुलतरेण रेणुना
ततोऽगमत्त्रिजगदिवैकतां स्फुटम् ॥ ६५ ॥

समस्थलीकृतविवरेण पूरिता
महीभृताम्बलरजसा महागुहाः ।
रहस्त्रपाविधुरवधूरतार्थिनां
नभःसदामुपकरणीयतां ययुः ॥ ६६ ॥

'पर्य्यायार्हणोत्पत्तिषु ण्वुल्' इत्यर्हणार्थे ण्वुल् प्रत्ययः। अर्हणञ्च करण-सामर्थ्यम् । अतएव भाराच्छनैः शनैः प्रययुः प्राप्ताः । अत्र पयोमुचां पङ्कभर-णासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ६३ ॥

नभोनदीति । नभोनदीव्यतिकरेणाकाशगङ्गाया अवगाहेन धौतमूर्त्तिभिः क्षालिताङ्गैः वियद्गतैः खेचरैः अतएव दिग्गजैरनधिगतान्यननुभूत-चराणि चलद्भिश्चमूतुरगखुरैराहतम् अतएवोत्पतदुद्गच्छन्महीरजस्तेन स्नपन-मभिषेचनं तेन यानि सुखानि तानि लेभिरे । कुञ्जराः पांशुवर्षेणेत्युदाहृतम् । अत्रापि दिग्गजानां रजःस्नापनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६४ ॥

गजेति । यद्यस्माद्गजव्रजानामाक्रमणभरेण पादक्षेपगौरवेणावनम्रया भुवा अखिलं रसातलं पातालमानशे व्याप्तम् । यद्यस्माच्च नभस्तलं बहुलतरेण रेणुनानशे ततः कारणात् त्रिजगज्जगत्त्रयम् । 'तद्धितार्थ'—इत्यादिना समा-हारे द्विगुः । 'द्विगुरेकवचनम्' । एकतां भूलोकतामिवागतत् । स्फुटमित्यु-त्प्रेक्षायाम् ॥ ६५ ॥

समेति । समस्थलीकृतानि विवराणि निम्नस्थानानि येन तेन बलर-

गते मुखच्छदपटसादृशीं दृशः
पथस्तिरोदधति घने रजस्यपि ।
मदानिलैरधिमधुचूतगन्धिभि-
र्द्विपा द्विपानभिययुरेव रंहसा ॥ ९७ ॥

मदाम्भसा परिगलितेन सप्तधा
गजान् जनः शमितरजश्चयानधः ।
उपर्य्यवस्थितघनपांशुमण्डला-
नलोकयत्ततपटमण्डपानिव ॥ ९८ ॥

जसा पूरिताः महीभृतां भूधराणां महागुहाः । रहो रहसि । अत्यन्त-संयोगे द्वितीया । त्रपया विधुराणां विलक्षाणां बधूनां रतं सुरतमर्थयन्त इति तदर्थिनां नभःसदां सुराणामुपकरणीयतामुपकारकत्वं ययुः । तासां रजः-पूरणात् पुंसामन्धकरणत्वादिति भावः । 'कृत्यल्युटो बहुलम्, इत्यनीयरः कर्त्रर्थता । अत्र रजःपूरणस्य विशेषणगत्योपकारकहेतुत्वात् काव्यलिङ्गभेद-स्तथोपकारकत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरिति सङ्करः ॥ ९६ ॥

गत इति । छाद्यतेऽनेनेति छदः मुखस्य छदो मुखच्छदः । 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्ययः 'छादेर्घेऽद्व्युपसर्गस्य' इति ह्रस्वः । स चासौ पटश्च तत्सादृशीं तत्सादृश्यम् । ब्राह्मणादित्वात् ष्यञ्प्रत्यये 'षिद्गौरादि-भ्यश्च' इति ङीष् । स च ष्यञः षित्करणादीकारो बहुलमिति वामनवचना-द्वैकल्पिकः । गते प्राप्ते । गजानां युद्धपूर्वकाले मुखावरणकारणात्तत्सदृशे घने सान्द्रे रजसि दृशो दृष्टेः पथो मार्गांस्तिरोदधति छादयति सत्यपि । अधिमधोरधिकमकरन्दस्य चूतस्येव गन्धो येषां तैः । 'उपमानाच्च' इति गन्धस्येत्वे तदेकान्तग्रहणं तु व्यभिचारि । मदानिलैरभिज्ञानैर्द्विपा गजा द्विपान् गजान् प्रति रंहसा वेगेनाभिययुरेव । अत्र तिरोहितदृष्टेरभियान-विरोधस्य मदानिलैः परिहाराद्विरोधाभासोऽलङ्कारः ॥ ९७ ॥

मदाम्भसेति । सप्तधा 'करात्कटाभ्यां मेढ्राच्च नेत्राभ्याञ्च मदस्रुतिः' इति पालकाप्ये । सप्तभिः स्रोतोभिः परिगलितेन स्रुतेन मदाम्भसा अधः

अन्यूनोन्नतयोऽतिमात्रपृथवः पृथ्वीधरश्रीभृत-
स्तन्वन्तः कनकावलीभिरुपमां सौदामिनीदामभिः ।
वर्षन्तः शममानयन्नुपलसच्छृङ्गारलेखायुधाः
काले कालियकायकालवपुषः पांशून् गजाम्भोमुचः ॥६९॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये यदुवंश-
क्षोभणं नाम सप्तदशः सर्गः ॥ १७ ॥

शमितो रजस्वयो यैस्तान् उपर्य्यवस्थितानि तथैव स्थितानि घनानि सान्द्राणि पांशुमण्डलानि पूर्वोत्थरजःपुञ्जा येषां तान् गजाञ्जनो लोकस्तता उपरि विततः पटमण्डपा येषां तानिवेत्युत्प्रेक्षा । अलोकयत् ॥ ६८ ॥

अन्यूनेति । अन्यूनोन्नतयो महोच्छ्रायाः अतिमात्रपृथवोऽत्यन्तविपुलाः अत एव पृथ्वीधरश्रीभृतः शैलशोभाधारिण इति निदर्शनालङ्कारः । कनकावलीभिरावरणहेतुहेमराजिभिः करणैः । सुदाम्ना पर्वतेनैकदिशः सौदामन्यो विद्युतः । 'तेनैकदिक्' इत्यण्प्रत्यये ङीप् । ताभिर्दामभिरिव सौदामिनीदामभिर्विद्युल्लताभिरुपमां सादृश्यं तन्वन्तः । 'तडित्सौदामनी विद्युत्' इत्यमरः । 'अतुलोपमाभ्याम्'—इति सदृशवचनस्यैव निषेधादिह सादृश्यवाचित्वात्तृतीया । उपलसन्तः शृङ्गाराः सिन्दूरादिमण्डलान्येव लेखायुधानि सुरधनूंषि येषां ते तथोक्ताः । 'शृङ्गारः सुरते नाट्ये रसे च गजमण्डने । लेखो लेख्ये सुरे' इति च विश्वः । कालियस्य कालियनागस्य कायवत्कालवपुषः कृष्णदेहाः । गजा एवाम्भोमुचो मेघाः काले. योग्यकाले वर्षन्तो मदाम्बुमुञ्चन्तः पांशून् शमं शान्तिमानयन् प्रापयन् । रूपकालङ्कारः । शार्दूलविक्रीडितं वृत्तमुक्तम् ॥ ६९ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपाल-
वधमहाकाव्यव्याख्याने सर्वङ्कषाख्ये सप्तदशः सर्गः ॥ १७ ॥

## अष्टादशः सर्गः ।

संजग्माते तावपायानपेक्षौ सेनाम्भोधी धीरनादौ रयेण ।
पक्षच्छेदात् पूर्व्वमेकत्र देशे वाञ्छन्तौ वा विन्ध्यसह्यौ निलेतुम्॥ १
पत्तिः पत्तिं वाहमेयाय वाजी नागं नागः स्यन्दनस्थो रथस्थम् ।
इत्थं सेना वल्लभस्येव रागादङ्गेनाङ्गं प्रत्यनीकस्य भेजे ॥ २ ॥

अथाग्रिमसर्गे तुमुलयुद्धवर्णनाय सेनयोर्मेलनं तावदाह—संजग्माते इति। अपायोऽपगमो युद्धादपसरणं तस्यानपेक्षौ तमनिच्छन्तौ, युद्धानिवर्त्तिनाविल्यर्थः। ईक्षतेः पचाद्यचि नञ्समासः। धीरनादौ गम्भीरघोषौ तौ सेनाम्भोधी सेनासागरौ। पक्षच्छेदात् पूर्व्वं पश्चादसम्भवादिति भावः। एकत्र देशे एकस्थाने निलेतुं वस्तुम्। 'लीङ् गतौ' इति धातोस्तुमुन्प्रत्यये गुणः। वाञ्छन्ताविच्छन्तौ सह्यविन्ध्यौ वा सह्यविन्ध्याख्यौ पर्व्वताविव, 'वा स्याद्विकल्पोपमयोः' इति विश्वः। सञ्जग्माते मिलितवन्तौ, सम्पूर्व्वाद्गच्छतेरकर्म्मकाल्लिटि 'समोगम्यृच्छि'—इत्यादिना आत्मनेपदम्। अत्र सह्यविन्ध्ययोः सपक्षयोरप्येकत्र मिलनस्याप्रसिद्धस्य सम्भावनामात्रेणोक्तत्वादुपमानाप्रसिद्धेर्नोपमा किन्तूत्प्रेक्षेति सङ्क्षेपः। अस्मिन् सर्गे शालिनी वृत्तम्। 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणात् ॥ १ ॥

सेनाम्भोधी सञ्जग्माते इत्युक्तं तत् सङ्गतिप्रकारं तावद्वर्णयति—पत्तिरिति। पत्तिः पदातिः पत्तिं पदातिम्। 'पदातिपत्तिपदगपदातिकपदातयः' इत्यमरः। एयाय प्राप, आङ्पूर्व्वादिणो लिट्। वाज्यश्वो वाहमश्वमेयाय। 'वाजिवाहार्वगन्धर्वा' इत्यमरः। नागो गजो नागमेयाय, स्यन्दनस्थो रथस्थमेयाय, न तु व्युत्क्रमेण। धर्म्मयुद्धत्वादिति भावः। इतीत्थमुक्तरीत्या सेना रागाद्रणरागाद्रतिरागाच्च, अङ्गेन स्वाङ्गेन पत्त्यादिना, करचरणादिना च वल्लभस्य प्रियतमस्येव प्रत्यनीकस्य प्रतिबलस्य, 'वरूथिनी

रथ्याघोषैर्बृंहणैर्वारणानामैक्यं गच्छन् वाजिनां ह्रेषया च ।
व्योमव्यापि सन्ततं दुन्दुभीनामव्यक्तोऽभूदीशितेव प्रणादः ॥ ३॥
रोषावेशाद् गच्छतां प्रत्यमित्रं दूरोत्क्षिप्तस्थूलबाहुध्वजानाम् ।
दीर्घास्तिर्य्यग् वैजयन्तीसदृक्षाः पादातानां भेजिरे खड्गलेखा ॥४

बलं सैन्यं चक्रं चानीकमस्त्रियाम्' इत्यमरः । अङ्गं पत्त्यादिकं करचरणादिकञ्च भेजे, यथा कान्ता कान्तस्योरुमुरुणा करं करेण मुखं मुखेन भजति तथा सेना प्रतिसैन्यस्य पत्तिं पत्तिना अश्वमश्वेनेत्यादिक्रमेण भेजे न तु व्युत्क्रमेणेत्यर्थः । वल्लभस्येवेत्युपमया समरसुरतयोः समरसत्वं व्यज्यते ॥ २ ॥

रथ्येति । सततं व्योमव्यापी गगनस्पृक्, अन्यत्र सर्व्वगत इत्यर्थः । दुन्दुभीनां रणभेरीणां प्रणादो महाघोषः । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । रथानां समूहो रथ्या, 'त्रिषु द्वैपादयो रथ्या रथकड्या रथव्रजे' इत्यमरः । 'खलगोरथात्' इति यत्प्रत्ययः समूहार्थे । तासां घोषैः वारणानां बृंहणैः कण्ठघोषैः । 'बृंहणं गजगर्जितम्' इति वैजयन्ती, वाजिनामश्वानां ह्रेषया हेषणेन च । 'हेषा ह्रेषा च निस्वनः' इत्यमरः । 'गुरोश्च हलः' इत्यप्रत्यये टाप् । ऐक्यं मेलनं गच्छन् । अन्यत्र तत्त्वम्पदार्थशोधनाद्द्वितीयतां गच्छन् । ईशिता ईशयिता ईश्वरत्वोपाधिमान् परमात्मेव, ईशेस्तृच् । अव्यक्तोऽभूत् अयं दुन्दुभिघोष इति दुर्भेदो बभूव, अन्यत्र जीवेश्वरोपाधिविलयादयमीश्वरोऽयं जीव इति भेदरहितोऽभूदित्यर्थः । अत्रैक्यगमनस्य विशेषणगत्या अव्यक्तहेतुत्वात् काव्यलिङ्गमुपमाङ्गमिति सङ्करः ॥ ३ ॥

रोषावेशादिति । रोषावेशात् प्रत्यमित्रमभिशत्रुम् । ' आभिमुख्येऽव्ययीभावः । गच्छतां धावतां द्रवतां दूरादुत्क्षिप्ता उद्यताः स्थूलाः पीवराः बाहुध्वजाः ध्वजस्तम्भा इव बाहवो येषां तेषां पादातानां पदातिसमूहानाम् । 'पादातं पत्तिसंहतिः' इत्यमरः । 'षिद्भिदादिभ्योऽङ्', तिर्य्यग्दीर्घाः । तिर्य्यगायता इत्यर्थः । लेखा इव खड्गाः खड्गलेखाः वैजयन्तीसदृक्षः । पताकासदृक्षः सत्य इत्यर्थः । 'वैजयन्ती पताका स्यात्' इत्यमरः । दृशेः 'समानान्ययोश्च' इति कञ् च वक्तव्य इति समानशब्दोपपदाद्दृशेः कञ्प्रत्ययः । 'दृग्दृशवतुषु' इति समानस्य सभावः । भेजिरे रेजिरे । 'भ्राजृ दीप्तौ'

वध्रीबद्धा धौरितेन प्रयातामश्वीयानामुच्चकैरुच्चलन्तः ।
रौक्मा रेजुः स्थासका मूर्त्तिभाजो दर्पस्येव व्याप्तदेहस्य शेषाः॥५॥

सान्द्रत्वक्काः कल्पलाश्लिष्टकक्षा आङ्गीं शोभामाप्नुवन्तश्चतुर्थीम् ।
कल्पस्यान्ते मारुतेनोपनुन्नाश्चेलुश्चण्डं गण्डशैला इवेभाः ॥६॥

संक्रीडन्ती नेमिनिम्नस्य रागाद्युग्यस्याग्रासग्रकायोत्थितस्य ।
रंहोभाजामक्षधूः स्यन्दनानां हाहाकारं प्राजितुः प्रत्यनन्दत्॥७॥

इति धातोः कर्त्तरि लिट्, 'फणाञ्च सप्तानाम्' इति विकल्पादेत्वाभ्यासलोपौ, आर्थीयमुपमा ॥ ४ ॥

वध्रेति । धौरितेन धौरताख्येन गतिविशेषेण प्रयातां धावताम् । यातेर्लटः शत्रादेशः । अश्वीयानामश्वसमूहानाम् । 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' इति छप्रत्ययः । उच्चकैरुच्चलन्तो गतिवशादूर्द्ध्वमुत्पतन्तः वध्रेत्त इति वध्राणि पर्य्याणबन्धनवरत्रा, 'वध्रं त्रपुवरत्रयोः' इति विश्वः । 'हृधुवधिवपिभ्यो रन्' इति रन् प्रत्ययः । लघूपधगुणो रपरः । तेष्वाबद्धाः स्थापिता रौक्माः सौवर्णाः स्थासकाः बुद्बुदाकारमण्डलानि व्याप्तदेहस्य सर्व्वाङ्गीणस्य मूर्त्तिभाजो मूर्त्तिभृतः दर्पस्यान्तरस्य तेजसः शेषाः अन्तरमानाद्बहिर्निर्गता अतिरेका इव रेजुरित्युत्प्रेक्षा ॥ ५ ॥

सान्द्रेति । सान्द्रत्वक्काः सान्द्रचर्म्माणः । शेषिकः कप्प्रत्ययः । कल्पनाः पृष्ठवंशास्तेषु श्लिष्टाः कक्षाः मध्यबन्धवरत्रा येषां ते, 'दूष्या कक्षा वरत्रा स्यात्' इत्यमरः । गजानां विंशत्युत्तरशतायुषां द्वादश दशा भवन्ति, तत्र चतुर्दशारूढाप्रौढशोभा । तदेवाह—अथ चतुर्थीमाङ्गीं शारीरीं शोभामाप्नुवन्तः । चत्वारिंशद्वर्षदेश्या इत्यर्थः । इभा गजाः कल्पस्यान्ते मारुतेनोपनुन्नाः प्रलयमारुतप्रेरिताः गण्डशैलाः स्थूलोपला इव चण्डं तीव्रं चेलुः प्रतस्थिर इत्युपमा ॥ ६ ॥

सङ्क्रीड़न्तीति । सङ्क्रीड़न्ती सङ्घर्षात् कूजन्ती, 'समोऽकूजने च वक्तव्यम्' इति वचनात् कूजने 'क्रीड़ोऽनुसम्परिभ्यश्च' इति नात्मनेपदम् । रंहोभाजां वेगभाजां स्यन्दनानां रथानामक्षस्य चक्राधारकाष्ठस्य धूरग्रमक्षधूः । 'अक्षं रथाङ्ग आधारे' इति वैजयन्ती, अनक्षे इति निषेधात् 'ऋक् पूः'—

कुर्वाणानां साम्परायान्तरायं भूरेणूनां मृत्युना मार्जनाय ।
सम्मार्जन्यो न्यूनमुद्धूयमाना भान्ति स्मोच्चैः केतनानां पताकाः॥८
उद्यन्नादं धन्विभिर्निष्ठुराणि स्थूलान्युच्चैर्मण्डलत्वं दधन्ति ।
आस्फाल्यन्ते कार्मुकाणि स्म कामं हस्त्यारोहैः कुञ्जराणां शिरांसि॥९
घण्टानादो निस्वनो डिण्डिमानां ग्रैवेयाणामारवो बृंहितानि
आमेल्यैवं प्रत्यवोचन् गजानामुत्साहार्थं वाचमाधोरणस्य॥ १० ॥

इत्यादिना न समासान्तः । रागात् आरां प्रतोदमुद्यम्य तेजिता उत्साहिता अश्वा येन तस्य अग्रं चासौ कायश्च स उत्थितो यस्य तस्य। उत्थितपूर्व्वकायस्येत्यर्थः। आहिताग्न्यादित्वात् साधुः। प्राजितुः सारथेः। 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः। हाहाकारमुत्साहवर्द्धनार्थं हाहाशब्दम्। एवकार इत्यत्रैव ग्रहणस्योपलक्षणत्वादन्यत्रापि यथादर्शनं शब्दनिर्देशात् कारप्रत्ययः। अथवा हाहाकारं हाहाकरणम्। भावे घञ्प्रत्ययः। प्रत्यनन्दत् साधुसाध्वित्यन्वमोदत। किमिव्युत्प्रेक्षा ॥ ७ ॥

कुर्व्वाणानामिति। उच्चैरुन्नताः केतनानां ध्वजस्तम्भानां पताका वैजयन्त्यः साम्परायान्तरायं युद्धविघ्नं कुर्व्वाणानाम्। 'अनीकं साम्परायिकम्' इत्यमरः। भूरेणूनां मार्जनाय प्रमार्जनार्थं मृत्युनान्तकेनोद्धूयमानाः प्रकम्प्यमानाः सम्मार्जन्यः शोधिन्य इव भान्ति स्म। 'सम्मार्जनी शोधिनी स्यात्' इत्यमरः। नूनमित्युत्प्रेक्षा ॥ ८ ॥

उद्यन्नादमिति। धन्विभिर्धनुष्मद्भिः। व्रीह्यादित्वादिनिः प्रत्ययः। निष्ठुराणि कर्कशानि स्थूलानि पीवराण्युच्चैरुन्नतानि मण्डलत्वं दधन्ति वर्त्तुलत्वं दधानानि, एकत्राकर्षणादन्यत्र स्वभावाच्चेति भावः। कर्म्मणि प्रभवन्तीति कार्मुकाणि धनूंषि, उकञ्। उद्यन्नादमुज्जृम्भमाणघोषं यथा तथा काममास्फाल्यन्ते स्म पाटवपरीक्षार्थं पाणिभिरास्फालितानि। हस्तिनं रोहन्तीति हस्त्यारोहैर्निषादिभिः। कर्म्मण्यण्। कुञ्जराणां शिरांसि आस्फाल्यन्ते स्म। उत्साहार्थमिति भावः। अत्र कार्मुकाणां कुञ्जरशिरसाञ्च प्रकृतानामेव निष्ठुरत्वादिविशेषणसाम्येनौपम्यावगमात् केवलप्रकृतास्पदा तुल्ययोगिता ॥९॥

घण्टानाद इति। घण्टानादः किङ्किण्यादिघोषः डिण्डिमानां वाद्य-

यातैश्चातुर्विध्यमस्त्रादिभेदादव्यासङ्गैः सौष्ठवाल्लाघवाच्च ।
शिक्षाशक्तिं प्राहरन् दर्शयन्तो मुक्तामुक्तैरायुधैरायुधीयाः ॥११॥
रोषावेशादाभिमुख्येन कौचित् पाणिग्राहं रंहसैवोपयातौ ।
हित्वा हेतीर्मल्लवन्मुष्टिघातं घ्नन्तौ बाहूबाहवि व्यासृजेताम्॥१२

विशेषाणां निस्वनः। ग्रीवासु भवानां ग्रैवेयाणां कण्ठशृङ्खलानां ग्रीवाभ्य एवेति ढक् प्रत्ययः । आरवः बृंहितानि बृंहणानि गजानां उत्साहार्थमाधोरणस्य हस्तिपकस्य । 'आधोरणा हस्तिपकाः' इत्यमरः । वाचं बृंहणादिशब्दं आमेति प्रत्यवोचन्निवैवमेवेत्यनुकूलमूचिर इवेत्युत्प्रेक्षा । 'आमानुगुण्ये स्मरणे' इत्यमरः ॥ १० ॥

यातैरिति । आयुधेन जीवन्तीत्यायुधीयाः आयुधजीविनः । 'शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः' इत्यमरः । 'आयुधाच्छ च' इति छप्रत्ययः । शिक्षाशक्तिमभ्यासपाटवं दर्शयन्तः अस्त्रादिभेदादस्त्रमहास्त्रादिकभेदाच्चातुर्विध्यं यातैः प्राप्तैः। सुष्ठुभावः सौष्ठवं नैशित्यादिगुणवत्त्वं तस्मात्। उद्गात्रादित्वादञ्प्रत्ययः । लाघवाद्वेगवत्त्वाच्च । 'इगन्ताच्च लघुपूर्व्वात्' इत्यण्प्रत्ययः । अव्यासङ्गैरप्रतिषिद्धैः मुच्यन्त इति मुक्तानि शरादीनि न मुच्यन्त इत्यमुक्तानि खड्गादीनि च तैस्तैर्मुक्तामुक्तैरिति द्वन्द्वः । आयुधैः प्राहरन् । स्वभावानुप्रासयोः संसृष्टिः ॥ ११ ॥

रोषावेशादिति । कौचिद्योधौ रोषावेषाद्रोषपारवश्यादाभिमुख्येन रंहसा वेगेनैवोपयातौ मिथः प्रत्यासन्नौ अतएव पाणिग्राहमन्योन्यं पाणिं गृहीत्वा । 'द्वितीयायाञ्च' इति णमुल्प्रत्ययः । हेतीः शस्त्राणि हित्वा त्यक्त्वा । वैकल्यादिति भावः । 'हेतिस्तु शस्त्रे द्वयोः' इति केशवः । मल्लवन्मल्लाभ्यां तुल्यम् । 'तेन तुल्यम्'—इति वतिप्रत्ययः । मुष्टिघातं मुष्टिभिर्हत्वा । 'करणे हनः' इति णमुल्प्रत्ययः । घ्नन्तौ प्रहरन्तौ । हन्तेर्लटः शत्रादेशः । कषादित्वादनुप्रयोगः । मुष्टिभिर्घ्नन्तावित्यर्थः । बाहुभ्यां बाहुभ्यां प्रहृत्य प्रवृत्तमिदं युद्धं बाहूबाहवि बाहुयुद्धम् । 'तत्र तेनेदमिति सरूपे' इति बहुव्रीहौ 'इच्कर्मव्यतिहारे' इतीच्प्रत्ययः समासान्तः, 'अन्येषामपि दृश्यते' इति दीर्घः, तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावत्वादव्ययत्वम् । तत्र व्यासजेतां

शुद्धाः सङ्गं न क्वचित् प्राप्नुवन्तो दूरान्मुक्ताः शीघ्रतां दर्शयन्तः।
अन्तःसैन्यं विद्विषामाविशन्तो युक्तं चक्रुः सायका वाजितायाः॥१३
आक्रम्याजेरग्रिमस्कन्धमुच्चैरास्थायाथो वीतशङ्कं शिरश्च।
हेलालोला वर्त्म गत्वातिमर्त्यं द्यामारोहन् मानभाजः सुखेन॥१४

व्याप्तवन्तौ। 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदम्। मल्लवदिति तद्धितगता श्रौती पूर्वोपमा॥ १२॥

शुद्धा इति। शुद्धा निर्दिग्धाः। 'न कर्णिभिर्नापि दिग्धैः नाग्निज्वलिततेजनैः' इति निषेधादिति भावः। अन्यत्र आप्तेत्यर्थः। क्वचित् कुत्रापि सङ्गं प्रतिबन्धं न प्राप्नुवन्तः न प्राप्ताः, दुर्वारा इत्यर्थः। दूरान्मुक्ता दूरत एव विसृष्टाः। 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासः, 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्। शीघ्रतां जवनत्वं दर्शयन्तः। विद्विषां सेनास्वन्तः अन्तःसेनम्। विभक्त्यर्थेऽव्ययीभावः। आविशन्तः। सेनामध्यं प्रविशन्त इत्यर्थः, सायका बाणाः वाजितायाः पत्रवत्तायाः, अश्वत्वस्य च। 'वाजिता स्वनपत्त्रयोः' इति विश्वः। युक्तमनुरूपं कर्म चक्रुः। एवंविधसेनाप्रवेशस्य वाजिनामिव सम्भवादिति भावः। अत्राभिधायाः प्रकृतपत्त्रतामात्रोपक्षीणत्वाद्वाजिताशब्देन प्रकृतस्यैव प्रतीतेः ध्वनिरेवेति न श्लेषावकाशः। किन्तु शुद्धादिपदार्थपुञ्जविशेषणगत्या सायकानां युक्तकारिताहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्॥ १३॥

आक्रम्येति। मानभाजोऽभिमानवन्तः। उच्चैरुन्नतं आजेर्युद्धस्याग्रिमस्कन्धमग्रभागमंसप्रदेशं चाक्रम्यारुह्य वीतशङ्कं शिरः सम्मुखमुत्तमकायं चास्थायारुह्य हेलासु युद्धक्रीडासु, लीलासु च लोला उत्सुकाः सन्तः अतिमर्त्यं वर्त्म गत्वा, अमानुषं युद्धं कृत्वेत्यर्थः। अन्यत्रासानुपगम्यमारोहणमार्गं गत्वा सुखेनानायासेन द्यां स्वर्गमन्यत्कुपं गिरिशिखरादि क्रीडास्थानम्। 'द्यौः स्वर्गसुखवर्त्मनोः' इति विश्वः। आरोहन्नारूढाः 'युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः' इति मनुस्मरणादिति भावः। यथा कथञ्चित् कश्चित् स्कन्धमूर्धारोहणक्रमेण किञ्चिद्दुरारोहमद्रितटादिकमारोहति तद्वदिति प्रकृतविशेषणमहिम्नागता समासोक्तिः॥ १४॥

रोदोरन्ध्रं व्यश्नुवानानि लोलैरङ्गस्यान्तर्मापितैः स्थावराणि ।
केचिद् गुर्वीमेत्य संयन्निषद्यां क्रीणन्ति स्म प्राणमूल्यैर्यशांसि॥१५
वीर्य्योत्साहश्लाघि कृत्वावदानं संग्रामाग्रे मानिनां लज्जितानाम्।
अज्ञातानां शत्रुभिर्युक्तमुच्चैः श्रीमन्नाम श्रावयन्ति स्म नग्नाः ॥१६
आधावन्तः सम्मुखं धारितानामन्यैरन्ये तीक्ष्णकौक्षेयकाणाम् ।
वक्षःपीठैरासरोरात्मनैव क्रोधेनान्धाः प्राविशन् पुष्कराणि ॥१७॥

रोदोरन्ध्रमिति । केचिद्वीराः गुर्वीं महतीं संयतो युध एव निषीदन्त्यस्यामिति निषद्यामापणम् । 'आपणस्तु निषद्यायाम्' इत्यमरः । 'संज्ञायां समजनिषद'—इत्यादिना क्यप् । एत्य प्राप्य । आङ् पूर्वादिणः क्त्वो ल्यप् । देहस्यान्तरभ्यन्तरे मापितैः परिच्छिन्नैः मतेर्माङो वा ण्यन्ताद् कर्मणि क्तः । 'अर्तिह्री'—इत्यादिना पुगागमः । लोलैरस्थिरैः प्राणैरेव मूल्यैः प्राणमूल्यै रोदसोर्द्यावापृथिव्योरन्ध्रमन्तरालं व्यश्नुवानानि व्याप्नुवन्ति । अश्नोतेर्लटः शानजादेशः । स्थावराणि स्थिरानि यशांसि क्रीणन्ति स्म । स्वीचक्रुरित्यर्थः । अत्र न्यूनैः प्राणैस्ततोऽधिकयशःपरिवर्तनान्न्यूनपरिवृत्तिरलङ्कारः । 'समन्यूनाधिकानाञ्च यदा विनिमयो भवेत् । साकं समाधिकन्यूनैः परिवृत्तिरसौ मता' । इति लक्षणात् ॥ १५ ॥

वीर्य्योत्साहेति । सङ्ग्रामाग्रे रणाग्रे वीर्य्योत्साहाभ्यां श्लाघ्यते इति श्लाघि विक्रमाहङ्कारशोभि अवदानं महत् कर्म कृत्वा । 'अवदानं कर्म वृत्तम्' इत्यमरः । लज्जितानां मानित्वात् स्वनामाख्याने सङ्कोचवतामित्यर्थः । शत्रुभिरज्ञातानामज्ञातनामकानां मानिनां मानशालिनां शूराणां सम्बन्धि श्रीमत् शौर्य्यश्रीयुक्तं नाम नग्नाः बन्दिनः । 'बन्दिनि क्षपणे नग्नः' इति विश्वः । उच्चैः श्रावयन्ति स्म । अयमसाविति कथयामासुरित्यर्थः । युक्तं सर्वमेतदुचितमित्यर्थः । अत्र लज्जामानाज्ञातयोर्विशेषणगत्या बन्दिश्रावणहेतुत्वात् काव्यलिङ्गभेदः ॥ १६ ॥

आधावन्त इति । क्रोधेनान्धा अपश्यन्तोऽन्ये भटाः आधावन्तोऽभिमुखमापतन्तः सन्तः अन्यैः सैन्यैः प्रतिद्वन्द्वाभिसम्मुखं धारितानां दृतानां तीक्ष्णकौक्षेयकाणां निशितासीनाम् । 'कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु' इति

मिश्रीभूते तत्र सैन्यद्वयेऽपि प्रायेणायं व्यक्तमासीद्विशेषः ।
आत्मीयास्ते ये पराञ्चः पुरस्तादभ्यावर्त्ती सम्मुखो यः परोऽसौ १८
सद्वंशत्वादङ्गसंसङ्गिनीत्वं नीत्वा कामं गौरवेणाववद्धा ।
नीता हस्तं वञ्चयित्वा परेण द्रोहं चक्रे कस्यचित् स्वा कृपाणी १९
नीते भेदं धौतधाराभिघातादम्भोदाभे शात्रवेणापरस्य ।
सासृग्राजिस्तीक्ष्णमार्गस्य मार्गो विद्युद्दीप्रः कङ्कटे लक्ष्यते स्म ॥ २०

ढकञ्प्रत्ययः । पुष्कराणि फलानि । खङ्गमुखानीत्यर्थः । 'पुष्करं तूर्य्यवक्त्रे च काण्डे खङ्गफलेऽपि च' इति विश्वः । वक्षांसि पीठानीव वक्षःपीठैर्वक्षःस्थलैः आत्सरोरामुष्टेः । 'त्सरुः खङ्गादिमुष्टौ स्यात्' इत्यमरः । 'आङ् मर्य्यादाभिविध्योः' इति विकल्पादसमासः । आत्मना स्वयमेव । परप्रयत्नं विनेत्यर्थः । प्राविशन् प्रविष्टाः । अत्र क्रोधान्धविशेषणगत्या पुष्करप्रवेशहेतुत्वात् काव्यलिङ्गभेदः ॥ १७ ॥

मिश्रीभूत इति । तत्र युद्धे सैन्यद्वयेऽपि मिश्रीभूते मिलिते सति प्रायेणायं विशेषोऽसाधारणधर्म्मो व्यक्तमासीत् । क इत्याह—पुरस्तादग्रे ये पराञ्चः पराङ्मुखाः । परेऽपीति भावः । ते आत्मीयाः, अवध्या इत्यर्थः । 'न भीतं न परावृत्तम्' इति वधनिषेधश्रवणात् । यः पुरस्तादभ्यावर्त्ती परावर्त्ती सम्मुखोऽभिमुखः । स्वकीयोऽपीति भावः । असौ परः शत्रुर्वध्य इत्यर्थः । प्राणलुब्धस्य । स्वामिद्रोहित्वादित्यर्थः ॥ १८ ॥

सदिति । सद्वंशत्वाच्छुद्धाकरत्वात् कुलीनत्वाच्चाङ्गसंसङ्गिनीत्वमङ्गसम्बन्धित्वं नीत्वा । अगुणत्वविवक्षायां 'त्वतलोर्गुणवचनस्य' इति न पुंवद्भावः । कामं गौरवेणादरेणाववद्धा संयता च कस्यचित् स्वा स्वकीया कृपाणी असिलता । परेणान्येन वञ्चयित्वा प्रतार्य्य हस्तं नीता स्वायत्तीकृता सती द्रोहं हिंसां व्यभिचारञ्च चक्रे कृतवती । अत्र प्रकृतकृपाणीविशेषणसाम्यादप्रकृतस्वैरिणीप्रतीतिः समासोक्तिः ॥ १९ ॥

नीत इति । शात्रवेण शत्रुणा । प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः । धौताया उत्तेजिताया धारायाः खङ्गधाराया अभिघाताद्भेदं नीते विदारितेऽम्भोदाभे मेघश्यामे अपरस्य भटस्य कङ्कटे कवचे । 'उरच्छदः कङ्कटकोऽजगरः कवचो-

आमूलान्तात् सायकेनायतेन स्यूते बाहौ मण्डुकाश्लिष्टमुष्टेः।
प्राप्यासह्यां वेदनामस्तधैर्य्यादप्यभ्रश्यच्चर्म नान्यस्य पाणेः॥२१॥
भित्त्वा घोणामायसेनाधिवक्षः स्यूरीपृष्ठो गार्ध्रपक्षेण विद्धः।
शिक्षाहेतोर्गाढ़रज्ज्वेव बद्धो हर्त्तुं वक्त्रं नाशकद् दुर्मुखोऽपि॥२२
कुन्तेनोच्चैः सादिना हन्तुमिष्टान्नाजनेयो दन्तिनस्त्रस्यति स्म।
कर्म्मोदारं कीर्त्तये कर्त्तुकामान् किं वा जात्याः स्वामिनो क्षेपयन्ति२३

ऽस्त्रियाम्' इत्यमरः। सहास्त्रराज्या सास्त्रराजिः सरक्तरेखः तीक्ष्णमार्गस्य खड्गस्य मार्गः प्रहारो विद्युद्दीप्तस्तड़िदुज्ज्वलो लक्ष्यते स्म। उपमालङ्कारः॥२०

आमूलान्तादिति। अन्यस्य भटस्य बाहौ आयतेन दीर्घेण सायकेन आमूलान्तान्मूलप्रदेशपर्य्यन्तम्। आकक्षमित्यर्थः। विकल्पादसमासः। स्यूते प्रोते सति असह्यां वेदनां व्यथां प्राप्य अतएवास्तधैर्य्यात् त्यक्तधैर्य्यादपि धारयितुमक्षमादपि मण्डुके संग्राहे श्लिष्टा संदष्टा मुष्टिर्यस्य तस्मात् पाणेश्चर्म्म फलकम्। 'फलकोऽस्त्रीफलं चर्म संग्राहो मुष्टिरस्य यः' इत्यमरः। नाभ्रश्यन्नापतत्। अत्र सायकप्रोतमुष्टिश्लेषयोर्विशेषणगत्या धैर्य्यत्यागचर्म्मभ्रंशौ प्रति हेतुत्वात् काव्यलिङ्गभेदः॥ २१॥

भित्त्वेति। आयसेनायोमयेन गार्ध्रो गृध्रसम्बन्धी पक्षः पत्रं यस्य तेन गार्ध्रपक्षेण बाणविशेषेण घोणां नासां भित्त्वा। 'घोणा नासा च नासिका' इत्यमरः। अधिवक्षो वक्षसि। विभक्त्यर्थेऽव्ययीभावः। विद्धः प्रहृतः। व्यधेः कर्म्मणि क्तः, 'ग्रहिज्या'—इत्यादिना सम्प्रसारणम्। स्यूरीपृष्ठो नवारूढ़ोऽश्वः शिक्षैव हेतुः तस्य शिक्षाहेतोः शिक्षया निमित्तेन। शिक्षार्थमिति यावत्। 'षष्ठी हेतुप्रयोगे' इति षष्ठी। गाढ़रज्ज्वा गाढ़पाशेन बद्ध इवेत्युत्प्रेक्षा। दुर्मुखोऽप्यशिक्षितमुखोऽपि वक्त्रं हर्त्तुमपाक्रष्टुं नाशकन्न शक्तः। शकेर्लुङि 'पुषादि'—इति च्लेरङादेशः। शिक्षितो हि शिक्षावशादबद्धोऽपि बद्धवदास्ते, अशिक्षितस्तु निबद्धोऽपि झटिति मुखमपहरतीति भावः। अपिर्विरोधे। अतएव विरोधाभासोऽलङ्कारः॥ २२॥

कुन्तेनेति। आजानेयः कुलीनाश्वः। 'आजानेयाः कुलीनाः स्युः' इत्यमरः। 'शुभ्रादिभ्यश्च' इति ढक्प्रत्ययः। सादिनाश्वारोहेण कर्त्रा।

जेतुं जैत्राः शेकिरे नारिसैन्यैः पश्यन्तोऽधो लोकमस्तेषुजालाः ।
नागारूढाः पार्वतानि श्रयन्तो दुर्गाणीव त्रासहीनास्त्रसानि ॥२४
विष्वद्रीचीर्विक्षिपन् सैन्यवीचीः राजावन्तः क्वापि दूरं प्रयातम् ।
बभ्रामैको बन्धुमिष्टं दिदृक्षुः सिन्धौ वाद्यो मण्डलं गोर्दराक्षः २५

उच्चैरुवर्तन कुन्तेन प्रासेन करेण हन्तुं प्रहर्त्तुमिष्टादभिप्रेताद्दन्तिनो न त्रसाति स्म न त्रस्तः । 'वा भ्राश'—इत्यादिना श्यन्प्रत्ययः । तथा हि जात्याः कुलीनाः । भवार्थे यत्प्रत्ययः । कीर्त्तये उदारं कर्म महापौरुषं कर्त्तुं कामो येषां तान् कर्त्तुकामान् । 'तुं काममनसोरपि' इति मकारलोपः । स्वमेषामस्तीति स्वामिनो भर्त्तॄन् । 'स्वामिन्नैश्वर्य्ये' इति निपातः । ह्रेपयन्ति लज्जयन्ति किं । न ह्रेपयन्तीत्यर्थः । 'अर्त्तिह्री'—इत्यादिना पुगागमः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २३ ॥

जेतुमिति । जेतार एव जैत्रा जयशीलाः । जेतृप्रकृतेः प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः । लोकं जनमधः पश्यन्तः स्वयमुपर्य्यवस्थानाल्लोकमधोदेशे पश्यन्तः, अधःकृतं मन्यमानाश्च । अस्तेषुजालाः शिप्तशरनिकराः त्रासहीना दुर्गस्थत्वान्निर्भीकाः । नागारूढा गजारोहा त्रस्यन्ति गच्छन्तीति त्रसानि जङ्गमानि । 'चरिष्णुजङ्गमचरं त्रसमिङ्गं चराचरम्' इत्यमरः । पार्वतानि पर्वतसम्बन्धीनि दुर्गाणि । गिरिदुर्गाणीत्यर्थः । श्रयन्तोऽधितिष्ठन्त इत्युत्प्रेक्षा, तेऽप्येवम्भूता एवेति भावः । अरिसैन्यैः कर्त्तृभिः जेतुं न शेकिरे । अशक्ता बभूवुरित्यर्थः । शकेः कर्म्मणि लिट् । अत्र मनुः—'धनुर्दुर्गं महीदुर्गमब्दुर्गं वनमेव च । नृदुर्गं गिरिदुर्गञ्च समाश्रित्य वसेन्नृपः । सर्व्वेणैव प्रकारेण गिरिदुर्गं समाश्रयेत् । तेषां हि बहुगुणत्वेन गिरिदुर्गं विशिष्यते' । इति ॥२४॥

विष्वगिति । एकः कोऽपि वीरः । विष्वगञ्चतीति विष्वद्रीचीः सर्व्व-व्यापिनीः । 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इति टेरद्र्यादेशः, धातोरप्य-ञ्चतेरुपसंख्यानात् 'उगितश्च' इति ङीप्, 'अचः' इत्यकारलोपे 'चौ' इति दीर्घः । सैन्यानि वीचिरिव सैन्यवीचिरित्युपमितसमासः । सिन्धौ वेति लिङ्गादिक्षिपन्नपाकुर्व्वन् अन्तराजिमध्ये क्वापि दूरं प्रयातमिष्टं बन्धुं दिदृक्षु-र्द्रष्टुमिच्छुः सन् । दृशेः सन्नन्तादुप्रत्ययः । क्वापि प्रयातं मग्नं गोर्भूमेर्मण्डलं

यावच्चक्रे नाञ्जनं बोधनाय व्युत्थानज्ञो हस्तिचारी मदस्य ।
सेनास्थानाद्दन्तिनामात्मनैव स्थूलास्तावत् प्रावहन् दानकुल्याः॥२६
क्रुध्यन् गन्धादन्यनागाय दूरादारोढारं धूतमूर्द्धावमत्य ।
घोरारावभ्रामिताशेषदिक्के विष्के नागः पर्य्यणंसीत् स्व एव॥२७
प्रत्यासन्ने दन्तिनि प्रातिपक्षे यन्त्रा नागः प्राप्तवक्त्रच्छदोऽपि ।
क्रोधाक्रान्तः क्रूरनिर्घोषिताशः प्रत्याचक्रे नैव किञ्चिन्मदान्धः॥२८

भूगोलं दिदृक्षुराद्यो वराहः सिन्धौ वा समुद्रे इव । 'उपमायां विकल्पे वा' इत्यमरः । आजौ बभ्राम, एकवीरस्य कुतो भयमित्यर्थः ॥ २५ ॥

यावदिति । व्युत्थानं गजोत्थापनं जानातीति व्युत्थानज्ञः हस्तिनि चरतीति हस्तिचारी यन्ता, मदस्य बोधनायोत्थापनाय अञ्जनमुद्दीपनं कर्म्म यावन्न चक्रे तावत् प्रागेव, असमाप्ते विधावित्यर्थः । सेनास्थानात्, सेनाकलकलश्रवणादित्यर्थः । दन्तिनामात्मना स्वयमेव स्थूला महत्यो दानकुल्या मदसरितः प्रावहन्निति दन्तिनामुत्साहातिरेकोक्तिः । अञ्जनात् प्राग्दानसम्बन्धोक्तेरतिशयोक्तिः ॥ २६ ॥

क्रुध्यन्निति । दूराद्दूर एव गन्धात् मदगन्धाघ्राणात् अन्यनागाय प्रतिगजाय क्रुध्यन्, तं जिघांसुरित्यर्थः । 'क्रुधद्रुह'—इत्यादिना सम्प्रदानत्वम् । नागो धूतमूर्द्धा विधूनमस्तकः सन् । आरोढारं यन्तारमवमत्यावधूय घोरारावैर्दारुणक्रन्दनैः भ्रामिता अशेषदिशो येन तस्मिंस्तथा, उच्चैराक्रोशतीत्यर्थः । शैषिकः कप्प्रत्ययः । स्वे स्वकीय एव, स्वपुत्र एवेत्यर्थः । 'पूर्व्वादिभ्यो वा' इति विकल्पान्न स्मिन्नादेशः । अतएव स्वे स्वपुत्रे विष्क इति श्लिष्टगत्या व्याख्याय पुत्रस्यापि ज्ञातित्वान्न सर्व्वनामसंज्ञेति वल्लभोक्तिः प्रामादिकी, विष्के विंशतिवर्षके डिम्भे, 'विष्को विंशतिवर्षकः' इति वैजयन्ती । पर्य्यणंसीत्, तिर्य्यक् प्रजहारेत्यर्थः । 'तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति हलायुधः । 'यमरमनमातां सक्च' इति नमेर्लुङि सगिडागमौ 'नेटि' इति वृद्धिप्रतिषेधः ॥ २७ ॥

प्रत्यासन्ने इति । प्रातिपक्षे प्रतिपक्षसम्बन्धिनि । 'तस्येदम्' इत्यण् । दन्तिनि गजे प्रत्यासन्ने सति यन्त्रा सादिना प्राप्तवक्त्रच्छदोऽपि निरस्तमुख-

तूर्णं यावन्नापनिन्ये निषादी वासश्चक्षुर्वारणं वारणस्य ।
तावत् पूर्गैरन्यनागाधिरूढ़ः कादम्बानामेकपातैरसीव्यत् ॥ २९॥
आस्यद्दृष्टेराच्छदच्च प्रमत्तो यन्ता यातुः प्रत्यरीभं द्विपस्य ।
मग्नस्योच्चैर्बर्हभारेण शङ्कोरावव्राते वीक्षणे च क्षणेन ॥ ३० ॥
यत्नाद्रक्षन् सुस्थितत्वादनाशं निश्चित्यान्यश्चेतसा भावितेन ।
अन्त्यावस्थाकल्पयोग्योपयोगं दध्रेऽभीष्टं नागमापद्धनं वा ॥३१॥

पटोऽपि क्रोधाक्रान्तः अतएव क्रूरं घोरं निर्दारिताक्षः तथापि मदान्धो नागो गजो न किञ्चिदेव प्रेक्षाञ्चक्रे किमपि पुरोगतं प्रातिपक्षमन्यद्वा न ददर्शे-त्यर्थः । आवरणान्तराभावेऽपि मदावरणस्यानपायादिति भावः । 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययः । अत्रानावृतोन्मीलिताक्षस्याप्यदर्शनविरोधस्य मदान्धेनाविरोधाद्विरोधाभासोऽलङ्कारः ॥ २८ ॥

तूर्णमिति । निषादी यन्ता वारणस्य गजस्य चक्षुर्वारणं नेत्रावरणं वासो मुखपटं यावत् तूर्णं नापचकार तावदन्यनागाधिरूढ़ः प्रतिगजाधि-रोहः एकः एककालीनः पातो येषां तैरेकपातैर्युगपत् पातिभिरिति शीघ्र-तोक्तिः । कादम्बानां शराणाम् । 'कादम्बमार्गणशराः' इत्यमरः । पूर्गैर्व्रातै-रसीव्यत्, चक्षुषा सह तद्वासः स्यूतवानित्यर्थः । सीव्यतेर्लङ् । अत्र चक्षुषः सीवनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ २९ ॥

आस्यदिति । यन्ता प्रमत्तः सन् प्रत्यरीभमरिगजं प्रति । आभि-मुख्येऽव्ययीभावः । यातुर्गन्तुः । यातेस्तृच् । द्विपस्य दृष्टेराच्छदमाव-रणम् । पुंसि संज्ञायाञ्च घः । आस्थन्निरस्तवान् । 'अस्यति वक्तिख्याति-भ्योऽङ्' इति च्लेरङादेशः 'अस्यतेस्थुक्' इति थुगागमः । मग्नस्य मुख-निमग्नस्य शङ्कोः शल्यायुधस्य । 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमरः । उच्चैर्बर्ह-भारेण पिच्छपटलेन वीक्षणे चक्षुषी क्षणेनावव्राते आवृते । वृणोतेः कर्मणि लिट् । अन्योन्यसमुच्चयचकाराभ्यामावरणनिरासे पुनरावरणयोरेककाले सम्बन्धोक्तेरतिशयोक्तिः ॥ ३० ॥

यत्नादिति । अन्यः गजारोहः भावितेनालोचितेन चेतसा सुस्थितत्वा-

अन्योऽन्येषां पुष्करैरामृशन्तो दानोद्भेदानुच्चकैर्भुग्नबालाः।
उन्मूर्द्धानः सन्निपत्यापरान्तैः प्रायुध्यन्त स्पष्टदन्तध्वनीभाः॥ ३२॥
द्राघीयांसः संहताः स्थेमभाजश्चारूदग्रास्तीच्णतामत्यजन्तः।
दन्ता दन्तैराहताः सामजानां भङ्गं जग्मुर्न स्वयं सामजाताः ३३

दनपायिदेशत्वात् अनाशमनपायं निश्चित्य यत्नाद्रक्षन् वश्चकेभ्यस्त्रायन् (माणः) सन्। अस्यावस्थाकाले साधनान्तरकाले नाशकाले योग्योपयोगं अतएवाभीष्टं नागं गजमापद्धनं वापद्धनमिव दध्रे अन्यतोपसार्थ्य धारयामास। धरतेः स्वरितेत्वात् कर्त्तरि लिट् तङ्॥ ३१॥

अन्योन्येषामिति। इभा गजाः अन्योन्येषां परस्परेषाम्। कर्म्मव्यतिहारे सर्व्वनाम्नो द्वे भवत इति वक्तव्याद्द्वित्वम्। 'समासश्च बहुलम्' इति विकल्पादसमासत्वपक्षे पूर्व्वपदस्य प्रथमैकवचनं वक्तव्यम्। उद्भिद्यन्ते एष्विति उद्भेदाः। 'अकर्त्तरि च कारके संज्ञायाम्' इत्यधिकरणार्थे घञ् प्रत्ययः। दानोद्भेदान् कटादिमदस्थानानि पुष्करैर्हस्ताग्रैः। 'पुष्करं करिहस्ताग्रम्' इत्यमरः। आमृशन्तो जिघ्रन्त उच्चकैरुन्नता भुग्नबालाः प्रह्वीकृतपुच्छाः। 'बालः केशे शिशौ मूर्खे बालो वाजीभपुच्छयोः' इति विश्वः। उन्मूर्द्धान उन्नतमस्तकाः सन्तः स्पष्टदन्तध्वनि यथा तथा सन्निपत्यापरान्तैः सह प्रायुध्यन्त। दिवादि युध्यतेः कर्त्तरि लङ्। स्वभावोक्तिः॥ ३२॥

द्राघीयांस इति। द्राघीयांसो दीर्घतराः। 'प्रियस्थिर'—इत्यादिना दीर्घस्य ईयसुनि द्राघादेशः। संहताः सुघटिताः अतएव स्थेमभाजः स्थैर्य्यभाजः। 'प्रियस्थिर'—इत्यादिना स्थिरशब्दस्येमनिचि स्थादेशः। चारवो रम्या उदग्रा उन्नताश्च ते चारूदग्राः। विशेषणसमासः। तीक्ष्णतां नैशित्यं अत्यजन्तः सामजानां गजानां दन्ता दन्तैः प्रतिगजविषाणैराहताः सन्तो भङ्गं भेदं जग्मुः बभञ्जुः। सामजाताः दन्तिनस्तु स्वयं भङ्गं पराजयं न जग्मुः, दन्तभङ्गेऽपि स्वयं न परावर्त्तन्त इत्यर्थः। अत्रापरावर्त्तित्वेन वर्ण्यतया प्रकृतत्वादुपमेयानां दन्तिनामुपमानदन्तापेक्षया अभग्नत्वेनाधिक्योक्तेर्व्यतिरेकस्तुल्ययोगिताया बाधक इति गमयितव्यम्॥ ३३॥

मातङ्गानां दन्तसङ्घट्टजन्मा हेमच्छेदच्छायचञ्चच्छिखाग्रः ।
लग्नोऽप्यग्निश्चामरेषु प्रकामं माञ्जिष्ठेषु व्यज्यते न स्म सैन्यैः॥३४
ओषामासे मत्सरोत्पातवातात्श्लिष्यद्दन्तक्ष्मारुहां घर्षणोत्थैः ।
यौगान्तैर्वा वह्निभिर्वारणानामुच्चैर्मूर्धव्योम्नि नक्षत्रमाला ॥ ३५॥
सान्द्राम्भोदश्यामले सामजानां वृन्दे नीताः शोणितैः शोणिमानम् ।
दन्ताः शोभामापुरम्भोनिधीनां कन्दोद्भेदा वैद्रुमा वारिणीव ॥३६

मातङ्गानामिति । मातङ्गानां दन्तिनां दन्तसङ्घट्टजन्मा दन्तसङ्घर्षोत्थ-हेमच्छेदच्छायानि कनकपरागवर्णानि चञ्चन्ति चलन्ति च शिखाग्राणि ज्वालाग्राणि यस्य सोऽग्निः मञ्जिष्ठया ओषधिविशेषेण रक्तेषु माञ्जिष्ठेषु । 'तेन रक्तं रागात्' इत्यण्प्रत्ययः । 'मञ्जिष्ठा विकसा जिङ्गी' इत्यमरः । चामरेषु लग्नोऽपि सैन्यैः प्रकामं न व्यज्यते न विविच्यते स्म । सावर्ण्यादिति भावः । अतः सामान्यालङ्कारः । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् । स च विशेषणोत्थकाव्यलिङ्गसङ्कीर्णः॥ ३४ ॥

ओषामासे इति । मत्सरो वैरमेवोत्पातवात आकस्मिकवायुस्तेनाश्लिष्यतां संयुज्यमानानां दन्तानामेव क्ष्मारुहां वृक्षाणां घर्षणेनोत्था जन्म येषां तैर्वह्निभिर्यौगान्तैर्वा युगान्तभवैर्वह्निभिरिव वारणानामुच्चैरुन्नतः मूर्धा व्योमेव तस्मिन् मूर्धव्योम्नि नक्षत्रमाला हारविशेषः । 'सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः' इत्यमरः । ज्योतिर्मण्डलञ्च ओषामासे, दग्धेत्यर्थः । 'उष दाहे' इति धातोः कर्मणि लिट् । 'उषविदजागृभ्योऽन्यतरस्याम्' इत्याम्प्रत्ययः । लघूपधगुणः 'कृञ्चानुप्रयुज्यते लिटि' इत्यस्तेरनुप्रयोगः । अत्र नक्षत्रमालयोरभेदाध्यवसायेन निर्देशाद्रूपकश्लेषसङ्कीर्णेयमुपमा ॥ ३५ ॥

सान्द्राम्भोदेति । सान्द्रश्च तदम्भोदश्यामलञ्च तस्मिन् सामजानां गजानां वृन्दे शोणितैः शोणिमानमारुण्यं नीता दन्ताः अम्भोनिधीनां वारिनिधीनां वारिणीव विद्रुमाणां प्रवालानामिमे वैद्रुमाः । 'विद्रुमः पुंसि प्रवालं पुंनपुंसकम्' इत्यमरः । कन्दो मूलपिण्डः तस्योद्भेदाः प्ररोहा इव शोभामापुरित्युपमा ॥ ३६ ॥

आकम्प्राग्रैः केतुभिः सन्निपातं तारोदीर्णग्रैवनादं व्रजन्तः ।
मग्नानङ्गे गाढमन्यद्विपानां दन्तान् दुःखादुत्खनन्तिस्म नागाः॥३७
उत्क्षिप्योच्चैः प्रस्फुरन्तं रदाभ्यामीषादन्तः कुञ्जरं शातवीयम् ।
शृङ्गप्रोतप्रावृषेण्याम्बुदस्य स्पष्टं प्रापत् साम्यमुर्वीधरस्य ॥ ३८॥
भग्नेऽपीभे स्वे परावर्त्य देहं योद्धा सार्द्धं व्रीड़या मुञ्चतेषून् ।
साकं यन्तुः सम्मदेनानुबन्धी दूनोऽभीक्ष्णं वारणः प्रत्यरोधि ॥३९

आकम्प्राग्रैरिति । आकम्प्राणि दन्तोत्खननसङ्क्षोभात् भृशं कम्प्राण्यग्राणि येषां तैः केतुभिर्ध्वजैः सन्निपातं सङ्घर्षं व्रजन्त इति दुःखहेतूक्तिः । नागाः गजास्तारमुच्चैरुदीर्ण उत्पन्नः ग्रैवाणां ग्रीवासूत्पन्नानां शृङ्खलभूषणादीनां नादो यस्मिन् कर्म्मणि तत् तथा अन्यद्विपानां प्रतिगजानाम् अङ्गे गाढं मग्नानन्तः प्रविष्टान् दन्तान् दुःखादुत्खनन्ति स्म । तेषां गाढमग्नत्वात् स्वयं केतुभाराक्रान्तत्वाच्च कृच्छ्रादुज्जह्रुरित्यर्थः । अत्रोक्तभारमज्जनयोर्विशेषणगत्या दुःखोत्खननहेतुत्वात् काव्यलिङ्गम् ॥ ३७ ॥

उत्क्षिप्येति । ईषे लाङ्गलदण्डाविव दन्तौ यस्य स ईषादन्तो महादन्तो दन्ती । 'ईषा लाङ्गलदण्डः स्यात्' इत्यमरः । प्रस्फुरन्तं प्राणोत्क्रमणदुःखादुल्लसन्तं शातवस्येदं शातवीयं कुञ्जरं रदाभ्यां दन्ताभ्यां उच्चैरुत्क्षिप्योद्धृ-मुद्यम्य शृङ्गे शिखरे प्रोतः स्यूतः प्रावृषेण्यः प्रावृषि भवोऽम्बुदो यस्य तस्य । 'प्रावृष एण्यः' इत्येण्यप्रत्ययः । उर्वीधरस्य गिरेः साम्यं सादृश्यं स्पष्टं प्रापत् । आप्नोतेर्लुङि 'पुषादि'—इति च्लेरङादेशः ॥ ३८ ॥

भग्नेऽपीति । स्वे स्वकीये इभे गजे भग्नेऽपि देहं स्वाङ्गं परावर्त्य प्रतिपद्माभिमुखमावर्त्य । वृतेर्ण्यन्ताल्ल्यप् । अण्यन्तस्त्वपपाठः अकर्म्मकस्य कर्म्मानन्वयात् । व्रीड़या सार्धमिषून् मुञ्चता, इषुमोचनेन स्वगजभङ्गव्रीड़ां निरस्यतेत्यर्थः । योद्धा भग्नेभस्थेन भटेन कर्त्रा अभीक्ष्णं दून इषुभिस्तप्तः । 'ल्वादिभ्यः' इति निष्ठानत्वम् । अनुबध्नातीत्यनुबन्धी वारणो यन्तुः प्रतिगजारोहस्य सम्मदेन साकं स्वेभजयजन्येन हर्षेण सह । 'प्रमदसम्मदौ हर्षे' इति निपातः । प्रत्यरोधि प्रतिरुद्धः । तत्प्रतिरोधेन तत्सम्मदस्यापि प्रति-

व्याप्तं लोकैर्दुःखलभ्यापसारं संरम्भित्वादेत्य धीरो महीयः ।
सेनामध्यङ्गाहते वारणः स्म ब्रह्मेव प्रागादिदेवोदरान्तः ॥ ४०॥
भृङ्गश्रेणीश्यामभासां समूहैर्नाराचानां विद्धनीरन्ध्रदेहः ।
निर्भीकत्वादाहवेनाहतेच्छो हृष्यन् हस्ती हृष्टरोमेव रेजे ॥४१॥
आताम्राभा रोषभाजः कटान्तादाशूत्खाते मार्गणे धूर्गतेन ।
निश्चोतन्ती नागराजस्य जज्ञे दानस्याहो लोहितस्येव धारा॥४२

रोधव्याप्तेरिति भावः । 'साकं सार्धं समं सह' इत्यमरः । अत्र व्रीडितेषु-मोचयोः सम्मदयन्तृप्रतिरोधयोश्च कार्यकारणयोस्तत्पौर्वापर्यविपर्ययरूपा-तिशयोक्त्या सहभावोक्तेः सहोक्तिः सङ्कीर्यते ॥ ३९ ॥

व्याप्तमिति । वारणः कश्चिद्दन्ती संरम्भित्वात् क्रोधित्वात् । 'संरम्भः सम्भ्रमे कोपे' इति विश्वः । धीरो निर्भीकः सन् एत्यागत्य महीयो विपुलं लोकैर्जनैः अन्यत्र भुवनैश्च व्याप्तम् । 'लोकस्तु भुवने जने' इत्यमरः । अतो दुःखलभ्योऽपसारोऽपसरणं यत्र तत् सेनामध्यं प्राक् पुरा आदिदेवस्य विष्णोः उदरान्तरुदराभ्यन्तरं ब्रह्मा स्रष्टेव गाहते स्म प्रविवेश । पुरा किल बाह्यं सिसृक्षुर्ब्रह्मा पूर्वसृष्टिदिदृक्षया विष्णोः कुक्षिं प्राविशदिति पौराणिकी कथा । केचिद्ब्रह्मा ब्राह्मणो मार्कण्डेय इति व्याचक्षते, सोऽपि भगवन्महिमावलोकन-कौतुकात्तदनुज्ञया महाप्रलये तदुदरं प्रविश्य बभ्रामेत्यागमः । 'ब्रह्मा विप्रः प्रजापतिः' इत्यमरः । उपमालङ्कारः ॥ ४० ॥

भृङ्गेति । भृङ्गश्रेणीव श्यामभासां कृष्णवर्णानां नाराचानामयोमयेषु-विशेषाणां समूहैः विद्धो नीरन्ध्रो निर्विवरो देहो यस्य सः तथापि निर्भीक-त्वादाहवेनाहतेच्छः अव्याहतोत्साहः अतएव हृष्यन् मोदमानो हस्ती हृष्टरो-मेव हर्षात् पुलकित इवेत्युत्प्रेक्षा । 'हृषेर्लोमसु' इति विकल्पादिड्भावः । रेजे शुशुभे । 'फणानाञ्च सप्तानाम्' इति विकल्पादेत्वाभ्यासलोपौ ॥ ४१ ॥

आताम्रेति रोषभाजः क्रुद्धस्य नागराजस्य महेभस्य कटान्तात्गण्ड-स्थलान्निश्चोतन्ती प्रागेव स्रवन्ती दानस्य मदस्य धारा आताम्राभा क्रोधा-दरुणवर्णा जज्ञे जाता । आहो धूर्गतेन पुरोगतेन यन्त्रा मार्गणे शरे आशूत्-

क्रामन् दन्तौ दन्तिनः साहसिक्यादीषादण्डौ मृत्युशय्यातलस्य
सैन्यैरन्यस्तत्क्षणादाशशङ्के स्वर्गस्योच्चैरर्द्धमार्गाधिरूढः ॥ ४३ ॥
कुर्वन् ज्योत्स्नाविप्रुषां तुल्यरूपस्तारस्ताराजालसारामिव द्याम्।
खड्गाघातैर्दारिताद्दन्तिकुम्भादाभाति स्म प्रोच्छलन् मौक्तिकौघः॥ ४४
दूरोत्क्षिप्तक्षिप्रचक्रेण कृत्तं मत्तो हस्तं हस्तिराजः स्वमेव ।
भीमं भूमौ लोलमानं सरोषः पादेनासृक्पङ्कपेषम्पिपेष ॥ ४५॥

खाते लोहितस्य क्षतजस्येव धारा जज्ञे । जनिः कर्त्तरि लिट् । किमियं क्रोधारुणा मदधारा शरीरवरणजन्या रक्तधारा वेत्युभयकारणसम्भवात् सादृश्याच्च संशयः स च विकल्पितसादृश्यमूल इत्यलङ्कारः ॥ ४२ ॥

क्रामन्निति । मृत्युशय्यातलस्य अन्तकपर्य्यङ्करूपस्य । 'अधः स्वरूपयोरस्त्री तलम्' इत्यमरः । ईषादण्डौ दारुविशेषौ तत्सदृशौ, आयताविल्यर्थः । दन्तिनो दन्तौ सहसा वर्त्तत इति साहसिकः । 'ओजःसहोम्भसा वर्त्तते' इति ठक्प्रत्ययः । तस्य भावात् साहसिक्यात् क्रामन्, साहसवानित्यर्थः । अन्यस्तत्क्षणादुच्चैरूर्द्ध सन् स्वर्गस्य अर्द्धमासौ मार्गश्चेति तदर्द्धमार्गाधिरूढ इति सैन्यैराशसङ्के उत्प्रेक्षित इत्युत्प्रेक्षा ॥ ४३ ॥

कुर्वन्निति । ज्योत्स्नाविप्रुषां तुल्यरूपः चन्द्रिकाबिन्दुस्वरूपः तारः शुद्धः । 'तारो मुक्तादिसंशुद्धौ' इति विश्वः । खड्गाघातैर्दारिताद्दन्तिकुम्भात् प्रोच्छलन्नुत्पतन्मौक्तिकौघो मुक्तापुञ्जो द्यामाकाशं ताराजालसारां नक्षत्रशबलितां तारकितां कुर्वन्नित्युत्प्रेक्षा । 'सारः शबलपीतयोः' इति विश्वः । आभाति स्म बभौ ॥ ४४ ॥

दूरोत्क्षिप्तेति । मत्तो हस्तिराजः करीन्द्रः दूरादुत्क्षिप्तेन प्रास्तेन अत एव क्षिप्रेण सत्वरेण चक्रेण कृत्तम् अतएव भूमौ लोलमानं लुण्ठमानम् । लोलतेरनात्मनेपदित्वात् 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति ताच्छील्ये चानश् प्रत्ययः । अतएव लोलमानादयश्चानशीति वामनः । भीमं भयङ्करं स्वं स्वकीयमेव हस्तं सरोषः सन् पादेनाङ्घ्रिणा असृक्पङ्केन पङ्कीभूतेनासृजा पिनष्टीत्यसृक्पङ्कपेषम् । 'स्नेहने पिषः' इति णमुल् । पिपेष । कषादित्वादनुप्रयोगः । रक्तपङ्केन स्नेहद्रव्येण ममर्देत्यर्थः । कुङ्कमस्तयोः

आपस्कारात्लूनगात्रस्य भूमिं निःसाधारङ्गच्छतोऽवाङ्मुखस्य ।
लब्धायामं दन्तयोर्युग्ममेव स्वं नागस्य प्रापदुत्तम्भनत्वम् ॥ ४६॥
लब्धस्पर्शं भूव्यधादव्यथेन स्थित्वा किञ्चिद्दन्तयोरन्तराले ।
ऊर्द्ध्वोद्धासिच्छिन्नदन्तप्रवेष्टं जित्वोत्तस्थे नागमन्येन सद्यः ॥ ४७॥
हस्तेनाग्रे वीतभीतिं गृहीत्वा कञ्चिद्व्यालः चिप्तवानूर्द्ध्वमुच्चैः ।
आसीनानां व्योम्नि तस्यैव हेतोर्दिव्यस्त्रीणामर्पयामास नूनम् ४८

कुतो विवेक इति भावः। अत्र पेषणासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ४५ ॥

अपस्कारादिति। गात्रमूलमापस्कारं आपस्कारादामूलात्। आङो विकल्पादसमासः। लूनगात्रस्य छिन्नजङ्घस्य। 'द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्राऽवरे क्रमात्' इत्यमरः। अत एवावाङ्मुखस्य सतः साधारं स्वावलम्बनं न भवतीति निःसाधारं यथातथा भूमिं गच्छतः, पतत इत्यर्थः। नागस्य लब्धायामं प्राप्तदैर्घ्यम् आयतमित्यर्थः। स्वं स्वकीयं दन्तयोर्युग्ममेवोत्तम्भनत्वमवलम्बनत्वं प्रापत्। जङ्घाच्छेदेऽपि दन्तावष्टम्भादपतित इत्यर्थः। अत्र स्वभावातिशयोक्त्योः संसृष्टिः ॥ ४६ ॥

लब्धस्पर्शमिति। भूव्यधात्, दन्ताभ्यां भुवो विद्धत्वादित्यर्थः। 'व्यधजपोरनुपसर्गे' इत्यप्प्रत्ययः। अव्यथेन स्वयमविद्धत्वादव्यथेन सताऽन्येन केनचिद्भटेन दन्तयोरन्तराले किञ्चिल्लब्धः स्पर्शो यस्मिन् कर्म्मणि तद्दन्ताभ्यां भटस्पर्शं यथा तथा स्थित्वा ऊर्द्ध्वं प्रसारितेनाधासिना खड्गैकदेशेन छिन्नः चूर्णितो दन्तप्रवेष्टो दन्तवेष्टनं यस्य तं नागं जित्वा सद्य एव उत्तस्थे उत्थितम्। भावे लिट्। अत्रापि तथोत्थानाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ४७ ॥

हस्तेनेति। व्यालो दुष्टदन्ती। 'व्यालो दुष्टगजे सर्पे' इति विश्वः। अग्रे वीतभीतिं निर्भीकं, भीरोः स्वर्गाभावादिति भावः। कञ्चिद्वीरं हस्तेन गृहीत्वा ऊर्द्ध्वमुपर्य्युच्चैः चिप्तवान्। उत्प्रेक्ष्यते। तस्यैव हेतोस्तेनैव हेतुना। तद्वरणार्थमेवेत्यर्थः। 'सर्वनाम्नस्तृतीया च' इति चकारात् षष्ठी। व्योम्नि

कश्चिद् दूरादायतेन द्रढीयः प्रासप्रोतस्रोतसान्तःक्षतेन ।
हस्ताग्रेण प्राप्तमेवाग्रतोऽभूदानैश्वर्य्यं वारणस्य ग्रहीतुम् ॥ ४९॥
तन्वाः पुंसो नन्दगोपात्मजायाः कंसेनेव स्फोटितायाः गजेन ।
दिव्या मूर्त्तिर्व्योमगैरुत्पतन्ती वीक्षामासे विस्मितैश्चण्डिकेव॥५०
आक्रम्यैकामग्रपादेन जङ्घामन्यामुच्चैराददानः करेण ।
सास्थिस्वानं दारुवद्दारुणात्मा कञ्चिन्मध्यात् पाटयामास दन्ती५१
शोचित्वाग्रे भृत्ययोर्मृत्युभाजोरर्य्यः प्रेम्णा नो तथा वल्लभस्य ।
पूर्व्वं कृत्वा नेतरस्य प्रसादं पश्चात्तापादापि दाहं यथान्तः ॥ ५२॥

आसीनानामवस्थितानाम् । 'ईदासः' इति शानच ईकारः । स्वर्गस्त्रीणाम-मरनारीणाम् अर्पयामास नूनम् ॥ ४८ ॥

कश्चिदिति । दूरादायतेनान्तःक्षतेन विक्षतेन अत एव द्रढीयसा प्रासेन प्रोतं स्रोतो यत्र तेन हस्ताग्रेण करणेन अग्रतः प्राप्तमपि कञ्चिद्भटं ग्रहीतु-मादातुं वारणस्यानीश्वरस्य भाव आनैश्वर्य्यमसामर्थ्यमभूत् । 'नञः शुचीश्वर' —इत्यादिना नञ्पूर्वपदोभयपदवृद्धिः । अत्रापि आनैश्वर्य्यसम्बन्धोक्तेरति-शयोक्तिः ॥ ४९ ॥

तन्वा इति । गजेन स्फोटितायाः विदारितायाः पुंसः कस्यचिद्वीरस्य तन्वाः शरीरात् कंसेन स्फोटितायाः नन्दगोपात्मजाया नन्दकन्याया इवोत्प-तन्ती दिव्या मूर्तिः चण्डिकेव नन्दकन्याशरीरादाविर्भवन्ती कालिकेव विस्मि-तैर्व्योमगैः खेचरैर्वीक्षामासे वीक्षिता । ईक्षतेः कर्म्मणि लिट् । 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययः । मनुष्यभावमुत्सृज्य देवभावं गतेत्यर्थः । उपमा व्यक्ता । पुरा किल दुरात्मनः कंसस्य प्रतारणाय भगवदाज्ञया तन्मा-याशक्तिर्नन्दगोपाज्जाता कंसेन हिंसितेति पौराणिकाः ॥ ५० ॥

आक्रमेति । दारुणात्मा क्रुद्धचित्तो दन्ती एकां जङ्घामग्रपादेनाक्र-म्यान्यां जङ्घामुच्चैरुन्नतेन करेणाददान आकर्षयन् । सास्थिस्वानं भज्यमाना-स्थिचटचटाशब्दयुक्तं तथा तथा कञ्चिद्वीरं दारुवत्काष्ठवत् मध्यात्पाटयामास, मध्यं विभज्य पाटयामासेत्यर्थः । ल्यब्लोपे पञ्चमी । उपमा ॥ ५१ ॥

शोचित्वेति । ऋच्छतीत्यर्यः । 'अर्यः स्वामिवैश्ययोः इति यत्प्रत्ययान्तो

उत्प्लुत्यारादर्द्धचन्द्रेण लूने वक्त्रेऽन्यस्य क्रोधदष्टोष्ठदन्ते ।
सैन्यैः कण्ठच्छेदलीने कबन्धाद्भूयो बिभ्ये वल्गतः सासिपाणेः॥५३

तूर्य्यारावैराहितोत्तालतालैर्गायन्तीभिः काहलं काहलाभिः ।
नृत्ते चक्षुःशून्यहस्तप्रयोगं काये कूजन् कम्बुरुच्चैर्जहास ॥ ५४ ॥

निपातः । अथ समकमेव मृत्युभाजोर्मरणं गतयोर्भृत्ययोः शोचित्वा वल्लभस्येतयोर्मध्ये प्रियभृत्यस्य सम्बन्धिना प्रेम्णा, तद्गतप्रेम्णेत्यर्थः । तथा तेन प्रकारेणान्तर्दाहं सन्तापं नो आप, यथा येन प्रकारेणेतरस्यावल्लभस्य पूर्वं जीवनकाले प्रसादं प्रीतिदानाद्यनुग्रहं न कृत्वा पश्चात्तापाद्यतोऽयमस्माभिरप्रीणित एव प्राणान् प्रादादित्यनुशयाद्दाहमाप । प्रियभृत्य मरणादप्यसम्मानितमरणमेव स्वामिनो दुःसहं दुःखहेतुरासीदित्यर्थः । स्वभावोक्तिः ॥ ५२ ॥

उत्प्लुत्येति । अर्द्धचन्द्रेण बाणेन लूने छिन्ने तथापि क्रोधेन दष्टौ ओष्ठौ यैस्ते दन्ता यस्य तस्मिन् अन्यस्य योधस्य वक्त्रे आरादनतिदूरमुत्प्लुत्य । 'आराद्दूरसमीपयोः" इत्यमरः । भूयः पुनरपि कण्ठस्य छेदः छिन्नदेशः तत्र लीने स्थिते सति वल्गतो नृत्यतः सासिः पाणिर्यस्य तस्मात्कबन्धादपमूर्धकलेवरात् । 'भीत्रार्थानां भयहेतुः' इति पञ्चमी । सैन्यैर्बिभ्ये भीतम् । भावे लिट् । लूनस्यापि वक्त्रस्य पुनः स्वस्थानपातित्वाद्वल्गनासिधारणाभ्यां कबन्धादप्यकबन्धभ्रान्त्या सर्वे बिभ्युरित्यर्थः । अत एव भ्रान्तिमदलङ्कारः ॥ ५३ ॥

तूर्य्यारावैरिति । आहिताः सम्पादिता उत्तालाः प्रस्फुटास्तालाः करपुटादिक्रियामानानि येषु तैः । 'तालः कालक्रियामानम्' इत्यमरः । तूर्यारावैर्मृदङ्गादिवाद्यघोषैस्तथा काहलं भृशं गायन्तीभिः ध्वनन्तीभिः काहलाभिः शुष्कैर्वाद्यविशेषैश्च करणैः । 'काहलं भृशशुष्कयोः । 'वाद्यभाण्डविशेषे तु काहलः काहलः खले' इति विश्वः । काये अपमूर्ध्नि कलेवरे । अत एव चक्षुःशून्यो दृष्टिरहितः हस्तप्रयोगो यस्मिन् कर्मणि तत्तथा नृत्ते नृत्यति सति । कर्त्तरि क्तः । कूजन्ध्वनन् कम्बुः शङ्खः, तटस्थ इवेत्यर्थः । उच्चैस्तरां जहास । दृष्टिशून्याभिनयस्य नाट्यशास्त्रविरोधादट्टहासमकरोदित्यर्थः । व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा । 'अङ्गैरालापयेद्गीतं हस्तेनार्थं

प्रत्यावृत्तं भङ्गभाजि स्वसैन्ये तुल्यं मुक्तैराकिरन्ति स्म कञ्चित् ।
एकौघेन स्वर्णपुङ्खैर्द्विषन्तः सिद्धा माल्यैः साधुवादैर्द्वयेऽपि ॥५५॥
बाणाक्षिप्तारोहशून्यासनानां प्रक्रान्तानामन्यसैन्यैर्ग्रहीतुम् ।
संरब्धानां भ्राम्यतामाजिभूमौ वारी वारैः सस्मरे वारणानाम् ॥५६॥
पौनःपुन्यादस्रगन्धेन मत्तो मृन्दन् कोपाल्लोकमायोधनोर्व्याम् ।
पादे लग्नामत्र मालामिभेन्द्रः पाशीकल्पामायतामाचकर्ष ॥५७॥

प्रदर्शयेत् । दृष्टिभ्यां भावयेद्भावं पादाभ्यां तालनिर्णयः' । इति नाट्य-विदः ॥ ५४ ॥

प्रत्यावृत्तमिति । स्वसैन्ये भङ्गभाजि सति प्रत्यावृत्तमभ्यमित्रं कञ्चिद्वीरं तुल्यमेककालं मुक्तैः स्वर्णपुङ्खैः शरविशेषैः एकौघेन एकप्रहारेण द्विषन्तः आकिरन्ति स्म, सिद्धा खेचराः माल्यैर्दिव्यमालाभिः । चातुर्वर्ण्यादित्वात् ष्यञ्प्रत्ययः । आकिरन्ति स्म । द्वयेऽपि द्विषन्तः सिद्धाश्च साधुवादैः साधु साध्विति वाक्यैराकिरन्ति स्म । एतत्त्रितयमपि युगपत्प्रवृत्तमित्यर्थः । अत्र स्वर्णपुङ्खसुरमाल्यसाधुवादानां प्रकृतानामेव तुल्यकालैकौघप्रवृत्तिसाम्यादौपम्यावगमात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ ५५ ॥

बाणेति । बाणैराक्षिप्ताः पातिताश्च रोहाः सादिनो येभ्यस्तानि अतएव शून्यानि रिक्तान्यासनानि आस्तरणानि येषाम् । अतएवान्यैः सैन्यैः परसैनिकैर्ग्रहीतुं प्रक्रान्तानामारब्धानां समन्तादवध्यमानानामित्यर्थः । अतएव संरब्धानां क्षुभितानां अतएव आजिभूमौ भ्राम्यतामनवतिष्ठमानानां वारणानां वारैर्वृन्दैः वारी बन्धनस्थानम् । 'वारः सूर्य्यादिदिवसे वारो वरणवृन्दयोः । वारी कटीभवन्धन्योः'—इति विश्वः । सस्मरे स्मृता । तत्कर्म-योगादिति भावः । कर्म्मणि लिट् । अत्र शून्यासनत्वादीनां विशेषणगत्या वारीस्मरणहेतुत्वात् काव्यलिङ्गम् ॥ ५६ ॥

पौनःपुन्यादिति । अत्र आयोधनोर्व्यां युद्धभूमौ पौनःपुन्यात्, पुनः-पुनरावृत्तेरित्यर्थः । ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । अव्ययानां भमात्रे टिलो-पस्य सायंप्रातिकाद्यर्थमुपसंख्यानमिति टिलोपः । अस्रगन्धेन, रक्तगन्धा-घ्राणादित्यर्थः । मत्त इभेन्द्रो महागजः कोपाल्लोकं जनं मृन्दन् क्षुन्दन् पादे

कश्चिन्मूर्च्छामित्य गाढ़प्रहारः सिक्तः शीतैः शीकरैर्वारणस्य।
उच्छ्‌श्वास प्रस्थिता तं जिघृक्षुर्व्यर्थाकूता नाकनारी मुमूर्च्छ॥५८

लूनग्रीवात् सायकेनापरस्य द्यामत्युच्चैराननादुत्पतिष्णोः।
त्रेसे मुग्धैः सैंहिकेयानुकारात्रौद्राकारादप्सरोवक्त्रचन्द्रैः॥५९

वृत्तं युद्धे शूरमाश्लिष्य काचिद्रन्तुं तूर्णं मेरुकुञ्जं जगाम।
त्यक्त्वा नाग्नौ देहमेतिस्म यावत् पत्नी सद्यस्तद्वियोगासमर्था॥६०

लग्नामीषदसमाप्तां पाशीकल्पां पाशबन्धनसदृशीम्। 'पाशस्त्वश्वादिबन्धनम्' इति विश्वः। 'बह्वादिभ्यश्च' इति विकल्पादीकारः। अभाषितपुंस्कत्वात् 'घरूप'—इत्यादिना ह्रस्वो न भवति। आयतां दीर्घां मालामाचकर्ष। पाशीकल्पेत्यत्र तद्धितगता पूर्णोपमा॥ ५७॥

कश्चिदिति। गाढः प्रहारो यस्य सः कश्चिद्वीरो मूर्च्छामित्य वारणस्य शीतैः शीकरैः पुष्करतुषारैः सिक्तः सन् उच्छ्‌श्वास उज्जीवति स्म, किन्तु तं मूर्च्छामागतं जिघृक्षुर्ग्रहीतुमिच्छुः। ग्रहेः सन्नन्तादुप्रत्ययः। प्रस्थिता। तं वरीतुमागतेत्यर्थः। नाकनारी व्यर्थाकूता तदुज्जीवनाद्विफलमनोरथा सती मुमूर्च्छ। अत्राकूतवैयर्थ्यस्य विशेषणगत्या नाकनारीमूर्च्छाहेतुत्वात् काव्यलिङ्गं मूर्च्छासम्बन्धातिशयोक्त्या सङ्कीर्य्यते॥ ५८॥

लूनग्रीवादिति। अपरस्य सायकेन लूनग्रीवाच्छिन्नकण्ठात् अतएव द्यामाकाशं प्रति आशु उच्चैरुत्पतिष्णोरुत्पतनशीलात्। 'अलङ्कृञ्'—इत्यादिना इष्णुच्प्रत्ययः। अतएव सिंहिकाया अपत्यं पुमान् सैंहिकेयो राहुः। तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः। 'स्त्रीभ्यो ढक्'। तमनुकारात्, तत्सदृशादित्यर्थः। कर्म्मण्यण्प्रत्ययः। रौद्राकाराद्भीषणाकृतेरस्य वीरस्य आननात् मुग्धैः सुन्दरैरप्सरसां वक्त्रैरेव चन्द्रैस्त्रेसे त्रस्तम्। भावे लिट्। अत्र राहुहेतुकत्रासस्य चन्द्र एव सम्भवाद्वक्त्रचन्द्रैरिति रूपकं सिद्धम्। तस्य सैंहिकेयानुकारादिति स्पष्टोपमापेक्षत्वात् सङ्करः॥ ५९॥

वृत्तमिति। काचिदमरनारी युद्धे वृत्तं मृतम्। 'वृत्तोऽतीते दृढ़े ख्याते वर्त्तुलेऽपि वृते मृते' इति विश्वः। शूरमाश्लिष्य रन्तुं तूर्णं मेरोः कुञ्जं गह्वरं

त्यक्तप्राणं संयुगे हस्तिनीस्था वीक्ष्य प्रेम्णा तत्क्षणादुन्नतासुः।
प्राप्याखण्डं देवभूयं सतीत्वादाशिश्लेष स्वैव कञ्चित् पुरन्ध्री॥६१॥
स्वर्गे वासं कारयन्त्या चिराय प्रत्यग्रत्वं प्रत्यहं धारयन्त्या।
कश्चिद्भेजे दिव्यनार्य्या परस्मिन् लोके लोकं प्रीणयन्त्येह कीर्त्त्या॥६२
गत्वा नूनं वैबुधं सद्म रम्यं मूर्च्छाभाजामाजगामान्तरात्मा।
भूयो दृष्टप्रत्ययाः प्राप्तसंज्ञाः साधीयस्ते यद्रणायाद्रियन्ते॥६३॥

जगाम। यावत्तद्वियोगासमर्था तद्विरहासहा पत्नी सद्योऽग्नौ देहं त्यक्त्वा नैति स्म नाजगाम। अत्र मेरुकुञ्जासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः॥६०॥

त्यक्तेति। संयुगे युद्धे त्यक्तप्राणं कञ्चिद्वीरं हस्तिन्यां तिष्ठतीति हस्तिनीस्था करिणीमारूढा सती वीक्ष्य प्रेम्णा तत्क्षणादुन्नतासुर्गतप्राणा स्वैव पुरन्ध्री स्वभार्य्येव सतीत्वात् पतिव्रतात्वादखण्डमक्षयं देवभूयं देवत्वम्। 'भुवो भावे' इति क्यप्। प्राप्याशिश्लेष। स्त्रीणां पातिव्रत्यमेव पतिसालोक्यनिदानं नाग्निप्रवेशादिकमिति भावः। अत्र सतीत्वस्य विशेषणगत्या देवभूयहेतुत्वानुक्तेन काव्यलिङ्गम्। अतिशयोक्त्यादिकन्तु यथासम्भवमूह्यम्॥ ६१॥

स्वर्गे इति। कश्चिद्वीरश्चिराय चिरकालं स्वर्गे वासम्। 'शयवासवासिष्वकालात्' इति विकल्पादलुक्। कारयन्त्या अनुभावयन्त्या अहन्यहनि प्रत्यहम्। 'नपुंसकादन्यतरस्याम्' इत्यव्ययीभावे समासान्तष्टच्प्रत्ययः। 'अव्ययानां भमात्रे टिलोपः' इत्युक्तम्। प्रत्यग्रत्वं नूतनत्वं धारयन्त्या। परप्रेमास्पदत्वादिति भावः। लोकं प्रीणयन्त्या अह्लत्वं प्रापयन्त्या। प्रीञो ण्यन्ताल्लटः शतरि ङीप्, 'धूञ्प्रीञोर्नुग्वक्तव्यः' इति नुगागमः। दिव्यनार्य्या, परस्मिंल्लोके इह लोके कीर्त्या च भेजे प्राप्तः। भजेः कर्म्मणि लिट्। रणमरणाल्लोकद्वयमपि जिगायेत्यर्थः। अत्र दिव्याङ्गनाकीर्त्योः प्रकृतयोरेव तुल्यधर्म्मसम्बन्धात् केवलप्रकृतास्पदा तुल्ययोगिता॥ ६२॥

गत्वेति। मूर्च्छाभाजामन्तरात्मा जीवः रम्यं वैबुधं सद्म दिव्यभवनं गत्वा आजगाम। मूर्च्छासमये सुरलोकरामणीयकं दृष्ट्वा आजगाम। नूनमुत्प्रेक्षायाम्। कुतः यद्यस्मात् प्राप्तसंज्ञा लब्धबोधाः सन्तः दृष्टप्रत्ययाः दृढविश्वासाः भूयः पुनरपि साधीयो गा(बा)ढतरम्। गा(बा)ढादीयसुनि

**कश्चिच्छस्त्रापातमूढोऽपवोढुर्लब्ध्वा भूयश्चेतनामाहवाय ।**
**व्यावर्त्तिष्ट क्रोशतः सख्युरुच्चैस्त्यक्तस्त्रात्मा का च लोकानुवृत्तिः॥६४॥**
**भिन्नोरस्कौ शत्रुणाकृष्य दूरादासन्नत्वात् कौचिदेकेषुणैव ।**
**अन्योऽन्यावष्टम्भसामर्थ्ययोगादूर्द्धाविव स्वर्गतावप्यभूताम् ॥६५॥**
**भिन्नानस्त्रैर्मोहभाजोऽभिजातान् हन्तुं लोलं वारयन्तः स्ववर्गम्**
**जीवग्राहं ग्राहयामासुरन्ये योग्येनार्थः कस्य न स्याज्जनेन ॥६६॥**

'अन्तिकबाढ़योर्नेदसाधौ' इति साधादेशः। रणाय रणं कर्तुमाद्रियन्ते, उत्सेहिर इत्यर्थः। कर्त्तरि लट् श्यन्प्रत्ययः। कथञ्चिदुज्जीवितानां पुनर्मृत्युप्राप्तिः श्रेयोदर्शनहेतुकेति भावः॥ ६३ ॥

कश्चिदिति। शस्त्रापातमूढः प्रहारमूर्च्छितः कश्चिद्वीरश्चेतनां संज्ञां लब्ध्वा अपवोढ़ुर्मूर्च्छासमये युद्धभूमेरपनेतुः सख्युर्मित्रस्योच्चैः क्रोशतः आगच्छागच्छेत्याक्रोशति सति। 'षष्ठी चानादरे' इति षष्ठी। क्रोशन्तमनादृत्येत्यर्थः। भूयः पुनरपि आहवाय रणाय व्यावर्त्तिष्ट, आत्मा देहस्त्यक्तश्च। तथाहि लोकानुवृत्तिश्च का, नैवेत्यर्थः। सुहृज्जनानुरोधस्तु हितानर्थिनः परिच्छेत्तुं वृथेत्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ ६४ ॥

भिन्नोरस्काविति। शत्रुणा दूरादाकृष्यासन्, न त्वात्तयोरित्यर्थः। सन्निकृष्टत्वादेकेषुणैव भिन्नोरस्कौ विदारितवक्षसौ कौचिद्वीरावन्योन्यावष्टम्भ एव सामर्थ्यं तस्य योगात् स्वभावादूर्द्धाविव ऊर्द्ध्वं तिष्ठन्ताविव स्वर्गतावपि मृतावभूताम्। अपिश्चार्थः। तत्र मृतयोरूर्द्धावस्थानासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः॥ ६५ ॥

भिन्नानिति। अन्ये वीरा अस्त्रैर्भिन्नान् विदारितान् अतएव मोहभाजो मूर्च्छाभाजो मूर्च्छागतानभिजातान् कुलीनान्। 'अभिजातः स्थितौ न्याये कुलीनप्राज्ञयोरपि' इति विश्वः। हन्तुं लोलमुत्सुकं स्ववर्गं वारयन्तः जीवं गृहीत्वा जीवग्राहं ग्राहयामासुः, जीवमेव ग्राहयामासुरित्यर्थः। 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति णमुल्प्रत्ययः। कषादित्वादनुप्रयोगः। जीवग्रहणप्रयोजनमर्थान्तरन्यासेनाह—तथाहि, योग्येन जनेन हेतुना कस्य

भग्नैर्दण्डैरातपत्राणि भूमौ पर्य्यस्तानि प्रौढ़चन्द्रद्युतीनि।
आहाराय प्रेतराजस्य रौप्यस्थालानीव स्थापितानि स्म भान्ति ६७
रेजुर्भ्रष्टा वक्त्रतः कुङ्कुमाङ्का मुक्ताहाराः पार्थिवानां व्यसूनाम्।
हासाल्लक्ष्म्याः पूर्णकामस्य मन्ये मृत्योर्दन्ताः पीतरक्तासवस्य॥६८॥
निम्नेष्वोघीभूतमस्त्रक्षतानामस्रं भूमौ यच्चकासाञ्चकार।
रागार्थं तत् किं नु कौसुम्भमम्भः संव्यानानामन्तकान्तःपुरस्य॥६९
रामेण त्रिःसप्तकृत्वो ह्रदानां चित्रं चक्रे पञ्चकं क्षत्रियास्रैः।
रक्ताम्भोभिस्तत्क्षणादेव तस्मिन् सङ्ख्येऽसङ्ख्याः प्रावहन् द्वीपवत्यः७०

पुंसेऽर्थः कीर्त्त्यादिप्रयोजनं न स्यात्। स्यादेव सर्व्वस्यापीत्यर्थः। अतो वीराणां रणेष्वप्यतिपरिक्षतरक्षणमेव श्रेयः। 'नार्त्तं नातिपरिक्षतम्, इति हननिषेधादिति भावः॥ ६६॥

भग्नैरिति। भग्नैर्दण्डैर्हेतुना। भग्नदण्डत्वादिति भावः। भूमौ पर्य्यस्तान्युत्तानपतितानि। प्रौढ़चन्द्रद्युतीनि पूर्णेन्दुप्रभाण्यातपत्राणि। श्वेतच्छत्राणीत्यर्थः। प्रेतराजस्यान्तकस्याहाराय भोजनाय स्थापितानि विहितानि रौप्यस्थालानि राजतभाजनानीव भान्ति स्मेत्युत्प्रेक्षा॥ ६७॥

रेजुरिति। व्यसूनां मृतानां पार्थिवानां वक्त्रतो भ्रष्टाः पतिताः कुङ्कुमाङ्काः, कुङ्कुमारुणिता इत्यर्थः। मुक्ताहाराः पूर्णकामस्य सकलराजकसंहारात् सफलमनोरथस्य अतएव पीतं रक्तमेवासवं येन तस्य मृत्योः हासादट्टहासाल्लक्ष्म्या दृश्या दन्ता रेजुरिति मन्ये इत्युत्प्रेक्षा॥ ६८॥

निम्नेष्विति। भूमौ निम्नेषु निम्नस्थलेष्वोघीभूतं राशीभूतमस्त्रक्षतानां सम्बन्धि यदस्रं रक्तं चकासाञ्चकार दिदीपे। 'चकासृ दीप्तौ' इति धातोर्लिट्। 'कास्यनेकाच आम्वक्तव्यः' इत्याम्प्रत्यये कृञोऽनुप्रयोगः। तदस्रमन्तकान्तःपुरस्य कृतान्तावरोधस्य संव्यानानामुत्तरीयाणां रागार्थं रञ्जनार्थं कुसुम्भस्येदं कौसुम्भं अम्भः किं नु सुकुम्भद्रवो नु वेत्युत्प्रेक्षा॥ ६९॥

रामेणेति। रामेण भार्गवेण सामर्थ्यात् त्रीन् वारान् त्रिः। 'द्वित्रिचतुर्भ्यः सुच्' इति सुच्प्रत्ययः। त्रिरावृत्ताः सप्त त्रिःसप्तकृत्वः। एकविंशति-

सन्दानान्तादस्त्रिभिः शिञ्जितास्त्रैराविश्याधः शातशस्त्रावलूनाः ।
कूर्मौपम्यं व्यक्तमन्तर्नदीनामैभाः प्रापन्नङ्घ्रयोऽसृङ्मयीणाम् ॥७१॥
पद्माकारैर्योधवक्त्रैरिभानां कर्णभ्रष्टैश्चामरैरेव हंसैः ।
सोपस्काराः प्रावहन्नस्रतोयाः स्रोतस्विन्यो वीचिषूच्चैस्तरङ्गिः॥७२
उत्क्रान्तानामामिषायोपरिष्टादध्याकाशम्बभ्रमुः पत्त्रवाहाः ।
मूर्त्ताः प्राणा नूनमद्याप्यवेत्तामामुः कायं त्याजिता दारुणास्त्रैः७३

वारानित्यर्थः । 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति कृत्वसुच्-प्रत्ययः । क्षत्त्रियास्तै राजन्यरक्तैः चित्रमद्भुतं ह्रदानां पञ्च परिमाणस्य पञ्चकम् । 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति सङ्घार्थे कन्प्रत्ययः । चक्रे कृतं तस्मिन् संख्ये युद्धे । 'मृधमास्कन्दनं संख्यम्' इत्यमरः । क्षणादेव रक्तैरेवाम्भोभिः असंख्या द्वीपवत्यो नद्यः प्रावहन् प्रसरन् । रामेण बहुकालेन च स्यमन्तपञ्चकाख्यं ह्रदपञ्चकमेव कथञ्चित्कृतम् । अत्र तु क्षणमात्रेणासंख्या नद्यः प्रवृत्ता इत्युपमानादुपमेयस्याधिक्योक्तेर्व्यतिरेकालङ्कारः ॥ ७० ॥

संदानान्तादिति । शिञ्जितास्त्रैरभ्यस्तास्त्रविद्यैरस्त्रिभिरायुधीयैः अधः रथानामधस्तादाविश्य प्रविश्य । संदानान्तात् बन्धनप्रदेशात्, गुल्फप्रदेशमधिकृत्येत्यर्थः । 'सन्दानं पशूनां पादबन्धनम्' इति विश्वः । शातं शितम् । 'शाच्छोरन्यतरस्याम्' इति विकल्पादीत्वाभावः । तेन शस्त्रेणावलूनाश्छिन्नाः । इभानामिमे ऐभाः अङ्घ्रयश्चरणाः असृङ्मयीणां रक्तविकाराणां नदीनामन्तरभ्यन्तरे व्यक्तं कूर्मौपम्यं कमठोपमाम् । स्वार्थे ष्यञ्प्रत्ययः । अत एवौपम्यादयः चातुर्वर्ण्यवदिति वामनः । प्रापन् प्राप्ताः । आपो लुङि 'पुषादि'— इति च्लेरङादेशः । उपमा ॥ ७१ ॥

पद्माकारैरिति । उच्चैर्वीचिषु तरङ्गैः प्लवमानैः पद्माकारैः कमलकल्पैर्योधवक्त्रैर्भटमुखैरिभानां कर्णेभ्यो भ्रष्टैश्चामरैर्हंसैः सोपस्कारा सपरिकराः । 'संपर्युपेभ्यः करोतौ भूषणे' इति सुडागमः । अस्रतोया रक्तजलाः स्रोतस्विन्यो नद्यः प्रावहन् । अत्र रूपकोपमयोः सङ्करः सुगमः ॥ ७२ ॥

उत्क्रान्तानामिति । पत्त्राणि वहन्तीति पत्त्रवाहाः पक्षिणः आमिषाय आमिषमत्तुम् । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी ।

**आतन्वद्भिर्दिक्षु पत्त्राग्रनादं प्राप्तैर्दूरादाशु तीक्ष्णैर्मुखाग्रैः ।**
**आदौ रक्तं सैनिकानामजीवैर्जीवैः पश्चात् पत्त्रिपूगैरपायि ॥७४॥**
**ओजोभाजां यद्रणे संस्थितानामादत्तीव्रं सार्धमङ्गेन नूनम् ।**
**ज्वालाव्याजादुद्वमन्ती तदन्तस्तेजस्तारं दीप्तजिह्वा ववाशे ॥७५॥**

उत्क्रान्तानां मृतानामुपरिष्टादध्याकाशमाकाशे । विभक्त्यर्थेऽव्ययीभावः । बभ्रमुः भ्रेमुः । 'वा जृभ्रमुत्रसाम्' इति विकल्पादेत्वाभ्यासलोपाभावः । अत्रोत्प्रेक्ष्यते । दारुणास्तैर्वीरास्तैः कायं त्याजिता विसर्जिताः । त्यजेर्ण्यन्ताद्द्विकर्मकात् कर्मणि क्तः । 'ण्यन्ते कर्तुश्च कर्मणः' इति वचनात् । मूर्ता मूर्तिमन्तः प्राणा अद्येदानीमपि कायमवेक्षामासुः पूर्वाभिमानात्पुनः कायप्रवेशापेक्षिणो मूर्ताः प्राणा एव नूनमाराद्भ्रमन्तीत्युत्प्रेक्षार्थः । 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययः 'कृञ्चानुप्रयुज्यते लिटि' इत्यस्तेरनुप्रयोगः 'आम्प्रत्ययवत्'—इत्यत्र कृञ एवेति नियमादस्तेर्नात्मनेपदम् ॥ ७३ ॥

आतन्वद्भिरिति । दिक्षु पत्त्राग्रनादं पत्त्रान्तघोषमातन्वद्भिर्विस्तृणद्भिर्दूरादाशु प्राप्तैरागतैरजीवन्त्यजीवैरचेतनैः । पचाद्यजन्तेन नञ्समासः । पत्त्रिपूगैः, बाणव्रातैरित्यर्थः । तीक्ष्णैर्मुखाग्रैः करणैः सैनिकानां रक्तमपायि पीतम् । पिबतेः कर्मणि लुङ् 'आतो युक्चिण्कृतोः' इति युगागमः । पश्चाज्जीवैश्चेतनैः पत्त्रिपूगैः पक्षिसङ्घैः कर्तृभिस्तीक्ष्णैर्मुखाग्रैश्चञ्चुपुटैः करणैरपायि । पत्त्रिणां प्रकृतत्वात्केवलप्रकृतविषयः श्लेषः ॥ ७४ ॥

ओजोभाजामिति । दीप्ता ज्वलन्ती जिह्वा यस्याः सा दीप्तजिह्वा शिवा । रणे संस्थितानां मृतानामोजोभाजामोजस्विनामङ्गेन गात्रेण सार्धं यत्तीव्रं तिग्मं तेज आददभक्षयत् । अदेर्लङ् 'अदः सर्वेषाम्' इत्यडागमेऽप्राप्तस्य 'आडजादीनाम्' इत्याडागमोऽङ्गस्य 'आटश्च' इति वृद्धिः । तदन्तरन्तरेऽन्तरितं तेजो ज्वालाव्याजात् मुखोल्काच्छलादुद्वमन्ती तारमुच्चैर्ववाशे रौति स्म । 'तिरश्चां वाशितं रुतम्' इत्यमरः । नूनमित्युत्प्रेक्षायाम् । अत्र व्याजशब्देन ज्वालात्वापह्नवेन तेजस्त्वोत्प्रेक्षणे सापह्नवोत्प्रेक्षेति सर्वस्वकारः ॥ ७५ ॥

नैरन्तर्य्यच्छिन्नदेहान्तरालं दुर्भक्षस्य ज्वालिना वाशितेन ।
योद्धुर्बाणप्रोतमादीप्य मांसं पाकापूर्वस्वादमादे शिवाभिः ॥७६॥

ग्लानिच्छेदी क्षुत्प्रबोधाय पीत्वा
रक्तारिष्टं शोणिताजीर्णशेषम् ।
स्वादुङ्कारं कालखण्डोपदंशं
क्रोष्टा डिम्बं व्यष्वणद् व्यस्वनच्च ॥७७

नैरन्तर्य्येति । नैरन्तर्य्येणाविच्छेदेन छिन्नं देहस्यान्तरालं यस्मिन् कर्म्मणि तद्यथा तथा बाणैः प्रोतं स्यूतम् अतएव दुर्भक्षस्य भक्षितुमशक्यस्य । कृच्छ्रार्थे खल्प्रत्ययः । योद्धुर्योधस्य सम्बन्धि मांसं ज्वालिना ज्वालावता वाशितेन रुतेन । शिवानां वाशने जिह्वा ज्वलतीतिऽप्रसिद्धिः । आदीप्य प्रज्वाल्य । बाणदाहाय मांसपाकाय चेति भावः । अत एव पाकेनापूर्वोऽभिनवः स्वादो रुचिर्यस्य तत् तथा शिवाभिर्गोमायुभिः । 'स्त्रियां शिवा भूरिमायगोमायुमृगधूर्त्तकाः' इत्यमरः । आदे जघसे, भक्षितमित्यर्थः । 'लिट्यन्यतरस्याम्' इति विकल्पाददेर्न घस्लादेशः । वाशितोत्थया जिह्वा-ज्वालया दग्धे । इषुप्रतिबन्धेन पाकरुचिरं जघस इत्यर्थः । अत्र पाका-पूर्वस्वादाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ७६ ॥

ग्लानीति । क्रोष्टा जम्बुकः क्षुत्प्रबोधाय ग्लानिच्छेदी खेदहारी शोणितो जारितः अजीर्णशेषो येन तद्रक्तमेवारिष्टं पानविशेष इति रूपकम् । तत् पीत्वा स्वादुङ्कारं स्वादूकृत्य । 'स्वादुमि'—इति णमुल् । कालखण्डेन यकृता उपदंशं कालखण्डम्, उपदंशं कृत्वेत्यर्थः । 'कालखण्डयकृती तु समे' इत्यमरः । 'उपदंशस्तृतीयायाम्' इति णमुल् । कालखण्डस्य दशनक्रिया-कर्म्मत्वेऽपि भुजिक्रियाकरणत्वात् तृतीयोपपदतया 'तृतीयाप्रभृतीन्यन्यतर-स्याम्' इति विकल्पेनोपपदसमासः । डिम्बं कलेवरं व्यष्वणत्, भुक्तवानि-त्यर्थः । 'वेश्च स्वनो भोजने' इति षत्वम् । व्यस्वनदवादयच्चेति समुच्चयः । अभोजनार्थत्वात् षत्वं न ॥ ७७ ॥

क्रव्यात् पूगैः पुष्कराण्यानकानां
प्रत्याशाभिर्मेदसो दारितानि ।
आभीलानि प्राणिनः प्रत्यवस्यन्
कालो नूनं व्याददावाननानि ॥ ७८ ॥
कीर्णा रेजे जाजिभूमिः समन्ता-
दप्राणद्भिः प्राणभाजां प्रतीकैः ।
बह्वारब्धैरर्द्धसंयोजितैर्वा
रूपैः स्रष्टुः सृष्टिकर्मान्तशाला ॥ ७९ ॥

क्रव्यादिति । क्रव्यमदन्तीति क्रव्यादो मांसभक्षकाः कङ्कगृध्रादयः । 'क्रव्ये च' इति विट्प्रत्ययः । तेषां पूगैः कर्त्तृभिः मेदसो वसायाः । 'मेदस्तु वपा वसा' इत्यमरः । प्रत्याशाभिस्तृष्णाभिर्दारितानि मेदस्त्विलभ्रान्त्या पाटितान्यानकानां तूर्य्याणां पुष्कराणि मुखानि । 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले' इत्यमरः । प्राणिनः करितुरगादीन् प्रत्यवस्यन्नभ्यवहरन् । 'अभ्यवहारः प्रत्यवस्यनं भोजनं जग्धिः' इति हलायुधः । कालोऽन्तकः आभीलानि भयङ्कराणि । 'आभीलं भीमकृच्छ्रयोः' इति विश्वः । आननानि व्याददौ विददार । 'आङो दोऽनास्याविहरणे' इत्यस्य प्रत्युदाहरणमेतत् । यानि विदारितानि पुष्कराणि तान्येवाननानि । नूनमित्युत्प्रेक्षायाम् ॥ ७८ ॥

कीर्णेति । अप्राणद्भिरजीवद्भिः, छिन्नत्वान्निष्प्राणैरित्यर्थः । 'अन प्राणने' इति धातोर्लटः शत्रादेशः । प्राणभाजां प्राणिनां प्रतीकैरवयवैः । 'अङ्गं प्रतीकोऽवयवः' इत्यमरः । समन्तात् कीर्णा सा आजिभूमिः ईषदसमाप्तारब्धैरिति बह्वारब्धैः, किञ्चिदूनसृष्टैरित्यर्थः । 'विभाषा सुपो बहुच् पुरस्तात्'—इति बहुच्प्रत्ययः । तथार्द्धसंयोजितैरर्द्धसृष्टैश्च रूपैराकारैः । 'रूपं स्वरूपे सौन्दर्य्ये आकारश्लेषयोरपि' इति विश्वः । कीर्णा स्रष्टुः धातुः सृष्टिकर्म्मान्तशाला वा । सृष्टिकर्म्मणो नियतागारमिव रेजे इत्युत्प्रेक्षा ॥ ७९ ॥

आयन्तीनामविरतरयं राजकानीकिनीना-
मित्थं सैन्यैः सममलघुभिः श्रीपतेरूर्मिमद्भिः ।
आसीदोघैर्मुहुरिव महद्वारिधेरापगानां
दोलायुद्धं कृतगुरुतरध्वानमौद्धत्यभाजाम् ॥ ८० ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये सङ्कुलयुद्ध-
वर्णनं नाम अष्टादशः सर्गः ॥ १८ ॥

आयन्तीनामिति । इत्थमुक्तरीत्या अविरतरयमविच्छिन्नवेगं यथा तथा आयन्तीनामभिधावन्तीनामौद्धत्यभाजां प्रागल्भ्यभाजां राज्ञां समूहा राजकानि । 'गोत्रोक्ष—' इत्यादिना वुञ् प्रत्ययः । तेषामनीकिन्यः सेनास्तासां राजकानीकिनीनामलघुभिर्महद्भिरूर्मिमद्भिस्तरङ्गवद्भिः श्रीपतेः कृष्णस्य सैन्यैः समं सेनाभिः सह अपां समूह आपम् । 'भिक्षादिभ्योऽण्' । आपेन गच्छन्तीति आपगानामुक्तविशेषणविशिष्टानां वारिधेरोघैः प्रवाहैरिव कृतो गुरुतरध्वनिर्महाध्वनिर्यस्मिंस्तन्महद्दोलायुद्धं अनियतजयपराजययुद्धं मुहुरासीत् । उपमा । मन्दाक्रान्ता वृत्तमेतत् ॥ ८० ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपाल-
वधमहाकाव्यव्याख्याने सर्वङ्कषाख्ये अष्टादशः सर्गः ॥ १८ ॥

---

# एकोनविंशः सर्गः।

अथोत्तस्थे रणाटव्याममुहृद्वेणुदारिणा।
नृपाङ्घ्रिपौघसङ्घर्षादग्निवद्वेणुदारिणा ॥१॥
आपतन्तममुं दूराद्दूरीकृतपराक्रमः।
बलोऽवलोकयामास मातङ्गमिव केसरी ॥ २ ॥

तदेवमष्टादशसर्गे तुमुलं युद्धमभिधायेदानीमेकोनविंशतिसर्गे द्वन्द्वयुद्धमनुष्टुभेन छन्दसा चित्रबन्धेन वर्णयितुमारभते—अथेत्यादि। अथैवं तुमुलयुद्धानन्तरम्। रणोऽटवीवेत्युपमितसमासः। अग्निवदिति तद्धितौपम्यलिङ्गात्। एवमुत्तरत्रापि द्रष्टव्यम्। तस्यां रणाटव्याममुहृदः शत्रवो वेणवो वंशा इव। 'वेणुमस्करतेजनाः' इति वंशपर्यायेष्वमरः। तान् दारयति यस्तेनामुहृद्वेणुदारिणा वेणुदारिणा बाणात्मजेन। नृपा अङ्घ्रिपाः पादपा इव तेषामोघाः सङ्घास्तेषां सङ्घर्षान्मत्सराच्छ्लेषाच्च अग्निवदग्नितुल्यम्। 'तेन तुल्यम्'—इति तुल्यार्थे वतिप्रत्ययः। उत्तस्थे उत्थितम्। भावे लिट्। अत्राग्निवदिति तुल्यार्थेन वतिना धर्म्मव्यवधाने सादृश्यप्रतिपादिना उपमानोपमेयसमानधर्म्मसादृश्यप्रतिपादकानां चतुर्णां चोपादानाच्चेयमार्थी तद्धितगता पूर्णोपमा। सा च रणाटव्यादिसमासगतोपमासापेक्षेति सङ्करः। सर्गेऽस्मिन्ननुष्टुभं वृत्तम्। 'पञ्चमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः। गुरु षष्ठञ्च सर्वेषामेतच्छ्लोकस्य लक्षणम् ॥' इति लक्षणात्। अत्रैकान्तरक्रमेण यमकाद्यन्यतमशब्दालङ्कारनियमः, सर्वत्र यथासम्भवमर्थालङ्कारश्च। तत्र यमकलक्षणमुक्तं दण्डिना—'अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः। यमकं तच्च पादानामादिमध्यान्तगोचरम् ॥ एकद्वित्रिचतुष्पादैर्यमकानां विकल्पना। आदिमध्यान्तमध्यान्तमध्याद्याद्यान्तसर्वतः ॥' इति। अत्रेदं समपादान्तं यमकं द्विपादयमकभेदः ॥ १ ॥

आपतन्तमिति। आपतन्तमाधावन्तममुं वेणुदारिणं दूरात् दूरीकृत-

जजौजोजाजिजिज्जाजी तं ततोऽतिततातितुत्।
भाभोऽभीभाभिभूभाभूरारारिररिरीररः॥ ३॥
इति एकाक्षरपादः।
भवन् भयाय लोकानामाकम्पितमहीतलः।
निर्घात इव निर्घोषभीमस्तस्यापतद्रथः॥ ४॥

पराक्रमोऽङ्गीकृतपौरुषस्तेन। सहानुगतसम्प्रहार इत्यर्थः। बलो बलभद्रः केसरी सिंहो मातङ्गं गजमिवावलोकयामास। अनयोरिव तदन्तरमिति भावः। अतोऽलङ्कारेण वस्तुध्वनिः॥ २॥

जजाविति। ततोऽवलोकनानन्तरं जजन्तीति जजाः योधाः। 'जज युद्धे' पचाद्यच्। जजानामोजसा जाता जजौजोजा तामाजिं जयतीति जजौजोजाजिजित्। जयतेः क्विप्। जजतीति जाजी योधी। ताच्छील्ये णिनिः। अतिततानत्युद्धतानतितुदति अतिव्यथयतीत्यतितुत्। तुदतेः क्विप्। भस्याभेवाभा यस्य स भाभो नक्षत्रकान्तिः। 'नक्षत्रमृक्षं भं तारा' इत्यमरः। नास्ति भीर्येषां तेऽभियो निर्भीकाः तानिभान् गजानभिभवतीति अभीभाभिभूः। क्विप्। तस्याः भासस्तं जसो भूः स्थानम् अभीभाभिभूभाभूः। अराः सन्त्येषामित्यरीणि चक्राणि तैः रीणन्ति गच्छन्तीति अरिरियो रथाः। 'री गतिश्लेषयोः' इति धातोः क्विप्। तेषां ईरं प्रेरणं राति अतिरीररो रथिकः। 'आतोऽनुपसर्गे कः'। अरिः शत्रुर्बलभद्रः तं वेणुदारिणं आर। योद्धुमाससारेत्यर्थः। 'ऋ गतौ' इति धातोर्लिट् द्विर्भावे कृते णलि वृद्धिः अभ्यासस्योरदत्वे 'अत आदेः' इति दीर्घे पुनः सवर्णदीर्घः। भिन्नैकाक्षरपादाख्योऽनुप्रासभेदः। भाभ इत्युपमानुप्रासयोरेकवाचकानुप्रवेशलक्षणसङ्करः॥ ३॥

भवन्निति। लोकानां जनानां, जगताञ्च। 'लोकस्तु भुवने जने' इत्यमरः। भयाय भवन् सम्पद्यमानः, भयं जनयन्नित्यर्थः 'क्लृपिः सम्पद्यमाने चतुर्थी च वक्तव्या' इति क्लृपेरर्थनिर्देशाच्चतुर्थी। आकम्पितमहीतलः। भूकम्पं कुर्वन्नित्यर्थः। निर्घोषेण भीमो भयङ्करः तस्य बलभद्रस्य रथो निर्घात इवापतदधावत्। श्रौती पूर्णोपमा॥ ४॥

रामे रिपुः शरानाजिमहेष्वास विचक्षणे ।
कोपादथैनं शितया महेष्वा स विचक्षणे ॥ ५ ॥
दिशमर्कमिवावाचीं मूर्च्छागतमपाहरत् ।
मन्दप्रतापं तं सूतः शीघ्रमाजिविहायसः ॥६॥
कृत्वा शिनेः शाल्वचमूं सप्रभावा चमूर्जिताम् ।
ससर्ज वक्त्रैः फुल्लाब्जसप्रभा वाचमूर्जिताम् ॥७॥

राम इति। रिपुर्वेणुदारी आजिमहेषु रणोत्सवेष्विति रूपकम्। 'मह उद्धव उत्सवः' इत्यमरः। विचक्षणे प्रगल्भे। विचष्ट इति कर्त्तरि ल्युडिति न्यासकारः। 'असनयोश्च प्रतिषेधो वक्तव्यः' इति चक्षिङः ख्याञादेशाभावः। रामे बलभद्रे शरान् आस चिक्षेप। अस्यतेर्लिट् 'अत आदेः' इत्यभ्यासदीर्घे सवर्णदीर्घः। कोपात् स राम एनं वेणुदारिणं शितया शातया। 'शाच्छोरन्यतरस्याम्' इतीत्वम्। महेष्वा महेषुणा। 'पत्री रोप इषुर्द्वयोः' इत्यमरः। विचक्षणे जघान। 'क्षणु हिंसायाम्' इति धातोः कर्त्तरि लिट्। अभिन्नसमपादो नाम पादाभ्यासयमकभेदः। एवमुत्तरत्रापि द्रष्टव्यम् ॥ ५ ॥

दिशमिति। मूर्च्छागतं रामेषुपातात् मोहमुपगतम्। अत एव मन्दप्रतापमल्पप्रकाशन्तं वेणुदारिणमवाचीं दक्षिणां दिशं प्राप्तम्। अतएव मन्दप्रतापमर्कमिव सूतः सारथिरनूरुश्च आजेर्विहायसः आकाशादिवाजिविहायसः इत्युपमितसमासः। शीघ्रमपाहरद- पसारितवान्। उपमा ॥ ६ ॥

कृत्वेति। प्रभावेन सह वर्त्तत इति सप्रभावा महानुभावा शिनेः सात्यकिपितामहस्य चमूः सेना। शाल्वो नाम चैद्यपक्षो राजा तस्य चमूं सेनां जितां कृत्वा, जित्वेत्यर्थः। अतएव वक्त्रैर्मुखैः। 'येनाङ्गविकारः' इति तृतीया। विकासस्यापि विकारत्वात्। फुल्लाब्जस्य प्रफुल्लारविन्दस्य सप्रभा समानप्रभा हर्षेण विकासितवक्त्रा सतीत्यर्थः। ऊर्जितामुदारां वाचं ससर्ज के यूयमस्मदग्र इत्याद्युच्चैर्जगर्ज, जगादेत्यर्थः। उपमायमकयोः संसृष्टिः ॥७॥

उल्मुकेन द्रुमं प्राप्य सङ्कुचत्पत्रसम्पदम् ।
तेजः प्रकिरता दिक्षु सप्रतापमदीप्यत ॥८॥
पृथोरध्यक्षिपद्रुक्मी यया चापमुदायुधः ।
तयैव वाचाऽपगमं ययाचापमुदा युधः ॥९॥
समं समन्ततो राज्ञामापतन्तीरनीकिनीः ।
कार्ष्णिः प्रत्यग्रहीदेकः सरस्वानिव निम्नगाः ॥१०॥
दधानैर्घनसादृश्यं लसदायसदंशनैः ।
तत्र काञ्चनसच्छाया ससृजे तैः शराशनिः ॥११॥

इति निरोष्ठ्यम् ।

उल्मुकेनेति । दिक्षु तेजः प्रभावं प्रकाशञ्च प्रकिरता विक्षिपता उल्मुकेन भागवतेन राज्ञा, अलातेन च संकुचन्ती पत्रसम्पद्वाहनसम्पत् पर्णसमृद्धिश्च यस्य तम् । सप्रतापं सपराक्रमं, प्रकटतापसहितञ्च । द्रुमं द्रुमाख्यं राजानं, वृक्षञ्च प्राप्यादीप्यत प्रजज्वले । भावे लङ् । अभिधायाः प्रकृतार्थे नियन्त्रणात्प्रकृतार्थप्रतीतिर्ध्वनिरेव न श्लेषः ॥ ८ ॥

पृथोरिति । रुक्मी भीष्मकात्मजो रुक्मिणीभ्राता उदायुध उद्यतायुधः सन् यया वाचा पृथो राज्ञश्चापमध्यक्षिपत् धिगिदं वृथा काष्ठमिति निनिन्द । अपगता मुत्यस्यास्तया अपमुदा निरुत्साहया तयैव वाचा युधो युद्धादपगममपसरणं ययाच । मां त्राहि पलायमानं शरणागतोऽस्मीति प्रार्थयामासेत्यर्थः । याचिरुभयपदी ॥ ९ ॥

सममिति । समं युगपत् समन्तत आपतन्तीरागच्छन्ती राज्ञां चैद्यपक्षाणामनीकिनीः सेनाः । कृष्णस्यापत्यं पुमान् कार्ष्णिः प्रद्युम्नः 'अत इञ्' । निम्नगा नदीः सरस्वान् समुद्र इवैकोऽसहायः प्रत्यग्रहीत् प्रत्यवरुरोध ॥१०॥

दधानैरिति । लसन्ति आयसान्ययोमयानि दंशनानि वर्माणि येषां तैः । 'तनुत्रं वर्म दंशनम्' इत्यमरः । अत एव घनसादृश्यं कार्ष्ण्यात् मेघसाम्यं दधानैस्तैः सैनिकैः तत्र कार्ष्णौ काञ्चनसच्छाया सुवर्णवर्णा शर एवाशनिः विद्युत् ससृजे उत्सृष्टा । उपमारूपकयोः संसृष्टिः । ओष्ठ्यवर्णविरहान्निरोष्ठ्यं चित्रभेदः शब्दालङ्कारः ॥ ११ ॥

नखांशुमञ्जरीकीर्णामसौ तरुरिवोच्चकैः ।
बभौ बिभ्रद्धनुःशाखामधिरूढशिलीमुखाम् ॥ १२ ॥
प्राप्य भीममसौ जन्यं सौजन्यं दधदानते ।
विध्यन् मुमोच न रिपूनरिपूगान्तकः शरैः ॥ १३ ॥
कृतस्य सर्व्वक्षितिपैर्विजयाशंसया पुरः ।
अनेकस्य चकारासौ बाणैर्बाणस्य खण्डनम् ॥१४॥
या बभार कृतानेकमाया सेना ससारताम् ।
धनुः स कर्षन् रहितमायासेनाससार ताम् ॥१५॥

नखेति । नखांशवो मञ्जर्य्य इव ताभिः कीर्णां व्याप्ताम् अधिरूढ़ाः शिलीमुखा बाणाः, अलयश्च यस्यां ताम् । 'अलिबाणौ शिलीमुखौ' इत्यमरः । धनुः शाखेव तां बिभ्रदसौ कार्ष्णिरुच्चकैरुन्नतस्तरुरिव बभौ । तरुरिवेति लिङ्गात् सर्व्वत्रोपमितसमासः । शिलीमुखेति श्लिष्टविशेषणेय-मुपमा ॥ १२ ॥

प्राप्येति । अरिपूगानां शत्रुसङ्घानामन्तकः अरिपूगान्तकोऽसौ कार्ष्णिः भीमं भयङ्करं जन्यं युद्धं प्राप्य । 'युद्धमायोधनं जन्यम्' इत्यमरः । आनते नम्रे सौजन्यं सौहार्दं दधत् न तु विध्यन् । 'न क्लीबं न कृताञ्जलिम्' इति निषेधादिति भावः । रिपून् प्रतिपक्षान् शरैर्विध्यन् प्रहरन् न मुमोच, न ररक्षेत्यर्थः । सन्दंशयमकभेदः ॥ १३ ॥

कृतस्येति । असौ कार्ष्णिः सर्व्वक्षितिपैर्विजयाशंसया विजयाकाङ्क्षया पुरोऽग्रे कृतस्य नियुक्तस्य प्रयुक्तस्य वा अनेकस्यानेकाकिनः, ससहायस्येत्यर्थः । अन्यत्रानेकस्य बहुसङ्ख्यस्य बाणस्य बाणासुरस्य शरजातस्य च बाणैः खण्डनं छेदं चकार । अत्र बाणयोर्द्वयोरपि प्रकृतत्वात् केवलप्रकृतयोः श्लेषः ॥१४

येति । या सेना कृतानेकमाया कृतबहुकपटा सती ससारतां सारवत्तां बभार तां सेनां स कार्ष्णिः धनुः कर्षन्, धनुषा विध्यन्नित्यर्थः । आयासेन रहितमनायासं यथा तथा आससार, अभियुक्तवानित्यर्थः । बाणं भङ्क्त्वा तत् सेनां बभञ्जेत्यर्थः ॥ १५ ॥

ओजो महौजाः कृत्वाधस्तत्क्षणादुत्तमौजसः ।
कुर्वन्नाजावमुख्यत्वमनयन्नाम मुख्यताम् ॥१६॥
दूरादेव चमूर्भल्लैः कुमारो हन्ति स स्म याः ।
न पुनः सांयुगीं ताः स्म कुमारो हन्ति सस्मयाः ॥१७॥
निपीड्य तरसा तेन मुक्ताः काममनास्थया ।
उपाययुर्विलक्षत्वं विद्विषो न शिलीमुखाः ॥१८॥
तस्यावदानैः समरे सहसा रोमहर्षिभिः ।
सुरैरशंसि व्योमस्थैः सह सारो महर्षिभिः ॥१९॥

ओज इति । महौजा महाबलः प्रद्युम्नः उत्तमौजसो नाम राज्ञः ओजस्तत्क्षणादेवाधः कृत्वाभिभूय आजौ युद्धे असुख्यत्वमप्रधानत्वं कुर्व्वन्, अथ वा अमुख्यत्वममुख्यार्थत्वं तन्नाम्नः कुर्व्वन् नाम निजं प्रद्युम्ननामधेयं मुख्यतां प्रधानतां प्रसिद्धार्थतां चानयत् । प्रकृष्टं द्युम्नं बलं यस्येति प्रद्युम्न इति स्वामी ॥ १६ ॥

दूरादिति । स कुमारः प्रद्युम्नः सस्मयाः सगर्वाः याश्चमूर्दूरादेव भल्लैर्बाणविशेषैर्हन्ति स्म जघान ताश्चम्वः पुनर्भूयः संयुगस्येमां सांयुगीं कुं पृथ्वीं, रणभुवमित्यर्थः । 'गोत्रा कुः पृथिवी पृथ्वी' इत्यमरः । न आरोहन्ति स्म नारूढ़ाः ॥ १७ ॥

निपीड्येति । तेन प्रद्युम्नेन तरसा बलेन कामं निपीड्य अनास्थयानादरेण मुक्ताः । 'आर्त्ता न परिहन्तव्याः' इति निषेधेनावध्या इति जीवन्तो मुक्ता इत्यर्थः । अन्यत्र क्षिप्ताः विद्विषो विलक्षत्वं सत्रपत्वमाययुः । 'विलक्षस्तु त्रपान्विते' इत्यमरः । शिलीमुखा बाणास्तु विलक्षत्वं लक्षभ्रष्टत्वं नाययुः । अत्र द्वयोरपि विलक्षत्वयोरभेदाध्यवसायादयं व्यतिरेको विद्विषां शिलीमुखाणाञ्च प्रकृतत्वात् तुल्ययोगितौपम्याश्रित इति सङ्करः ॥ २८ ॥

तस्येति । समरे तस्य प्रद्युम्नस्यावदानैरत्युग्रकर्मभिः करणैः सहसा सद्यः रोमहर्षिभिः रोमाञ्चवद्भिः व्योमस्थैः सुरैः महर्षिभिः सह सार्द्धं सारो बलमशंसि शंसितम् ॥ १९ ॥

सुगन्धयद्दिशः शुभ्रमम्लानि कुसुमं दिवः ।
भूरि तत्रापतत् तस्मादुत्पपात दिवं यशः ॥ २० ॥
सोढुं तस्य द्विषो नालमपयोधरवा रणम् ।
ऊर्णुनाव यशश्च द्यामपयोधरवारणम् ॥ २१ ॥
केशप्रचुरलोकस्य पर्य्यस्कारि विकासिना ।
शेखरेणेव युद्धस्य शिरः कुसुमलक्ष्मणा ॥ २२ ॥

सुगन्धयदिति । दिशः सुगन्धयत् सुगन्धाः कुर्व्वत् । सुगन्धात् 'तत् करोति'—इति ण्यन्ताल्लटः शत्रादेशः । शुभ्रं धवलं अम्लानि म्लानिरहितं भूरि प्रभूतं कुसुमं दिवोऽन्तरीक्षात् तत्र प्रद्युम्ने अपतत् । तस्मात् प्रद्युम्नाद्-यशः पूर्व्वोक्तगुणयुक्तं दिवमन्तरीक्षं प्रति उत्पपात । अत्र द्युप्रद्युम्नयोः कुसुमयशोभ्यामन्योन्योपस्कारजननादन्योन्यालङ्कारः । 'परस्परं क्रियाजनने-ऽन्योन्यम्' इति लक्षणात् ॥ २० ॥

सोढुमिति । अपगता भयान्निवृत्ता योधानां रवाः सिंहनादा येषां ते अपयोधरवाः द्विषः शत्रवः तस्य कार्ष्णेः रणं सोढुं नालमशक्ताः । अतएव यशश्च अविद्यमानं पयोधराणां वारणं मेघप्रतिघातो यस्य तत् अपयोधर-वारणं सत् द्यामूर्णुनाव । मेघमण्डलं व्यतिलङ्घ्य स्वर्गमाच्छादयामासे-त्यर्थः । ऊर्णोतेर्लिट् । 'अजादेर्द्वितीयस्य' इति द्वितीयस्याचो द्विर्भावः । नुभङ्गावादाम्प्रतिषेधः । यमकवाक्यार्थहेतुककाव्यलिङ्गयोः संसृष्टिः ॥ २१ ॥

केशेति । विकासिना विविधमार्गचारिणा विकस्वरेण च कुसुमलक्ष्मणा पुष्पकेतुना प्रद्युम्नेन, अन्यत्र कुसुमचिह्नेन, तन्मयेत्यर्थः । केशवत् प्रचुराः प्रभूताः लोकाः जना यस्मिंस्तस्य युद्धस्य शिरोऽग्रभूमिः, अन्यत्र केशैः प्रचुरस्य केशाढ्यस्य लोकस्य जनस्य शिरः मूर्द्धा शेखरेणापीडेनेव । शिखामाल्येने-वेत्यर्थः । 'शिखास्वापीडशेखरौ' इत्यमरः । पर्य्यस्कारि परिष्कृतम् । भूषित-मित्यर्थः । परिपूर्व्वात् करोतेः कर्म्मणि लिट् 'सम्पर्य्युपेभ्यः करोतौ भूषणे' इति सुड़ागमः अड्भ्यासव्यवायेऽपीति नियमात् । 'परिनिविभ्यः—' इत्या-दिना षत्वे 'सिवादीनां वाड्व्यवायेऽपि' इति विकल्पः । उपमा ॥ २२ ॥

सादरं युध्यमानापि तेनान्यनरसादरम् ।
सा दरस्पृतना निन्ये हीयमाना रसादरम् ॥२३॥
इत्यालिङ्गितमालोक्य जयलक्ष्म्या झषध्वजम् ।
क्रुद्धयेव क्रुधा सद्यः प्रपेदे चेदिभूपतिः ॥ २४ ॥
अहितानभि वाहिन्या स मानी चतुरङ्गया ।
चचाल वल्गत्कलभसमानीचतुरङ्गया ॥ २५ ॥

सादरमिति । सादरं साभिनिवेशं युद्ध्यमानापि सम्प्रहरन्त्यपि अरं द्रुतम्, हठादिति यावत् । रसाद्रणे रागात् हीयमानापकृष्यमाणा । प्रद्युम्नमहिम्नेति भावः । अतएवात्र विरोधाभासोऽलङ्कारः । जहातेः कर्म्मणि लिटः शानजादेशः । सा पृतना चैद्यसेना तेन प्रद्युम्नेन अन्येषां तटस्थानामपि नराणां सादं निश्चेष्टतां राति ददातीति अन्यनरसादरम् । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । दरं भयं । 'दरोऽस्त्रियां भये श्वभ्रे' इत्यमरः । निन्ये नीता । नयतेः प्रधाने कर्म्मणि लिट् । 'प्रधानकर्म्मण्याख्येये लादीन्याहुर्द्विकर्म्मणाम्' इति वचनात् । विरोधाभासयमकयोः संसृष्टिः ॥ २३ ॥

इतीति । इतीत्थं जयलक्ष्म्या आलिङ्गितं झषध्वजं मत्स्यकेतुं प्रद्युम्नम् । 'पृथुरोमा झषो मत्स्यः' इत्यमरः । आलोक्य सद्यः क्रुद्धया सपत्नागमात् कोपितयेवेत्युत्प्रेक्षा । क्रुधा प्रद्युम्नाश्रितया रुषा कर्त्र्या चेदिभूपतिः प्रपेदे प्राप्तः । तं विहायेति शेषः । कामिन्यः प्रायेण साहसिक्यः सपत्नीगन्धमसहमानाः सद्यः पुरुषान्तरमाश्रयन्त इति भावः । विजयिनं प्रद्युम्नं दृष्ट्वा सद्यश्चैद्यस्चुकोपेत्यर्थः ॥ २४ ॥

अहितानिति । मानी अभिमानवान् स क्रुद्धश्चैद्यः वल्गन्तः प्लवमानाः कलभसमाः कलभप्रमाणाः अतएवानीचा उच्चास्तुरङ्गा यस्यां तया वल्गत्कलभसमानीचतुरङ्गया । चत्वार्य्यङ्गानि हस्त्यादीनि यस्यास्तया चतुरङ्गया वाहिन्या करणेन अहितानभि शत्रून् प्रति चचाल । कलभसमेत्युपमा यमकेन संसृज्यते ॥ २५ ॥

ततस्ततधनुर्मौर्वीविस्फारस्फारनिःस्वनैः ।
तूर्य्यैर्युगक्षये क्षुभ्यदकूपारानुकारिणी ॥ २६ ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| स | का | र | ना | ना | र | का | स |
| का | य | सा | द | द | सा | य | का । |
| र | सा | ह | वा | वा | ह | सा | र |
| ना | द | वा | द | द | वा | द | ना ॥२७ |

इति सर्वतोभद्रः ।

लोलासिकालियकुला यमस्येव स्वसा स्वयम् ।
चिकीर्षुरुल्लसल्लोहवर्मश्यामा सहायताम् ॥ २८ ॥

अथ कलापकेन सेनां वर्णयति — ततस्ततेत्यादि । ततश्चैद्यचलनानन्तरं ततानामाकृष्टानां धनुर्मौर्वीणां विस्फारैः स्फाराः प्रभूता निःस्वनाः येषां तैस्तूर्य्यैः युगक्षये कल्पान्ते क्षुभ्यन्तमुद्वेलन्तमकूपारं समुद्रमनुकरोतीति तदनुकारिणी सा सेनेत्युत्तरेणान्वयः । उपमा ॥ २६ ॥

सकारेति । पुनः कीदृशी । 'कारो वधे निश्चये च बले यत्ने रतावपि' इति विश्वः । सकाराः सयत्नाः सोत्साहाः नाना नानाविधाश्च ये आरा अरीणां समूहाः । 'भिक्षादिभ्योऽण्' । तेषां कासा गतिभेदाः काया विग्रहाश्च तेषां सादं ददतीति साददाः नाशकारकाः सायका यस्यां सा तथोक्ता । रसेन रागेणाहवो यस्याः सा रसाहवा । रणरागिणीत्यर्थः । वाहसाराणां वाहश्रेष्ठानां ये नादा ह्रेषादिघोषास्तेषां वादं कलहं ददतीति वाददानि तैः सह कलहायमानानि वादनानि वाद्यानि यस्यां सा वाहसारनादवाददवादना, तूर्य्यतुल्यवाहघोषेत्यर्थः । अतएव तेषां तुल्यतोक्तेरतिशयोक्तिः । सर्व्वतो भ्रमणात् सर्व्वतोभद्राख्यश्चित्रबन्धः । अतएव दण्डी— 'तदिष्टं सर्व्वतोभद्रं भ्रमणं यदि सर्व्वतः' इति । उद्धारस्तु—चतुःषष्टिकोष्ठे चतुरङ्गबन्धे क्रमेणाद्यपङ्क्तिचतुष्टये पादचतुष्कं विलिख्यानन्तरं पङ्क्तिचतुष्टयेऽप्यधः क्रमेण पादचतुष्टयलेखने प्रथमासु चतसृषु प्रथमपादः सर्व्वतो वाच्यते । एवं द्वितीयादिषु द्वितीय इत्यादि ॥ २७ ॥

लोलेति । लोलान्यसीनामिव कालियानां कृष्णसर्पविशेषाणां कुलानि

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| सा | से | ना | ग | म | ना | र | म्भे |
| र | से | ना | सी | द | ना | र | ता । |
| ता | र | ना | द | ज | ना | म | त्त |
| धी | र | ना | ग | म | ना | म | या ॥२८॥ |

इति मुरजबन्धः ।

कलापकम ।

यस्यां सा उल्लसद्भिर्लोहवर्म्मभिरयःकञ्चुकैः श्यामा अतएव यमस्यान्तकस्य सहायतां भ्रातृस्नेहादस्मिन् सेनासंहारे साहाय्यं चिकीर्षुः स्वयं साक्षात्स्वसा तस्यैव भगिनी यमुनेव स्थितेत्युत्प्रेक्षा ॥ २८ ॥

सा सेनेति । तारोऽत्युच्चैर्नादः सिंहनादो येषां ते जना यस्यां सा तारनादजना अनामया अव्यथा सा पूर्वोक्ता सेना मत्ता धीरा अदुष्टाश्च नागा गजा यस्मिन् कर्म्मणि तत् तथा गमनारम्भे रसेन रागेण अनारता अविरता आसीत्, अविच्छिन्नरणरागाभूदित्यर्थः । मुरजबन्धः । तस्योद्धारस्तु—'तिर्य्यग्रेखा लिखेत् पञ्च नवोर्द्धास्तत्र पङ्क्तयः । अष्टकोष्ठाश्चतस्रः स्युस्तासु श्लोकं लिखेत् क्रमात् ॥ तत्राद्यद्वित्रितुर्य्यासु तुर्य्यत्रिद्व्याद्यपङ्क्तिषु । आद्यद्वित्रिचतुःपञ्चषट्सप्ताष्टमकोष्ठगः ॥ दृश्यते प्रथमः पादश्चतुर्थश्चैवमेव हि । चतुर्थपङ्क्तिप्राथम्यात् प्रथमावधिवीक्षणात् ॥ द्वितीयादावाद्यद्वित्रोर्द्वितुर्य्ये च त्रितुरीयके । तुर्य्यत्रिद्व्योस्तृतीयाद्ये द्रष्टव्योऽङ्घ्रिर्द्वितीयकः ॥ तृतीयोऽङ्घ्रिर्द्वितीयान्त्ये आद्यसप्तमषष्ठयोः । द्वित्रिपञ्चमयोस्तुर्य्यषष्ठसप्तमयोः क्रमात् ॥ तृतीयान्त्ये च लक्ष्योऽयमथान्यः क्रम उच्यते ॥ आद्यन्त्ययुग्मयोः पङ्क्त्योश्चिन्त्यो गोमूत्रिकाक्रमः । कृत्वैकं द्वितयं द्वे च द्वयमेकमिति क्रमात् ॥ यद्वा द्वितयमेकञ्च द्वयमेकं द्वयं पुनः । स्वपङ्क्तिप्रक्रमादेव विन्यासद्वितयं भवेत् ॥ यद्वा प्रथमतुर्य्याङ्घ्री स्वपङ्क्त्योस्तदनुक्रमात् । द्वितीयोऽङ्घ्रिर्द्वितीयस्यां क्रमादाद्यचतुष्टये ॥ व्युत्क्रमाच्च तृतीयस्यामाद्यमेव चतुष्टये । व्युत्क्रमेण द्वितीयस्यां तृतीयस्यां क्रमेण च ॥ द्रष्टव्यो हि तृतीयोऽङ्घ्रिरन्त्यकोष्ठचतुष्टये । विन्यासभेदास्त्वन्येऽपि सन्त्येव बहवोऽत्र हि ॥ विस्तरात्तु न लिख्यन्ते स्वयमूह्या विचक्षणैः ॥' ॥ २८ ॥

धूतधौतासयः प्रष्ठाः प्रातिष्ठन्त क्षमाभृताम् ।
शौर्य्यानुरागनिकषः सा हि वेलानुजीविनाम् ॥३०॥
दिवमिच्छन् युधा गन्तुं कोमलामलसम्पदम् ।
दधौ दधानोऽसिलतां कोऽमलामलसं पदम् ॥३१॥
कृतोरुवेगं युगपद् व्यजिगीषन्त सैनिकाः ।
विपक्षं बाहुपरिघैर्जङ्घाभिरितरेतरम् ॥ ३२ ॥

धूतेति । क्षमाभृतां राज्ञां प्रतिष्ठन्त इति प्रष्ठा अग्रेसराः । 'सुपि स्थः' इति कप्रत्ययः 'प्रष्ठोऽग्रगामिनि' इति षत्वे ष्टुत्वम् । धूताः कम्पिताः धौता उत्तेजिता असयो यैस्ते धूतधौतासयः सन्तः प्रातिष्ठन्त प्रस्थिताः । 'समवप्रविभ्यः स्थः' इति तङ् । सा वेला अनुजीविनां शस्त्रजीविनां शौर्य्यानुरागयोः पुरुषकारस्वामिभक्त्योर्निकषः परीक्षस्थानं हि । अतोऽग्रे स्थातव्यम् । अन्यथा भीरुत्वं स्वामिद्रोहश्च स्यातामिति भावः । वाक्यार्थहेतुकं काव्यलिङ्गम् ॥३०॥

दिवमिति । युधा युद्धेन कोमलाश्चारवः अमलाः शीतोष्णादिदोषरहिताः सम्पदो यस्यां तां कोमलामलसम्पदं दिवं स्वर्गं गन्तुमिच्छन् कः पुमान् अमलां धौतामसिलतां दधानः अलसं पदं दधौ, सर्वोऽपि निःशङ्कमाक्रमतेत्यर्थः । अत्र स्वर्गेच्छाया विशेषणगत्या निःशङ्कप्रस्थानहेतुत्वात् काव्यलिङ्गं तद्यमकेन संसृज्यते ॥ ३१ ॥

कृतेति । सेनायां समवेताः सैनिकाः सैन्याः । 'सेनायाः पाक्षिकष्ठक्' । बाहुभिः परिघैरिव बाहुपरिघैः बाहुदण्डैः विपक्षं शत्रुं जङ्घाभिः प्रसृताभिः । 'जङ्घा तु प्रसृता' इत्यमरः । इतरेतरमन्योऽन्यं सयूथीयमेव कृत उरुर्महान् वीर्श्व वेगो यस्मिन् कर्म्मणि तद्यथा तथा युगपद्व्यजिगीषन्त विजेतुमैच्छन् । अहमहमिकया योद्धुमधावन्नित्यर्थः । विपूर्वाज्जयतेः सन्नन्ताल्लङि 'पूर्ववत् सनः' इत्यात्मनेपदम् । अत्र विपक्षसयूथयोर्बाहुजङ्घयोश्च प्रकृतत्वात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ ३२ ॥

वाहनाजनि मानासे साराजावनमा ततः ।
मत्तसारगराजेभे भारीहावज्जनध्वनि ॥ ३३ ॥
निध्वनज्जवहारीभा भेजे रागरसात्तमः ।
ततमानवजारासा सेना मानिजनाहवा ॥ ३४ ॥

इति श्लोकप्रतिलोमयमकम् ।

अभग्नवृत्ताः प्रसभादाकृष्टा यौवनोद्धतैः ।
चक्रन्दुरुच्चकैर्मुष्टिग्राह्यमध्या धनुर्लताः ॥ ३५ ॥

वाहनेति । ततोऽनन्तरं मानमभिमानं अस्यति क्षिपतीति तस्मिन् मानासे पराहङ्कारहारिणि । कर्म्मण्यण् । मत्ताः सारगा बलभाजश्च राजेजा नृपगजा यस्मिन् मत्तसारगराजेभे साराजौ श्रेष्ठयुद्धे । आजेः पुंलिङ्गता ज्ञेया । भारी भारवान् पूर्ण ईहावतामुत्साहवतां जनानां ध्वनिर्यस्मिंस्तत् भारीहावज्जनध्वनि यथा तथा न नमतीत्यनमा अभङ्गुरा । पचाद्यजन्तेन नञ्समासः । वाहना निर्वाहयितृत्वम् । 'ण्यासश्रन्थो युच्' । अजनि जाता । सैनिकानामित्यर्थात् सिद्धम् । जनेः कर्त्तरि लुङि 'दीपजन'— इत्यादिना चिण् ॥ ३३ ॥

एतत् प्रातिलोम्येन श्लोकान्तरमाह—निध्वनदिति । निध्वनन्तो बृंहन्तो जवा जवनाः हारिणो मनोहराश्चेभा यस्यां सा निध्वनज्जवहारीभा । ततो विस्तृतो मानवजो मनुष्यजातः आरासः कलकलो यस्यां सा ततमानवजारासा मानिनां मानवतां जनानामाहवो यस्यां सा मानिजनाहवा सेना रज्यतेऽनेनेति रागः क्रोधः स एव रसस्तस्माद्रागरसात् तमो मोहं भेजे । क्रोधान्धाजनीत्यर्थः । अत्र प्रातिलोम्येन पूर्व्वश्लोकावृत्तेः श्लोकप्रतिलोमयमकम् । तदुक्तं दण्डिना—'आवृत्तिः प्रातिलोम्येन पादार्धश्लोकगोचरा । यमकं प्रतिलोमत्वात् प्रतिलोममिति स्मृतम्' ॥ इति ॥ ३४ ॥

अभग्नेति । अभग्ना अभङ्गुरा वृत्ता वर्त्तुलाग्राश्च यास्ता अभग्नवृत्ताः । विशेषणसमासः । अन्यत्राचलितचरित्राः । बहुव्रीहिः । मुष्टिग्राह्यं मुष्टिधार्य्यं मध्यं यासां ताः धनुर्लताः अन्यत्र मुष्टिमेयमध्याः यौवनेनोद्धतैर्धृष्टैर्दृप्तैश्च प्रसभाद्बलादाकृष्टाः सत्यः । एकत्र गुणेष्वन्यत्र कचेषु चेति भावः । उच्चैस्तरां

करेणुः प्रस्थितोऽनेको रेणुर्घण्टाः सहस्रशः।
करेणुः शीकरो जज्ञे रेणुस्तेन शमं ययौ ॥ ३६ ॥
धृतप्रत्यग्रशृङ्गाररसरागैरपि द्विपैः।
सरोषसम्भ्रमैर्बभ्रे रौद्र एव रणे रसः ॥३७॥
न तस्थौ भर्तृतः प्राप्तमानसम्प्रतिपत्तिषु।
रणैकसर्गेषु भयं मानसंप्रति पत्तिषु ॥ ३८ ॥

चक्रन्दुष्टङ्कारध्वनिं चक्रुर्धनुर्लताः, अन्यत्र चुक्रुशुश्च। अत्र प्रस्तुतधनुर्लताविशेषणादप्रस्तुतधूर्त्तास्कन्दितपतिव्रताप्रतीतेः समासोक्तिः। तथा च आकर्षणस्य विशेषणगत्या क्रन्दनहेतुत्वात् काव्यलिङ्गमङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ ३५ ॥

करेणुरिति। अनेको बहुः करेणुः करेणवः प्रस्थिताः। जातावेकवचनम्। असंख्याताः करिणो योद्धुं ययुरित्यर्थः। 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः। सहस्रशो घण्टाः करिकण्ठस्था रेणुर्दध्वनुः। 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाभ्यासलोपौ। करे पुष्करे अणुरल्पः शीकरोऽम्बुकणो जज्ञे। जातावेकवचनम्। करेष्वणवः शीकरा जाता इत्यर्थः। जनेः कर्त्तरि लिट्। तेनाणुना शीकरेण रेणू रजः शमं ययौ। एतेन करिणां बाहुल्यं व्यज्यते ॥ ३६ ॥

धृतेति। धृतः प्रत्यग्रः शृङ्गाररस एव रागो यैस्तैरपीति विरोधः। रौद्रशृङ्गारयोर्विरोधित्वाद्धृतसिन्दूररञ्जनैरित्यविरोधः। अतएव विरोधाभासोऽलङ्कारः। 'शृङ्गारः सुरते नाट्ये रसे च गजमण्डने। शृङ्गारं चूर्णसिन्दूरे लवङ्गकुसुमेऽपि च ॥' इति विश्वः। सरोषसम्भ्रमैः द्विपैः रणे रौद्ररस एव क्रोधरस एव बभ्रे भृतः। कर्म्मणि लिट् ॥ ३७ ॥

नेति। भर्तृतः स्वामिनः प्राप्ते मानसम्प्रतिपत्ती पूजासौमनस्ये यैस्तेषु प्राप्तमानसम्प्रतिपत्तिषु रणे एकसर्गेषु नियतोत्साहेषु नियतनिश्चयेषु वा। 'सर्गास्तु सज्जनाध्यायस्वभावोत्साहनिश्चयाः' इति वैजयन्ती। पत्तिषु पदातिषु। मानसं प्रति, पत्तीनां मानसेष्वित्यर्थः। 'कर्म्मप्रवचनीययुक्ते द्वितीया'। भयं न तस्थौ पुर्व्वोपकारस्मारिणो रणाय निर्भीकाः प्रातिष्ठन्तेत्यर्थः। अन्यथा 'यस्तु भीतिपरावृत्तः सङ्ग्रामे हन्यते परैः। भर्तुर्यद्दुष्कृतं किञ्चित्तत् सर्वं प्रति-

बाणाहिपूर्णतूणीरकोटरैर्धन्विशाखिभिः।
गोधाश्लिष्टभुजाशाखैरभूद्भीमा रणाटवी ॥ ३९ ॥
नानाजाववजानाना सा जनौघघनौजसा।
परानिहाऽहानिराप तान् वियाततयाऽन्विता ॥ ४० ॥
इति प्रतिलोमानुलोमपादः।
विषमं सर्वतोभद्रचक्रगोमूत्रिकादिभिः।
श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद् बलम् ॥ ४१ ॥

पद्यते ॥ यदस्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम्। भर्त्ता तत्सर्व्वमादत्ते परावृत्तहतस्य तु ॥' इति निषेधस्मरणादिति भावः। अत्र मानसम्प्रतिपत्त्योर्विशेषणगत्या भयानवस्थानहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं यमकेन संसृज्यते ॥ ३८ ॥

बाणेति। रणमेवाटवी रणाटवी बाणैरिवाहिभिः पूर्णा तूणीरा निषङ्गा एव कोटराः कुहरा येषां तैः गोधास्तलानि, निहाकाश्च। 'गोधा तले निहाकायाम्' इति विश्वः। तलं ज्याघातवारणम्। ततो गोधा एव गोधा इति श्लिष्टरूपकम्। ताभिराश्लिष्टा भुजा एव शाखा येषां तैर्धन्विभिर्द्धानुष्कैरेव शाखिभिर्वृक्षैर्भीमा भयङ्करा अभूत्। समस्तवस्तुवर्णतात् सावयवरूपकम् ॥३९॥

नानेति। इहास्यां नानाविधायामाजौ चित्रयुद्धे ओजसा तेजसा अवजाना अवज्ञां कुर्व्वती। 'अकर्म्मकाच्च' इत्यात्मनेपदम्। जनौघैर्घना सान्द्रा जनौघघना, बहुजनेत्यर्थः। अहानिरभया वियाततया वैयात्येन धार्ष्ट्येनान्विता, धृष्टेत्यर्थः। 'धृष्टो धृष्णुर्व्वियातश्च' इत्यमरः। सा चैद्यसेना तान् परानरीनाप प्राप। अत्र प्रतिपादं पादार्धस्यैवावृत्तेरर्द्धपादप्रतिलोमयमकम् ॥ ४० ॥

विषममिति। तद्बलं चैद्यसेना सर्व्वतोभद्रचक्रगोमूत्रिकादिभिः। आदिग्रहणात् मुरजबन्धादिसङ्ग्रहः। श्लोकैर्म्महाकाव्यं शिशुपालवधादिकमिव व्यूहैः सर्व्वतोभद्रादिभिरेव बलविन्यासैः। 'व्यूहस्तु बलविन्यासे' इत्यमरः। विषमं दुरवग्रहमभवत्। नगनगरादिवर्णनयुक्तलक्षणं महाकाव्यम् ॥ ४१ ॥

संहत्या सात्वताश्चैद्यं प्रति भास्वरसेनया ।
ववले योद्धुमुत्पन्नप्रतिभा स्वरसेन या ॥ ४२ ॥
विस्तीर्णमायामवती लोललोकनिरन्तरा ।
नरेन्द्रमार्गं रथ्येव पपात द्विषताम्बलम् ॥ ४३ ॥
वारणागगभीरा सा साराऽभीगगणारवा ।
कारितारिवधा सेना नासेधा वरितारिका ॥ ४४ ॥
युग्मम् ।
अधिनागं प्रजविनो विकशत्पिच्छचारवः ।
पेतुर्बर्हिणदेशीयाः शङ्कवः प्राणहारिणः ॥ ४५ ॥

संहत्येति । भास्वरा तेजिष्ठा सेना यस्यास्तया भास्वरसेनया सात्वतां यदूनां संहत्या सङ्घेन चैद्यं प्रति ववले प्रचेले । 'वल चलने' इति धातोर्भावे लिट् 'न शसददवादि—' इति वकारादित्वाभ्यासलोपयोः प्रतिषेधः । या यदूनां संहतिः स्वरसेन स्वभावेन योद्धुमुत्पन्नप्रतिभा सञ्जातप्रतिभा या स्वयं रणकण्डूला सा पराहृता कथं निवर्त्तेत इति भावः ॥ ४२ ॥

अथ यदुसेनायाः प्रतिबलाभियोगं युग्मेनाह—विस्तीर्णमित्यादि । आयामवती द्राघीयसी लोललोकनिरन्तरा चलज्जनसङ्कुला सा सेनेत्युत्तरश्लोकेनान्वयः । सा यदुसेना विस्तीर्णं द्विषतां बलं नरेन्द्रमार्गं राजपथं रथ्या विशिखेव पपात सञ्जगाम । उपमानेऽपि विशेषणं योज्यम् ॥ ४३ ॥

वारणेति । कीदृशी सेना वारणैरेवागैरचलैर्गभीरा दुरवगाहा वारणागगभीरा सा साराणां श्रेष्ठानां न भियं गच्छन्तीत्यभीगानां निर्भीकाणां गणानां जन्तुसङ्घानामारवो यस्यां सा साराभीगगणावरा कारितारिवधा कृतशत्रुवधा । रामो राज्यमकारयदितिवदत्र स्वार्थे णिच् । नास्त्यासेधः प्रतिषेधो यस्यां सा नासेधा । नञर्थेन नशब्देन बहुव्रीहिः । अनासेधा वा वरितारिका ईप्सितशत्रुका । अमेनाहं योत्स्य इति स्वयं वृतप्रतिभटेत्यर्थः । शैषिकः कप्प्रत्ययः । सा सेना पपातेति पूर्वेणान्वयः । अत्र प्रातिलोम्येन अर्द्धावृत्तेरर्द्धप्रतिलोमयमकमेतत् । लक्षणं तूक्तं निध्वनदित्यादिश्लोकप्रतिलोमयमके ॥ ४४ ॥

अधीति । प्रजवन्तीति प्रजविनोऽतिजवनाः । 'प्रजोरिनिः' इति इनि-

प्र वृ त्ते वि क स द्धा नं सा ध ने प्य वि षा दि भिः ।
व वृ षे वि क स द्दा नं यु ध मा प्य वि षा णि भिः ॥४६

इति गोमूत्रिकाबन्धः ।

पुरःप्रयुक्तैर्युद्धं तच्चलितैर्लब्धशुद्धिभिः ।
आलापैरिव गान्धर्वमदीप्यत पदातिभिः ॥ ४७ ॥

केनचित् स्वासिनान्येषां मण्डलाग्रानवद्यता ।
प्रापे कीर्त्तिप्लुतमहीमण्डलाग्राऽनवद्यता ॥ ४८ ॥

प्रत्ययः । विकसद्भिः पिच्छैः कलापैश्चारवः । अतएव ईषदसमाप्तबर्हिण-देशीया मयूरकल्पाः । 'ईषदसमाप्तौ—' इत्यादिना देशीयर्प्रत्ययः । प्राण-हारिणः शङ्कवः शल्यायुधानि । 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमरः । नागेष्वधि-नागम् । विभक्त्यर्थेऽव्ययीभावः । गजेषु, सर्पेषु च निपेतुः । सर्पेषु बर्हिण इवेत्यर्थः । अतएवोपमालङ्कारः । 'सर्पौ अपि गजा नागाः' इति वैजयन्ती ॥ ४५ ॥

प्रवृत्तेति । विकसज्जृम्भमाणो ध्वानो ध्वनिर्यस्मिंस्तद्यथा तथा साधने सम्प्रहारे प्रवृत्तेऽप्यविषादिभिर्विषादरहितैः विषाणिभिर्दन्तिभिर्युधमाप्य प्राप्य विकसत् प्रभूतं दानं मदो ववृषे युद्धारम्भे धनदानश्च ध्वन्यते। सत्त्वसम्पन्न-त्वात् । साधने प्यविषादस्याविरोधात् विरोधाभासः । गोमूत्रिकाचित्रबन्धो ऽयम् । 'वर्णानामेकरूपत्वं यद्येकान्तरमर्द्धयोः । गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो विदुः ॥' इति लक्षणात् । षोड़शकोष्ठद्वये पङ्क्तिद्वयेऽर्द्धद्वयं क्रमेण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिरित्युद्धारः ॥ ४६ ॥

पुर इति । तत् युद्धं प्रयुक्तैः गजादिभ्यः प्राक् प्रवर्त्तितैः । अन्यत्र गानात् पूर्वमुच्चारितैः चलितैः मण्डलचारिभिः, अन्यत्र मुहुरावर्तितैरित्यर्थः । लब्धशुद्धिभिः, कातर्य्यकपटादिदोषरहितैरित्यर्थः । अन्यत्राप्तैः, रागानु-गुणैरित्यर्थः । पदातिभिः पत्तिभिः करणैः गान्धर्व्वं गानमालापैरालापिभि-रिवाक्षरविशेषैरिव अदीप्यताशोभत ॥ ४७ ॥

केनचिदिति । स्वासिना स्वखड्गेन अन्येषां मण्डलाग्रानवद्यता

विहन्तुं विद्विषस्तीक्ष्णः सममेव सुसंहतेः ।
परिवारात् पृथक् चक्रे खड्गश्चात्मा च केनचित् ॥४९॥
अन्येन विदधेऽरीणामतिमात्रा विलासिना ।
उद्गूर्णेन चमूस्तूर्णमतिमात्राविलाऽसिना ॥ ५० ॥
सहस्रपूरणः कश्चिल्लूनमूर्द्धाऽसिना द्विषः ।
तथोर्द्ध्व एव काबन्धीमभजन्नर्त्तनक्रियाम् ॥ ५१ ॥

यता । यतेर्लटः शत्रादेशः । केनचिद्वीरेण कीर्त्तिप्लुतं यशोव्याप्तं मही-मण्डलाग्रं भूपृष्ठं यस्याः सा कीर्त्तिप्लुतमहीमण्डलाग्रा अनवद्यता अनिन्द्यता प्रापे प्राप्ता ॥ ४८ ॥

विहन्तुमिति । केनचिद्वीरेण विद्विषो विहन्तुं तीक्ष्णो निशितः परि-च्छेत्ता च खड्गः सुसंहतेः सुघटितात् सुष्ठु सङ्घीभूताच्च । परिवारात् कोशात्, परिजनाच्च । 'परिवारः परिजने खड्गकोशे परिच्छदे' इति विश्वः । सम-मेव पृथक् चक्रे उद्धृतः । आत्मा च पृथक् चक्रे विभक्तः । खड्गमुत्कृष्य स्वसैन्यान्निर्गत्यारिमध्ये पपातेत्यर्थः । अत्र खड्गात्मनोः प्रकृतयोः समान-क्रियायोगात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ ४९ ॥

अन्येनेति । अन्येन वीरेण विलासिना विलसनशीलेन उद्गूर्णेनोद्यतेन असिना खड्गेन मात्रं मानमतिक्रान्तातिमात्रा अपरिमिता अरीणां चमूः सेना तूर्णं शीघ्रमतिमात्रमत्यन्तमाविला कलुषा अतिमात्राविला अत्याविला विदधे कृता ॥ ५० ॥

सहस्रेति । पृणातीति पूरणः । 'पॄ पालनपूरणयोः' कर्त्तरि ल्युट् । सहस्राणां पूरणः पालयिता पूरयिता वा सहस्रपूरणः सहस्ररक्षी सहस्र-हन्ता वा कश्चिद्भटः । कबन्धस्तु सहस्रपूरणः सहस्रसंख्यापूरकः सहस्रा-देकः कबन्धो नृत्यतीति प्रसिद्धिः । असिना स्वासिना द्विषो लूनमूर्द्धा लून-शत्रुमूर्द्धा । सापेक्षत्वेऽपि गमकत्वात् समासः । कबन्धस्तु द्विषोऽसिना लूनमूर्द्धा तथा कबन्धवदेवोर्द्ध्व एव तिष्ठते । कबन्धस्येमां काबन्धीं नर्त्तन-क्रियामभजत्, विजयहर्षात् स्वयमपि कबन्धवन्ननर्तेत्यर्थः । अतएव साह-

शस्त्रव्रणमयश्रीमदलङ्करणभूषितः ।
ददृशेऽन्यो रावणवदलङ्करणभूषितः ॥ ५२ ॥
द्विषद्विशसनच्छेदनिरस्तोरुयुगोऽपरः ।
सिक्तश्चास्नैरुभयथा बभूवारुणविग्रहः ॥ ५३ ॥
भीमतामपरोऽम्भोधिसमेऽधित महाहवे ।
दाक्षे कोपः शिवस्येव समेधितमहा हवे ॥ ५४ ॥

आक्षेपादसम्भवद्वस्तुसम्बन्धाख्यो निदर्शनाभेदः । 'कबन्धोऽस्त्रीक्रियायुक्तमपमूर्द्धकलेवरम्' इत्यमरः ॥ ५१ ॥

शस्त्रेति । शस्त्रव्रणमयानि तद्रूपाणि । स्वार्थे मयट् । तैरेव श्रीमद्भिः शोभावद्भिरलङ्करणैरलङ्कारैर्भूषितोऽलङ्कृतः शस्त्रव्रणालङ्कृत इत्यर्थः । अन्यः कश्चित्, अविद्यमाना लङ्का यस्याः सा अलङ्केति बहुव्रीहिः । अतएव 'स्त्रियाः पुंवत्'—इत्यादिना पुंवद्भावः । सा रणभूश्च तस्यामुषितः स्थितोऽलङ्करणभूषितः । वसेर्निवासार्थात् कर्त्तरि क्तः 'वचिस्वपि'—इत्यादिना सम्प्रसारणम् । रावणवद्ददृशे दृष्टः । सर्व्वाङ्गीव्रणभूषणत्वेन रावण एवायं लङ्कासम्बन्धविरहात्तु व्यतिरेक इत्यर्थः । उपमाव्यतिरेकयमकानां सङ्करः ॥५२

द्विषदिति । द्विषद्विशसनम् । 'निर्वापणं विशसनं मारणं प्रतिघातनम्' इत्यमरः । तस्मिंश्छेदेनारिशस्त्रप्रहारेण निरस्तमूरुयुगं यस्य सः अतएवास्नैरूरुभिश्च सिक्तोऽपरो वीरः उभयथा उभाभ्यां प्रकाराभ्याम् । 'प्रकारे गुणवचनस्य' इति थाल् । अरुणस्यानूरोरिव अरुणोऽरुणवर्णश्च विग्रहो यस्य सोऽरुणविग्रहो बभूव । 'अरुणोऽर्कार्कसारथ्योररुणो लोहितेऽन्यवत्' इति विश्वः । अत्रोरुच्छेदास्नसिक्तयोर्विशेषणगत्योभयथारुणविग्रहभावहेतुत्वात् काव्यलिङ्गमुपमाश्लेषाभ्यां सङ्कीर्य्यते ॥ ५३ ॥

भीमेति । अम्भोधिसमे सागरसदृशे महानाहवस्तस्मिन् महाहवे सम्यगेधितमहाः सम्वर्धिततेजाः अपरो वीरः दक्षप्रजापतेरयं दाक्षस्तस्मिन् दाक्षे हवे यज्ञे । 'हवो यज्ञे तथाह्वाने' इति विश्वः । समेधितमहाः सन्दीपिततेजाः शिवस्य कोप इव, वीरभद्र इवेत्यर्थः । भीमतां भयङ्करतामधित धृतवान् । बिभ्यत्यस्मादिति भीमः । 'भियः षुग्वा' इत्यौणादिके मप्रत्यये भीमो भीष्मश्च ।

दन्तैश्चिच्छिदिरे कोपात् प्रतिपक्षद्विजा इव ।
परनिस्त्रिंशनिर्लूनकरवालाः पदातयः ॥ ५५ ॥

रणे रभसनिर्भिन्नद्विपपाटविकासिनि ।
न तत्र गतभी कश्चिद्विपपाट विकासिनि ॥ ५६ ॥

यावन्न सत्कृतैर्भर्त्तुः स्नेहस्यानृण्यमिच्छुभिः ।
अमर्षादितरैस्तावत् तत्यजे युधि जीवितम् ॥ ५७ ॥

अयशोभिदुरालोके कोपधामरणादृते ।
अयशोभिदुरालोके कोपधा मरणादृते ॥ ५८ ॥

इति समुद्गयमकम् ।

'भीमादयोऽपादाने' इति निपातनादपादानार्थता । उपमायमकयोः संसृष्टिः ॥ ५४ ॥

दन्तैरिति । परेषां निस्त्रिंशैः खड्गैर्निर्लूनकरवालाः छिन्नखड्गाः पादाभ्यामतन्तीति पदातयः पत्तयः । 'अज्यतिभ्यां पादे च' इत्यौणादिक इण् 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः । कोपात् गजा इव प्रतिपक्षं शत्रुं दन्तैर्दशनैर्विषाणैश्च चिच्छिदिरे चिच्छिदुः ॥ ५५ ॥

रण इति । 'रभसो वेगहर्षयोः' इति विश्वः । रभसेन वेगेन निर्भिन्नद्विपाः पाटितगजाः पाटविकानां पाटववतामसयो यस्मिन् । पाटवशब्दात्मत्वर्थीयष्ठक्प्रत्ययः । विकासिनि प्रवृद्धे तत्र तस्मिन् रणे गतभीर्निर्भीकः । अतएव कश्चित् कोऽपि न विपपाट न पाटयामास न पलायत । अत्र गतभीकत्वस्य विशेषणगत्या अपलायनहेतुत्वात् काव्यलिङ्गम् । द्विपदलनेऽपि रणे निर्भीक इति विरोधस्य यमकेन संसृज्यते ॥ ५६ ॥

यावदिति । सत्कृतैः स्वस्वामिना पूर्वसम्मानितैः अतएव भर्तुः स्नेहस्य स्वामिप्रेम्णः आनृण्यमनृणत्वमिच्छुभिः, योधैरिति शेषः । युधि जीवितं यावन्न तत्यजे त्यक्तं तावदितरैरसत्कृतैरमर्षादसत्कारक्रोधाज्जीवितं तत्यजे । अथ वास्मान् पश्येति स्वामिनमुपालभ्य स्वयमेव प्राक् प्राणान् प्रजहुरित्यर्थः । सत्कारादिविशेषणोत्थं काव्यलिङ्गं सुगमम् ॥ ५७ ॥

अथैवंविधानां मरणस्यैव कर्त्तव्यतामुपपादयति—अयश इति । 'अयः

स्खलन्ती न क्वचित्तैक्ष्ण्यादभ्यग्रफलशालिनी ।
अमोचि शक्तिः शाक्तीकैर्लोहजा न शरीरजा ॥ ५९ ॥
आपदि व्यापृतनयास्तथा युयुधिरे नृपाः ।
आप दिव्या पृतनया विस्मयं जनता यथा ॥ ६० ॥

शुभावहो विधिः' इति अयशोभी भाग्यवान् स चासौ दुरालोकस्तेजस्वित्वा-दुर्दर्शश्चेति विशेषणसमासः । तस्मिन्नयशोभिदुरालोके कोपधाम कोपाश्रयः, कुपित इत्यर्थः । अथाप्यकोपे भीरुत्वापातात् । अतएव रणमाहृतः रणा-हृतः, रणार्थीत्यर्थः । कर्त्तरि क्तः । कोपधाम चासौ रणाहृतश्च तस्मिन् कोपधामरणाहृते लोके एवम्बिधे वीरलोके । अयशोभिदुरा स्वाम्यनादर-निमित्तापकीर्त्तिनिवर्त्तिका । 'विदिभिदिच्छिदेः कुरच्' । उपधा उपायो मरणाहृते, प्राणत्यागं विनेत्यर्थः । का । न कापीत्यर्थः । 'अन्यारादि-तरर्ते'—इति पञ्चमी । अत्रायशोभित्त्वादीनां लोकविशेषणद्वारा तद्वर्त्तिना-मुपजीविनामवसरे जीवत्यागहेतुत्वात् काव्यलिङ्गं यमकेन सङ्कीर्य्यते । समु-द्गयमकभेदोऽयम् । 'अर्द्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः' इति लक्षणात् ॥ ५८ ॥

स्खलन्तीति । शक्तिः प्रहरणं येषां तैः शाक्तीकैः । 'शाक्तीकः शक्ति-हेतिकः इत्यमरः । 'शक्तियष्ट्योरीकक्' इति प्रहरणार्थे ईकक्प्रत्ययः । तैक्ष्ण्यान्नैशित्यात् क्वचिदपि न स्खलन्ती प्रतिहतिं न प्राप्नुवती । अभ्यग्रं यत् फलं शल्यं तेन शालते । अन्यत्र अभ्यग्रेणासन्नेन फलेन श्रेयसा शालत इत्यभ्यग्रफलशालिनी । लोहजा अयोमयी शक्तिरायुधविशेषः अमोचि शत्रुषु मुक्ता । शरीरजा शक्तिः सामर्थ्याख्या तु नामोचि । अतिव्यायामे-ऽप्यक्षीणशक्तिका एवायुध्यन्तेत्यर्थः । अत्र द्वयोरपि प्रकृतत्वात् केवलप्रकृत-श्लेषः ॥ ५९ ॥

आपदीति । नृपा राजानः आपदि व्यसनेऽपि व्यापृतनयाः प्रवृत्त-नीतिका एव सन्तः । न तु स्वापदवस्थेति भावः । पृतनया सेनया साध-नेन । वाक्यान्तरस्थस्यापि पृतनाशब्दस्यात्रान्वयः चित्रे सोढव्यः । तथा तेन प्रकारेण युयुधिरे सम्प्रजह्रुः । यथा दिव्या जनता अन्तरीक्षवर्त्तिसिद्धविद्या-

स्वगुणैराफलप्राप्तेराकृष्य गणिका इव ।
कामुकानिव नालीकांस्त्रिणताः सहसामुचन् ॥ ६१ ॥
वाजिनः शत्रुसैन्यस्य समारब्धनवाजिनः ।
वाजिनश्च शरा मध्यमविशन् द्रुतवाजिनः ॥ ६२ ॥
पुरस्कृत्य फलं प्राप्तैः सत्पक्षाश्रयशालिभिः ।
कृतपुङ्खतया लेभे लक्षमप्याशु मार्गणैः ॥ ६३ ॥

धरसङ्गी विस्मयमाप । अमानुषं युद्धं चक्रुरित्यर्थः । अयञ्च पादाभ्यासयमकभेदः ॥ ६० ॥

स्वगुणैरिति । त्रिषु स्थानेषु मध्येषु नताः त्रिणताः शार्ङ्गाणि । 'पूर्व्वपदात् संज्ञायाम्' इति णत्वम् । गणिका वेश्या इव ता अपि त्रिणता मध्ये भ्रुवोश्च नतत्वात् । नालीकानिषुविशेषान् । 'नालीकः शरशल्ययोः' इति विश्वः । कामुकानिव । स्वतुणैर्ज्याभिः रूपलावण्यादिभिश्च । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती । आफलप्राप्तेराशल्यस्पर्शादा-धनलाभाच्च आकृष्य कर्णान्तिकं नीत्वा, वशीकृत्य च सहसा अमुचन्नत्यान्तुः । मुचेर्लुङि 'पुषादि'—इति च्लेरङादेशः । अनेकैवोपमा ॥ ६१ ॥

वाजिन इति । द्रुतं वजन्तीति द्रुतवाजिनः शीघ्रगामिनः । 'वज गतौ' इति धातोर्णिनिः । वाजिनोऽश्वाः, वाजिनः पक्षवन्तः शराश्च । 'पक्षो वाजस्त्रिषूत्तरे' इत्यमरः । समारब्धा नवा अपूर्वा आजिर्युद्धं येन तस्य समारब्धनवाजिनः शत्रुसैन्यस्य मध्यमविशन् । अत्र वाजिनां शराणाञ्च प्रवेशाख्यतुल्ययोगिताभेदो यमकेन संसृज्यते ॥ ६२ ॥

पुरस्कृत्येति । फलं शल्यं पुरस्कृत्य पुरोधाय, अन्यत्र फलं लाभं पुरस्कृत्य, सम्भाव्येत्यर्थः । प्राप्तैरागतैः सत्पक्षाश्रयेण साधुकङ्कादिपत्रग्रन्थनेन, अन्यत्र साधुसहायावलम्बनेन शालन्ते इति तथोक्तैः मार्गणैः सायकैरर्थिभिश्च । 'मार्गणौ सायकार्थिनौ' इत्यमरः । कृतपुङ्खतया सुबद्धकर्त्तरीकतया । 'मुखस्यकर्त्तरी पुङ्खः' इति यादवः । अन्यत्र कुशलतयेत्यर्थः । लक्षं शरव्यम्, अन्यत्र लक्षसङ्ख्यमपि धनं लेभे शतादिकं किमु वक्तव्यमिति भावः । 'लक्षं

रक्तस्तुतिं जपासूनसमरागामिषुव्यधात् ।
कश्चित् पुरः सपत्नेषु समरागामिषु व्यधात् ॥ ६४ ॥
रयेण रणकाम्यन्तौ दूरादुपगताविभौ ।
गतासुरन्तरा दन्ती वरण्डक इवाभवत् ॥ ६५ ॥
भूरिभिर्भारिभिर्भीरैर्भूभारैरभिरेभिरे ।
भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः ॥ ६६ ॥

इति द्व्यक्षरः ।

णत्ये मङ्गलायाम्' इति विश्वः । अत्राभिधायाः प्रकृतार्थनियन्त्रणादर्थान्तरप्रतीतिर्ध्वनिरेव ॥ ६३ ॥

रक्तेति । कश्चिद्वीरः पुरोऽग्रे समरागामिषु समरमागतेषु सपत्नेषु इषुव्यधाद्बाणप्रहारात् । 'व्यधजपोरनुपसर्गे' इत्यप्प्रत्ययः । जपासूनसमरागां रक्तस्तुतिं रक्तस्रावं व्यधाद्विहितवान् । दधातेर्लुङि 'गातिस्था'—इत्यादिना सिचो लुक् । उपमायमकयोः संसृष्टिः ॥ ६४ ॥

रयेणेति । रणमात्मन इच्छन्तौ रणकाम्यन्तौ । 'काम्यच्च' इति रणशब्दात् काम्यच्प्रत्यये सनाद्यन्तधातुत्वाल्लटि शत्रादेशः । रयेण दूरादुपगतौ । इभावन्तरा इभयोर्मध्ये । 'अन्तरान्तरेण युक्ते' इति द्वितीया । गतासुर्मृतो दन्ती दैवान्मध्यवर्त्ती हस्तिकुणप इत्यर्थः । वरण्डकोऽन्तरावेदिरिवाभवत् । 'वरण्डकोऽन्तरावेदी सन्दोहमुखरागयोः' इति विश्वः । अभ्यासकाले काञ्चनवेदिमन्तर्धाय दन्तिनौ योधयत इति प्रसिद्धम् । उपमा ॥ ६५ ॥

भूरिभिरिति । भूरिभिः भूयोभिः भारिभिः पताकास्तरणादिभारवद्भिः । मत्वर्थीय इनिप्रत्ययः । भियं रान्तीति भीरास्तैर्भीरैः भयदैः । 'रा दाने' आतोऽनुपसर्गे कः । भूभारैः महाकायत्वाद्भुवो भारायमाणैः । भेर्य्य इव रेभन्ते ध्वनन्तीति भेरीरेभिभिः । 'रेभृ शब्दे' ताच्छील्ये णिनिः । अभ्राभैर्मेघमेचकैरिति चोपमाद्वयम् । अभीरुभिर्निर्भीकैरिभैर्गजैः । इभाः प्रतिगजास्तादृशा एव अभिरेभिरे अभियुक्ताः । उपमानुप्रासयोः सङ्करः । द्व्यक्षरानुप्रासः ॥ ६६ ॥

निशितासिलतालूनैस्तथा हस्तैर्न हस्तिन: ।
युध्यमाना यथा दन्तैर्भग्नैरापुर्विहस्तताम् ॥६७॥
निपीड़नादिव मिथो दानतोयमनारतम् ।
वपुषामदयापातादिभानामभितोऽगलत् ॥ ६८ ॥

इत्यसंयोग: ।

रणाङ्गणं सर इव प्लावितं मदवारिणा ।
गज: पृथुकराकृष्टशतपत्रमलोड़यत् ॥ ६९ ॥
शरक्षते गजे भृङ्गै: सविषादि विषादिनि ।
रुतव्याजेन रुदितं तत्रासीदतिसीदति ॥ ७० ॥

निशितेति । युध्यमाना: संप्रहरन्त: हस्ता येषां सन्तीति हस्तिन: । 'हस्ताज्जातौ' इति निप्रत्यय: । यथा भग्नैर्दन्तै: विषाणै: विहस्ततां हस्तहीनत्वमितिकर्त्तव्यतामूढ़त्वञ्चापु: । 'विहस्तव्याकुलौ समौ' इत्यमर: । तथा निशिताभिरसिलताभिर्लूनैश्छिन्नैर्हस्तै: शुण्डादण्डैर्विहस्ततां नापु: । हस्तेभ्योऽपि दन्तानां प्रहारसाधनत्वादिति भाव: । अत्र हस्तस्याच्छेदे वैहस्त्यं न हस्तच्छेदे इति विरोध: प्रतिपत्तिमूढ़तया समाहित इति विरोधाभासोऽलङ्कार: ॥ ६७ ॥

निपीड़नादिति । इभानां वपुषां अदयापातान्निर्दयाभियोगाद्धेतो: मिथो निपीड़नादिव वस्त्रादिनिष्पीड़नादिवेत्युत्प्रेक्षा । अनारतमश्रान्तं दानतोयमभितोऽगलत् । वस्तुवत् निर्दयापातेऽपि मदातिरेक इति गजानामुत्साहातिशयोक्ति: । अत्र संयोगाभावादसंयोगश्चित्रभेद: । 'हलोऽनन्तरा: संयोग: ॥६८॥

रणेति । गजो मदवारिणा प्लावितमुक्षितं रणाङ्गणं सर इव पृथुना करेणाकृष्टानि शतपत्राणि अमितवाहनानि, अन्यत्र कुशेशयानि च यस्मिन् कर्म्मणि तत् तथा रणाङ्गणमलोड़यदुपाक्षोभयत् । श्लेषविशेषणेयमुपमा ॥६९॥

शरक्षते इति । गजे शरेण क्षते प्रहते अतएव विषादिना विषादवता विषादिना यन्त्रा सह वर्त्तते इति तस्मिन् सविषादिविषादिनि तत्र रणे अतिसीदति अतिसन्ने सति, मृते सतीत्यर्थ: । सदेर्लट: शत्रादेश: । भृङ्गै:

अन्तकस्य पृथौ तत्र शयनीय इवाहवे ।
दशनव्यसनाद्दीयुर्मत्कुणत्वं मतङ्गजाः ॥ ७१ ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| अ | भी | क | म | ति | के | ने | द्धे |
| भी | ता | न | न्द | स्य | ना | श | ने । |
| क | न | त्स | का | म | से | ना | के |
| म | न्द | का | म | क | म | स्य | ति ॥७२॥ |

इत्यर्द्धभ्रमकः ।

कर्त्तृभिः । 'न लोका'—इत्यादिना षष्ठीप्रतिषेधः । रुतव्याजेन रुतच्छलेन रुदितं रोदनमासीत् । स्वाश्रयनाशदुःखाद्रोदनं कृतमिवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । सा च रुतव्याजेनेत्यपह्नवपूर्वकत्वात् सापह्नवेति सर्वस्वकारः ॥ ७० ॥

अन्तकस्येति । अन्तकस्य मृत्योः सम्बन्धिनि शेतेऽस्मिन्निति शयनीये तल्प इव स्थित इत्यर्थः । 'कृत्यल्युटो बहुलम्' इत्यधिकरणेऽनीयर् । पृथौ विशाले तत्राहवे मतङ्गजाः दन्तव्यसनाद्विषाणभङ्गाद्धेतोः मत्कुणत्वमीयुः । मत्कुणा इव दृष्टा इत्यर्थः । सुप्तरक्तपायिनः खट्वाश्रयाः कीटविशेषा मत्कुणाः । 'कालेऽप्यजातदन्ते च शय्याजन्तौ च मत्कुणः' । तस्मादस्माददन्तेषु दन्तिषु तथात्वरूपकं अन्तकस्य शयनीय इवेत्युत्प्रेक्षासापेक्षमिति सङ्करः ॥७१॥

अथ युग्मेनाह—अभीकेत्यादि । अभीका निर्भीका मतिर्यस्य तेनाभीकमतिकेन निर्भयचित्तेन । शैषिकः कप्प्रत्ययः । इद्धे दीप्ते । भीतानामानन्दस्य नाशने । नशेर्ण्यन्तात् कर्त्तरि ल्युट् । कनन्ती दीप्यमाना सकामा विजयित्वात् पूर्णकामा सेना यत्र तस्मिन् कनत्सकामसेनाके । पूर्ववत् कप् । मन्दकामकं मन्दोत्साहम् । पूर्ववदेव कप् । अस्यति निराकुर्वाणे रण इत्युत्तरेण सम्बन्धः । अत्र सर्वतोभद्रवत् सर्वपादभ्रमणाभावात् पादार्द्धानामेव भ्रमणादर्द्धभ्रमकम् । उद्धारस्तु सर्वतोभद्रवत् स्यादेव ॥ ७२ ॥

दधतोऽपि रणे भीममभीक्ष्णं भावमासुरम् ।
हताः परैरभिमुखाः सुरभूयमुपाययुः ॥ ७३ ॥

युग्मम् ।

येनाङ्गमूहे व्रणवत्सरुचा परतोमरैः ।
समत्वं स ययौ खड्गत्सरुचापरतोऽमरैः ॥ ७४ ॥
निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम् ।
पाणिनीयमिवालोकि धीरैस्तत्समराजिरम् ॥७५॥

दधत इति । रणे पूर्वोक्तप्रकारे अभीक्ष्णमत्यन्तं भीमं भयङ्करं आसुरमसुरसम्बन्धिनं भावं पुरुषकारलक्षणम् । 'भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु' इति वैजयन्ती । असुरत्वञ्च दधतः दधाना अपि परैः शत्रुभिः अभिमुखा एव स्थिता हताः । वीरा इति शेषः । अतएव सुराणां भावं सुरभूयं सुरत्वं देवत्वमुपाययुः । 'स्वर्गं यान्त्यपराङ्मुखाः' इति स्मरणादिति भावः । 'भुवो भावे' इति क्यप् । अत्रासुरभावेऽपि सुरभूयमुपाययुरिति विरोधस्य भावशब्दस्यार्थान्तरत्वेन परिहाराद्विरोधाभासः ॥ ७३ ॥

येनाङ्गमिति । रुचा सह वर्त्तते यस्तेन सरुचा तेजस्विना येन वीरेण परतोमरैः शत्रुशस्त्रैः व्रणवत् सव्रणमङ्गमूहे जढ़म् । वहेः कर्म्मणि लिट् सम्प्रसारणम् । खड्गत्सरौ खड्गमुष्टौ चापे च रतः खड्गत्सरुचापरतः । खड्गेषुप्रहारेण युद्धं कुर्व्वन्नित्यर्थः । 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यमरः । स वीरोऽमरैः समत्वं ययौ, पौरुषेणेति भावः । उपमायमकयोः संसृष्टिः ॥७४

निपातितेति । निपातिता वीरशय्यां गमिताः सुहृदादयो यत्र तत् तथोक्तम् । अभिमुखबन्धोरपि रणे वध्यत्वादिति भावः । अन्यत्र निपातिताः लक्षणाभावे शब्दसाधुत्वाय सूत्रकृता सूत्रस्वरूपेणोच्चारिताः सुहृदादिशब्दा यत्र तदित्यर्थः । अतएव तत् समराजिरं रणाङ्गणम् । पाणिनिना प्रोक्तं पाणिनीयमष्टाध्यायीव्याकरणमिव । 'तेन प्रोक्तम्' इति छप्रत्ययः । धीरैर्धृष्टैरेवालोकि दृष्टम् । उभयत्रापि धीरैर्दुरवगाहत्वादिति भावः । शोभनं हृदयं यस्य स सुहृत् । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति हृदयशब्दस्य हृद्भावो

अभावि सिन्धुः सन्ध्याभ्रसदृग्रुधिरतोयया ।
इते योद्धुं जनः पांशौ स दृग्रुधि रतो यया ॥७६॥
विदलत्पुष्कराकीर्णा पतच्छङ्खकुलाकुलाः ।
तरत्पत्ररथा नद्यः प्रासर्पन् रक्तवारिजाः ॥७७॥
असृग् जनोऽस्त्रक्षतिमानवमज्जवसादनम् ।
रक्षःपिशाचं मुमुदे नवमज्जवसादनम् ॥७८॥

निपातितः । स्वमस्यास्तीति स्वामी ईश्वरः । 'स्वामिन्नैश्वर्ये' इति मत्वर्थीयनिपातः । 'पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः' इत्यमरः । 'पितृव्यमातुलमातामहपितामहाः' इति व्युत्पन्नजन्तनिपाताः । बिभर्त्तीति भ्राता । नप्तृनेष्ट्रादिसूत्रादौणादिको निपातः ॥ ७५ ॥

अभावीति । सन्ध्याभ्रसदृक् सन्ध्यामेघसदृशं रुधिरमेव तोयं यस्यास्तया सिन्धुः रक्तनद्या अभावि भूतम् । भावे लुङि चिण् । यया सिन्धुः दृशौ रुणद्धीति दृग्रुधि दृष्टिरोधके । रुधः क्विप् । पांशौ रजसि इते सति स जनो वीरलोको योद्धुं रतः उत्सुकः । अभूदिति शेषः । उपमायमकयोः संसृष्टिः ॥ ७६ ॥

विदलदिति । विदलद्भिर्विदीर्यमाणैः पुष्करैः करिहस्ताग्रैः' अन्यत्र विकसद्भिः पद्मैराकीर्णा व्याप्ताः । पतद्भिः शङ्खकुलैः ललाटास्थिसङ्घैः कम्बुसङ्घैश्चाकुलाः । तरन्ति प्लवमानानि पत्राणि वाहनानि रथाश्च, अन्यत्र पत्ररथा अण्डजा यासु ताः रक्तवारिजा रुधिरतोयजन्याः, अन्यत्र रक्तानि वारिजानि यासु ताः नद्यः प्रासर्पन् प्रावहन् । अत्र नदीनां रक्तनदीनाञ्च श्लेषः ॥ ७७ ॥

असृगिति । अस्त्रक्षतिमानस्त्रप्रहारवान् जनो वीरजनोऽसृग् रक्तं जवसादनं जवस्य चेष्टावेगस्य सादनं सादकं यथा स्यात् तथा अवमत् । नवयोर्मज्जवसयोर्मेदोरसयोरदनं भक्षकम् । कर्त्तरि ल्युट् । रक्षांसि च पिशाचाश्च रक्षःपिशाचम् । समाहारे द्वन्द्वैकवद्भावः । मुमुदे जहर्ष । अत्र मोदस्य तत्पत्याग्रधहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गं तच्च यमकेन संसृज्यते ॥ ७८ ॥

चित्रं चापैरपेतज्यैः स्फुरद्रक्तशतह्रदम् ।
पयोदजालमिव तद्वीराशंसनमाबभौ ॥ ७९ ॥
बन्धौ विपन्नेऽनेकेन नरेणेह तदन्तिके ।
अशोचि सैन्ये घण्टाभिर्न रेणे हतदन्तिके ॥८०॥
कृत्तैः कीर्णा मही रेजे दन्तैर्गात्रैश्च दन्तिनाम् ।
क्षुण्णलोकासुभिर्मृत्योर्मुसलोलूखलैरिव ॥ ८१ ॥
युद्धमित्थं विधूतान्यमानवानभियो गतः ।
चैद्यः परान् पराजिग्ये मानवानभियोगतः ॥८२॥

चित्रमिति । अपेतज्यैरपगतमौर्वीकैः । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । चापैश्चित्रं विचित्रं स्फुरन्ति रक्तान्येव शतह्रदाः शम्पा यस्मिंस्तत् । 'शम्पा शतह्रदा ह्रादिनी' इत्यमरः । तत् प्रकृतं वीराः आशंस्यन्ते अत्रेति वीराशसनं भयङ्करा युद्धभूमिः । 'सा वीराशंसनं युद्धभूमिर्यातिभयप्रदा' इत्यमरः । पयोदजालमिवाबभौ ॥ ७९ ॥

बन्धाविति । इह सैन्ये बन्धौ विपन्ने मृते सति अनेकेन नरेण, अनेकैर्नरैरित्यर्थः । जातावेकवचनम् । तदन्तिके तस्य मृतस्य बन्धोरन्तिके अशोचि । किञ्च हता दन्तिनो यत्र तस्मिन् हतदन्तिके सैन्ये घण्टाभिर्न रेणे न दध्वने । रणतेर्भावे लिट् । अत्र हतदन्तिके इति विशेषणगत्या घण्टानामरणनहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं यमकेन संसृज्यते ॥ ८० ॥

कृत्तैरिति । कृत्तैः छिन्नैः दन्तिनां दन्तैर्गात्रैश्च कीर्णा मही रणभूमिः क्षुण्णाः पिष्टाः लोकासवो जनप्राणा यैस्तैः मृत्योर्मुसलोलूखलैः कीर्णेव रेजे । 'अयोऽग्रं मुसलोऽस्त्री स्यादुदूखलमुलूखलम्' इत्यमरः । अत्र मुसलोलूखलैरिति राजदन्तादिपाठेऽपि 'सर्वकूलाभ्र'—इत्यादिसूत्रादेव व्यभिचारज्ञापकात् परनिपातव्यत्ययः ॥ ८१ ॥

युद्धमिति । मानवानभि मानवान् चैद्यो युद्धं गतः प्राप्तः सन् इत्थं विधूता अभिभूता अन्ये चैद्यातिरिक्ता मानवा यैस्तान् । विधूतान्यमानवान् अभियः निर्भीकान् परानरीन् अभियोगतोऽभियोगादभ्यवरोधात् पराजिग्ये ।

अथ वक्षोमणिच्छायाच्छुरितापीतवाससा ।
स्फुरदिन्द्रधनुर्भिन्नतडितेव तडित्वता ॥८३॥
नीलेनानालनलिननिलीनोल्ललनालिना ।
ललनालालनेनालं लीलालोलेन लालिना ॥८४॥

इति द्व्यक्षरः ।

अपूर्वयेव तत्कालसमागमसकामया ।
दृष्टेन राजन् वपुषा कटाक्षैर्विजयश्रिया ॥८५॥

जिगायेत्यर्थः । 'विपराभ्यां जेः' इत्यात्मनेपदम् । 'सन्लिटोर्जेः' इति कुलम् ॥ ८२ ॥

अथ भगवदभियोगं पञ्चभिः कुलकेनाह—अथेति । अथ चैद्यजयानन्तरं वपुषा राजन् परः पुमानदृश्यतेति पञ्चमेन सम्बन्धः । तद्वपुस्तावत्त्रिभिर्विशिनष्टि । वक्षोमणिः कौस्तुभस्य छायया छुरितानि व्याप्तान्यापीतवासांसि पीताम्बराणि यस्य तेन । अतएव स्फुरता इन्द्रधनुषा भिन्नाः सङ्गतास्तडितो यस्य तेन तडित्वता मेघेनेव स्थितेनेत्यर्थः ॥ ८३ ॥

नीलेनेति । पुनः कीदृशेन वपुषा नीलेन श्यामलेन तथानालं नालरहितं यन्नलिनं तत्र निलीना । आसन्नाः उल्ललन्तीत्युल्ललनाश्चलाश्चालयो यस्य तेन अनालनलिननिलीनोल्ललनालिना । मुखसौरभलोभपरिभ्रमद्भ्रमरेणेत्यर्थः । ललनानां विलासिनीनां स्त्रीणां लालनेन उपलालनेन, वशीकरणेनेत्यर्थः । अलमत्यन्तं लीलालोलेन क्रीडालोलुपेन । 'लीलालालेन' इति पाठे लीलानां विलासानामालालेन, आलयेनेत्यर्थः । लालयति भक्तानिति लालिना, भक्तानुकम्पिनेत्यर्थः । द्व्यक्षरानुप्रासोऽलङ्कारः ॥ ८४ ॥

अपूर्वयेति । किञ्च अपूर्वयेव अपूर्वसमागमयेव तत्कालसमागमे सकामया साभिलाषया विजयश्रिया । चैद्यविरक्तयेति भावः । कटाक्षैरपाङ्गदृष्टेनालोकितेन वपुषा राजन् दीप्यमानः । अत्र प्रस्तुतजयश्रीविशेषणसाम्यादप्रस्तुतानुरक्तमानिनीप्रतीतेः समासोक्तिः प्रतीयमानाभेदाध्यवसायादपाङ्गदर्शनोत्प्रेक्षा च ॥ ८५ ॥

विभावी विभवी भाभो विभाभावी विवो विभीः ।
भवाभिभावी भावावो भवाभावो भुवो विभुः ॥८६॥

इति द्व्यक्षरः ।

उपैतुकामैस्तत्पारं निश्चितैर्योगिभिः परैः ।
देहत्यागकृतोद्योगैरदृश्यत परः पुमान् ॥८७॥

विभावीति । विभावोऽस्यास्तीति विभावी प्रभावसम्पन्नः विभवोऽस्यास्तीति विभवी ऐश्वर्य्यवान् भस्याभेवाभा यस्य स भाभः, नक्षत्रवदुज्ज्वल इत्यर्थः । विभां विशिष्टाभां भावयति सम्पादयति विश्वस्येति विभाभावी । 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । भुवो ण्यन्ताणिनिः । विना पक्षिणा वाति गच्छतीति विवः, पक्षिवाहन इत्यर्थः । 'आतोऽनुपसर्गे कः' । विभीर्निर्भीकः । भवं संसारमभिभवतीति भवाभिभावी, भक्तानां संसारनिवर्त्तक इत्यर्थः । भुवो णिनिः । भावान् जन्तूनवतीति भावावः विश्वत्राता । 'भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु' इति वैजयन्ती । अवतेः कर्म्मण्यण् । भवाभावोऽस्यास्तीति संसारदुःखैरस्पृष्ट इत्यर्थः । अर्श-आदित्वादच्प्रत्ययः । भुवो भूमेर्विभुर्भर्त्ता ॥ ८६ ॥

उपैत्विति । एवम्भूतः परः पुमान् परमपुरुषो हरिः । तत्पारं तस्य हरेः पारं अन्तमुपैतुकामैस्तं जिगीषुभिः, अन्यत्र दिदृक्षुभिरित्यर्थः । 'तुं काममनसोरपि' इति मकारलोपः । निश्चितैः, योद्धुं कृतनिश्चयैरित्यर्थः । अन्यत्र निश्चिततत्त्वैः । सकर्म्मकादप्यविवक्षिते कर्म्मणि क्तः । यद्वा पीता गावः, विभक्ता भ्रातर इत्यादिवदूहयितव्यम् । स्फुटीकृतं चैतदष्टापथे । स वर्णिलिङ्गी विदित इत्यत्र । देहत्यागकृतोद्योगैर्म्मरणोद्यतैः, अन्यत्र मुमुक्षुभिरित्यर्थः । योगिभिः सन्नाहवद्भिरुपायवद्भिर्व्वा, अन्यत्र ध्यानवद्भिः । 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । परैः शत्रुभिः, अन्यत्र परमयोगिभिः अदृश्यत, परेषामग्रेऽतिष्ठदित्यर्थः । अन्यत्र साक्षात् कृतः । 'तमेव विदित्वातिमृत्युमेति' इति श्रुतेः । अर्थान्तरप्रतीतिर्ध्वनिरेव न श्लेषः । अभिधायाः प्रकृतार्थे नियन्त्रणात् ॥ ८७ ॥

तं श्रिया घनयाऽनस्तरुचा सारतया तया ।
यातया तरसा चारुस्तनयाऽघनया श्रितम् ॥ ८८ ॥

इति गतप्रत्यागतम् ।

विद्विषोऽद्विषुरुद्वीक्ष्य तथाप्यासन् निरेनसः ।
अरुच्यमपि रोगघ्नं निसर्गादेव भेषजम् ॥८९ ॥

युग्मम् ।

विदितं दिवि केऽनीके तं यातं निर्जिताजिनि ।
विगदं गवि रोद्धारो योद्धा यो नतिमेति न ॥९०॥

प्रतिलोमेनायमेवार्थः ।

युग्मेनाह—तमिति । घनया आनन्दमान्द्रया । अनस्तरुचा अक्षीण-कान्त्या । सारतया सारत्वेन सर्वोत्कर्षगुणेन यातया व्याप्तया । चारुस्तनया रम्यकुचया । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विकल्पादनीकारः । अनघया निर्दोषया तया प्रसिद्धया श्रिया रमया तरसा त्वरया श्रितमालि-ङ्गितं तं हरिमुद्वीक्ष्येत्युत्तरेण सम्बन्धः । अत्रापि प्रातिलोम्येनार्धावृत्तेरर्ध-प्रतिलोमयमकम् । एतल्लक्षणन्तु प्रागेवोक्तम् ॥ ८८ ॥

विद्विष इति । तं पूर्वोक्तं हरिमुद्वीक्ष्य विद्विषः शत्रवोऽद्विषुः द्विषन्ति स्म । लङि 'द्विषश्च' इति विकल्पेन झेर्जुसादेशः । तथापि द्विषन्तोऽपि निरे-नसो निष्पापा आसन् । द्वेषवीक्षणस्याप्येनोनिवर्त्तकत्वं दृष्टान्तेनाह—अरुच्य-मिति । रोचत इति रुच्यम् । 'राजसूय—' इत्यादिना क्यबन्तो निपातितः । अरुच्यमरोचमानमपि भेषजमौषधम् । 'भेषजौषधभैषज्यानि' इत्यमरः । निसर्गात् स्वभावशक्तेरेव रोगं हन्तीति रोगघ्नमारोग्यकारि । 'हरिर्हरति पापानि' इति वचनादिति भावः । 'अमनुष्यकर्तृके च' इति टक्प्रत्ययः ॥८९॥

विदित इति । किञ्च योद्धा वीरो यो हरिः नतिं परेषां नम्रतां नैति नापैति । नितरां जिता आजयो येन तस्मिन्निर्जिताजिनि अनेकाजिवि-जयिन्यपि अनीके सैन्ये । 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्' इत्यमरः । यातं योद्धुमागतम् । दिवि स्वर्गेऽपि विदितं प्रख्यातं विगदं निरामयं तं हरिं गवि भुवि । रोद्धारो जेतारः के, न केऽपीत्यर्थः । प्राति-

नियुज्यमानेन पुरः कर्मण्यतिगरीयसि ।
आरोप्यमाणोरुगुणं भर्त्रा कार्मुकमानमत् ॥८१॥
तत्र बाणाः सुपरुषः समधीयन्त चारवः ।
द्विषामभूत् सुपरुषस्तस्याकृष्टस्य चारवः ॥८२॥
पश्चात्कृतानामप्यस्य नराणामिव पत्त्रिणाम् ।
यो यो गुणेन संयुक्तः स स कर्णान्तमाययौ ॥८३॥

लोम्येऽप्येत एव पदार्थवाक्यार्थाः । एतदपि श्लोकप्रतिलोमयमकमेव । पदपदार्थादिसम्वादस्तु वैचित्रीविशेषः । लक्षणन्तु निध्वनदित्यत्रैवोक्तमनुसन्धेयम् ॥ ८० ॥

नियुज्यमानेनेति । पुरोऽग्रे अतिगरीयसि कर्म्मणि रणकर्म्मणि, अन्यत्र दुष्करे क्वचित् कृत्यवस्तुनि नियुज्यमानेन व्यापारयिष्यता, आज्ञापयिष्यता, च भर्त्रा स्वामिना आरोप्यमाणोऽधिक्रियमाण उरुर्म्महान् गुणो ज्या यस्मिंस्तत् । अन्यत्र वर्धमानसौन्दर्य्यादिकः । कर्म्मणे प्रभवतीति कार्मुकं धनुः 'कर्म्मण उकञ्' । आनमत् गुणाकर्षणादाकुञ्चितकोटिकमभूत् । अन्यत्र प्रणत इत्यर्थः । अत्र प्रकृतकार्मुकविशेषणसाम्यादप्रस्तुतनियोज्यपुरुषप्रतीतिः समासोक्तिः ॥ ८१ ॥

तत्रेति । तत्र कार्मुके शोभनानि परूंषि येषां ते सुपरुषः सुपर्व्वाणः । अत एव चारवोऽतिरम्या बाणाः समधीयन्त निहिताः आकृष्टस्य तस्य कार्मुकस्यारवश्च द्विषां सुष्ठु परुषः सुपरुषोऽतिकर्कशोऽभूत् । यमकविशेषालङ्कारः ॥ ८२ ॥

पश्चादिति । नराणां पुंसामिव पश्चात् कृतानां निषङ्गसङ्गितया पृष्ठस्थापितानामपि, अन्यत्रावधीरितानामपि । पत्त्रिणामिषूणां मध्य इत्यर्थः । यो यः पत्त्री, नरश्च गुणेन ज्यया दाक्षिण्यादिना च संयुक्तः सम्बद्धः स स पत्त्री नरश्चास्य हरेः कर्णान्तं कर्णसमीपमाययौ आगतः । गुणयोगादाकर्णमाकृष्टः, अन्यत्रान्तिकमागत इत्यर्थः । श्लेषसङ्कीर्णोपमा ॥ ८३ ॥

प्रापे रूपी पुराऽरेपाः परिपूरी परः परैः ।
रोपैरपारैरुपरि पुपूरेऽपि पुरोऽपरैः ॥ ८४ ॥

इति द्व्यक्षरः ।

दिङ्मुखव्यापिनस्तीक्ष्णान् ह्रादिनो मर्मभेदिनः ।
चिक्षेपैकक्षणेनैव सायकानहितांश्च सः ॥ ८५ ॥

शरवर्षी महानादः स्फुरत्कार्मुककेतनः ।
नीलच्छविरसौ रेजे केशवच्छलनीरदः ॥ ८६ ॥

इति गूढचतुर्थः ।

प्राप इति । पुरा पूर्वं रूपी मत्स्यकूर्म्माद्यनेकरूपवान् अरेपाः निष्पापः परिपूरयति कामैर्भक्तानिति परिपूरी भक्तवरदः । पूरयतेर्णिनिः । परः परमपुरुषो हरिः परैः शत्रुभिः प्रापे प्राप्तः, अवरुद्ध इत्यर्थः । अपरैरन्यैः शत्रुभिः कर्तृभिः अपारैरनन्तैरोपैरिषुभिः । 'पत्त्री रोप इषुर्द्वयोः' इत्यमरः । पुरोऽग्रे उपरि च पुपुरे पूरितः । पृणातेः कर्म्मणि लिट् । द्व्यक्षरानुप्रासोऽलङ्कारः ॥ ८४ ॥

दिगिति । स हरिर्दिङ्मुखव्यापिनो दिगन्तव्यापकान् । अतितीक्ष्णान्निशितान् क्रूरांश्च । ह्रादन्ते इति ह्रादिनः पक्षनादवतः, सिंहनादवतश्च । मर्म्मभेदिनो मर्म्मस्थानविदारकान् सायकानिषून्, अहितानरींश्च एकक्षणेनैव चिक्षेप निरास । अत्र सायकानामहितानाञ्च प्रकृतानामेव तुल्यधर्म्मयोगादौपम्योपगमात्तुल्ययोगिताभेदः ॥ ८५ ॥

शरेति । शरवर्षी बाणवर्षी नीरवर्षी च । 'शरं नीरे शरो बाणे' इति विश्वः । महानादः सिंहनादो, गर्जितञ्च यस्य स महानादः । स्फुरन्ती कार्मुककेतने धनुर्ध्वजौ यस्य सः, अन्यत्रेन्द्रचापचिह्न इत्यर्थः । नीलच्छविः श्यामकान्तिः । अस्य केशवस्य छलं कपटं यस्य सः नीरदः केशवच्छलनीरदो हरिमेघोऽसौ रेजे । रणरङ्गे सर्वोत्कर्षेण दिदीपे इत्यर्थः । अत्र छलशब्देन हरित्वापह्नवेन मेघत्वारोपणाच्छलादिशब्दैरसत्यत्वप्रतिपादनरूपोऽपह्नवालङ्कारः । त्रिपाद्यन्तर्गतचतुर्थपादाक्षरत्वाद्गूढचतुर्थाख्यश्चित्रविशेषः, शब्दालङ्कारश्चेति सङ्करः ॥ ८६ ॥

न केवलं जनैस्तस्य लघुसन्धायिनो धनुः ।
मण्डलीकृतमेकान्ताद् बलमैक्षि द्विषामपि ॥ ९७ ॥

लोकालोकी कलोऽकल्ककलिलोऽलिकुलालकः ।
कालोऽकलोऽकलिः काले कोलकेलिकिलः किल ॥९८॥

इति द्व्यक्षरः ।

अक्षितारासु विव्याध द्विषतः स तनुत्रिणः ।
दानेषु स्थूललक्ष्यत्वं न हि तस्य शरासने ॥९९॥

युग्मम् ।

नेति । लघु शीघ्रं सन्धत्ते यस्तस्य लघुसन्धायिनस्तस्य हरेः धनुरेव केवलं एकान्तात् मण्डलीकृतं शीघ्राकर्षान्नियमेन वलयीकृतं जनैर्नैक्षि । कर्म्मणि लुङ् । किन्तु द्विषां बलमपि मण्डलीकृतं त्रासादेकत्र पुञ्जीकृतमैक्षि । अत्र धनुर्बलयोः प्रकृतयोरेव तुल्यधर्म्मयोगात् केवलप्रकृतास्पदा तुल्ययोगिता ॥ ९७ ॥

लोकेति । लोकानालोकते इति लोकालोकी त्रैलोक्यदर्शी कलो मधुरभाषी कल्केन पापेन, दम्भेन वा कलिलो न भवतीत्यकल्ककलिलः । 'कल्कः पापाशये पापे दम्भे' इति विश्वः । अलिकुलालकः । अलिकुलनीलमूर्द्धज इत्यर्थः । कालो नीलवर्णः कालात्मको वा नास्ति कला यस्य सोऽकलः । निरंश इत्यर्थः । अकलिरकलहः । स्वयमकलहशील इत्यर्थः । काले प्रलयकाले कोलकेल्या वराहलीलया किलति क्रीड़ति कोलकेलिकिलः, किलशब्दस्तु खल्वर्थे । विव्याधेत्युत्तरेण सम्बन्धः । द्व्यक्षरानुप्रासः ॥ ९८ ॥

अक्षीति । स पूर्वोक्तगुणविशिष्टो हरिः तनुत्राणि एषां सन्तीति तनुत्रिणो वर्म्मिणः । 'तनुत्रं वर्म्म दंशनम्' इत्यमरः । तान् द्विषतः शत्रून् अक्षितारासु नेत्रकनीनिकासु विव्याध प्रजहार । तथाहि, तस्य हरेः दानेषु वितरणेष्वेव स्थूललक्ष्यत्वं विपुलविश्राणत्वम् । 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः । शरासने शरक्षेपे तु न, किन्तु सूक्ष्मलक्ष्यत्वमेव । अतोऽक्षितारावेधित्वमस्य युक्तमित्यर्थः । अतो वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ९९ ॥

वररोऽविवरो वैरिविवारी वारिरारवः ।
विववार वरो वैरं वीरो रविरिवौर्वरः ॥ १००॥

इति द्व्यक्षरः ।

मुक्तानेकशरं प्राणानहरद् भूयसां द्विषाम् ।
तदीयं धनुरन्यस्य न हि सेहे सजीवताम् ॥१०१॥

राजराजीरुरोजाजेरजिरेऽजोऽजरोऽरजाः ।
रेजारिजूरजोर्जार्जी रराजर्जुरजर्जरः ॥ १०२ ॥

इति द्व्यक्षरः ।

वरर इति । वरान् रातीति वररो वरप्रदः । 'रा दाने' 'आतोऽनुपसर्गे कः' । अविवरो निर्विवरो नीरन्ध्रः । वैरिणः शत्रून् विवारयति वैरिविवारी । वारीणि रातीति वारिरः । पूर्ववत् कः । तस्येवारवो यस्य स वारिरारवः । वरः श्रेष्ठो वीरः शूरः स कृष्णः । 'उर्वरा सर्वशस्याढ्यभूमी स्याद्भूमिमात्रके' इत्यमरः । तस्यां भवः और्वरः पृथ्वीभवः रविरिव वैरं वैरिणां वृन्दं विववार विवारयामास, जघानेत्यर्थः । द्व्यक्षरानुप्रासः ॥ १०० ॥

मुक्तेति । मुक्तानेकशरं क्षिप्तबहुबाणं तस्य हरेरिदं तदीयं धनुः भूयसां द्विषां प्राणानहरत् । तथाहि, अन्यस्य परस्य सजीवतां न सेहे, अथवा अन्यस्य धनुषः सजीवतां सज्याकत्वं न सेहे । 'त्रिषु जीवति जीवः स्यान्मौर्व्यां स्त्री' इति वैजयन्ती । वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ १०१ ॥

राजेति । न जायते इत्यजोऽनादिः । 'अन्येष्वपि दृश्यते' इति जनेर्डप्रत्ययः । न जीर्यते इत्यजरोऽनन्तः । पचाद्यच् । नास्ति रजो यस्येत्यरजा रजोगुणरहितः । रेजन्तीति रेजास्तेजिष्ठाः । 'रेजृ दीप्तौ' पचाद्यच् । ते च ते अरयश्च तेषां जूरो हिंसनं तेन जातं रेजारिजूरजम् । तदूर्जं बलं अर्जयतीति रेजारिजूरजोर्जार्जी । अर्जेर्णिनिः । ऋजुरार्जववान् जर्जरो न भवतीत्यजर्जरो दृढः स हरिः आजेरजिरे रणाङ्गणे राजराजी राजश्रेणीः रुरोज बभञ्ज । 'रुजो भङ्गे' लिट् । अतएव रराज दिदीपे । द्व्यक्षरानुप्रासः ॥१०२॥

उद्धतान् द्विषतस्तस्य निघ्नतो द्वितयं ययुः ।
पानार्थे रुधिरं धातौ रक्षार्थे भुवनं शराः ॥ १०३॥
क्रूरारिकारी कोरेककारकः कारिकाकरः ।
कोरकाकारकरकः करीरः कर्करोऽर्करुक् ॥१०४॥

इति द्व्यक्षरः ।

विधातुमवतीर्णोऽपि लघिमानमसौ भुवः ।
अनेकमरिसङ्घातमकरोद् भूमिवर्द्धनम् ॥१०५॥

उद्धतानिति । उद्धतान् दृप्तान् द्विषतः शत्रून् निघ्नतो हिंसतः । 'जासिनिप्रहणन'—इति सूत्रे निप्रेतिसङ्घातविपर्यस्तव्यस्तग्रहणोपदेशान्निहन्तेरशेषकर्म्मणि द्वितीयैव । तस्य हरेः शराः । पानार्थे धातौ 'पा पाने' इति धातौ सति रुधिरं रक्षार्थे धातौ 'पा रक्षणे' इति भुवनं जगच्चेति द्वितयं ययुः । रुधिरमपिबन् भुवनमरक्षंश्चेति श्लेषार्थः । अत्र पानयोरभेदाध्यवसायेन रुधिरभुवनयोस्तुल्ययोगितालङ्कारः । तत्र पानार्थ इत्यादिवास्य शब्दवधेन भुवनमरक्षन्निति सूक्ष्मार्थगर्भत्वात् सौक्ष्म्यं नाम गुणः । 'अतः सङ्क्षेपरूपत्वं शब्दानां सौक्ष्म्यमुच्यते' इति लक्षणात् ॥ १०३ ॥

अथ युग्मेनाह—क्रूरेति । क्रूरानरीन् किरति विक्षिपति इति क्रूरारिकारी । किरतेर्णिनिप्रत्ययः । कोर्भूमेरेककारकः एककर्त्ता । करोतेर्ण्वुल् । कारिका यातनाः करोति दुष्टानामिति कारिकाकरः । 'कारिका यातनावृत्त्योः' इत्यमरः । 'कृञो हेतु—' इत्यादिना ताच्छील्ये टप्रत्ययः । कारिकाः क्रियाः । धात्वर्थनिर्देशे ण्वुल् । तत्कर इति केचित् । कोरकाकारौ करौ यस्य स कोरकाकारकरकः, कमलमुकुलरमणीयपाणिरित्यर्थः । शेषिकः कप्प्रत्ययः । करिणो गजान् ईरयति क्षिपतीति करीरः । कर्म्मण्यण् । कर्करो रणकर्कश इत्यर्थः । 'कर्करो दर्पणे दृढे' इति शाश्वतः । अर्कस्येव रुग्यस्य सोऽर्करुगित्युपमा । द्व्यक्षरानुप्रासः ॥ १०४ ॥

विधातुमिति । भुवो भूमेर्लघिमानं लघुत्वं भारावतरणं विधातुमवतीर्णोऽपि भुवि जातोऽप्यसौ पूर्वोक्तगुणो भगवान् हरिः अनेकं बहुमरिसङ्घातं

दारी दरदरिद्रोऽरिदारुदारोऽद्रिदूररद: ।
दूरादरौद्रोऽददरद्रोदोरुद्दारुरादरी ॥ १०६ ॥
इति द्व्यक्षर: ।

एकेषुणा सङ्ख्यातिथान् द्विषो भिन्दन् द्रुमानिव ।
स जन्मान्तररामस्य चक्रे सदृशमात्मन: ॥ १०७ ॥

शूर: शौरिरशिशिरैराशाशैराशु राशिश: ।
शरारु: श्रीशरीरेश: शुशुरेऽरिशिर: शरै: ॥ १०८ ॥
इति द्व्यक्षर: ।

भूमिवर्धनं भूभारमकरोदिति विरोध: मृतमकरोदित्यविरोध: । अत एव विरोधाभासोऽलङ्कार: ॥ १०५ ॥

दारीति । दारी बहुदारवान् । भूमार्थे मत्वर्थीय: । दरेण भयेन दरिद्रो निर्भीक: । 'दरोऽस्त्रियां भये श्वभ्रे' इत्यमर: । उदारो महान्, दाता वा । 'उदारो दातृमहतो:' इत्यमर: । अद्रिवत् दु:खेन रद्यते दूररदो दुर्भेदोऽद्रिदूररद: । 'रद विलेखने' खल् प्रत्यय: । अरौद्र: साधूनां सौम्य: रोदसीं रुणद्धीति रोदोरुत् विश्वव्यापी । रुधे: क्विप् । ददातीति दारुर्दाता, ददातेरौणादिको रुप्रत्यय: । आदरोऽस्यास्तीत्यादरी सन्मार्गादरवान् स हरि: अरिरेव दारु काष्ठमरिदारु दूरादेव अददरत् दारयति स्म । दारयतेर्णौ चङि 'अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्' इत्यभ्यासस्यात्वम् । अरिदार्वीति रूपकमर्थालङ्कारो द्व्यक्षरानुप्रासश्च ॥ १०६ ॥

एकेषुणेति । स हरिरेकेषुणा एकेनैव शरेण सङ्ख्यानां पूरणान् सङ्ख्यातिथान्, सङ्ख्यश: स्थितानित्यर्थ: । 'बहुपूगगणसङ्घस्य तिथुक्' इति तिथुगागमादेव ज्ञापकादसङ्ख्यात्वेऽपि सङ्ख्याड्डट्प्रत्यय: । द्विष: शत्रून् द्रुमानिवेत्युपमा । भिन्दन् विदारयन् । जन्मान्तरे रामस्य दाशरथेरात्मन: सदृशं चक्रे एकशरेणानेकारिद्रुमभेदस्तु जन्मान्तरभावनया जात इति भाव: । 'बिभेद च पुनस्तालान् सप्तैकेन महेषुणा' इति रामायणे ॥ १०७ ॥

शूर इति । शृणातीति शरारु: दुष्टघातुक: । 'शरारुर्घातुको हिंस्र:' इत्यमर: । 'शॄवन्द्योरारु:' इत्यारुप्रत्यय: । श्रीशरीरस्येश: श्रीशरीरेश: लक्ष्मी-

व्यक्तासीदरितारीणां यत्तदीयास्तदा मुहुः ।
मनोहृतोऽपि हृदये लेगुरेषां न पत्रिणः ॥ १०९ ॥
नामाक्षराणां मलना मा भूद्भर्तुरतः स्फुटम् ।
अग्लहत पराङ्गानामसूनस्रं न मार्गणाः ॥११०॥

इत्यतालव्यः ।

आच्छिद्य योधसार्थस्य प्राणसर्वस्वमाशुगाः ।
ऐकागारिकवद्भूमौ दूराज्जग्मुरदर्शनम् ॥ १११ ॥

प्राणनाथः शूरो वीरः शौरिः कृष्णः अशिशिरैस्तीक्ष्णैः आशा दिशोऽश्नुवत इत्याशाशैर्दिगन्तव्यापकैः । अश्नोतेः कर्मण्यण् । शरैर्बाणैः अरिशिरः शत्रुशिरांसि । जातावेकवचनम् । राशिशः सङ्घशः आशु शीघ्रं शुशूरे जघान । 'शूर हिंसास्तम्भनयोः' इति धातोर्लिट् । द्व्यक्षरानुप्रासः ॥१०८॥

व्यक्तेति । तदा तस्मिन् समये एषां अरीणामरिता शत्रुता मुहुर्व्यक्ता आसीत् । यद्यस्मात्तस्य हरेरिमे तदीयाः पत्रिणो बाणाः मनो हरन्ति कायादुद्धरन्ति इति मनोहृतः, मारका इत्यर्थः । हरतेः क्विप् । मनोज्ञाः प्रतीयन्ते । अत एव मनोहृतोऽपि हृदये मनसि न लेगुर्न लग्ना इति विरोधः । वक्षो निर्भिद्य निर्जग्मुरित्यर्थः । 'हृदयं वक्षसि स्वान्ते' इति विश्वः । विरोधाभासोऽलङ्कारः ॥ १०९ ॥

नामेति । भर्तुः स्वामिनो नामाक्षराणां फलेषु लिखितानां मलना मालिन्यं तिरोधानं मा भूदिति बुद्ध्येत्यर्थः । अतः मार्गणाः हरिशराः पराङ्गानां अरिशरीराणामसून् प्राणान् अग्लहत । ग्रहेर्लङ् । न अस्रं रक्तम् । रक्ता-विलेपस्य आशुभावनिमित्तस्य स्वामिनामाक्षरमालिन्यपरिहारार्थत्वमुत्प्रेक्ष्यते स्फुटमिति । अत्र तालव्यवर्णाभावादतालव्य इति चित्रभेदः । इचुयशानां तालुरिति इवर्णस्यापि तालुत्वेऽपि व्यञ्जनापेक्ष एवायं नियम इति न दोषः ॥ ११० ॥

आच्छिद्येति । आशुगा बाणाः योधसार्थस्य वीरवर्गस्य प्राणसर्वस्वं आच्छिद्य ऐकागारिकाश्चौराः । 'चौरैकागारिकस्तेनः' इत्यमरः । 'ऐका-

भीमास्त्रराजिनस्तस्य बलस्य ध्वजराजिनः ।
कृतघोराजिनश्चक्रे भुवः सरुधिरा जिनः ॥११२॥
मांसव्यधोचितमुखैः शून्यतां दधदक्रियम् ।
शकुन्तिभिः शत्रुबलं व्यापि तस्येषुभिर्नभः ॥११३॥
दाददो दुद्ददुद्दादी दादादो दूददीददोः ।
दुद्दादं दददे दुद्दे ददाददददोऽददः ॥ ११४ ॥

इत्येकाक्षरः ।

गारिकः चौरे' इत्यर्थे निपात्यते इत्येके। इकट्प्रत्यये वृद्धिश्च निपात्यते इत्यपरे। तैस्तुल्यमैकागारिकवत्। तुल्यार्थे वतिः। दूराद्भुमावदर्शनमदृश्यतां जग्मुः ॥ १११ ॥

भीमेति। जिनो हरिः अवतारान्तरनाम्ना व्यपदेशः। भीमा अस्त्रराजयो यस्य तस्य भीमास्त्रराजिनः। 'इकोऽचि विभक्तौ' इति नुमागमः। ध्वजे राजते यस्तस्य ध्वजराजिनः। ताच्छील्ये णिनिः। कृता घोरा आजिर्युद्धं येन तस्य कृतघोराजिनः। पूर्व्ववन्नुमागमः। तस्य बलस्य सैन्यस्य सम्बन्धिनोर्भुवस्तद्रणभूमोः सरुधिराः सास्राश्चक्रे। चतुष्पादयमकम् ॥११२॥

मांसेति। मांसव्यधो मांसखण्डनम्। 'व्यधजपोरनुपसर्गे' इत्यप्प्रत्ययः। तत्रोचितानि परिचितानि मुखानि चञ्चवः शल्यानि च येषां तैः शकुन्तिभिः कर्तृभिः शून्यतामचेतनत्वं, अन्यत्र तुच्छत्वममूर्तत्वं वा दधत् अतएव अक्रियमस्पन्दं शत्रुबलं व्यापि व्याप्तम्। आप्नोतेः कर्म्मणि लुङ्। तस्य हरेरिषुभिः नभो व्यापि। अत्रेषुपक्षिणां नभोबलयोर्व्याप्तितुल्यधर्म्मयोर्गत्वात्तुल्ययोगिताभेदः ॥ ११३ ॥

दाददेति। दद्यते इति दादः दानम्। 'दद दाने' इति कर्म्मणि घञ्। दादं ददातीति दाददो दानप्रदः। 'आतोऽनुपसर्गे कः'। दुद्ददुद्दादी दुत् उपतापः 'टुदु उपतापे' क्विप्। तद्दुतमुपतापं ददति साधूनामिति दुद्दाः खलाः। पूर्व्ववत् कः। तेषां दुतमुपतापं ददत इति दुद्ददुद्दादी। 'दद दाने इति धातोर्णिनिः। दादादः। दाः शुद्धिः। 'दैप् शोधने' क्विप्। तां ददत इति दादादः। 'दद दाने' कर्म्मण्यण्। दूददीददोः। दूः परितापः। 'दूञ

प्लुतेभकुम्भोरसिजैर्हृदयक्षतिजन्मभिः ।
प्रावर्त्तयन्नदीरस्रैर्द्विषां तद्योषिताश्च सः ॥ ११५॥
सदामदबलप्रायः समुद्धृतरसो बभौ ।
प्रतीतविक्रमः श्रीमान् हरिर्हरिरिवापरः ॥११६॥
इति अर्थत्रयवाची ।

परितापे' क्विप् । तां तदातीति दूदा दुष्टाः । दीः क्षयः । 'दीङ् क्षये' क्विप् । तां दत्त इति दीदौ नाशदौ । उभयत्रातोऽनुपसर्गे कः । दूदानां दीदौ दुष्टमर्दकौ दोषौ भुजौ यस्य सः दूददीददोः, दुष्टभञ्जकभुज इत्यर्थः । ददाददददः । ददन्ते इति ददाः दातारः न ददन्ते इति अददा अदातारः तेषां द्वयानामपि ददो दाता ददाददददः । सर्व्वत्र 'दद दाने' पचाद्यच् । अदन्तीत्यदा बकासुरपूतनाप्रभृतयः । अदः पचाद्यच् । तान् द्यति खण्डयति इति अददः । 'दोऽवखण्डने' 'आतोऽनुपसर्गे कः' एवम्भूतो हरिः । दुतं ददातीति दुद्दः दुःखदः तस्मिन् दुद्दे शत्रौ । दुतं ददत इति दुद्दादं शस्त्रम् । 'दद दाने' कर्म्मण्यण् । ददद् ददौ, प्रयुक्तवानित्यर्थः । 'दद दाने' कर्त्तरि लिट् । एकाक्षरानुप्रासोऽलङ्कारः ॥ ११४ ॥

प्लुतेति । स हरिः प्लुताः उच्छिताः इभकुम्भाः उरसि जाता उरसिजा इव कुम्भा इवोरसिजाश्च यैस्तैः हृदयक्षतिभिर्वक्षःप्रहारैः मनोभङ्गैश्च विषादापादकैः जन्म येषां तैः । 'हृदयं वक्षसि स्वान्ते' इति विश्वः । द्विषां तद्योषितां च अस्रैः शोणितैरश्रुभिश्च । 'अस्रमश्रुणि शोणिते' इति विश्वः । नदीः प्रावर्त्तयत् प्रावाहयत्, अरिवधेन तन्नारीररोदयदित्यर्थः । अत्र द्वयानामप्यन्नाणां प्रकृतत्वात् प्रकृतश्लेषः । तैरस्रैर्द्विषां तद्योषितां यथासंख्यसम्बन्धात् यथासंख्यालङ्कारः । तदुपजीवनेन द्विषां तद्योषितां चास्रैः शोणितैः श्लेषमूलाभेदातिशयोक्तिमहिम्ना अस्रकृपतुल्यधर्म्मयोगित्वात् तुल्ययोगितेत्यङ्गाङ्गिभावेनैषां सङ्करः ॥ ११५ ॥

सदेति । सदा मदो यस्य स सदामदः नित्यमत्तस्तं बलं बलभद्रं प्रीणातीति सदामदबलप्रायः । परत्वात् कर्म्मण्यण्प्रत्ययः । समुद्धृता रसा भूर्येन स समुद्धृतरसः, प्रतीताः प्रसिद्धा विक्रमाः पादन्यासा यस्य सः,

द्विधा त्रिधा चतुर्द्धा च तमेकमपि शत्रवः ।
पश्यन्तः स्पर्द्धया सद्यः स्वयं पञ्चत्वमाययुः ॥११७॥

त्रिविक्रम इत्यर्थः । श्रीमान् रमापतिः हरिः कृष्णोऽपरोऽन्यो हरिरिन्द्र इव बभौ सोऽपि सतामामदो दुःखदो यो बलासुरस्तस्य प्रायो नाशस्तं करोतीति सदामदबलप्रायः । 'तत् करोति'—इति ण्यन्तात् पचाद्यच् । समुद्धृतरसः अमृतपानेन सम्यगपहृतविषः 'शृङ्गारादौ विषे वीर्ये द्रवे रागे गुणे रसः' इत्यमरः । प्रतीतविक्रमः प्रसिद्धपराक्रमः श्रीमान् स्वाराज्यलक्ष्मीयुक्तः । तथा परोऽन्यो हरिः सूर्य्य इव बभौ । सोऽपि आमं रोगं द्यति खण्डयतीत्यामदः । बलं पृणातीति बलप्रः । मूलविभुजादित्वात् कः । सतां भक्तानामामदो बलप्रश्च अय उदयो यस्य स सदामदबलप्रायः । स्वोदयेन सतामारोग्यबलकारीत्यर्थः । 'उद्यन्नद्य'—इत्यादि श्रुतेरिति भावः । समुद्धृतरसः, घर्म्मकालसंशोषितसलिलः । प्रतीतविक्रमः प्रसिद्धखगगतिः । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः । तदेवमुपमानयोरुपमेये चार्थत्रयवचनादर्थत्रयवाच्येष चित्रभेदः । एतावदेव कवेर्विवक्षितमतोऽन्यत् सुवाच्यं चोपेक्ष्यमेव । अत्रापरो हरिरिवेत्यपरशब्दप्रयोगादुत्प्रेक्षेयं नोपमा । अपरस्येन्द्रस्यार्कस्य वाऽप्रसिद्धेः प्रसिद्धसादृश्यवर्णनमुपमा । प्रसिद्धताद्रूप्यारोपे रूपकम् । प्रसिद्धताद्रूप्यभावनमुत्प्रेक्षा । अतएव लक्षयन्ति । अप्रकृतगुणक्रियाभिसन्धानादप्रकृतत्वेन प्रकृतसम्भावनमुत्प्रेक्षेति । तस्मादपरशब्देन प्रकृतस्याप्रकृतत्वाध्यवसायप्रतीतेरिवशब्देन तस्य साध्यत्वप्रतीतेरुत्प्रेक्षैवेति सर्वस्वकारः । तस्मादिवशब्दमात्रप्रयोग एवोपमा । अपरशब्दमात्रप्रयोगेऽतिशयोक्तिः । उभयोः प्रयोगे तूत्प्रेक्षैवेति विवेकः । अत एवात्रानेकार्थवर्णनव्यवसायिभिरपरशब्दस्यान्यार्थताव्यतिरेकेणार्थान्तरकल्पनापि नालङ्कारिकाणां पन्थाः श्लेषस्त्वोत्प्रेक्षाबीजभूतसाधर्म्यनिर्वाहमात्रोपक्षीणतया तदङ्गमिति सङ्कर इत्यलमतिप्रसक्त्या ॥११६॥

द्विधेति । शत्रवः एकमपि तं हरिं द्विधा द्वित्वेन त्रिधा त्रित्वेन चतुर्धा चतुष्ट्वेन पश्यन्तः, भयात्तथा भ्राम्यन्त इत्यर्थः । स्पर्धया मत्सरेण सद्यः स्वयं पञ्चत्वं पञ्चधाभावं मरणं चाययुः । मत्सरिणस्तदधिकमाचरन्तीति भावः ।

सदैव सम्पन्नवपू रणेषु
स दैवसम्पन्नवपूरणेषु ।
महो दधे स्तारि महानितान्तं
महोदधेऽस्तारिमहा नितान्तम् ॥ ११८ ॥

इति समुद्गः ।

इष्टं कृत्वार्थं पत्त्रिण: शार्ङ्गपाणे-
रैत्याधोमुख्यं प्राविशन् भूमिमाशु ।
शुद्ध्या युक्तानां वैरिवर्गस्य मध्ये
भर्त्रा क्षिप्तानामेतदेवानुरूपम् ॥ ११९ ॥

'स्यात् पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः । अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम्' । इत्यमरः । पाञ्चभौतिकस्य शरीरस्य पञ्चधाभावः पञ्चता । अत्र स्पर्धेति हेतोरुत्प्रेक्षणाद्धेतूत्प्रेक्षा । सा च व्यञ्जकाप्रयोगाद्गम्या स्पर्धयेवेत्यर्थः ॥ ११७ ॥

सदेति । सदैव सर्व्वदैव सम्पन्नं सर्व्वलक्षणसमग्रं वपुर्यस्य स सम्पन्नवपुर्नित्यपरिपूर्णमूर्त्तिः । संहितायां 'ढ्रलोपे पूर्व्वस्य दीर्घोऽणः' । अस्तं निरस्तमरीणां महस्तेजो येनासौ अस्तारिमहाः महानधिकः स हरिः दैवसम्पत् भाग्यसम्पत्तिः सैव नवं पूरणं प्रत्ययसाधनं येषां तेषु दैवसम्पन्नवपूरणेषु दैवसहायेषु रणेषु महोदधेर्म्महार्णवस्य इतान्तं प्राप्तपारं समुद्रपारगामि नितान्तं स्तारि विस्तीर्णं महस्तेजो दधे धारयामास । अर्द्धाभ्यासलक्षणसमुद्गयमकभेदः । 'अर्द्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः' इत्युक्तं दण्डिना । उपेन्द्रवज्रा वृत्तम् ॥ ११८ ॥

इष्टमिति । शार्ङ्गं पाणौ यस्य शार्ङ्गपाणिः कृष्णस्य । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत' इति पाणेः परनिपातः । पत्त्रिणो बाणाः इष्टमर्थं शत्रुवधात्मकं कृत्वा आधोमुख्यमधोमुखत्वमेत्य प्राप्य आशु भूमिमाविशन् शुद्ध्या लोहशुद्ध्या पवित्रतया च युक्तानां तथापि भर्त्रा स्वामिना वैरिवर्गस्य मध्ये क्षिप्तानां पातितानाम् एतदेव आधोमुख्येन क्वचिन्निलयनमेवानुरूपमुचितम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । जागतं वैश्वदेवीवृत्तम् । 'पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ' इति लक्षणात् ॥११९॥

सत्वं मानविशिष्टमाजिरभसादालम्ब्य भव्यः पुरो
लब्धाघच्चयशुद्धिरुद्धुरतरश्रीवत्सभूमिर्मुदा ।
मुक्त्वा काममपास्तभीः परमृगव्याधः स नादं हरे-
रेकौघैः समकालमभ्रमुदयी रोपैस्तदा तस्तरे ॥ १२० ॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
एकोनविंशतितमः सर्गः ॥ १९ ॥

सत्त्वमिति । भव्यः कल्याणमूर्तिः लब्धोऽघच्चयः शुद्धिश्च येन स लब्धाघच्चयशुद्धिः श्रीवत्सस्य लाञ्छनविशेषस्य भूमिर्व्वक्षः सा उद्धुरतरा उन्नततरा यस्य स उद्धुरतरश्रीवत्सभूमिः काममपास्तभीः निर्भीकः परे शत्रवस्त एव मृगास्तेषां व्याधः मृगयुरित्यश्लिष्टरूपकम् । 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि च' इत्यमरः । उदयी नित्याभ्युदयवान् । नित्ययोगे मत्वर्थीयः । स हरिः पुरः पूर्व्वं आजिरभसाद्रणरागात् मानविशिष्टमहङ्कारोद्धुरं सत्त्वं बलमालम्ब्याश्रित्य मुदा उत्साहेन हरेः सिंहस्य नादं मुक्त्वा, सिंहनादं कृत्वेत्यर्थः । समकालमेककालम् । अत्यन्तसंयोगे द्वितीया । एक ओघो येषां तैरेकौघैः एकप्रहारै रोपैरिषुभिरभ्रमाकाशं तदा तस्मिन् काले आतस्तरे आच्छादयामास । 'ऋच्छत्यताम्' इति गुणः । चक्रबन्धाख्यश्चित्रविशेषोऽलङ्कारः पूर्व्वोक्तरूपकेण संसृज्यते । चक्रबन्धोद्धारस्तु—दशमण्डलरेखात्मके नवमण्डलान्तरालवति चक्रे नाभिस्थानेन सहैकोनविंशतिकोष्ठं प्रत्येकं द्वयन्तगतं पङ्क्तित्रयं समरेखया लिखित्वा तत्रैकस्यां पङ्क्तौ वामपार्श्वप्रक्रमेण आद्यपादमालिख्य तथा प्रादक्षिण्येन द्वितीयतृतीययोर्द्वितीयतृतीयौ लिखित्वा नेमिस्थाने बाह्यवलये साक्षरकोष्ठषट्केन सहाष्टादशकोष्ठवति तृतीयपादान्तकोष्ठवर्तिवर्णमारभ्य प्रादक्षिण्येन चतुर्थपादं लिखित्वा तत्रैव समापयेत् । तत्र तत्राद्यन्तवर्णैः सह चतुर्थपादोद्धारः तत्र नाभिस्थाने आद्यपादत्रयदशमाक्षरसंवादः । तृतीयान्तकोष्ठे चतुर्थाद्यन्तवर्णयोः संवादः तृतीयवलये 'माघकाव्यमिदं' षष्ठे 'शिशुपालवधः' इति कविकाव्यनामोद्धारः । शार्दूलविक्रीडितं वृत्तम् ॥ १२० ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपालवधमहाकाव्यव्याख्याने सर्वङ्कषाख्ये एकोनविंशः सर्गः ॥ १९ ॥

# विंशः सर्गः ।

मुखमुल्लसितत्रिरेखमुच्चैर्भिदुरभ्रूयुगभीषणं दधानः ।
समिताविति विक्रमानमृष्यन् गतभीराह्वत चेदिराट् मुरारिम् ॥१
शितचक्रनिपातसम्प्रतीच्छं वहतः स्कन्धगतञ्च तस्य मृत्युम् ।
अभिशौरि रथोऽथ नोदिताश्वः प्रययौ सारथिरूपया नियत्या ॥२

अथ हरिशिशुपालयोर्युद्धं वर्णयितुमुपोद्घातं करोति—मुखमिति । इतीत्थं समितावाजौ । 'समित्याजिसमिद्युधः' इत्यमरः । विक्रमान् मुरारेः पराक्रमान् अमृष्यन्नसहमानः अतएव तिस्रो रेखास्त्रिरेखाः । 'दिक्संख्ये संज्ञायाम्' इति समासः । ता उल्लसिताः क्रोधादुद्भूता यस्मिंस्तदुल्लसितत्रिरेखम् । क्वचित् 'त्रिलोकम्' इत्यपि पाठः । तथा भिदुरेण ग्रन्थिलेन भ्रूयुगेन भीषणं भयङ्करं उच्चैरुन्नतं मुखं दधानः चेदिषु राजते चेदिराट् । सत्सूद्विषेति क्विप् । यद्वा चेदीनां राट् चेदिराट् । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । 'राजा राट् पार्थिवः क्ष्माभृत्' इत्यमरः । गतभीर्निर्भीकः सन् मुरारिं हरिं आह्वत । अयमहं क्वासि मामभ्युपेहि इति स्पर्धया अमर्षादाकारयामासेत्यर्थः । विनाशकाले विपरीतबुद्धेर्दुर्वारत्वादिति भावः । 'स्पर्धायामाङः' इति ह्वयतेर्लुङि तङ् 'आत्मनेपदेष्वन्यतरस्याम्' इति च्लेरङादेशः । अत्रामर्षस्य विशेषणगत्या आह्वानहेतुत्वात् काव्यलिङ्गम् । सर्गेऽस्मिन्नौपच्छन्दसिकं वृत्तम् । वैतालीये गुर्वाधिक्यात् । तदुक्तं, वैतालीये द्विः स्वरा अयुक्पादे युग्वसवोऽन्ते ग औपच्छन्दसिकमिति ॥ १ ॥

शितेति । अथ आह्वानानन्तरं शितचक्रनिपातं शितसुदर्शनप्रहारं सम्प्रतीच्छत इति शितचक्रनिपातसम्प्रतीच्छम् । ईप्सतः कर्मण्यण् । स्कन्धगतं मृत्युं वहतः तस्य चैद्यस्य रथः सारथिरूपया नियत्या विधिनेति रूपकम् । 'भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । नोदिताश्वः प्रेरिताश्वः सन् अभिशौरि

अभिचैद्यमगाद्रथोऽपि शौरेरवनिं जागुड़कुङ्कुमाभिताम्रैः ।
गुरुनेमिनिपीड़नावदीर्णव्यसुदेहस्रुतशोणितैर्विलिम्पन् ॥ ३ ॥
स निरायतकेतनांशुकान्तः कलनिक्वाणकरालकिङ्किणीकः ।
विरराज रिपुक्षयप्रतिज्ञामुखरो मुक्तशिखः स्वयं नु मृत्युः ॥४॥
सजलाम्बुधरारवानुकारी ध्वनिरापूरितदिङ्मुखो रथस्य ।
प्रगुणीकृतकेकमूर्द्धकण्ठैः शितिकण्ठैरुपकर्णयाम्बभूवे ॥ ५ ॥

शौरिमभि । आभिमुख्येऽव्ययीभावः । 'अव्ययादाप्सुपः' इति सुपो लुक् । प्रययौ प्रतस्थे ॥ २ ॥

अभीति । अथ शौरेः कृष्णस्य रथोऽपि जागुड़ो देशविशेषः तत्र यत् कुङ्कुमं तद्वदभिताम्रैररुणैरिति उपमा । यावकेति पाठे यावकश्च कुङ्कुमं च ताभ्यामभिताम्रैरित्यर्थः । गुरूणां नेमीनां चक्रधाराणां निपीड़नेन नोदनेनावदीर्णेभ्यो व्यसूनां विगतप्राणानां देहेभ्यः स्रुतैः शोणितैरसृग्भिरवनिं विलिम्पन्नुपदिह्यानः सन् अभिचैद्यं चैद्यमभि । समासो व्यासो वा विकल्पात् अगात् । 'इणो गा लुङि' इति गादेशः ॥ ३ ॥

स इति । निरायतोऽनिदीर्घः केतनांशुकान्तः ध्वजपटाञ्चलो यस्य सः कलनिक्वाणैः मधुरस्वरैः करालाः कुशलाः प्रगल्भाः किङ्किण्यः क्षुद्रघण्टिका यस्य सः तथोक्तः । 'नद्यृतश्च' इति कप् । 'किङ्किणी क्षुद्रघण्टिका' इत्यमरः । स कृष्णस्य रथः रिपुक्षयस्य शिशुपालवधस्य प्रतिज्ञया मुखरो वाचालः अतएव मुक्तशिखो मुक्तकेशः विरराज । नाहमेनमहत्वा शिखाबन्धं करिष्यामीत्युद्घोषयन्नित्यर्थः । स्वयं साक्षान्नु मृत्युरन्तकः किमित्युत्प्रेक्षा ॥ ४ ॥

सजलेति । सजलो योऽम्बुधरः तस्यारवं गर्जितमनुकरोतीति तथोक्तः । तद्वद्गम्भीर इत्यर्थः । उपमालङ्कारः । आपूरितदिङ्मुखो व्याप्तदिगन्तो रथस्य कृष्णरथस्य ध्वनिः । ऊर्द्धाः कण्ठा येषां तैरूर्द्धकण्ठैः । आकस्मिकघनरवलोभाद्विस्मयहर्षोन्नमितकन्धरैरित्यर्थः । शितिकण्ठैर्नीलकण्ठैः प्रगुणीकृता अतितारीकृताः केका यस्मिन् कर्म्मणि तद्यथा तथा । 'केका वाणी मयूरस्य' इत्यमरः । उपकर्णयाम्बभूवे, मेघारवभ्रान्त्या दत्तकर्णैरित्यर्थः । एतेन भ्रान्तिमदलङ्कारो व्यज्यत इति वस्तुनालङ्कारध्वनिः ॥ ५ ॥

अभिवीक्ष्य विदर्भराजपुत्रीकुचकाश्मीरजचिह्नमच्युतोरः ।
चिरसेवितयापि चेदिराजः सहसावाप रुषा तदैव योगम् ॥६॥
जनिताशनिशब्दशङ्कमुच्चैर्धनुरास्फालितमध्वनन्नृपेण ।
चपलानिलचोद्यमानकल्पक्षयकालाग्निशिखानिभस्फुरज्ज्यम् ॥७॥
समकालमिवाभिलक्षणीयग्रहसन्धानविकर्षणापवर्गैः ।
अथ साभिसरं शरैस्तरस्वी स तिरस्कर्तुमुपेन्द्रमभ्यवर्षत् ॥८॥

अभीति। चेदिराजः शिशुपालः। 'राजाहःसखिभ्यष्टच्'। विदर्भराजपुत्र्या रुक्मिण्याः कुचयोर्यत् काश्मीरजं कुङ्कुमं तच्चिह्नं यस्य तत् अच्युतोरः कृष्णवक्षः अभिवीक्ष्य चिरसेवितया चिरोपयुजापि, रुक्मिणीहरणात् प्रभृति सम्भृतयापीत्यर्थः। रुषा रोषेण तदैव तदानीमिवेत्युत्प्रेक्षा। सहसा योगं सम्बन्धमवाप। यथा कामी कान्यन्तरभोगचिह्नदर्शनोद्दीप्तः कान्तया संयुज्यते तद्वदित्यर्थः। परमार्थस्वरूप एव कोपो वैदर्भीकुचकुङ्कुमदर्शनादुद्दीपित इत्यर्थः। अत्र प्रकृतरुड्विशेषणसाम्यादप्रकृतकान्ताप्रतीतेः समासोक्तिः, उक्तोत्प्रेक्षा त्वङ्गमस्याः ॥ ६ ॥

जनितेति। नृपेण चेदिपेन आस्फालितं सङ्घट्टितं अतएव चपलानिलेन तीव्रानिलेन चोद्यमानस्य सम्वर्ध्यमानस्य कल्पक्षयकालाग्नेर्या शिखा ज्वाला तया समाना तन्निभा। इति नित्यसमासः। सा स्फुरन्ती दोधूयमाना ज्या मौर्वी यस्य तत्तथोक्तं धनुः जनिता उत्पादिता अशनिशब्दशङ्का यस्मिन् कर्म्मणि तत्तथोक्तं उच्चैस्तारमध्वनत्। अत्राग्निशिखानिभेत्युपमाया अशनिशब्दशङ्केति भ्रान्तिमतः आस्फालितमध्वनदिति पदार्थहेतुककाव्यलिङ्गस्य च सापेक्षत्वात् सङ्करः ॥ ७ ॥

समेति। अथ धनुरास्फालनानन्तरं तरस्वी बलवान् स चैद्यः समकालमिवेत्युत्प्रेक्षा। अत्यन्तसंयोगे द्वितीया। अभिलक्षणीया दृश्या ग्रहो ग्रहणं सन्धानं मौर्व्या जोजनं विकर्षणमाकर्षणमपवर्गो मोक्षश्च येषां तैः शरैः साभिसरं सानुचरमुपेन्द्रं हरं तिरस्कर्तुमाच्छादयितुमभ्यवर्षत् ॥ ८ ॥

ऋजुताफलशुद्धियोगभाजां गुरुपक्षाश्रयिणां शिलीमुखानाम् ।
गुणिना नतिमागतेन सन्धिः सह चापेन समञ्जसो बभूव ॥९॥
अविषह्यतमे कृताधिकारं वशिना कर्म्मणि चेदिपार्थिवेन ।
असरद्धनुरुच्चकैर्दृढार्त्तिप्रसभाकर्षणवेपमानजीवम् ॥ १० ॥
अनुसन्ततिपातिनः पटुत्वं दधतः शुद्धिभृतो गृहीतपक्षाः ।
वदनादिव वादिनोऽथ शब्दाः क्षितिभर्त्तुर्धनुषः शराः प्रसस्रुः ११

ऋजुतेति । ऋजुता अवक्रत्वं, अकुटिलबुद्धित्वञ्च फलं शल्यं, श्रेयश्च तेन योगः शुद्धिर्लौहशुद्धिर्निर्विषत्वञ्च, अन्यच्च बाह्याभ्यन्तरशुद्धिस्तां भजन्तीति तद्भाजां गुरोर्म्महतः पक्षस्य कङ्कादिपक्षस्य सहायस्य चाश्रयः आश्रयणमेषामस्तीति गुरुपक्षाश्रयिणां शिलीमुखानां शराणाम् । गुणिना ज्यावता नतिमागतेन आकर्षणाकुञ्चितकोटित्वं, विधेयत्वञ्च प्राप्तेन चापेन सह सन्धिः सम्बन्धः समञ्जसः साधीयान् बभूव । अबलवतां बलिनानम्रेण सन्धिरेवोचित इति भावः । अत्र प्रस्तुतचापशिलीमुखयोर्विशेषणसाम्यादप्रस्तुतारिविजिगीषुवस्तुप्रतीतिः समासोक्तिः । तच्च साम्यं वाच्यप्रतीयमानयोरभेदाध्यवसायात् सिद्धम् । न चात्र समानालङ्कारशङ्का कार्य्या । 'समानालङ्कृतिर्योगे वस्तुनोरनुरूपयोः' इत्यनुरूपयोरेव वस्तुनोर्योगेन तस्योपस्थापनादित्यनुसन्धेयम् । जिगीषुगुणयोगिनोरिह भेदात् ॥ ९ ॥

अविषह्येति । वशिना स्वतन्त्रेण चेदिपार्थिवेन अविषह्यतमे दुष्करे कर्म्मण्यरिजयव्यापारे कृताधिकारं कृतनियोगं, नियुज्यमानमित्यर्थः । अत एव दृढयोरत्योः कोट्योः प्रसभाकर्षणेन वेपमाना दोधूयमाना जीवा ज्या यस्य तत्, अन्यच्च दृढया अर्त्या ताड़नेन प्रसभाकर्षणेन च वेपमानः कम्पमानो जीवः प्राणो यस्येत्यर्थः । 'अर्तिः पीड़ाधनुष्कोट्योः' इत्यमरः । 'जीवः प्राणेऽस्त्रियां ना तु जन्तावात्मनि गीष्पतौ । त्रिषु जीवति मौर्व्यां स्त्री, इति वैजयन्ती । धनुरुच्चकैरसरत् अध्वनदाक्रन्दत् । यथा राज्ञा नियुक्तः पराधीनः बलादाकृष्यमाणः क्रोशति तद्वदित्यर्थः । अत्रापि प्रकृतविशेषणसाम्यादप्रकृतापराध्यधिकृतपुरुषप्रतीतेः समासोक्तिः ॥ १० ॥

अन्विति । अथाकर्षणानन्तरं क्षितिभर्तुश्चैद्यस्य धनुषः सकाशात् अनु-

गवलासितकान्ति तस्य मध्यस्थितघोरायतबाहुदण्डनासम् ।
ददृशे कुपितान्तकोन्नमद्भ्रूयुगभीमाकृति कार्मुकं जनेन ॥१२॥
तडिदुज्ज्वलजातरूपपुङ्खैः खमयःश्याममुखैरभिध्वनद्भिः ।
जलदैरिव रंहसा पतद्भिः पिदधे संहतिशालिभिः शरौघैः ॥१३॥
शितशल्यमुखावदीर्णमेघक्षरदम्भःस्फुटतीव्रवेदनानाम् ।
स्रवदस्रु ततीव चक्रवालं ककुभामौर्णविषुः सुवर्णपुङ्खाः ॥१४॥

सन्तत्या पतन्तीत्यनुसन्ततिपातिनोऽविच्छेदवर्तिनः पटुत्वं लक्ष्यभेदपाटवं, वाचकत्वशक्तिञ्च दधतः शुद्धिभृतः लोहशुद्धिभृतः निर्विषा वा, अन्यत्र साधव इत्यर्थः । गृहीतपक्षाः स्वीकृतकङ्कादिपक्षाः, अन्यत्र गृहीतनित्यत्वादिसाध्यार्थाः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती । शराः वादिनः कथकस्य वदनाच्छब्दाः प्रतिज्ञाहेत्वादय इव प्रसस्रुर्निर्जग्मुः । श्लिष्टविशेषणेयमुपमेति केचित् । श्लेष एव प्रकृताप्रकृतविषय इत्यन्ये ॥ ११ ॥

गवलेति । 'गवलं माहिषं शृङ्गम्' इत्यमरः । तद्वदसितकान्ति कृष्णवर्णं मध्ये स्थिता घोरा भीमा, आयता च बाहुदण्डो नासा नासिकेव यस्मिंस्तत्तथोक्तम् । कुपितस्यान्तकस्य मृत्योरुन्नतं यद्भ्रूयुगं तद्वद्भीमा आकृतिर्यस्य तत्तस्य वैद्यस्य कार्मुकं जनेन ददृशे दृष्टं सभयविस्मयमिति भावः । उपमालङ्कारः ॥ १२ ॥

तडिदिति । तडिद्वदुज्ज्वला दीप्ता जातरूपस्य हेम्नः पुङ्खाः कर्त्तर्यो येषां तैः । अयोवत्श्याममुखैः श्यामाग्रैरभिध्वनद्भिर्ध्वनिभिः स्वनत्पक्षैर्गर्जद्भिश्च रंहसा वेगेन पतद्भिर्धावद्भिः संहतिशालिभिः सङ्घवाहिभिः शरौघैर्जलदैरिव खमाकाशं पिदधे पिहितम् । कर्म्मणि लिट् । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यपेरकारलोपः । उपमालङ्कारः ॥ १३ ॥

शितेति । सुवर्णपुङ्खाः सुवर्णकर्त्तरिकाः शराः शितैर्निशितैः शल्यमुखैः फलाग्रैः अवदीर्णा अवभिन्ना ये मेघास्तेभ्यः क्षरता स्रवता अम्भसा स्फुटा व्यक्ता तीव्रा वेदना यासां तासां ककुभां सम्बन्धि स्रवन्ती अस्रुततिरस्रुसन्ततिर्यस्य तदिव शरप्रहारवेदनया रुददिव स्थितमित्युत्प्रेक्षा । चक्रवालं मण्डलमौर्णविषुः आच्छादयामासुः । ऊर्णोतेर्लुङीडागमे तस्य 'विभाषोर्णोः'

अमनोरमतां यती जनस्य च्चणमालोकपथान्नभःसदां वा ।
रुरुधे पिहिताहिमद्युतिर्द्यौर्विशिखैरन्तरिता च्युता धरित्री ॥१५॥
विनिवारितभानुतापमेकं सकलस्यापि मुरद्विषो बलस्य ।
शरजालमयं समं समन्तादुरु सद्मेव नराधिपेन तेने ॥ १६ ॥
इति चेदिमहीभृता तदानीं तदनीकं दनुसूनुसूदनस्य ।
वयसामिव चक्रमक्रियाकं परितोऽरोधि विपाटपञ्जरेण ॥१७॥

इति ङित्त्वाभावपचे 'ऊर्णोतेर्विभाषा' इति वृद्धिविकल्पात्पचे गुणः, अजादित्वात् 'आटश्च' इति वृद्धिः ॥ १४ ॥

अमन इति । विशिखैश्चैद्यबाणैः कर्त्तृभिः पिहिताहिमद्युतिस्तिरोहितार्का । अतएवामनोरमतां यती प्राप्नुवती । इणः शतरि 'उगितश्च' इति ङीप् । द्यौराकाशं जनस्य भौमलोकस्य आलोकपथाद्दृष्टिमार्गात् च्चणं रुरुधे रुद्धा । रुधेः कर्म्मणि लिट् । अत्र पथो रोधापायत्वात् 'ध्रुवमपाये'— इति अपादानत्वे पञ्चमी । तथान्तरिता च्युता तिरोहिता नष्टा अतएवामनोरमतां यती धरित्री नभःसदां वा आलोकपथात् रुरुधे । वाकारो जनसमुच्चयार्थः । अत्र द्युधरित्र्योः प्रकृतयोरेव रोधाख्यतुल्यधर्म्मयोगात्तुल्ययोगिताभेदो ताभ्यामिव जनस्य नभःसदां यथासंख्यान्वयात् यथासंख्यालङ्कारः सापेच्चतया सङ्कीर्य्यते ॥ १५ ॥

विनिवारितेति । नराधिपेन सकलस्यापि मुरद्विषो हरेर्बलस्य सैन्यस्य विनिवारितो भानुतापो येन तदेकमद्वितीयं शरजालमयं बाणवृन्दात्मकं उरु महत्सद्मेव सदनमिवेत्युत्प्रेचा । समं युगपत् समन्तात् तेने, कृतमित्यर्थः । तनोतेः कर्म्मणि लिट् ॥ १६ ॥

इतीति । इतीत्थं चेदिमहीभृता चैद्येन तदानीं तत्काले दनुसूनुसूदनस्य दानवान्तकस्य हरेस्तदनीकं बलम् । 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्' इत्यमरः । वयसां चक्रं पच्चिसङ्घ इव अक्रियाकं निश्चेष्टं यथा तथा विपाटयन्तीति विपाटाः शराः । पचाद्यच् । तैरेव पञ्जरेण परितः सर्व्वतः अरोधि रुद्धम् । रुधेः कर्म्मणि लुङ् । उपमा ॥ १७ ॥

इषुवर्षमनेकमेकवीरस्तदरिप्रच्युतमच्युतः पृषत्कैः।
अथ वादिकृतं प्रमाणमन्यैः प्रतिवादीव निराकरोत् प्रमाणैः॥१८
प्रतिकुञ्चितकूर्परेण तेन श्रवणोपान्तिकनीयमानगव्यम्।
ध्वनति स्म धनुर्घनान्तमत्तप्रचुरक्रौञ्चरवानुकारमुच्चैः॥१९॥
उरसा विततेन पातितांसः स मयूराञ्चितमस्तकस्तदानीम्।
चणमालिखितो नु सौष्ठवेन स्थिरपूर्व्वापरमुष्टिराबभौ वा॥२०॥
ध्वनतो नितरां रयेण गुर्व्यस्तडिदाकारचलद्गुणादसङ्ख्याः।
इषवो धनुषः सशब्दमाशु न्यपतन्नम्बुधरादिवाम्बुधाराः॥२१॥

इष्विति। अथानीकरोधनानन्तरं एकवीरो महाशूरोऽच्युतो हरिररिप्रच्युतं शत्रुगलितं तदनेकमपरिमितमिषुवर्षं पृषत्कैर्बाणैः वादिना प्रयुक्तं प्रमाणमनुमानं अन्यैः प्रमाणैः प्रत्यनुमानैः प्रतिवादीव निराकरोत्। 'इवेन समासो विभक्त्यलोपश्च' इति समासात् समासगता श्रौती पूर्णोपमा॥ १८॥

प्रतीति। प्रतिकुञ्चितकूर्परेण कुञ्चितकफोणिना। 'स्यात् कफोणिस्तु कूर्परः' इत्यमरः। तेन हरिणा श्रवणोपान्तिकं नीयमाना आकृष्यमाणा गव्या ज्या यस्य तत्। 'गव्यं गवां हिते गव्या ज्यायां चोरादिके त्रिषु' इति विश्वः। धनुः शार्ङ्गं घनान्ते शरदि ये मत्ताः प्रचुरा भूरयः क्रौञ्चास्तेषां रवमनुकरोतीति तदनुकारं, क्रौञ्चकूजितसदृशं यथा तथेत्यर्थः। 'कर्म्मण्यण्' उच्चैस्तारं ध्वनति स्म दध्वान। 'लट् स्मे' इति भूते लट्। स्वभावव्युपमयोः सङ्करः॥ १९॥

उरसेति। तदानीं धनुष्कर्षणसमये विततेन विस्तारितेनोरसा उपलक्षितः पातितांसो नमितस्कन्धः मयूरवदञ्चितं मनोहरं मस्तकं यस्य सः, उन्नमितमूर्द्धेत्यर्थः। स्थिरौ दृढौ पूर्वापरौ अग्रिमचरमौ मुष्टी गृहीतलस्तकमौर्वीकौ पाणी यस्य स हरिः। सुष्ठु भावः सौष्ठवं तेन सौष्ठवेन स्थानकपाटवेन हेतुना चणमालिखितो नु लिखित इव आबभौ वा बभासे किं? नुशब्दो वितर्कार्थे। 'नु पृच्छायां वितर्के च' इत्यमरः। वाशब्दोऽपि तादृश इत्युत्प्रेक्षालङ्कारोऽयम्॥ २०॥

ध्वनत इति। ध्वनतो गर्जतः तड़ित इवाकारो यस्य स तड़िदाकारः

शिखरोन्नतनिष्ठुरांसपीठः स्थगयन्नेकदिगन्तमायतान्तः ।
निरवर्णि सकृत्प्रसारितोऽस्य क्षितिभर्त्तेव चमूभिरेकबाहुः ॥२२
तमकुण्ठमुखाः सुपर्णकेतोरिषवः क्षिप्तमिषुव्रजं परेण ।
विभिदामनयन्त कृत्यपक्षं नृपतेर्नेतुरिवायथार्थवर्णाः ॥ २३ ॥
दयितैरिव खण्डिता मुरारेर्विशिखैः सम्मुखमुज्ज्वलाङ्कलेखैः ।
लघिमानमुपेयुषी पृथिव्यां विफला शत्रुशरावलिः पपात ॥२४॥

चलनात्तेजोमयत्वाच्च अचिरप्रभाकारश्चलन् गुणो मौर्वी यस्य तस्मात् । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः, धनुषः शार्ङ्गात् गुर्व्यो महत्यः असङ्ख्या अपरिमिता इषवोऽम्बुधरान्मेघात् अम्बुधारा इवाशु सशब्दं न्यपतन् । अत्रोपमानोपमेययोरेकलिङ्गतान्वयादिषुशब्दो द्विलिङ्गोऽपि स्त्रीलिङ्ग एव प्रयुक्त इति ज्ञापनाय गुर्व्य इति विशेषणम् ॥ २१ ॥

शिखरेति । शिखरं शृङ्गमिवोन्नतं निष्ठुरं चांसपीठं यस्य स एकदिगन्तं एकदिग्भागं स्थगयन् आयतान्तो द्राघिष्ठस्वरूपः । 'अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति वैजयन्ती । सकृत्प्रसारितः न तु पुनःपुनरिति स्थैर्योक्तिः । अस्य हरेरेकबाहुश्चापरोपितो वामबाहुरित्यर्थः । चमूभिः क्षितिभर्त्तेव भूधर इव निरवर्णि, साधु निरीक्षित इत्यर्थः । 'निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः ॥ २२ ॥

तमिति । अकुण्ठमुखाः निशिताग्राः प्रगल्भगिरश्च सुपर्णकेतोर्गरुड़ध्वजस्य हरेरिषवः परेणारिणा क्षिप्तं मुक्तमिषुव्रजं अयथार्थवर्णा असत्याक्षराः कपटवचनाः, उभयवेतना इत्यर्थः । 'कृत्यज्ञेयो यथावर्णश्चारः प्रणधिरेव च' इत्युत्पलमाला । नेतुर्नायकस्य जिगीषोः नृपतेः । कृत्यपक्षममात्यादिभेद्यवर्गमिव । 'कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः' इत्यमरः । विभिदां भेदम् । 'षिद्भिदादिभ्योऽङ्' । अनयन्त । 'स्वरितञितः'—इत्यात्मनेपदम् ॥ २३ ॥

दयितैरिति । उज्ज्वलाः स्फुटा अङ्केषु लेखाश्चित्रलेखा नखरेखाश्च येषां तैः मुरारेर्विशिखैर्दयितैः प्रियैरिव सम्मुखं समक्षमेव खण्डिता तुन्ना, अन्यत्रावमानिता अतएव विफला विशल्या अलब्धकामा च । अतएव लघिमान-

प्रमुखेऽभिहताश्च पत्रवाहाः प्रसभं माधवमुक्तवत्सदन्तैः ।
परिपूर्णतरं भुवो गतायाः परितः कातरवत् प्रतीपमीयुः ॥२५॥
इतरेतरसन्निकर्षजन्मा फलसङ्घट्टविकीर्णविस्फुलिङ्गः ।
पटलानि लिहन् बलाहकानामपरेषु क्षणमज्वलत् कृशानुः ॥२६
शरदीव शरश्रिया विभिन्ने विभुना शत्रुशिलीमुखाभ्रजाले ।
विकसन्मुखवारिजाः प्रकाममम्बभुराशा इव यादवध्वजिन्यः ॥२७

मगुरुत्वं अल्पतां चोपेयुषी शत्रुशरावलिः पृथिव्यां पपात । अत्र प्रकृतशरावलिविशेषणसाम्यादप्रकृतखण्डितानायिकाप्रतीतेः समासोक्तिः । दयितैरिवेत्युपमा खण्डिताविशेषणान्तःपातित्वादङ्गमेव । अतएव तत्र विशेषणसाम्यं श्लिष्टतया साधारण्येनौपम्यगर्भत्वेन च भवतीत्युक्तं सर्व्वस्वकारैः 'शातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति । साप्येवं पृथिव्यां पततीति भावः ॥ २४ ॥

प्रमुख इति । पत्त्राणि वहन्तीति पत्त्रवाहाः पत्त्रिणस्तैद्यशराः । कर्म्मण्यण्' । माधवमुक्तवत्सदन्तैः शौरिक्षिप्तशरैः प्रसभं बलात्प्रमुखे शल्याग्रे वदने चाभिहताः खण्डिताः सन्तः अतएव कातरैः त्रस्तैस्तुल्यं कातरवत् । तुल्यार्थे वतिप्रत्ययः । परिपूर्णतरं गतायाः, यावद्गन्तव्यं गताया इत्यर्थः । भुवोऽन्तरालभूमेः परतः प्रतीपं प्रतिकूलमीयुः प्रापुः प्रत्यागताश्च । माधवान्तिकात् प्रावृत्य जग्मुरित्यर्थः । चकारः पूर्व्वश्लोकोक्तपतनसमुच्चयार्थः । केचित् खण्डितास्तत्रैव पेतुः केचिन्मुखेषु प्रतिहताः, प्रतिनिवृत्ता इत्यर्थः । कातरवदिति तद्धितगता श्रौती पूर्णोपमा ॥ २५ ॥

इतरेतरेति । इतरेतरसन्निकर्षजन्मा शराणां मिथः संश्लेषोत्थः जन्मोत्तरपदत्वाद्व्यधिकरणोऽपि बहुव्रीहिरिष्यते । फलसङ्घट्टेन शल्यसङ्घट्टनेन विकीर्णा विस्फुलिङ्गा यस्य सः कृशानुरग्निर्बलाहकानां वारि वहन्तीति बलाहकाः, पृषोदरादित्वात् साधुः । पटलानि लिहन्नास्वादयन् अपरेषु शत्रुषु । 'समरेषु' इति पाठे समरेषु युद्धेषु क्षणमज्वलददीप्यत । अत्र शत्रुबलाहकानामग्निदाहास्वादासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ २६ ॥

शरदीवेति । विभुना देवेन कर्त्रा शरश्रिया शरसम्पदा करणेन शरदीव

स दिवं समचिच्छदच्छरौघैः कृततिग्मद्युतिमण्डलापलापैः ।
दद्दृशेऽथ च तस्य चापयष्ट्या इषुरेकैव जनैः सकृद्विसृष्टा ॥२८॥
भवति स्फुटमागतो विपक्षान्न सपक्षोऽपि हि निर्वृतेर्विधाता ।
शिशुपालबलानि कृष्णमुक्तः सुतरां तेन ततापं तोमरौघः ॥२९॥
गुरुवेगविराविभिः पतत्रैरिषवः काञ्चनपिङ्गलाङ्गभासः ।
विनतासुतवत्तलं भुवः स्म व्यथितभ्रान्तभुजङ्गमं विशन्ति ॥३०॥

शत्रुशिलीमुखा अभ्राणीव तेषां जाले विभिन्ने सति विकसन्ति मुखानि वारिजानीव यासान्ताः यादवध्वजिन्यः यदुसेना आशा दिश इव प्रकामं बभुः । अनेकेवेयमुपमा ॥ २७ ॥

स इति । कृतस्तिग्मद्युतिमण्डलस्यापलापो निह्नवो यैस्तैः, आच्छादितार्कमण्डलैरित्यर्थः । शरौघैर्दिवमाकाशं स हरिः समचिच्छदच्छादयति स्म । छादेः 'णौ चङ्युपधाया ह्रस्वः' 'सन्वतः' इत्यभ्यासस्येत्वम् । युक्तं चैतत् । लघुहस्तत्वादस्येत्याशयेनोत्प्रेक्ष्यते । अथास्मिन्नवसरे तस्य हरेश्चापयष्ट्यामिषुः सकृदेकदा विसृष्टा मुक्ता एकैव जनैर्ददृशे दृष्टा च । इषूणां पुङ्खानुपुङ्खगमनाद्दीर्घीयानेक एवेषुरेकदेव गच्छतीत्युत्प्रेक्षा । ईदृशलघुहस्तस्याकाशसञ्छादनं युक्तमिति भावः ॥ २८ ॥

भवतीति । विपक्षाच्छत्रुकुलादागतः सपक्षः कङ्कादिपत्रवान्, सुहृच्च निर्वृतेर्विधाता सुखकरो न भवति । हि यतः, स्फुटम् । तेन कारणेन कृष्णमुक्तस्तोमरौघः शिशुपालबलानि सुतरां ततापं ददाह । अतः शत्रुकुलादागतः स्वजनोऽपि न विश्वसनीय इत्यर्थः । सपक्षोऽप्यनिर्वर्तक इति विरोधेऽपिशब्दः । विपक्षादागत इत्यविरोधाद्विरोधाभासः ॥ २९ ॥

गुर्विति । गुरुवेगविराविभिः गुरुणा वेगेन विरुवन्ति ध्वनन्तीति तथोक्तैः । रौतेर्णिनिः । शीघ्रवेगविरावविद्भिः पतत्रैः पक्षैरुपलक्षिताः काञ्चनेन पुङ्खलिप्तेन पिङ्गलाङ्गभासः, अन्यत्र काञ्चनवदिति विग्रहः । इषवः शौरिशराः विनतासुतवद्वैनतेयैस्तुल्यं व्यथिता भीषिताः अत एव भ्रान्ता मूढा भुजङ्गमा यस्मिंस्तत्तथा भुवस्तलं पातालं विशन्ति स्म । तद्धितगता श्रौती पूर्णोपमा । पातालप्रवेशासम्बन्धातिशयोक्त्या सङ्कीर्यते ॥ ३० ॥

शतशः परुषाः पुरो विशङ्कं शिशुपालेन शिलीमुखाः प्रयुक्ताः ।
परमर्म्मभिदोऽपि दानवारेरपराधा इव न व्यथां वितेनुः ॥३१॥
विहिताद्भुतलोकसृष्टिमाये जयमिच्छन् किल मायया मुरारौ ।
भुवनत्रयकालयोगनिद्रे नृपतिः स्वापनमस्त्रमाजहार ॥ ३२ ॥
सलिलार्द्रवराहदेहनीलो विदधद्भास्करमर्थशून्यसंज्ञम् ।
प्रचलायतलोचनारविन्दं विदधे तद्बलमन्धमन्धकारः ॥३३॥

शतश इति । शिशुपालेन पुरोऽग्रे विशङ्कं निःशङ्कं शतशः प्रयुक्ताः क्षिप्ताः, उच्चारिताश्च परुषा निष्ठुराः परमर्म्मभिदोऽपि शिलीमुखाः शराः । शतशः अपराधाः पञ्चदशसर्गोक्ताः अभिशापा इव दानवारेर्हरेर्व्यथां दुःखं न वितेनुः । खलापकारा महतामकिञ्चित्करा इति भावः । समासगतोपमा ॥ ३१ ॥

विहितेति । नृपतिश्चैद्यो विहिता अद्भुता लोकसृष्टिरेव माया यस्मिंस्तस्मिन् भुवनत्रयकाले प्रलयकाले न त्विदानीमिति भावः । उचिता योगनिद्रा यस्य तस्मिन् मुरारौ मायया जयमिच्छन् किल न तु जेष्यतीति भावः । स्वापयतीति स्वापनमस्त्रमाजहार, प्रयुक्तवानित्यर्थः । अनादिमायाधारे सकलभुवनसृष्टिसंहारमहानाटकसूत्रधारे सर्व्वाद्भुतनिधाने सकलकलुषकषणपटुतराभिधाने पुराणैन्द्रजालिके भगवति हरावपि मायया जिगीषेत्यहो महानस्य व्यामोह इति भावः । अत्र हरिविशेषणैस्तस्य दुर्जयत्वसिद्धेः काव्यलिङ्गम् ॥ ३२ ॥

सलिलेति । सलिलेनार्द्रो यो वराहदेहस्तद्वन्नीलः भासं प्रकाशं करोतीति भास्करः । 'दिवाविभा'—इत्यादिना टप्रत्ययः । तमर्थशून्या भास्करत्वरूपप्रवृत्तिनिमित्तशून्या संज्ञा भास्कराख्या यस्य तं विदधत्, सौरलोकमभिभवन्नित्यर्थः । अन्धं करोतीत्यन्धकारः स्वापनास्त्रप्रभवतमः । कर्म्मण्यण् । प्रचलानि निद्राघूर्णितानि आयतलोचनान्येवारविन्दानि यस्मिन् कर्म्मणि तत् तथा सूर्य्यतिरोधानेऽरविन्दमुकुलीभावस्यावश्यम्भावादिति भावः । तद्बलं हरिसैन्यमन्धमपश्यं विदधे, निद्रां प्राविशदित्यर्थः । अत्रान्यमन्धेति

गुरवोऽपि निषद्य यन्निदद्रुर्धनुषि क्ष्मापतयो न वाच्यमेतत् ।
क्षयितापदि जाग्रतोऽपि नित्यं ननु तत्रैव हि तेऽभवन्निषण्णाः॥३४
श्लथतां व्रजतस्तथा परेषामगलद्धारणशक्तिमुज्झतः स्वाम् ।
सुगृहीतमपि प्रमादभाजां मनसः शास्त्रमिवास्त्रमग्रपाणेः ॥३५॥
उचितस्वपनोऽपि नीरराशौ स्वबलाम्भोनिधिमध्यगस्तदानीम् ।
भुवनत्रयकार्य्यजागरूकः स परं तत्र परः पुमानजागः ॥ ३६ ॥

सन्नद्धराज्ञनयुग्मपीनरुक्मयाद्वृत्यनुप्रासभेदः तस्य वराहदेहनीललोचनारविन्दे- त्युपमारूपकयोः संसृष्टिः ॥ ३३ ॥

गुरव इति । गुरवो धीराः क्ष्मापतयोऽपि धनुषि निषद्य शयित्वा निदद्रुः सुषुपुरिति यत् एतत् धनुषि निद्राणं वाच्यं निन्द्यं न भवति । कुतः ? हि यस्मात्ते क्ष्मापतयो जाग्रतोऽपि प्रबुद्धा अपि । जागर्त्तेः शतरि अस्य 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा 'नाभ्यस्ताच्छतुः' इति नुम्प्रतिषेधः । क्षयितापदि सर्व्वापन्निवारक इत्यर्थः । तत्रैव धनुषि नित्यं निषण्णाः संश्रिता अभवन्ननु । जागरेऽपि धनुरेकशरणानां स्वापे तदाश्रये न दोष इत्यर्थः । अत्र सदा धनुराश्रयवाक्यार्थस्यावाच्यताहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ३४ ॥

श्लथतामिति । तथेति पूर्वोक्तधनुराश्रयणसमुच्चये यथा तेषां धनुराश्रयणं तथान्येषां धनुर्गलनं चाभूदित्यर्थः । श्लथतां प्रयत्नशैथिल्यं व्रजतः भजतः स्वां निजां धारणशक्तिं वाहनसामर्थ्यं उज्झतः त्यजतः परेषां राज्ञाम् । अग्रं चासौ पाणिश्चेति समानाधिकरणसमासः । हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदा- भेदादिति वामनवचनात् । तस्मादग्रपाणेः सुगृहीतं सुष्ठु धृतमपि अन्यत्र स्वभ्यस्तमपि प्रमादभाजां गुणनिकाद्यवधानरहितानां मनसश्चित्तात् शास्त्रं विद्येव अस्त्रमगलदभ्रश्यत्, निद्रापारवश्यादित्यर्थः । इवेन सह समासात् समासगता श्रौती पूर्णोपमा ॥ ३५ ॥

उचितेति । नीरराशौ समुद्रे उचितस्वपनोऽपि परिचितनिद्रोऽपि तदानीं सर्व्वनिद्रावसरे स्वबलाम्भोनिधिमध्यगः स्वसेनासागरमध्यगतः । 'बल- पाथोनिधि' इत्यपि पाठः । भुवनत्रयकार्य्ये त्रैलोक्यरक्षाविधौ जागरूकः

अथ सूर्य्यरुचीव तस्य दृष्टावुदभूत् कौस्तुभदर्पणं गतायाम् ।
पटु धाम ततो न चाद्भुतं तद् विभुरिन्द्वर्कविलोचनः किलासौ ३७
महतः प्रणतेष्विव प्रसादः स मणेरंशुचयः ककुम्मुखेषु ।
व्यकसद्विकसद्विलोचनेभ्यो ददालोकमनाविलम्बलेभ्यः ॥३८॥
प्रकृतिं प्रतिपादुकैश्च पादैश्चक्रपे भानुमतः पुनः प्रसत्तुम् ।
तमसोऽभिभवादपास्य मूर्च्छामुदजीवत् सहसैव जीवलोकः ॥३९

प्रबुद्धः । जागरूक इत्यूकप्रत्ययः । परः पुमान् परमपुरुषः परं केवलं हरिरेवेत्यर्थः । 'परमव्ययमिच्छन्ति केवल' इति विश्वः । तत्र निद्राणलोके अजागः जागर्त्ति स्म । सर्व्वान्धकारहारिणो नित्यप्रकाशचिदात्मनः तत्रापि कार्य्यग्रस्तस्य कुतो निद्रेति भावः । जागर्त्तेर्लुङि तिप् । अदादित्वाच्छपो लुकि सार्वधातुकगुणे रपरे 'हल्ङ्याप्'—इति विलोपे च रेफस्य विसर्जनीयः । अत्र समुद्रनिद्रालोस्तत्रैव जागरे विरोधपरिहारमुखेन कार्य्यजागरूकत्वपरमपुरुषत्वयोर्विशेषणगत्या सात्त्विकजागरणहेतुकत्वाद्विरोधाभाससङ्कीर्णं काव्यलिङ्गम् ॥ ३६ ॥

अथेति । अथान्धकारव्याप्त्यनन्तरं तस्य हरेर्दृष्टौ चक्षुषि, तेजसीत्यर्थः । सूर्य्यरुचीव सूर्य्यतेजसीव । कौस्तुभो दर्पण इवेत्युपमितसमासः । सूर्य्यरुचीवेति लिङ्गात् । तं कौस्तुभदर्पणं गतायां प्रविष्टायां सत्यां ततः कौस्तुभात् पटु सर्वान्धकारद्रावणे समर्थं धाम तेज उदभूदुदगात् । तद्धामोद्भवनं न चाद्भुतं, कुतः ? असौ विभुर्भगवान् अर्केन्दू विलोचने यस्य स किल खलु । अतस्तच्चक्षुषोः सूर्य्यात्मकत्वात् तदभिहतात् कौस्तुभादर्पणादेरिव धामप्रादुर्भावो व्यज्यत इत्यर्थः । अतो वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ३७ ॥

महत इति । स पूर्वोक्तमणेः कौस्तुभस्यांशुचयः विकसन्ति उन्मीलन्ति विलोचनानि येषां तेभ्यो बलेभ्योऽनाविलं प्रसन्नमालोकं दर्शनं, तत्त्वज्ञानञ्च ददत्प्रतियच्छन् । महतो महात्मनः प्रसादोऽनुग्रहः प्रणतेषु भक्तेष्विव ककुम्मुखेषु ककुभामग्रेषु व्यकसदमूर्च्छत् । पूर्णोपमा ॥ ३८ ॥

प्रकृतिमिति । प्रकृतिं स्वभावं प्रतिपादुकैः प्रतिपद्यमानैः । 'लषपतपद'—इत्यादिना उकञ्प्रत्ययः । 'न लोका'—इत्यादिना षष्ठीप्रति-

घनसन्तमसैर्जवेन भूयो यदुयोधैर्युधि रेधिरे द्विषन्तः ।
ननु वारिधरोपरोधमुक्तः सुतरामुत्तपते पतिः प्रभाणाम् ॥४०॥
व्यवहार इवानृताभियोगं तिमिरं निर्जितवत्यथ प्रकाशे ।
रिपुरुल्वणभीमभोगभाजां भुजगानां जननीं जजाप विद्याम्॥४१

घेधः । भानुमतोऽंशुमतः पादैः रश्मिभिश्च पुनर्भूयः प्रसक्तुं चक्लृपे शेके । 'क्लृपू सामर्थ्ये' भावे लिट् 'कृपो रोलः' इति ऋकारस्थस्यापि रेफस्य लकारः । जीवलोकः प्राणिवर्गश्च तमसोऽन्धकारस्याभिभवात्, अभिभूतत्वादित्यर्थः । 'कर्त्तृकर्म्मणोः कृति' इति कर्म्मणि षष्ठी । सहसैव मूर्च्छामपास्य उदजीवदुदश्वसीत् । अत्रोज्जीवनस्यार्ककरप्रसारहेतुकत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ३८ ॥

घनेति । घनं सान्द्रं सन्तमसमन्धकारो येषु । 'अवसमन्धेभ्यस्तमसः' इति समासान्तोऽच्प्रत्ययः । 'गत' इति पाठे गतं सन्तमसं येषां तैः यदुयोधैर्यादवभटैर्भूयः पुनरपि जवेन युधि द्विषन्तो रेधिरे जिहिंसिरे, हता इत्यर्थः । राध्यतेः कर्म्मणि लिट् । 'राधो हिंसायाम्' इत्येत्वाभ्यासलोपौ । तथाहि, वारिधरोपरोधान्मेघापवरणात् मुक्तः प्रभाणां द्युतीनां पतिरर्कः सुतरामुत्तपत एव ननु प्रकाशत एव खलु । 'उद्विभ्यां तपः' इत्यात्मनेपदम् । अत्र यदुयोधानां द्युतिपतेश्च वाक्यभेदेन प्रतिबिम्बकरणाद्दृष्टान्तालङ्कारः । न चोपमानोपमेययोर्भिन्नवचनत्वदोषः । लोके चन्द्रार्कादीनामुपमानामबहुत्वेऽपि चन्द्रानना इतिवत् प्रत्येकमौपम्यात् ॥ ४० ॥

व्यवहार इति । व्यवहारे न्यायवादे अनृताभियोगं मिथ्याभिशंसनमिव प्रकाशे कौस्तुभतेजसि तिमिरं प्रस्वापनान्धकारं निर्जितवति निरस्तवति सति, अथैतन्निरसनानन्तरं रिपुसैन्य उल्वणान् महतो भीमांश्च भोगान् फणान्, कायांश्च भजन्तीति तद्भाजः । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । भुजगानां जननीमुत्पादिकां विद्यां मन्त्रं जजाप जपति स्म भुजगास्तमाजह्वरित्यर्थः । उल्वणेत्यत्र क्वचिदुत्फणेति पाठः । उपमालङ्कारः ॥ ४१ ॥

पृथुदर्विभृतस्ततः फणीन्द्रा विषमाशीभिरनारतं वमन्तः।
अभवन् युगपद्विलोलजिह्वायुगलीढोभयसृक्कभागमाविः ॥४२॥
कृतकेशविडम्बनैर्विहायो विजयं तत्क्षणमिच्छुभिश्छलेन।
अमृताग्रभुवः पुरेव पुच्छं वडवाभर्त्तुरवारि काद्रवेयैः ॥ ४३ ॥
दधतस्तनिमानमानुपूर्व्या बभुरक्षिश्रवसो मुखे विशालाः।
भरतज्ञकविप्रणीतकाव्यग्रथिताङ्का इव नाटकप्रपञ्चाः ॥४४॥

पृथ्विति। ततो भुजगास्त्रप्रयोगानन्तरं पृथुदर्विभृतः, महाफणाधारिण इत्यर्थः। अतएव दर्वीकरो दीर्घपृष्ठ इत्यत्र दर्वीरूपः फण एव करो हस्तो यस्य प्रहारादाविति व्याख्यातम्। आशीभिर्दंष्ट्राभिः। 'आशी उरगदंष्ट्रायाम्' इति वैजयन्ती। अनारतमश्रान्तं विषं वमन्त उद्गिरन्तः फणीन्द्रा महासर्पाः विलोलैश्चञ्चलैर्जिह्वायुगैः लीढावास्वादितावुभौ सृक्कभागावोष्ठप्रान्तदेशौ यस्मिन् कर्म्मणि तत् तथा। 'प्रान्तावोष्ठस्य सृक्कणी' इत्यमरः। आविरभवन्। अत्र 'उभादुदात्तो नित्यम्' इति नित्यग्रहणसामर्थ्याद्वृत्तिविषये उभशब्दस्य स्थानेऽप्युभयशब्दस्यैव प्रयोगः। उभयपुत्र इत्यादिप्रयोगसिद्धेरिति कच्युत्तमस्माभिः प्रकटितं, बहुधा सञ्जीविन्यां घण्टापथे सर्व्वङ्कषायाञ्च तत्र तत्र। स्वभावोक्तिरलङ्कारः ॥ ४२ ॥

कृतेति। कृतकेशविडम्बनैः कार्ष्ण्याद्विहितकेशानुकरैः छलेन कपटेन विजयमिच्छुभिरभिलापुकैः। 'बिन्दुरिच्छुः' इति उप्रत्ययान्तो निपातितः 'न लोका'—इत्यादिना षष्ठीप्रतिषेधः। विहाय आकाशं तत् क्षणं काद्रवेयैः कद्रुपुत्रैः फणीन्द्रैः। 'स्त्रीभ्यो ढक्' इति ढक्। पुरा पूर्वमिव अमृताग्रभुवोऽमृताग्रजस्य वड़वाभर्त्तुः उच्चैःश्रवसः पुच्छं अवारि आवृतम्। वृतेः कर्म्मणि लुङ्। पुरा किल कद्रुविनतयोः कश्यपभार्य्ययोरुच्चैःश्रवसः पुच्छस्य कार्ष्ण्यश्वैत्यविवादे दास्यपणे काद्रवेयैः स्वमातुर्विजयाय गृहीतबालाकारैरुच्चैःश्रवसः पुच्छाच्छादनं चक्रे इति कथा पुराणादनुसन्धेया। उपमा ॥ ४३ ॥

दधत इति। मुखे मुखभागे मुखसन्धौ च विशालाः विस्तृता आनुपूर्व्या अनुक्रमेण तनिमानं तनुत्वं मुखादन्यत्र शरीरे उत्तरोत्तरं तनुत्वं दधतः,

सविषश्वसनोद्धतोरुधूमव्यवधिम्लानमरीचि पन्नगानाम् ।
उपरागवतेव तिग्मभासा वपुरौदुम्बरमण्डलाभमूहे ॥ ४५ ॥
शिखिपिच्छकृतध्वजावचूडक्षणसाशङ्कविवर्त्तमानकायाः ।
यमपाशवदाशु बन्धनाय न्यपतन् वृष्णिगणेषु लेलिहानाः ॥४६ ॥

अन्यच्च प्रतिमुखादिसन्धिषु गोपुच्छवत् संक्षिप्तत्वं दधानाः अक्षिश्रवसः सर्पाः भरतज्ञो नाट्यशास्त्रज्ञः । 'भरतो नाट्यशास्त्रेऽपि' इति विश्वः । तेन कविना प्रणीतं प्रकल्पितं यत्काव्यं कविकर्म्म लक्षणया काव्यार्थः कथावस्तु । ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । तेन ग्रथिता गुम्फिता अङ्काः परिच्छेदरूपा अवान्तरसन्दर्भविशेषा येषु ते तथोक्ता नाटकप्रपञ्चा नाटकविस्तारा इव बभुरित्युपमा । 'प्रबन्धा' इति क्वचित्पाठः । 'प्रत्यक्षनेतृचरितो बिन्दुबीजपुरस्कृतः । अङ्को नानाप्रकारार्थसम्बिधानरसाश्रयः ॥' इति अङ्कलक्षणम् । 'मुखं प्रतिमुखं गर्भोऽवमर्श उपसंहृतिः' इति सन्धयः ॥ ४४ ॥

सेति । तिग्मभासा सूर्य्येण उपरागवता राहुग्रासवतेव । राहुग्रस्तेनेवेत्यर्थः । 'उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च' इत्यमरवचनं ग्रासस्याप्युपलक्षणम् । पन्नगानां सविषैः श्वसनैः फूत्कारैरुद्धतेनोरुधूमेन यो व्यवधिस्तिरोधानं तेन म्लाना निष्प्रभा मरीचयो यस्य तत् । अत एवौदुम्बरमण्डलाभं ताम्रपिण्डसच्छायम् । 'अथ ताम्रकम् । शुल्बं म्लेच्छमुखद्व्यष्टवरिष्ठोदुम्बराणि च' इत्यमरः । वपुरूहे ऊढम् । वहेः कर्म्मणि लिट् । यजादित्वात् सम्प्रसारणम् ॥ ४५ ॥

शिखीति । पुनः पुनर्लेहनशीला लेलिहानाः सर्पाः । लिहेर्य्यङ्लुगन्तात्ताच्छील्ये चानश्प्रत्यये 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः । लिहेर्लिटः कानजिति वल्लभः । तदानीमभ्यासगुणानुपपत्तिः भूतार्थासङ्गतिश्च । शिखिपिच्छैर्मयूरबर्हैः कृतेभ्यो ध्वजानामवचूडेभ्यः प्रकीर्णेभ्यः क्षणं साशङ्काः जीवन्मयूरभ्रान्त्या सभयाः अतएव विवर्त्तमानकायाः व्यावृत्तदेहाः सन्तः आशु वृष्णिगणेषु यादवसङ्घेषु बन्धनाय यमपाशैस्तुल्यं यमपाशवत् कालपाशवदित्युपमा । न्यपतन्, निपत्य बबन्धुरित्यर्थः ॥ ४६ ॥

पृथुवारिधिवीचिमण्डलान्तविलसत्फेनवितानपाण्डुराणि ।
दधति स्म भुजङ्गमाङ्गमध्ये नवनिर्मोकरुचिं ध्वजांशुकानि ॥४७॥
कृतमण्डलबन्धमुल्लसद्भिः शिरसि प्रत्युरसं विलम्बमानैः ।
व्यरुचज्जनता भुजङ्गभोगैर्दलितेन्दीवरमालधारिणीव ॥४८॥
परिवेष्टितमूर्त्तयश्च मूलादुरगैराशिरसः सरत्नपुष्पैः ।
दधुरायतवल्लिवेष्टितानामुपमानं मनुजा महीरुहाणाम् ॥४९॥
बहुलाञ्जनपङ्कपट्टनीलद्युतयो देहमितस्ततः श्रयन्तः ।
दधिरे फणिनस्तुरङ्गमेषु स्फुटपल्याणनिबद्धवध्रलीलाम् ॥ ५० ॥

पृथ्विति । भुजङ्गमाङ्गमध्ये पृथोर्वारिधिवीचिमण्डलस्यान्तर्मध्ये विलसन्तः फेना इव वितानापाण्डुरद्युतीनि शुभ्रवर्णानीत्युपमा । ध्वजांशुकानि नवनिर्मोकरुचिं नवकञ्चुकशोभां दधति स्म । 'समौ कञ्चुकनिर्मोकौ' इत्यमरः । निर्मोकरुचिमित्यत्रान्यधर्मस्यान्यत्रासम्बन्धेन निर्मोकस्येकस्येवेति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धनिदर्शना फेनपाण्डुरोपमयाङ्गेन संकीर्य्यते ॥४७॥

कृतेति । जनता जनसमूहः । 'ग्रामजन—' इत्यादिना सामूहिकस्तल्प्रत्ययः । शिरसि कृतो मण्डलबन्धो वलयीभावो यस्मिन् कर्मणि तत्तथा उल्लसद्भिः प्रत्युरसं उरसि उरसि । 'प्रतेरुरसः सप्तमीस्थात्' इति समासान्तोऽच्प्रत्ययः । विलम्बमानैर्विशेषेण लम्बमानैः भुजङ्गभोगैरहिकायैः दलितेन्दीवरमालधारिणी विकसितनीलोत्पलमालधारिणीवेत्युत्प्रेक्षा । व्यरुचद्दरोचिष्ट । 'द्युद्भ्यो लुङि' इति विकल्पात् परस्मैपदम् ॥ ४८ ॥

परिवेष्टितेति । किञ्चेति चार्थः । मूलात्, पादमारभ्येत्यर्थः । ल्यब्लोपे पञ्चमी । आशिरसः शिरोऽन्तम् । अभिविधावाङिति विकल्पादसमासः । रत्नैरेव पुष्पैः सह वर्त्तन्ते इति सरत्नपुष्पैः । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । उरगैः परिवेष्टितमूर्त्तयो वेष्टिताङ्गाः मनुजा आयताभिर्व्वल्लीभिर्लताभिर्वेष्टितानां महीरुहाणामुपमानं सादृश्यं दधुरित्युपमा ॥ ४९ ॥

बहुलेति । बहुलाञ्जनस्य सान्द्रकज्जलस्य पङ्कपट्टः पङ्कघनस्तद्वन्नीलद्युतयः श्यामभासः । देहं शरीरमितस्ततः पुच्छपार्श्वादिस्थानेषु श्रयन्तो भजन्तः फणिनस्तुरङ्गमेषु स्फुटान्युज्ज्वलानि यानि पल्याणेषु पल्ययनेषु निबद्धानि

प्रसृतं रभसाद्योऽभिनीला प्रतिपादम्परितोऽभिवेष्टयन्ती ।
तनुरायतिशालिनी महाहेर्गजमन्दूरिव निश्चलञ्चकार ॥५१॥
अथ सस्मितवीक्षितादवज्ञाचलितैकोन्नमितभ्रु माधवेन ।
निजकेतुशिरःश्रितः सुपर्णादुदपप्तन्नयुतानि पक्षिराजाम् ॥५२॥
द्रुतहेमरुचः खगाः खगेन्द्रादलघूदीरितनादमुत्पतन्तः ।
क्षणमैक्षिषतोच्चकैश्चमूभिर्ज्वलतः सप्तरुचेरिव स्फुलिङ्गाः ॥५३॥

वप्राणि वरत्राः । 'वप्रं त्रपुवरत्रयोः' इति विश्वः । तेषां लीलां शोभां दधिरे दधुः । वप्रलीलामित्यत्रासम्भवद्वस्तुसम्बन्धा निदर्शनोक्तलक्षणा ॥५०॥

प्रसृतमिति । रभसा अर्यावत् अभिनीला पादेषु प्रतिपादम् । विभक्त्यर्थेऽव्ययीभावः । अभिवेष्टयन्ती आयत्या आयतेन दैर्घ्येण शालते या सा आयतिशालिनी महाहेर्महोरगस्य तनुर्वपुरन्दूः शृङ्खलेव । 'अन्दूस्तु शृङ्खलायां स्त्री' इति वैजयन्ती । रभसात् प्रसृतं प्रचरन्तं गजं निश्चलं चकार । उपमा ॥ ५१ ॥

अथेति । अथ नागपाशबन्धनानन्तरं माधवेन कृष्णेनावज्ञया अकिञ्चित्करत्वादनादरेण चलिता प्रेरिता एका उन्नमिता उत्क्षिप्ता च भ्रूर्यस्मिन् कर्मणि तत्तथा । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम् । सस्मितं चैद्यचापल्यदर्शनात् समन्दहासं वीक्षितात् निजकेतुशिरः श्रितः निजध्वजाग्रस्थितात् । श्रयतेः क्विप् । सुपर्णात् पक्षिणां राजः राजानः तेषां पक्षिराजां पक्षिराजानां गरुत्मताम् । 'राजा राट् पार्थिवः' इत्यमरः । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । अयुतानि अयुतसङ्ख्या उदपप्तन्नुत्पेतुः । 'पुषादि'—इति लुङि च्लेरङादेशः । 'पतः पुम्' इति पुमागमः । 'उदभूवन्' इति पाठे 'भुवो वुक्' इति वुगागमः । माधवस्य सुपर्णवीक्षणावस्थोचितभ्रूविक्षेपादिचेष्टाविवरणात् स्वभावोक्तिः । तदुक्तं दण्डिना—'नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती । स्वभावोक्तिश्च जातिश्च' इति । जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशम्' इति च ॥ ५२ ॥

द्रुतेति । द्रुतहेमरुचः प्रतप्तकाञ्चनभास इत्युपमा । अलघूच्चैरुदीरितनादं उच्चरितघोषं यथा तथा खगेन्द्राद्गरुत्मतः उत्पतन्तः उद्गच्छन्तः खगाः सुपर्णा

उपमानमलाभि लोलपक्षक्षणविक्षिप्तमहाम्बुवाहमल्लैः।
गगनार्णवमन्तरा सुमेरोः कुलजानां गरुडैरिलाधराणाम् ॥५४॥
पततां परितः परिस्फुरद्भिः परिपिङ्गीकृतदिङ्मुखैर्मयूखैः।
सुतरामभवद्दुरीक्ष्यबिम्बस्तपनस्तत्किरणैरिवात्मदर्शः ॥५५॥
दधुरम्बुधिमन्थनाद्रिमन्थभ्रमणायस्तफणीन्द्रपित्तजानाम्।
रुचमुल्लसमानवैनतेयद्युतिभिन्नाः फणभारिणो मणीनाम् ॥५६

ज्वलतः प्रज्वलतः समरुचेः समार्चिषोऽग्नेरुच्चकैरुच्चैः प्रसृताः स्फुलिङ्गा इव चमूभिः क्षणमैक्षिषत ईक्षिताः। ईक्षतेः कर्म्मणि लुङ्। लुप्तोपमयोः सङ्करः ॥ ५३ ॥

उपमानमिति। गगनमर्णव इव गगनार्णवस्तमन्तरा, तस्य मध्ये इत्यर्थः। 'अन्तरान्तरेण युक्ते' इति द्वितीया। अत्रार्णवस्यैकत्वेऽपि तदेकदेशापेक्षया भेदवत्त्वेन मध्यमप्रतियोगित्वसम्भवान्न द्वितीयानुपपत्तिः। लोलैः पक्षैः क्षणाद्विक्षिप्ता महाम्बुवाहा मल्ला इव यैस्तैर्गरुडैर्गरुत्मद्भिः सुमेरोः कुलजानां हेमाद्रिवंश्यानां अन्येषामहिरण्मयतया। गरुड़साम्यासम्भवादित्यर्थः। इलाधराणां भूधराणाम्, अर्णवान्तश्चराणामित्यर्थः। 'गौरिला कुम्भिनी क्षमा' इति कोषः। उपमानं सादृश्यमलाभि अलम्भि। लभेः कर्म्मणि लुङि 'विभाषा चिण्णमुलोः' इति विकल्पान्नुमभावः। अत्रेलाधराणामुपमानमिति व्यस्तोपमाया अन्याभ्यां समासगताभ्यामङ्गाङ्गिभावेन सङ्करः ॥ ५४ ॥

पततामिति। परिस्फुरद्भिः स्वविषयसङ्क्रमात् समन्तादुल्लसद्भिः अतएव परिपिङ्गीकृतानि सौवर्णत्वात् पिशङ्गीकृतानि दिङ्मुखानि यैस्तैः पततां पक्षिणां मयूखैः तपनः सूर्य्यस्तत्किरणैस्तपनकिरणैः, सङ्क्रान्तैरिति भावः। आत्मा स्वरूपं दृश्यतेऽत्र इत्यात्मदर्शो दर्पण इव सुतरां दुरीक्ष्यबिम्बोऽभवत्। स्वत एव दुर्दर्श इदानीमतिदुर्दर्शोऽभूदित्यर्थः। अत्र तपनस्य दुरीक्ष्यत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ५५ ॥

दधुरिति। उल्लसमानाभिर्दीप्यमानाभिर्वैनतेयानां द्युतिभिर्भिन्नाः सम्ब-

अभितः क्षुभिताम्बुराशिधीरध्वनिराकृष्टसमूलपादपौघः।
जनयन्नभवद् युगान्तशङ्कामनिलो नागविपक्षपक्षजन्मा ॥५७॥
प्रचलत्पतगेन्द्रपक्षवातप्रसभोन्मूलितशैलदत्तमार्गैः।
भयविह्वलमाशु दन्दशूकैर्विवशैराविविशे स्वमेव धाम ॥ ५८ ॥
खचरैः क्षयमक्षयेऽहिसैन्ये सुकृतैर्दुष्कृतवत्तदोपनीते।
अयुगार्चिरिव ज्वलन् रुषाथो रिपुरौदर्चिषमाजुहाव मन्त्रम्॥५९

लिताः फणभारिणः फणाभृतः अम्बुधिमन्थने अद्रेर्मन्दराद्रेरेव मन्थस्य मन्थनदण्डस्य भ्रमणेनायस्तस्य निष्पीड़ितस्य वासुकेः पित्तात् पित्तधातोर्जाताः तज्जास्तेषाम्। 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डके' इत्यमरः। मथेर्भौवादिकस्येदित्त्वात् सर्व्वत्र नुमागमः। तेषां मणीनां मरकतानां रुचं दधुः वैनतेयपीतिमसम्भेदात् कृष्णोरगा मरकतच्छायामार्च्छन्नित्यर्थः। अत्रान्यस्यान्यधर्म्मायोगेन, रुचमिवेति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धान्निदर्शनालङ्कारः ॥ ५६ ॥

अभीति। अभितः उभयतः क्षुभितो योऽम्बुराशिः उद्वेलाम्बुराशिस्तद्वद्धीरध्वनिर्गम्भीरध्वनिरित्युपमा। आकृष्टाः पाटिताः समूलाः पादपौघास्तरुसमूहा येन सः। अत्र पादपोन्मूलनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः। युगान्तशङ्कां जनयन् कल्पक्षयोत्प्रेक्षां जनयन्नित्यपि सैवातिशयोक्तिः। नागविपक्षपक्षजन्मा गरुड़पक्षोद्भवोऽनिलोऽभवत्, उदभवदित्यर्थः ॥ ५७ ॥

प्रचलदिति। प्रचलतां पतगेन्द्राणां ये पक्षवातास्तैः प्रसभं उन्मूलितैराकृष्टैरुत्पाटितैः शैलैर्दत्तो मार्गो रन्ध्रं येभ्यस्तैः, निश्चेष्टैरित्यर्थः। गर्हितं दशन्ति भृशमिति दन्दशूकैः सर्पैः। 'दन्दशूको विलेशयः' इत्यमरः। 'लुपसदचर—' इत्यादिना दंशेर्भावगर्हायां यङ्। 'जपजभदहदशभञ्जपशाञ्च' इत्यभ्यासस्य नुगागमः 'यजजपदंशपद—' इति दंशेर्य्यङन्तादुकञ्प्रत्ययः। भयेन विह्वलं विक्षिप्तं विचित्रं यथा तथा स्वमेव धाम पातालमेव विविशे, तार्क्ष्यपक्षपवनोन्मूलितशैलरन्ध्रवर्त्मनैव पातालं प्रविष्टमित्यर्थः। विशेः कर्म्मणि लिट्। दन्दशूकानां रन्ध्रप्रवेशासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥५८॥

खचरैरिति। खे चरन्तीति खचरैर्वैनतेयैः। चरेष्टः 'तत्पुरुषे कृति

सहसा दधदुद्धताट्टहासश्रियमुत्त्रासितजन्तुना स्वनेन ।
विततायतहेतिबाहुरुच्चैरथ वेताल इवोत्पपात वह्निः ॥६०॥
चलितोद्धतधूमकेतनोऽसौ रभसादम्बररोहिरोहिताश्वः ।
द्रुतमारुतसारथिः शिखावान् कनकस्यन्दनसुन्दरश्चचाल ॥६१॥
ज्वलदम्बरकोटरान्तरालं बहुलार्द्राम्बुदपत्त्रबद्धधूमम् ।
परिदीपितदीर्घकाष्ठमुच्चैस्तरुवद्विश्वमुवोष जातवेदाः ॥ ६२ ॥

बहुलम्' इति लुग्विकल्पः। अत्यये अनन्ते अहिरन्ये सर्पसङ्घे सुकृतैः हरिस्मरणादिपुण्यैर्दुष्कृतवद्ब्रह्महत्याद्येनोवत्। तत्र तस्येवेति तत्रार्थे वतिप्रत्ययः। क्षयमुपनीते नाशं गमिते सति तदा तत्काले रुषा पौरुषवैफल्यरोषेण अयुगार्चिः सप्तार्चिरिव ज्वलन्दीप्यमानः असौ रिपुश्चैद्यः। उदर्चिष इममौदर्चिषमाग्नेयं मन्त्रमाजुहाव आहूतवान्, जजापेत्यर्थः। ह्वयतेर्लिट्। 'अभ्यस्तस्य च' इति द्विर्वचनात् प्रागेव सम्प्रसारणम्। दुष्कृतवदिति तद्धितगता श्रौती पूर्णोपमा ॥ ५८ ॥

सहसेति। अथाग्नेयास्त्राह्वानानन्तरम् उत्त्रासितजन्तुना भीषितप्राणिकेन स्वनेन ध्वनिना उद्धताट्टहासश्रियं महाट्टहाससम्पदं दधत् तेनैवाट्टहासवान्, तत्तुल्यनादवानित्यर्थः। वितताः प्रसारिताः आयता दीर्घाः हेतयो ज्वाला बाहव इव हेतिबाहवो यस्य स वह्निर्वेतालो भूतविशेषः स इव सहसा झटिति उच्चैरूर्ध्वमुत्पपात उत्तस्थौ। उपमा ॥ ६० ॥

चलितेति। चलितश्चलंश्च उद्धत उन्नतश्च धूम एव केतनं केतुर्यस्य स रभसाद्वेगादम्बररोहिणो रोहिता वाहनमृगा अश्वा इव यस्य सः द्रुतमारुताः शीघ्रवाता एव सारथिर्यस्य सः कनकस्यन्दनसुन्दरः कनकद्रववद्रम्य इत्युपमा। असौ शिखा ज्वाला अस्य सन्तीति शिखावानाशुशुक्षणिश्चचाल ॥ ६१ ॥

ज्वलदिति। जातं वेदो धनं यस्माज्जातवेदास्तनूनपात्। अम्बरं कोटरमिव तस्यान्तरालमभ्यन्तरं ज्वलत् यस्य तत्। बहुलाः सान्द्रा आर्द्राम्बुदाः पत्त्राणीव तेषु बद्धधूमम्। परिदीपिताः प्रज्वलिताः काष्ठा दिशः काष्ठानीव यस्य। तदुच्चैरुन्नतं विश्वं जगत्। तरुणा तुल्यं तरुवत्, तरुमिवेत्यर्थः। तुल्यार्थे वतिप्रत्ययः। उवोष ददाह। 'उष दाहे' लिट् लघूपधगुणे पश्चा-

गुरुतापविशुष्यदम्बुशुभ्राः क्षणमालग्नकृशानुताम्रभासः ।
स्वमसारतया मषीभवन्तः पुनराकारमवापुरम्बुवाहाः ॥६३॥
ज्वलितानललोलपल्लवान्ताः स्फुरदष्टापदपत्रपीतभासः ।
क्षणमात्रभवामभावकाले सुतरामापुरिवायतिं पताकाः ॥६४॥
निखिलामिति कुर्वतश्चिराय द्रुतचामीकरचारुतामिव द्याम् ।
प्रतिघातसमर्थमस्त्रमग्नेरथ मेघङ्करमस्मरन्मुरारिः ॥ ६५ ॥

द्विर्भावः 'अभ्यासस्यासवर्णे' इत्युवङादेशः, अनादिष्टादच इति गुणस्य स्थानिभावात् । तरुवदिति स्पष्टोपमालिङ्गात् । सर्वत्रोपमितसमासः ॥ ६२ ॥

गुर्विति । गुरुतापेनातिदाहेन विशुष्यदम्बवः क्षीयमाणोदकाः अतएव शुभ्राश्चेति विशेषणसमासः । ततः क्षणमालग्नेन कृशानुना ताम्रभासो रोहितवर्णा अथासारतया जलशोषान्निःसारतया मषीभवन्तः अम्बुवाहाः पुनः स्वमाकारं नीलरूपमवापुः । अत्र मेघानां मसीभावाद्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ६३ ॥

ज्वलितेति । ज्वलितेन प्रज्वलता अनलेन अनलपातेन लोलाः पल्लवान्ताः अञ्चलाग्राणि यासां ताः स्फुरद्भिर्दीप्यमानैरष्टापदपत्रैः कनकरचनाभिः पीतभासः पिङ्गलवर्णाः पताका वैजयन्त्यः अभावकाले विनाशकाले क्षणमात्रभवां क्षणमात्रभाविनीं, क्षणमात्रस्थायिनीमित्यर्थः । आयतिं दैर्घ्यं सुतरामापुरित्यर्थः । प्रदीपवदिति भावः । अष्टसु लोहेषु पदमस्येत्यष्टापदम् । 'अष्टनः संज्ञायाम्' इति दीर्घः । 'रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्' इत्यमरः ॥ ६४ ॥

निखिलामिति । अथानन्तरं मुरारिः इतीत्थं निखिलां द्यामाकाशं द्रुतचामीकरचारुतां प्रतप्तहेमकर्बुरामिवेत्युत्प्रेक्षा । चारुतामित्यत्र । चिराय कुर्वतोऽग्नेः प्रतिघातसमर्थं प्रशमनक्षमं मेघान् करोतीति मेघङ्करं मेघजननम् । 'मेघर्त्तिभयेषु कृञः' इति खश्प्रत्ययः 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । अस्त्रं वारुणास्त्रमस्मरद्दध्यौ, आजहार ॥ ६५ ॥

चतुरम्बुधिगर्भधीरकुक्षेर्वपुषः सन्धिषु लीनसर्व्वसिन्धोः ।
उदगुः सलिलात्मनस्त्रिधाम्नो जलवाहावलयः शिरोरुहेभ्यः ॥६६
ककुभः कृतनादमास्तृणान्तस्तिरयन्तः पटलानि भानुभासाम् ।
उदनंसिषुरभ्रमभ्रसङ्घाः सपदि श्यामलिमानमानयन्तः ॥६७॥
तपनीयनिकर्षराजिगौरस्फुरदुत्तालतड़िच्छटाट्टहासम् ।
अनुबद्धसमुद्धताम्बुवाहध्वनिताड़म्बरमम्बरम्बभूव ॥ ६८ ॥

चतुरिति । चत्वारोऽम्बुधय एव गर्भास्तेन धीरो गम्भीरः कुक्षिर्यस्य तस्य वपुषः सन्धिषु लीनाः सर्वाः सिन्धवो नद्यो यस्य तस्य सलिलात्मनस्तोयात्मकस्य त्रीणि धामानि स्थानानि भूरादीनि सत्त्वादीनि वा यस्य तस्य त्रिधाम्नो हरेः शिरोरुहेभ्यो जलवाहावलयः मेघपरम्परा उदगुरुद्बभूवुः । 'इणो गा लुङि' इति गादेशे 'गातिस्था'—इत्यादिना सिचो लुक् । 'यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु । कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥' इत्यागमोक्तं प्रमाणमिति भावः ॥ ६६ ॥

ककुभ इति । कृतनादं कृतगर्जारावं यथा तथा ककुभ आस्तृणन्त आच्छादयन्तः । स्तृणातेर्लटः शत्रादेशः 'श्नाभ्यस्तयोः'—इत्यकारलोपः । भानुभासामर्कांशूनां पटलानि तिरयन्तस्तिरस्कुर्वन्तः । तिरःशब्दात् 'तत्करोति'—इति ण्यन्ताल्लटः शत्रादेशः णाविष्टवद्भावाट्टिलोपः । अभ्रमाकाशं श्यामलिमानमानयन्तः श्यामलत्वं प्रापयन्तः अभ्रसङ्घा मेघौघाः सपदि सद्य उदनंसिषुरुत्पेतुः । उत्पूर्वान्नमतेर्लुङि 'यमरमनमातां सक् च' इति सगिडागमौ 'नेटि' इति वृद्धिप्रतिषेधः स्वभावोक्तिः ॥ ६७ ॥

तपनीयेति । तपनीयस्य हेम्नो निकर्षराजयः कषणलेखा इव गौर्य्यः पीताः । 'गौरोऽरुणे सिते पीते' इत्यमरः । स्फुरन्त्य उत्ताला उद्धतास्तड़िच्छटा विद्युल्लता एवाट्टहासा यस्य तत् तथोक्तं अनुबद्धोऽनुसृतः समुद्धतस्तारोऽम्बुवाहानां ध्वनिताड़म्बरो गर्जिताड़म्बरो यस्य तदम्बरं बभूव । तदाम्बुवाहैर्विद्युत्प्रभाभिर्गर्जिताड़म्बरैश्चाट्टहासं कुर्वद्भिरिवाम्बरं बभावित्यर्थः । व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा ॥ ६८ ॥

सवितुः परिभावुकैर्मरीचीनचिराभ्यक्तमतङ्गजाङ्गभाभिः।
जलदैरभितः स्फुरद्भिरुच्चैर्विदधे केतनतेव धूमकेतोः॥६९॥
ज्वलतः शमनाय चित्रभानोः प्रलयाम्नावमिवाभिदर्शयन्तः।
ववृषुर्वृषनादिनो नदीनां प्रतटारोपितवारि वारिवाहाः॥७०॥
मधुरैरपि भूयसा स मेध्यैः प्रथमं प्रत्युत वारिभिर्दिदीपे।
पवमानसखस्ततः क्रमेण प्रणयक्रोध इवाशमद्विवादैः॥ ७१ ॥

सवितुरिति। सवितुर्मरीचीन् मयूखान् परिभावुकैस्तिरस्कुर्वद्भिः। 'लष-पत'—इत्यादिना उकञ्प्रत्यये 'न लोका'—इत्यादिना षष्ठीप्रतिषेधः। अचिराभ्यक्तस्य सद्यःकृताभ्यङ्गस्य मतङ्गजाङ्गस्य नागदेहस्येव भासो येषां तैस्तथोक्तैः। 'भोभगो'—इत्यादिना रोर्यकारस्य 'हलि सर्वेषाम्' इति लोपः। अभितः स्फुरद्भिर्जृम्भमाणैरुच्चैरुन्नतैर्जलदैर्धूमकेतोरग्नेः केतनता केतुत्वं विदधे इव विहितेव, धूमकेतोः केतुत्वं प्राप्तमित्यर्थः। उत्प्रेक्षा-लङ्कारः॥ ६९ ॥

ज्वलत इति। ज्वलतश्चित्रभानोरग्नेः प्रशमनाय प्रलये कल्पान्ते य आम्नावो महापूरः तमभिदर्शयन्त इवेत्युत्प्रेक्षा वृषवद्वृषभवन्नदन्ति गर्जन्तीति वृषनादिनः। 'कर्त्तर्युपमाने' इति णिनिः। अतएवोपमा। वारि वहन्तीति वारिवाहा मेघाः। 'कर्म्मण्यण्'। नदीनां प्रतटेषु प्रतीरेषु आरोपितानि भावितानि वारीणि यस्मिन् कर्म्मणि तद्यथा तथा ववृषुः। प्रलय-कालमेघवदवर्षन्नित्यर्थः॥ ७० ॥

मधुरैरिति। इतीत्थं पवत इति पवमानो वायुः। पूङ्यजोः शानच्। तस्य सखा पवमानसखः अग्निः। 'राजाहःसखिभ्यष्टच्'। मैत्रीमात्रविव-क्षायामयं निर्देशः। स्वसहकारिणी मैत्रीति नियमात् सहकारित्वाविव-क्षायां वैपरीत्याद्बहुव्रीहौ तु न समासान्तः। स्वामी तु रोहिताश्वो वायु-सखेत्यसमासान्तपाठेन बहुव्रीहिमाह। अत्रापि तथा पाठे न कश्चिदुपद्रवः। सोऽग्निः मधुरैः प्रियैरपि विवादैर्विविधवाक्यैः प्रणयक्रोधः प्रणयप्रयुक्तकोप इव मधुरैः स्वादुभिः, अनुद्दीपकैरित्यर्थः। मेध्यैर्मेघभवैः। 'दिगादिभ्यो यत्'। वारिभिः प्रथमं प्रत्युत वैपरीत्येनापि प्रत्युतेति वैपरीत्य इति गणव्याख्याने।

परितः प्रसभेन नीयमानः शरवर्षैरवसायमाश्रयाशः ।
प्रबलेषु कृती चकार विद्युद्व्यपदेशेन घनेष्वनुप्रवेशम् ॥ ७२ ॥
प्रयतः प्रशमं हुताशनस्य क्वचिदालक्ष्यत मुक्तमूलमर्चिः ।
बलभित्प्रहितायुधाभिघातात् त्रुटितं पक्षिपतेरिवैकपत्रम् ॥ ७३
व्यगमन् सहसा दिशां मुखेभ्यः शमयित्वा शिखिनं घनाघनौघाः
उपकृत्य निसर्गतः परेषामुपरोधं न हि कुर्वते महान्तः ॥ ७४ ॥

भूयसात्यन्तं । भृशमित्यर्थः । दिदीपे प्रजज्वाल । ततः क्रमेणाशमच्छान्तोऽभूत् । शाम्यतेर्लुङि पुषादित्वाच्च्लेरङादेशः । जलाहतोऽग्निर्ज्वलितो नश्यति, प्रणयकोपोऽपि प्रियैः भृशायित्वा शाम्यतीति प्रसिद्धम् । उपमा ॥ ७१ ॥

परित इति । परितः प्रसभेन बलात्कारेण शरवर्षैर्नीरसेकैः । 'शरं नीरे शरो बाणे' इति विश्वः । अवसायमवसादं नीयमानः । कृती कुशलः आश्रयमश्नातीत्याश्रयाशोऽग्निः । 'कर्मण्यण्' । प्रबलेषु घनेषु मेघेषु विद्युद्व्यपदेशेन तड़िच्छलेनानुप्रवेशं चकार । अस्ताग्निर्विद्युद्रूपेण मेघेष्वेव प्रविष्टः । बलवताभिभूतस्य विदेशगमनं तदनुप्रवेशो वेति नीतेरिति भावः । अत्र विशेषणसाम्यादग्नावप्रकृतदुर्बलत्वप्रतीतेः समासोक्तिः ॥ ७२ ॥

प्रयत इति । प्रशमं नाशं प्रयतः गच्छतः । प्रैतीति प्रयन् तस्य प्रयतः । इणः शतरि यणादेशः । हुताशनस्याग्नेः सम्बन्धि मुक्तमूलं त्यक्तमूलं त्यक्ताश्रयमर्चिर्ज्वाला । 'ज्वालाभासोर्न पुंस्यर्चिः' इत्यमरः । बलभिदा शक्रेण प्रहितस्य प्रयुक्तस्यायुधस्य वज्रस्याभिघातात् प्रहारात्त्रुटितं छिन्नं पक्षिपतेः पक्षिराजस्य गरुत्मत एकं पत्रं पक्षमिव क्वचिदालक्ष्यत अदृश्यत इत्युपमा । पुरा मातृदास्यविमोचायामृतमाहरता गरुड़ेमेन्द्रप्रयुक्तवज्रगौरवादेकं पत्रं त्यक्तमित्यागमः ॥ ७३ ॥

व्यगमन्निति । घनाघनौघाः वर्षुकाब्दसमूहाः । 'शक्रघातुकमत्तेभवर्षुकाब्दा घनाघनाः' इत्यमरः । शिखिनमग्निं शमयित्वा सहसा दिशां मुखेभ्यो व्यगमन्नपसस्रुः । गमेर्लुङि पुषादित्वात् च्लेरङादेशः । तथाहि महान्तो निस-

कृतदाहमुदर्चिषः शिखाभिः
परिषिक्तं मुहुरम्भसा नवेन ।
विगताम्बुधरव्रणं प्रपेदे गगनं
तापितपायितासिलक्ष्मीम् ॥७५॥

इति नरपतिरस्त्रं यद् यदाविश्चकार
प्रकुपित इव रोगः क्षिप्रकारी विकारम् ।
भिषगिव गुरुदोषच्छेदिनोपक्रमेण
क्रमविदथ मुरारिः प्रत्यहंस्तत्तदाशु ॥ ७६ ॥

न्तः स्वभावादेव परेषां उपकृत्य उपकारं कृत्वा उपरोधं न हि कुर्व्वते । महतां निष्फलावस्थानं परोपरोधायेति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७४ ॥

कृतेति । उदर्चिषोऽग्नेः शिखाभिः ज्वालाभिः कृतदाहं विहिततपनं ततो नवेनाम्भसा मुहुः परिषिक्तं विगता अम्बुधरा एव व्रणा दोषा यस्य तद्गगनं सन्तापितस्तापं प्रापितः स चासौ पायितः पानं कारितः । पिबतेर्ण्यन्तात् कर्म्मणि क्तः । 'शाच्छासाह्वाव्यावेपां युक् —' इति युगागमः । तस्य तापितपायितस्य तप्तसिक्तस्यासेः खड्गस्य लक्ष्मीं प्रपेदे प्राप । इति निदर्शनालङ्कारः, अम्बुधरव्रणेति रूपकसङ्कीर्णः ॥ ७५ ॥

इतीति । इतीत्थं क्षिप्रं करोतीति क्षिप्रकारी शीघ्रप्रयोक्ता अन्यत्र विकारकारी नरपतिश्चैद्यः प्रकुपितः प्रक्षुभितः सन् यद्यदस्त्रमाविश्चकार रोगो विकारमिव अथ क्रमवित्परिपाटीवेदी मुरारिर्भिषग्वैद्य इव गुरुदोषच्छेदिना गुरुदोषप्रतिघातकेन दोषनिवर्त्तकेन चोपक्रमेणोपायेन, प्रत्यस्त्रप्रयोगेणेत्यर्थः । अन्यत्र महौषधप्रयोगेण तत्तदस्त्रं आशु शीघ्रं । तद्विकारमिवेति भावः । प्रत्यहन् प्रतिजघान । हन्तेर्लङ् अदादित्वाच्छपो लुक् 'हल्ङ्याप्' इति लोपः । उपमा ॥ ७६ ॥

शुद्धिं गतैरपि परामृजुभिर्विदित्वा
बाणैरजय्यमविघट्टितमर्म्मभिस्तम् ।
मर्मातिगैरनृजुभिर्नितरामशुद्धै-
र्वाक्सायकैरथ तुतोद तदा विपक्षः ॥७७ ॥

राहुस्त्रीस्तनयोरकारि सहसा येनाश्लथालिङ्गन-
व्यापारैकविनोददुर्ललितयोः कार्कश्यलक्ष्मीर्वृथा ।
तेनाक्रोशत एव तस्य मुरजित्तत्काललोलानल-
ज्वालापल्लवितेन मूर्द्धविकलं चक्रेण चक्रे वपुः ॥७८॥

शुद्धिमिति । तदा तस्मिन् समये विपक्षोऽरिश्चैद्यः परामुत्कृष्टां शुद्धिं लोहशुद्धिं गतैर्ऋजुभिरप्यविघट्टितमर्म्मभिः अस्पृष्टमर्मस्थानैः बाणैः तं हरिमजय्यं जेतुमशक्यम् । 'क्षय्यजय्यौ शक्यार्थे' इति निपातः । विदित्वाथास्मिन्नवसरे मर्म्माणि अतिगच्छन्तीति मर्म्मातिगैर्म्मर्म्मभेदिभिरनृजुभिर्वक्रैः नितरामशुद्धैरपवित्रैः वाच एव सायकास्तैः वाक्सायकैरिति रूपकं । तुतोद व्यथयामास । चक्रप्रयोगस्यायमुपोद्घात इति भावः । अत्र वाक्सायकानां प्रसिद्धसाधनव्यतिरेकोक्तेर्व्यतिरेकरूपकयोः सङ्करः । वसन्ततिलका वृत्तम् ॥ ७७ ॥

राह्विति । येन चक्रेण सहसा झटिति अश्लथो दृढो य आलिङ्गनव्यापारः स एव एको मुख्यः । 'एके मुख्यान्यकेवलाः' इत्यमरः । विनोदस्तत्र दुर्ललितयोर्लोलुपयो राहुस्त्रीस्तनयो राहुरमणीकुचयोः कार्कश्यलक्ष्मीः काठिन्यशोभा वृथा व्यर्था अकारि कृता । शिरोमात्रावशेषितस्य राहोरालिङ्गनसुखासम्भवादिति भावः । मुरजिद् हरिः तत्काले तस्मिन् समये लोलाभिश्चञ्चलाभिरनलज्वालाभिरग्निदीप्तिभिः पल्लवितेन सञ्जातपल्लवेन । तारकादित्वादितच् । चक्रेण आक्रोशत एव शपमानस्यैव तस्य शिशुपालस्य वपुर्मूर्द्धविकलं शिरोहीनं चक्रे चकार । शिरश्चिच्छेदेत्यर्थः । कर्त्तरि लिट् । राहोः शिरो वपुर्व्विकलमकारि, अस्य तु वपुः शिरोविकलं कृतमिति तात्पर्य्यम् । अत्र चक्रवर्णनेऽप्रस्तुताद्राहुस्त्रीकुचकार्कश्यवर्णनात् प्रस्तुतत्वेन सम्बन्धस्तत्पर्य्यायोक्तमुच्यत इति ॥ ७८ ॥

श्रियेति । अथ शिरच्छेदानन्तरं श्रिया शोभया जुष्टं सेवितं दिव्यैर्दिवि

श्रिया जुष्टं दिव्यैः सपटहरवैरन्वितं पुष्पवर्षै-
र्वपुष्टश्चैद्यस्य क्षणमृषिगणैः स्तूयमानं निरीय।
प्रकाशेनाकाशे दिनकरकरान् विक्षिपद्विस्मिताक्षै-
र्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षाम्बभूवे ॥७८॥

इति श्रीमाघकृतौ शिशुपालवधे महाकाव्ये
विंशतितमः सर्गः ॥ २० ॥

भवैः सपटहरवैः सदुन्दुभिघोषैः पुष्पवर्षैरन्वितं क्षणम् ऋषिगणैः स्तूयमानं तथा चैद्यस्य वपुषः शरीरतः। पञ्चम्यास्तसिल्। निरीय निर्गत्य। 'इण् गतौ' इति धातोः समासेऽनञ्पूर्वे क्त्वो ल्यप्। प्रकाशेन आकाशे दिनकरकरान् अर्करश्मीन् विक्षिपत् उपेन्द्रस्येदमौपेन्द्रं वपुर्हरेः शरीरं विशत् प्रविशत् धाम शिशुपालतेजो विस्मिताक्षैर्विकसितनयनैर्नरेन्द्रैः राजभिः ईक्षाम्बभूवे ईक्षितम्। ईक्षतेः कर्मणि लिट्। 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्। 'कृञ्चानुप्रयुज्यते लिटि' इति भुवोऽनुप्रयोगः 'भावकर्मणोः' इत्यात्मनेपदम्। अत्र भगवान् व्यासः—'ततश्चेदिपतेर्देहात्तेजोऽग्र्यं ददृशे नृपैः। उत्पतन्तं यदा राजन् तदा तेजो विवेश च॥ दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता। यदि भा सदृशी सा स्यात् धाम्नस्तस्य महात्मनः॥' इति। एतेन भगवद्वपुषि तदासक्तिरित्यनुसन्धेया। यदाह नारदः—'कामाद्गोप्यो भयात् कंसो द्वेषाच्चैद्यादयो नृपाः। सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं प्रभो'॥ इति॥ सूर्यसहस्राभिभाविनः शिशुपालतेजसो हरिशरीरप्रवेशवृत्तान्तस्यालौकिकस्याद्भुतस्य प्रत्यक्षलक्ष्यमाणत्वाद्भाविकालङ्कारः। तदुक्तम्—अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः। यत् प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम्॥ इति। मेघविस्फूर्जिता वृत्तम्। 'रसर्त्त्वश्वैर्यमौ न्सौ ररगुरुयुता मेघविस्फूर्जिता स्यात्' इति लक्षणात्॥ ७८॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते शिशुपाल-
वधमहाकाव्यव्याख्याने सर्वङ्कषाख्ये शिशुपाल-वधो नाम
विंशतितमः सर्गः ॥२०॥

# अथ कविवंशवर्णनम्

सर्वाधिकारी सुकृताधिकारः श्रीवर्मलाख्यस्य बभूव राज्ञः ।
असक्तदृष्टिर्विरजाः सदैव देवोऽपरः सुप्रभदेवनामा ॥ १ ॥
काले मितं तथ्यमुदर्कपथ्यं तथागतस्येव जनः सचेताः ।
विनानुरोधात्स्वहितेच्छयैव महीपतिर्यस्य वचश्चकार ॥ २ ॥

कविवंशवर्णनश्लोकानां मल्लिनाथकृतटीकाऽभावे
वल्लभदेवकृतटीका उद्धृता —

सर्वाधिकारीति । श्रीवर्मलाख्यस्य राज्ञः श्रीवर्मलाभिधानस्य नृपतेः अखिलकर्मस्थानाधिकृतो महासेनापतिः सुप्रभदेवनामा बभूव सुप्रभदेवाभिधानोऽभूत् । किंलक्षणः सुप्रभदेवनामा सुकृताधिकारः सुकृते पुण्ये कर्मण्यधिकारो व्यापारो यस्य स तथा । धर्मेऽवसक्तः । यस्तु सुकृत एवाधिकृतः स कथं सर्वाधिकारी । तथा अपरो देवः द्वितीयो राजेव, तत्सादृश्यात् । राजा हि सर्वाधिकारी भवति । अथवा अपरो देवो देवसदृशः । सुरा हि सुकृताधिकृताः । असक्तदृष्टयोऽनिमिषाः । विरजस्का निर्धूलयः । वृत्तमिदमुपजातिः ॥ १ ॥

काले इति । यस्य सुप्रभदेवस्य काले समये यद्वचनमुपदेशवाक्यं तन्महीपतिर्वर्मलाख्यश्चकार अकरोत् । कः कस्येव वचश्चकारेत्याह—तथागतस्य बुद्धभट्टारकस्य वचो यथा सचेताः प्राज्ञो जनोऽन्वतिष्ठत् । कच्चिन्मन्दादरश्चकार नेत्याह —कुतः अनुरोधाद्विना उपरोधभावमृते । कथं चकारेत्याह — स्वहितेच्छयैव स्वस्यात्मनो हितेच्छयानुकूलचिकीर्षया । यतोऽसौ सचेताः प्राज्ञः किंलक्षणं वचः हितहेतुत्वमाह—मितं स्वल्पाक्षरम् । तथा तथ्यं सत्यम् । अपरं किंलक्षणं वचः उदर्कपथ्यमायत्यां हितम् । 'उदर्कः फलमुत्तरम्' इत्यमरः । तथागतस्य बुद्धभट्टारकस्य सचेताः प्राज्ञो जनो मितं

तस्याभवद्दत्तक इत्युदात्तः क्षमी मृदुर्धर्मपरस्तनूजः ।
यं वीक्ष्य वैयासमजातशत्रोर्वचो गुणग्राहि जनैः प्रतीये ॥ ३ ॥
सर्वेण सर्वाश्रय इत्यनिन्द्यमानन्दभाजा जनितं जनेन ।
यश्च द्वितीयं स्वयमद्वितीयो मुख्यः सतां गौणमवाप नाम ॥४॥

तथ्यमुदर्कपथ्यं वचो यथा स्वहितेच्छयैव करोति तत्रानुरोधात्कृतभयतः किलेदमुक्तमिति ॥२॥

तस्येति । तस्य सुप्रभदेवस्य दत्तक इति दत्तकाख्यस्तनूजोऽभवत् पुत्रोऽभूत् । किंलक्षणो दत्तकः उदात्तो विपुलचित्तः । तथा क्षमी क्षमाशीलः । अपरं किंलक्षणो दत्तकः अत एव मृदुरकठोरः । तथा धर्म्मपरः सुकृतैकसक्तः । यं दत्तकं जनैर्वीक्ष्य लोकैर्दृष्ट्वा वैयासं व्यासस्येदं कृष्णद्वैपायनोक्तमजातशत्रोर्युधिष्ठिरस्य गुणग्राहि गुणग्राहकं वचः प्रतीये वचनं प्रतिपन्नमङ्गीकृतं भवति । सत्यं गुणिनः पुरुषाः भगवता कृष्णद्वैपायनेन पार्थस्याधिकार्य्यस्य वचनं मिश्चिदुक्तम् । अत्र च दत्तकोऽयं निखिलगुणभाजनं निदर्शनम् । अन्यथा कथमेवङ्गुणोऽयं स्यात् । क्षमीति शमादित्वाद्घिनुण् । व्यासस्येदं वैयासं वचो भारतम् । वृद्धायभवादित्वादन्यत्र नरसरासुलभः । गुणान् गृह्णातीति गुणग्राहि । आख्यानकी वृत्तम् ॥ ३ ॥

सर्वेणेति । यश्च दत्तकः स्वयमात्मना सर्व्वाश्रय इत्येवम्भूतं नाम संज्ञान्तरमवाप लेभे । किंलक्षणं द्वितीयं नाम सर्वेणाखिलेन जनेन लोकेन आनन्दभाजा तुष्टेन सता जनितं कृतम् । अपरं किंलक्षणं नाम गौणं गुणप्रवृत्तिनिमित्तभूतमागतमर्थानुगम् । सर्वेषामाश्रयत्वात् । यथा हि सर्वे तत्र द्विजदीनानाथातिथिमित्रबान्धवा विश्राम्यन्ति तथासौ सर्वाश्रयः । न तु तैलपायिकावन्नाममात्रेण । अत एवानवद्यमनिन्द्यं प्रशस्यं श्लाघ्यम् । किंलक्षणो यः अद्वितीयः सर्वोत्कृष्टः । अविद्यमानो गुणादधिको गुणो यस्य सोऽद्वितीयः इति कृत्वा । तथा सतां मुख्यः प्रधानोऽग्रणीः । सर्वं त्वेतद्विरुद्धमिवावभासते । तथा हि यस्य हि द्वितीयं नाम विद्यते कथमसावद्वितीयो भवेत् । यश्च मुख्यः स कथं गौणमप्रधानं स्यात् । यस्य च लोकैरपरं नाम जनितं स कथं तत् स्वयं लेभे । अविरोधस्तु मुख्यः

श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म
लक्ष्मीपतेश्चरितकीर्त्तनमात्रचारु ।
तस्यात्मजः सुकविकीर्तिदुराशयादः
काव्यं व्यधत्त शिशुपालवधाभिधानम् ॥५॥

स्यादेव । इति नामस्वरूपमात्रावस्थाप्यमानस्य सर्वाश्ययस्य प्रातिपदिकार्थ-मात्रे सति कर्म्मत्वाभावाद्द्वितीयानुपपत्तिः । मुखमिव मुख्यः । 'शाखादिभ्यो यत्' । विरोधालङ्कारः । इन्द्रवज्रा वृत्तम् ॥ ४ ॥

श्रीशब्देति । तस्य दत्तकस्यात्मजोऽपत्यमदः एतत्काव्यं शिशुपालवधाभि-धानं शिशुपालवधनामकं काव्यं ग्रन्थरूपं व्यधत्तारचयत् । शिशुपालवध इत्यभिधानं यस्य तत् तथा । कया हेतुना सुकविकीर्त्तिदुराशया । सुक-वीनां श्रेष्ठविदुषां वररुचि-सुबन्धु-सोमनाथ भवभूति-क्रीड़ानन्द-कालिदास-बिह्लण-भारवि-बाण-मयूरादीनां या कीर्त्तिः ख्यातिर्यशस्तत्र या दुराशा दुरभिलाषस्तया, महाकविकीर्त्तिलिप्सयेत्यर्थः । दुष्टत्वं त्वाशायाः स्वल्प-बुद्धित्वेन सुकविकीर्त्तेरप्राप्यत्वात् । तथा च कालिदासः—'मन्दः कवियशः-प्रार्थी गमिष्याम्युपहास्यताम् । प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः' ॥ इति । किं लक्षणं काव्यं श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म । श्रीरित्ययं शब्दो ध्वनिर्मङ्गलवाचकत्वात् । तेन रम्यं कृतं मनोहरं विहितं सर्गाणां समाप्ति अर्थादध्यायानां समापने लक्ष्म चिह्नं यत्र तत् तथोक्तम् । अपरं किं लक्षणं काव्यं, लक्ष्मीपतेः श्रीनारायणस्य चरितकीर्त्तनमात्रचारु चरितकीर्त्तनमात्रेण वर्णनमात्रेण चारु मनोज्ञम् । न त्वलङ्कारादिनेत्यनौद्धत्यकथनम् । भङ्ग्या तु सर्वेऽपि काव्ये गुणाः सन्तीत्युक्तं भवति । श्रीरित्ययं शब्दः मयूरव्यंसकादित्वात् समासः । यदि श्रीश्चासौ शब्दश्चेति कर्म्मधारयः केवलमेव । चरितकीर्त्तन-मात्रमित्यस्वपदेन विग्रहः । सुप्सुपेति समासः । वसन्ततिलका वृत्तम् । उदात्तो मध्यमोऽलङ्कारः ॥ ५ ॥

इति कविवंशवर्णनम् ।

---

समाप्तम् ।



